सारदाविनोदे

# वैयाकरणसिद्धान्तकौमुद्याः

तिङन्तप्रकरणम् ।

**Bhattoji Dikshita's**

# SIDDHANTA-KAUMUDI

## Vol--V

***( Adadi to Lakarathanirnaya ).***

**With English Translation & Sanskrit Commentary**

BY

**Kumudranjan Ray, M.A., Ph. D(H), Bhishagacharyya.**

Author of Laghu-Kaumudi, Evolution of Gita, Philosophy of Ayurveda, Meghadutam etc. etc






Published by—K. Ray,

*7, Bhawani Datta Lane, Calcutta.*

Rs. ४|४.

# तिङन्तादादि-प्रकरणम्





अद १०११ भक्षणे—। द्वौ परस्मैपदिनौ—।

२४२३। अदिप्रभृतिभ्यः शपः ॥२।४।७२।

दी—। लुक् स्यात्। अत्ति। अत्तः। अदन्ति।

The विकरण or affix शप् elides after अद् etc. i. e शप् is not attached to the roots of the अदादि class. Thus—अद्+तिप्= अत् (by 'खरि च' १२१)+ति=अत्ति. Similarly अत्तः। अद्+झि=अद्+अन्ति=अदन्ति।

मित—। 'ण्यक्षत्रियार्षञितः' (२।४।५८) इत्यतो लुगित्यनुवर्तते। तेन 'अदिप्रभृतिभ्यः शपो लुक्' इति पूर्णं सूत्रम्। अत आह—लुक् स्यादिति। अत एवादादयो लुग्विकरणाः। एवम् अद् शप् तिप् इति स्थिते—शपो 'लुकि दकारस्य 'खरि च' (१२१) इति चर्त्वेन तकारे कृते अत्ति इति। एवम्—अत्तः। अद्+झि इति स्थिते—'झोऽन्तः' इति अन्तादेशे अद्+अन्ति इति जाते—अदन्ति।

२४२४। लिट्यन्यतरस्याम् ॥ २।४।४० ॥

दी—। अदो घस्लृ वा स्याल्लिटि—। जघास। 'गम-

हन—' ( २३६३ ) इत्युपधा-लोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद् घस्य चर्त्वम्। 'शासिवसि—'( २४१० ) इति षत्वम्। जक्षतुः। जक्षुः। घसेस्तासावभावात्थलि नित्यमिट्। जघसिथ। आद। आदतुः। 'इडत्त्यर्ति—' (२३८४) इति नित्यमिट्—। आदिथ। अत्ता। अत्स्यति।

The root अद् is optionally replaced by the substitute घस् in लिट्। Thus—अद्+णल्=घस्+णल्=घस् घस् अ=घ घस् अ by 'हलादिः शेषः'=गघस् अ by 'अभ्यासे चर्च' (2182)=जघस् अ by 'कुहोश्चुः' (2245)=जघास् अ by 'अत उपधायाः (2282)=जघास। अद्+अतुस्=घस् घस् अतुस्=घघस् अतुस्=जघस् अतुस्=जघस् अतुस्. Now the penultimate अ of घस् elides by 'गमहन—' (2363) for अतुस् is कित् by 'असंयोगाल्लिट् कित्—' (2242). Thus जघस्+अतुस्=जघ्स्+अतुस्। This elision of the penultimate ceases to be स्थानिवद् towards the चर्त्वविधि owing to the prohibition of स्थानिवद्भाव by 'न पदान्तद्विर्वचन—' etc. (57). Hence by चर्त्व (by खरि च (121)) we have जक्स् अतुस्=जक्ष् अतुस् by 'शासिवसि—' (2410)=जक्षतुः। Similarly जक्षुः। This substitute घस् has no application in तास् (लुट्)। Hence it will always have इट् in थल्। Thus जघसिथ :—(Note that it has been said that—'तासनिट् थलि वेडयम्—।' Hence the root which is अनिट् and has the application in तासि is वेट् in थल but the root which though अनिट् has no application in तासि cannot be वेट् in थल in accordance with the भारद्वाजनियम)। Thus जघसिथ with इट्, आद (optional form of लिट्)—अद्+णल्=अद्+अद्+अ=अ आद अ=आद ; similarly

अदतुः etc ; अद gets नित्य इट् by the rule 'इडत्त्यर्ति—' (2384); अत्स्यति because the root is अनिट्।

लिट—। 'अदो जग्धिर्ल्यप्ति किति' (३०८०—२।४।३६) इत्यतो—'अदः' इत्यनुवर्तते। 'लुङ्सनोर्घस्लृ' (२४२७) इत्यतो—'घस्लृ' इति च। तेनेदं पूर्णं सूत्रम्—'लिटि अदो घस्लृ अन्यतरस्याम्' इति। घस्लृपक्षे रूपमाह—जघास इति। लृदित्करणमङर्थमित्युक्तम्। घस् अल इति स्थिते द्वित्वम्,—हलादिशेषः जश्त्वम्, चुत्वम्, अत उपधाया वृद्धिश्च। अथ अतुसि विशेषमाह—'गमहन—(२३६३) इत्यादिना। णलि तु नैवम्। तत्र णलः पित्त्वेनाकित्त्वात्। तस्य इति—उपधालोपस्य इत्यर्थः। चर्विधिं प्रति—'खरि चे'ति सूत्रेण यः चर्विधिः तं प्रति इत्यर्थः। स्थानिवद्भावनिषेधाद् इति—'न पदान्तद्विर्वचन—' (५१) इति सूत्रेणेति बोध्यम्। घस्य—लुप्तोपधस्य 'घकारमात्रस्य'—चर्त्वम् = 'कत्वम्'। तदेवं जघस् अतुस् इति स्थिते उपधालोपे—जघ्स् अतुस् इति जाते—चर्त्वे जक् स् अतुस् इति सम्पद्यमाने—शासिवसि (२४१०) इति षत्वे च जक्षतुरिति। एवं जक्षुरित्यत्र। घसेस्तासा-भावादिति—। घसादेशस्य—लक्षणाद्यभावात्—तासौ प्रयोगो नास्तीत्युक्तं प्राक्। तेन तस्य अनिट्त्वेऽपि—तासौ प्रयोगाभावात् नासौ—थलि वेट् भवति। 'यस्तासावस्ति अनिट् च' इति हि भाष्यम्। अतः भारद्वाजनियमविरहाद्—क्रादिनियमेन नित्यमिट्—जघसिथ इति। अदपक्षे रूपमाह—आद, इति—अद इति स्थिते द्वित्वहलादिशेषोपधावृद्ध्यादयः। एवम् आदतुः। 'इडत्त्यर्ति—'(२३८४) इत्यनेन भारद्वाजनियमस्य बाधान्नित्यमिट्। आदिथ—इति। अत्ता—इति तासौ—रूपम्। अत्स्यति = लृटि रूपम्। अदधातुरनिट्। अद+स्यति—इति स्थिते—खरि चेति चर्त्वे—दस्य तत्वम्।

२४२५। हुझल्भ्यो हेर्धिः ॥६।४।१०१॥

दी—। होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अदानि।

धि replaces हि coming after the root हु and those roots that end in झल्—hence अद् + हि = अद्धि। ( Though by सन्धि also we could have the form अद्धि yet the rule is essential in cases like जुहुधि, शाधि etc ). अद् + हि = अद् + धि = अद् + तात् ( तुह्योस्तातङ्—)' अत् + तात् ( खरि च gives त् ) = अत्तात्।—Here it is important to note that in fact तातङ् replaces हि and therefore ought to have come before, if we here substitute तातङ् for हि, then this तातङ् by स्थानिवद्भाव will give धि by 'स्थानिवदादेश—' and by this present rule. Then how to form अत्तात्? To solve this difficulty we have prescribed the above treatment. In this case हि is first changed into धि by हुझल्भ्यो—( 2425 ) and then तातङ् is substituted. Thus धि being once substituted for हि ( the स्थानी ) will not again be substituted for 'तातङ् ( the स्थानिवत् or आदेश )' owing to the परिभाषा—'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' ( for expl. See notes under rule—2409 ). Thus we get the form अत्तात्। अदानि—अद् + मिप् = अद् + आट् + नि = अद् + आनि = अदानि।

मित—। हुझल्भ्यः + हेः + धिरिति पदच्छेदः। हुश्च झलश्चेति, हुझलः; तेभ्यः। इत्यात्—पञ्चमीबहुवचनम्। झल् इत्यनेन तदन्तत्वं लभ्यम्—अङ्गविशेषणत्वात्। तदाह—झलन्तेभ्यश्चेति। अनेकाल्त्वात्—सर्वादेशः। तदेवं—अद्धि इति स्थिते अनेन—अद्धि = अद्धि इति भवति। तातङि—तु ( अत्तात्—इत्यत्र ) विशेष-व्यवस्थाश्रीयते। तथाहि—प्रथमं हे र्धिभावो विधातव्यस्ततस्तातङादेश्यः। अन्यथा प्राक् तातङ् यदि विधीयेत तदा—स्थानिवद्भावेन तातङो हिभावसत्त्वात्—तस्य ( तातङः ) धित्वं स्यात्। तथाच 'अत्तात्'— इति न लभ्येत। हेर्धिभावे प्राक् कृते तु तातङः स्थानिवद्भावेन हित्वे सत्यपि—पुनस्तस्य धित्वं न, सकृद्गतिन्यायात्

व( सकृद्गतौ विप्रतिषेधे—इत्यादावुक्तं प्राक्—इयाज इत्यादौ )। अतः सिद्धमव-पदे—अत्तात् इति। अदानि इति—'मेर्निः' इति निः। 'आडुत्तमस्य पिच्च' इति आडागमः, ततः अदानि। ( तत्त्वबोधिन्यां तु अत्तात् इत्यत्र मतान्तरमुपन्यस्तं। तत्तु न समीचीनं प्रतिभातीति नदत्तमत्र )। अदधातोर्लङ्याह—

२४२६। अदः सर्व्वेषाम्। ७।३।१००॥

टी—। अदः परस्यापृक्तसार्व्वधातुकस्य अडागमः स्यात् सर्व्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यास्ताम्। अद्यासुः।

The augment अट् comes in before the अपृक्तसार्व्वधातुक i. e तिप् or त् coming after the root अद्, according to all grammarians. Thus—अद्+तिप् (लङ्)=अद्+त्=आट्+अद्+अट्त्=आट्+अद्+अत्=आ+अद्+अत्=आदत्। आट्+अद्+तस्=आद्+ताम्=आत्ताम्—(by 'तस्थस्थमिपां—' and 'खरि च')। आट्+अद्+झि=अद्+अन्ति=अद्+अन्त् by 'इतश्च'=आद्+अन् by 'संयोगान्तस्य लोपः'=आदन्। अद्यात्—विधिलिङ् and आशीर्लिङ् ( Same form ), अद्यास्ताम्—dual of 3rd per. of आशी: ( अद्+यास्ताम् ); अद्यासुः ( अद्+यासुस् ).

मित—। 'अड्गार्ग्यगालवयो' (२४४६—७।३।९९) इत्यट्। 'गुणोऽपृक्ते' (२४४८—७।३।९१) इत्यतोऽपृक्त इति। 'तुरुस्तुशम्यमः सार्व्वधातुके' (२४४४—७।३।९५) इत्यतः सार्व्वधातुके इति चानुवर्त्तते—तदाह, अदः इत्यादि। अदः इति पञ्चम्यन्तं तेन 'तस्मादित्युत्तरस्य' इति परिभाषया 'परस्य' इति लभ्यते—तदाह अदः परस्येति। सूत्रे 'सर्व्वेषाम्' इति 'गार्ग्यगालव'—निवृत्त्यर्थम्। वृत्तौ 'अपृक्तसार्व्वधातुकस्य' इत्यनेन तिप् ( त् )—सिपावेव ( स् ) विवक्षितौ—'अपृक्त एकाल् प्रत्ययः—' इति सूत्रात्—अडागमस्य टिद् भवति। तेन 'आद्यन्तौ टकितौ' इति तकारसकारयोः

पूर्वमेव अडागमः। तदेवम्—अद्+तिप् इति स्थिते, 'आडजादीनाम्' इति आट्-अदत् इति जाते आदत् इति भवति। एवम्—आदः। अन्यत्—स्पष्टम्—मिपि—'तस्थस्थमिपा'मित्यादिना—अमादेशः। अद्यात्=विधिलिङाशीलिङोः समानम्। अद्यास्ताम्—अद्यासुरिति केवलम् आशिषि।

२४२७। लुङ्सनोर्घस्लृ ॥ २।४।३७॥

दी—। अदो घस्लृ स्याल्लुङि सनि च। लृदित्वादङ्। अघसत्—। हन्—१०१२ हिंसागत्योः। प्रणिहन्ति।

घस्लृ ( घस् ) is the substitute of the root अद्, in लुङ् and सन्। घस्लृ being लृदित् or लृ—eliding gets अङ् ( by 'पुषादिद्युताद्यॢदितः—'(२३४३), thus अघसत्—(अद्+तिप or त्=घस्+त्=अट् घस् च्लि त् =अघस् अङ् त्)। हन means to kill and to go. प्रणिहन्ति ( Here नि changes in णि ( cerebral ण ) by 'नेर्गदनद etc' ( 2285 ) )।

मित—। 'अदो जग्धि र्ल्यप् ति किति' ( ३०८०—२।४।६२ ) इत्यतो अद इत्यनुवर्त्तते। लुङ्सनो'रिति इन्द्वात् सप्तमीद्विवचनम्। लृदित्वादिति—पुषादि ( २३४३—३।१।५५ )—सूत्रेण अङ् इत्यर्थः। अन्यत् सुगमम्। हनधातुरयमनिट्। अथ ( सोपसर्गस्य—) णत्वं दर्शयितुमाह—प्रणिहन्ति इति।

२४२८। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो—झलि क्ङिति ॥ ६।४।३७ ॥

दी—। 'अनुनासिक—' इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम्। अनुनासिकान्तामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनु चणु षिणु ऋणु तृणु घृणु वणु मणु तनोत्यादयः। हतः। घ्नन्ति।

The word 'अनुनासिक' in the rule is elliptical for 'अनुनासिकस्य'... and qualifies all the roots except वनति ( वनु ). The final of these roots ( the अनुदात्तोपदेश like यम् रम् etc. and तनु, क्षणु etc. and वनु ) elides when a किङ्त् ( क-eliding and ङ-eliding ) affix beginning with a झल् letter follows. The roots यम्, रम्, नम्, गम्, हन् and मन् are taught as अनुदात्त ( among the अनुनासिकान्त roots ); तन्, क्षण्, क्षिण्, ऋण्, तृण्, घृण्, वन् and मन् are known as तनोत्यादि। Thus हन्+तस् ( तस् is ङित् by 'सार्वधातुकमपित्' = हतस = हतः। हन्+अन्ति (though अन्ति (झ) also is ङित् yet the न of हन् does not disappear because अन्ति is not झलादि ) = घन् अन्ति by 'हो हन्तेर्ञ्णिन्नेषु' (358) = घन् अन्ति by 'गमहनजनखनघसां लोपः क्ङित्यनङि' (2363) = घ्नन्ति।

मित—। अनुदात्तोपदेशाश्च वनतिश्च तनोत्यादयश्च—इति द्वन्द्वात् षष्ठी-बहुवचनम्। अनुदात्तोपदेशाश्च—'अनुदात्तानामनुपदमेव संग्रहीष्यन्ते' इति प्रतिज्ञाय—'ऊदृदन्तै'रित्यादिभिः श्लोकैः संगृहीता ( 'आत्मनेपदेष्वनतः' ( २२५८ ) इत्यस्या-धस्तात्—द्रष्टव्यम् )। वनतिर्भौवादिकः तनोत्यादयस्तु अग्रे पठिष्यन्ते। तेन अयं सूत्रस्य प्रतीयमानार्थः—'एतेषां धातूनाम् अनुनासिकस्य—लोपः स्यात् झलादौ किङ्ति प्रत्यये परे'। एवं व्याख्याने तु 'मन्-नम्-नह-मिहमुच-मस्ज-भ्रस्जादी-नामनन्त्यानामपि नकारमकारादीनां लोपः प्रसज्येत। तथा च—मतः, नतः, नद्धः, मीढः, भग्नः इत्यादि न सिध्येत्। अतो ज्ञायते—यदेषाम् अन्त्यस्यैव लोपः, नानन्त्यस्य इति। तदाह—'अनुनासिक—' इति लुप्तषष्ठीकं पदमिति। अनुनासिकस्य इति यावत्। ततः 'येन विधिस्तदन्तस्य—' इति अनुनासिकस्येतिपदस्य—विशेषणत्वात्—'तदन्तस्य' इति विज्ञायते। अत आह—अनुनासिकान्तानामिति। तत्रापि नेदं ( अनुनासिकम् इति ) वनतेर्विशेषणम्। 'वन्' धातोः सर्वदैव अनुनासिकान्तत्वात्। तदाह—'वनतीतरेषां विशेषणम्' इति, अनुनासिकान्तानामेषां

वनतेश्चेति। एषामिति—यमुरमादीनामनुदात्तोपदेशानाम्—तनु-क्षणु-क्षिण्वादीनां तनोत्यादीनाञ्च। अथानुनासिकान्तान्—अनुदात्तोपदेशान्—तनोत्यादींश्च दर्शयति—यमीत्यादिना। यमुरमादयः षडेव अनुदात्तोपदेशा अनुनासिकान्ता इति भावः। तनुक्षण्विति—तेऽष्टावेव अनुनासिकान्तास्तनोत्यादयः। तनु विस्तारे इत्यारभ्य—डुकृञ् करणे इत्यन्ताः यद्यपि दश एव तनोत्यादयस्तथापि—करोतेरनुनासिकान्तत्वाभावात्—'सन्'—धातोश्च 'जनसनखना'मिति आत्वस्य वक्ष्यमाणत्वात्—नैतद्द्वयम्—अनुनासिकान्तमध्ये परिगणितम्—। ततः, क्षतः, क्षितः इत्याद्युदाहरणानि। अनुनासिकान्तानामिति किम्। शक्तः। रुग्णः। झलीति किम्? गम्यते नम्यते। किङ्तीति किम्। गन्ता। मन्ता। एवं—हन् तस् इति स्थिते 'सार्व्वधातुकमपित्' इति तसः अपित्वेन ङित्वात्—नलोपः—हतः। घ्नन्ति इत्यत्र तु 'हो हन्तेः'—(३५८) इति कुत्वम्; गमहन (२२६२) इति उपधालोपश्च ततो हकारस्य कुत्वेन घकारे कृते—हन् अन्ति = घन् अन्ति = घ् न् अन्ति = घ्नन्ति—इति भवति।

२४२८। वमोर्वा ॥ ८।४।२३ ॥

दी—। उपसर्गस्थान्निमित्तात् परस्य—हन्तेर्नस्य णो वा स्याद्वमयोः परयोः। प्रहण्मि—प्रहन्मि। प्रहण्वः—प्रहन्वः। 'हो हन्तेः—' (३५८) इति कुत्वम्। जघान। जघ्नतुः। जघ्नुः।

The न of हन् optionally turns to cerebral owing to a condition, lying in the उपसर्ग, when the affixes व and म follow. Thus प्रहण्मि ( cerebral ) प्रहन्मि ( dental ). etc. In जघान etc we have कुत्व ( कवर्गत्व ) i.e. घत्व in place of ह by the rule 'हो हन्तेः—' (358). Thus हन् + णल् = हन् हन् अ = हहन् अ = ज ( 'कुहोश्चुः' (2245) ) घन् अ = जघान् ( 'अत उपधायाः' (२२४२) ) अ = जघान। In हन् + अतुस्, अतुस् is कित् by 'असंयोगाल्लिट् कित्' ( 2242 )। Hence by 'गमहन—' etc.

(2363), the penultimate अ of हन् elides giving जघ् ( 'हो हन्तेः—' ) न् अतुस्=जघ्नतुः. Similarly—जघ्नुः ।

मित—। 'उपसर्गादसमासेऽपि णोपदेशस्य—' ( २२८७—८।४ १४ ) इत्यत— उपसर्गादिति अनुवर्त्तते। 'रषाभ्यां नो णः समानपदे' ( २३४—८।४।१ ) इति सूत्रात् 'नो ण' इति—'हन्तेरत्पूर्व्वस्य' ( ३५९—८।४।२२ ) इत्यतो हन्तेरिति चानुवर्त्तते। अत आह उपसर्गस्थादित्यादि—। सूत्रे वमोरिति सप्तमीद्विवचनम्। तदाह— वमयोः परयोरिति। णत्वविकल्पमेव दर्शयति—प्रहण्मि—प्रहन्मि इत्यादिना। एवं प्रहण्वः—प्रहन्मः। णलि, हन् हन् अ=हहन् अ—जहान् अ ( कुहोश्चुरित्यभ्यासस्य चुत्वेन जकारः—'अत उपधायाः' इति—उपधावृद्धिः ) इति स्थिते—'हो हन्तेर्ञ्णिन्नेष्विति' हस्य—कुत्वं ( घ ) स्मारयति। अभ्यासाच्चेत्यपेक्षया ( २४३० ) अस्य ( 'हो हन्तेः—' ) अन्तरङ्गत्वात् न्याय्यत्वादिति भावः। जघान। जघ्नतुरित्यत्रापि पूर्व्ववत् चुत्वकुत्वे। किञ्च 'असंयोगाल्लिट् कित्—' ( २२४२ ) इति अतुस अपित्त्वेन कित्त्वात्—'गमहनजनखनघसां लोपः क्ङित्यनङि' ( २३६३ ;) इत्युपधालोपः। एवं जघ्नुरित्यत्र।

## २४३० । अभ्यासाच्च ॥७।३।५५॥

दी—। अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ—जघन्थ। हन्ता। 'ऋद्धनोः स्ये'—(२३६६) इति इट्। हनिष्यति। हन्तु। हतात्। घ्नन्तु।

कुत्व ie. घ is directed in place of the ह of हन् coming after the अभ्यास। Thus—जघनिथ—जघन्थ ( option of इट् by भारद्वाजनियम )। Here there follows no affix, dropping ञ् or ण् ( ञ्णित् ) hence the rule ( 'अभ्यासाच्च ) applies. जहन् इट् थ—जहन् थ—जघन् इथ—जघन्थ ( by 'नश्चापदान्तस्य झलि' and 'अनुस्वारस्य ययि परसवर्णः। हन्ता (लुट्). The rest is easy.

मिव—। 'ह्रौ हन्तेः'रित्यनुवर्त्तते। चजोः कुघिण्ण्यतोरित्यतः (२८६३—७।३।५२) 'कु' इति च। तदाह—अभ्यासात् परस्येत्यादि। तदे' भारद्वाजनियमाद् जघन् थट् थ—जघन् थ इति स्थिते अनेन कुत्वं जघनिथ—जघन्थ इति। उत्तरत्र—नश्चापदान्तस्येति नस्यानुस्वारः। ततः 'अनुस्वारस्य ययि परसवर्णः' इति थकारस्य सवर्णो नकारः। हन्ता—पूर्व्ववदिघनाभावात्—कुत्वादिर्कं;न। लृटि—इटघाति दर्मयसि—ऋद्धनोरिति। हतात्—तुह्योस्तातङिति तातङ्। घ्नन्तु—घन्तिवत् प्रक्रिया।

२४३१। हन्तेर्जः ॥६।४।३६॥

**दौ—। ह्रौ परे। आभीतया जस्यासिद्धत्वाद्धेर्न लुक्। जहि। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहनम्।**

The root हन् is replaced by ज when 'हि' follows. Now though ज is अदन्त or अकारान्त yet the affix हि will not elide by the rule 'अतो हेः (2202—6.4.105) in as much as this ज is असिद्ध or invalid (as not having existed) owing to its having fallen under the आभीय rules—vide the rule—'असिद्धवदत्राभात्' (2183—6.4.22) which extends up to 'भस्य' (6.4.129) the last ophorism of the section in अष्टाध्यायी। Nor is the place of application different for with reference to हि at one time is the अभाव of हन् enjoined and at another time is taught the elision of the same (हि)। Thus the sphere of application is same (समानाश्रय—हि) and hence हि does not elide here and we consequently get the form जहि। हनानि = हन् + आनि (by 'मेर्निः' and आडुत्तमस्य पिच्च) similarly हनाव and हनाम। (लङ्) अहन्—अट् + हन् + तिप् = अहन् त by 'इतश्च'

अहन् by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (232) or by 'इतश्च' and 'संयोगान्तस्य लोपः ?' अहनम्—अट्, हन् मिप—अहन् अम् here the rule 'ङमो ह्रस्वादचि ङमुण्नित्यम्' (134) does not apply for हन् is not a pada.

मित—। 'शा हौ' (२४८७—६।४।३५) इत्यतो हौ इत्यनुवर्तते। तदाह—हौ परे इति। हि प्रत्यये परे हन्तेः 'ज' इत्यादेशः स्यादित्यर्थः। ननु तर्हि 'ज' इत्यस्य अदन्तत्वात् तत्परस्य हेः 'अतो हेः' (२२०२—६।४।१०५) इति लोपः स्यादित्याशङ्क्य समाधत्ते—आभीयत्वेति। असिद्धवदत्राभात्—(६।४।२२) इति सूत्राधिकारमध्यपतितत्वादस्य आभीयत्वादित्यर्थः। न चात्र समानाश्रयाभावो येन तस्यासिद्धत्वपरिहारः स्यात्। 'अतो हेः (६।४।१०५), हन्तेर्जः' (६।४।३६) इति द्वयोरपि 'हि' विभक्तिमाश्रित्य प्रवर्त्तमानत्वादिति, जस्य असिद्धत्वात्र अत्परत्वं हेर्नास्त्येव, अतो न लुक्। जहि। हनानि—'मिनि,' 'आडुत्तमस्य पिच्चेति मिप आनिभावः। एवं हनाव। हनाम। (लङ्) अहन्—अट् हन् तिप् इति स्थिते—इतश्चेति इलोपे 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (२५२) इति, 'संयोगान्तस्य लोपः' इति वा तलोपः। अहताम्—तसस्तामादेशः। अनुदात्तोपदेशेति—अनुनासिकलोपः। अघ्नन्—गमहनेति उपधालोपः—हो हन्तेरिति कुत्वम्। अहनम्—मिपोऽमादेशः। पदत्वाभावात्—ङमो ह्रस्वादचि—इति ङमुडादेशो न।

२४३२। आर्द्धधातुके ॥२।४।२५॥

टी—। इत्यधिकृत्य—

This is an अधिकार-सूत्र।

२४३३। हनो वध लिङि ॥२।४।४२॥

२४३४। लुङि च ॥२।४।४३॥

टी—। वधादेशोऽदन्तः। 'आर्द्धधातुके' (१२०७) इति विषयसप्तमी। तेनार्द्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः'

(२३०८)। वध्यात्। वध्यास्ताम्। 'आर्द्धधातुके' किम्। विध्यादौ हन्यात्। 'हन्तेः—' (३५८) इति णत्वम्। प्रहण्यात्। अल्लोपस्य स्थानिवत्त्वात् अतो हलादेः इति न वृद्धिः—अवधीत्।

अथ चत्वारः स्वरितेतः। द्विष १०१३ अप्रीतौ। द्वेष्टि—द्विष्टे। द्वेष्टा। द्वेक्ष्यति—द्वेक्ष्यते। द्वेष्टु—द्विष्टात्। द्विड्ढि। द्वेषाणि। द्वेषै। द्वेषावहै। अद्वेट्।

The meaning of the two aphorisms is this :—The root हन् is replaced by the substitute वध (अकारान्त) in लिङ् and also in लुङ्।

The substitute वध ends in अकार। The rule 'आर्द्धधातुके' (2397) is an instance of विषयसप्तमी i.e., आर्द्धधातुकविषये i.e., in the matter of or with reference to आर्द्धधातुक। Hence when any concern of आर्द्धधातुक is made or spoken of, the substitute वध will drop its final अ by 'अतो लोपः' (2308) in as much as it is taught to be अकारान्त in the sphere or jurisdiction of आर्द्धधातुक। The drift is this :—वध is taught to be an अकारान्त आर्द्धधातुक in लिङ् and लुङ्। Thus by 'अतो लोपः' अ elides giving (वध्+यात्=वध्यात्), similarly वध्यास्ताम् (यास्ताम्) etc. Why say आर्द्धधातुके? witness—हन्यात् in विधिलिङ् where हन् is not set aside by वध। In प्रहण्यात्—we have णत्व by 'हन्तेः—' (859)। अवधीत्—अट् वध सिच् तिप्। Note that though the substitute वध ceases to be अदन्त by 'अतो लोपः' and becomes धकारान्त and consequently, becomes एकाच् and not अनेकाच्—yet it will take the augment इट् (which is not sanctioned to एकाच् roots by 'एकाच उपदेशेऽनुदात्तात्' (2246) in as mnch as it (वध) was instructed to be अनेकाच् in the

आर्द्धधातुकोपदेश ie. as it was taught under the jurisdiction of आर्द्धधातुक:. Thus अवध इट् सिच् ईट् त् = अवध इस् ईत् = अवध् इ ० ईत् by ( इट ईटि—2269 ) = अवधीत्—। Now it may be rejoined that वध after the final अ of it has been dropped by अतो लोप will pave the way for 'अतो हलादेर्लघोः' ( 2234 )। But such rejoinder may be withheld by the fact that though वध has turned धकारान्त after अल्लोप yet by the rule 'अच: परस्मिन् पूर्व्वविधौ' (60) this अल्लोप is स्थानिवत् and thus virtually we get वध अदन्त and not धकारान्त। Thus it is again अनेकाच् or having more than one vowel. Hence the rule 'अतो हलादे:—' does not come in.

Now we shall mention four स्वरितेत् or उभयपदी roots. द्विष् meaning want of pleasure (to envey or harm etc). द्वेष्टि—द्विष्ट ( the former is gunnated for तिप् is पित् cp.—'पित्सु गुण:' ). Similarly द्वेष्टा द्वेष्टु—etc. द्विष्टे—is ङित्—hence no guna. द्विष् + स्यतिप् = द्वेष् + स्यति = द्वेक्ष्यति by 'षढो: क: सि' and 'इणकोः', 'आदेश-प्रत्यययो:' = द्वेक्ष्यति। Similarly द्वेक्ष्यते। द्विष्टात्—तातङ् is ङित्—hence no guna. द्विड्ढि—द्विष् + हि = द्विष् धि by 'हुझल्भ्यो:' = द्विड् धि by झलां जश् झशि = द्विड्ढि by ष्टुना ष्टु:।

मित—। हन्धातोराशीर्लिङि—लुङि च 'वध' इत्यादेश: स्यादिति सूत्रयोरर्थ:। विशेषमाह—वधादेशोऽदन्त इति। नच सुखसुखार्थं तत्प्रयोजनम्। अदन्तोप-देशस्य—अवधीदित्यत्र—सप्रयोजनत्वादिति यथास्थानं वक्ष्यते। आर्द्धधातुक इति—विषयसप्तमीति। नतु परसप्तमीति भाव:। तेन आर्द्धधातुके विषये—विवक्षितेऽधिकृते वेत्यर्थ:। तथाच—आर्द्धधातुके विषये तत्प्रवृत्ते: प्रागेव क्रियते वधादेश:। परसप्तम्यां तु तादृशावकाशाभाव:। एवं सति वध.देशे—तस्य ( आर्द्धधातुकस्य ) प्रवृत्तिरिति फलति—अयं विवेक:। 'आर्द्धधातुके' इत्यवयवं सूत्रद्वयं वर्त्तते।

'आर्द्धधातुके' (२४३२—२।४।३५) इत्येकम्। 'आर्द्धधातुके—' (२३०७—६।४।४६) इत्यन्यत्। तत्र पूर्वम् आर्द्धधातुकोपदेशार्थं गृह्यते। परन्तु आर्द्धधातुकविषयार्थम् इति। अतएव आर्द्धधातुकोपदेशकाले वधादेशस्य अदन्तत्वात्—'अतोलोपः' इति अल्लोपो भवत्येव। ततश्च वध्यास् इति लभ्यते। एवं वध्यास्ताम्—इत्यादिषु—। विध्यादावित्ति—आर्द्धधातुकत्वाभावाद् वधादेशो न। आदिपदेन लट्लोटादेरपि-संग्रहः। उपसर्गवशादन्यार्थत्वमित्याह—प्रहण्यात्—इति। एतच्च 'हन्तेः—' (३५९) इत्यत्र स्पष्टम्। अवधीत् इति—अट् वध सिच् तिप् इति स्थिते—'अतो लोपः' इत्यल्लोपे कृते यद्यपि वध्—इति एकाज् भवति तथापि 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन इट्निषेधो न भवति आर्द्धधातुकोपदेशेऽनेकाच्त्वात्। नच 'अतो हलादेर्लघोरिति (२२८४) इति वृद्धिः शङ्क्या। 'अचः परस्मिन्—' इत्यल्लोपस्यस्थानिवत्त्वेन वध्त्वाभावात्। एतदर्थमेव च वधादेशः अदन्तः कृत इति बोद्धव्यम्। प्रहण्यात् —इति एतच्च'हन्ते—' (३५९) रित्यत्र स्पष्टीकृतम्।

अथ चत्वार इति। स्वरितेतः—उभयपदिन इत्यर्थः। अप्रीतौ—हिंसायामिति-भावः। द्वेष्टि—इति—तिपः पित्त्वेन 'पित्सु—' इत्यत्रैर्गुणः। द्विष्टे इति—ङित्वेन गुणाभावः। द्वेक्ष्यति—द्वेक्ष्यते—पूर्ववत् गुणः पूर्ववत्। 'षढोः कः सि' इति—उभयत्र द्विषः षस्य कत्वम्—। ततः इण्कोः—आदेशप्रत्यययोरिति—सस्यत्वस्य षत्वम्। द्विष्टात् इति—तातङः ङित्वात्—गुणाभावः। द्विड्ढि—द्विष् हि इति स्थिते हुझल्भ्यो हेर्धिरिति धिः। झलां जश्—इति षस्य जश्त्वेन डः। ष्टुना-ष्टुरिति धस्य ष्टुत्वेण ढः। द्वेषाणि इति गुणः। मेर्नि आडुत्तमस्येति आट्। द्वेषै—गुणः। आटश्चेति वृद्धिः। द्वेषावहै—स्पष्टम्। अद्वेट्—इति लङ् गुणः। हल्ङ्याब्भ्य—इति तिलोपः। 'वावसाने' इति चर्त्वेन षस्य टत्वम्।

२४३५। द्विषश्च ॥ ३।४।११२ ॥

द्वी—। लङो झेर्जुस् वा स्यात्। अद्विषुः—अद्विषन्। अद्वेषम्। द्विष्यात्—द्विषीत। द्विक्षीष्ट।

अध्रिचत्। दुह १०१४ प्रपूरणे—। प्रपूरणं पूरणाभावः। धात्वर्थस्बाधते कश्चित्। दोग्धि। दुग्धः। धोक्षि। दुग्धे। धुक्षे। धुग्ध्वे। दोग्धु। दुग्धि। दोहानि। धुक्ष्व। धुग्ध्वम्। दोहै। अधोक्। अदोहम्। अदुग्ध। अधुग्ध्वम्। अधुक्षत्—अधुक्षत। 'लुग् वा दुह—' (२३६५) इति लुक्पक्षे 'त-थास्-ध्वम्-वहिषु'—लङ्वदपि। दिह १०१५ उपचये। उपचयो वृद्धिः। प्रणिदेग्धि। लिह १०१६ आस्वादने। लेढ़ि। लीढ़ः। लिहन्ति। लेक्षि। लीढ़े। लिक्षे। लीढ्वे। लेढ़ु। लीढ़ि। लेहानि। अलेट्। अलिक्षत्—अलिक्षत। अलिक्षताम्। अलीढ़। अलिक्षावहि। अलिह्वहि। अलेक्ष्यत्। अलेक्ष्यत। चक्षिङ् १०१७ व्यक्तायां वाचि। अयं दर्शनेऽपि। इकारोऽनुदात्तो युजर्थः। 'विचक्षणः प्रथयन्'। नुम् तु न। 'अन्ते इदितः' इति व्याख्यानात्। ङकारस्तु—अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः। तेन 'स्फायन्निर्मोकसन्धि—' इत्यादि सिध्यति। चष्टे। चक्षाते। 'आर्द्धधातुके' (२४३२) इत्यधिकृत्य—।

The substitute जुस् optionally replaces the affix झि of लङ coming after the root द्विष् also. Thus द्विष्+झि=अट् द्विष् जुस्=अद्विष् उस्=अद्विषुः and the alternative form is अद्विषन्। अद्वेषम्—the root is here gunnated because मिप् as पित् "तस्थस्थमिपां तांतंतामः" directs अम् in place of मिप्। द्विष्यात्—द्विषीत—(विधिलिङ्)। द्विष्यात् is the common form in both विधिलिङ् and आशीर्लिङ् which in आत्मनेपद gives द्विषीष्ट—( द्विष्+सीष्ट ( सीयुट् सुट्स—

सीयस् त = सीष्त = सीष्ट ) = धिक् सीष्ट by 'षढोः कः सि' = धिक् षीष्ट by षत्वविधि )। The root is not gunnated here because विधिलिङ् and आशीर्लिङ् are ङित् in परस्मैपद ( 'यासुट परस्मैपदेषूदात्तो ङिच्च' (२२००) and कित् in आत्मनेपद ( 'लिङ्सिचावात्मनेपदेषु—' (2300) ). अधिक्षत्— लुङ् form in परस्मैपद—अट् दिह् च्लि तिप् = अदिह् क्स by—'शल इगुपधादनिट: क्सः ( 2336 ) = अदिघ्सत् = अधिक्षत् as in 'धिक्षीष्ट— ।' There being no सिच् the augment ईट् does not come in by 'अस्तिसिचोऽपृक्ते' and this root being अनिट् the rule 'आर्द्धधातुकस्य—' does not apply. दुह meanes to fill in full. This meaning is intended by the speaker ; but in general use we find the quite opposite implication of the root. Hence Bhottoji says—प्रपूरण means want of पूरण or filling up—i,e means to make empty etc. Cf—'दुदोह गां स यज्ञाय—' ( रघु 1st. ) 'मनीषितं द्यौरपि येन दुग्धा—' ( रघु—5th ) etc and defends his point by the saying 'धात्वर्थं बाधते कश्चित्'—Some उपसर्ग bars the ( real ) meaning of the root. कश्चित् = some उपसर्ग, e.g—'सन्देशं मे हर जद्गतिः' ( मेघपूर्व— ) and 'क्रोधं प्रभो संहर संहरेति' ( कुमार—३य ) etc. दोग्धि—दुह + तिप् = दोह् ति by 'पुगन्तलघूपधस्य च' (289) = दोघ्ति by 'दादेर्धातोर्घः' (325) = दोघ्धि by 'झषस्तथोर्धोऽधः' ( 2280 ) = दोग्धि by झलां जश् झशि (52)। Similarly दुग्धः, where तस् being ङित् by 'सार्वधातुकमपित्' the root is not gunnated owing to the prohibition 'क्ङिति च' ( 2217 ). धोक्षि—दुह् + सि = दोह्सि = दोघ् सि = धोघ् सि by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( 326 ) = धोक् सि by 'खरि च' (121) = धोक्षि = धोक्षि। दुग्धे—दुह्ते—दु घ् धे = दुग्धे the affix त is ङित् hence no guna। धुक्षे—दुह्से as in धोक्षि—absence of guna, for से is ङित्. धुग्ध्वे—दुह् + ध्वे = दुघ् ध्वे by 'दादेर्धातोर्घः' ( 325 ) = धुग्ध्वे by 'एकाचो बशो भष—' ( 326 ). and

'झलां जश् झशि' (52)। दोग्धु like दोग्धि। दुग्धि—दुह्+हि=दुघ्—धि—by 'हुझल्—' (2425) and 'दादेर्धातोर्घः' = दुग्धि by 'झलांजश्—'। In हि विभक्ति the root is not gunnated due to—'सेर्ह्यपिच्च' and 'क्ङिति च'। दोहानि—दुह्+मिप्=दोह्आनि ('मेर्निः'—'आडुत्तमस्य पिच्च')। धुक्ष्व—दुह्+स्व=दुघ्स्व by 'दादेः—'=धुघ्स्व by 'एकाचः—'=धुग्स्व by 'झलांजश्—'=धुक्स्व by 'खरि च'=धुक्स्व (षत्व)=धुक्ष्व। धुग्ध्वम्—दुह+ध्वम् by घत्व-भष्भाव and जश्त्व; दोहै—दुह्+ऐ (आट+इ=आ+ए=ऐ by 'आटश्च' and 'टित—'), आट् is पित् hence गुण। अधोक्—अट+दुह्+तिप्=अदोह्त् by गुण and by 'इतश्च'=अदोह् by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (252)=अदोघ् by 'दादेर्धातोर्घः'= अधोघ् by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः'=अधोग्—अधोक् by 'वाऽवसाने' (209). अदोहम्—अट् दुह् मिप्= अदोह् अम्। अदुग्ध—अट् दुह् त (त is ङित् hence no guna)= अदुघ्त by 'दादेः—'=अदुघ्ध by 'झषस्तथोर्धोऽधः'=अदुग्ध by 'झलां जश्—'। अधुग्ध्वम्—अट् दुह् ध्वम्=अदुघ् ध्वम्= अधुघ् ध्वम् =अधुग्ध्वम्। अधुक्षत्—This is the लुङ् form in परस्मैपद। Thus अट् दुह् च्लि तिप्=अदुह् क्स त्। Here the अपृक्त (त्) being after क्स forbids the aug. ईट which the rule 'अस्तिसिचोऽपृक्ते' (2225) directs to (त्) coming after or present with सिच। Then अ दुघ् सत्=अधुग् सत्=अधुक्षत्=अधुक्षत् (See rules cited above). दुह् is provided for with क्स by the rule 'शल इगुपधादनिटः क्सः' (2336)। Similar is the case with the लुङ् form अधुक्षत (आत्मनेपद singular); want of guna in both the cases is owing to the कित्त्व of the क्स.

लुग् वा दुह—(2365) etc i.e. when the affix क्स disappears optionally by the rule—लुग्वा दुह etc, then we have four forms corresponding to the four affixes त, थास, ध्वम् and वहि as

in लङ्—e.g अदुग्ध, अदुग्धाः, अधुग्ध्वम् and अदुह्वहि respectively. दिह् to increase. प्रणिदेग्धि—णत्व by नेर्गदनद etc. (2285). Conjugated like दुह् above. लिह् means to lick or taste, लेढि—लिह् तिप्=लेह्ति by 'पुगन्तलघूपधस्य च' (2189)=लेढ् ति by "हो ढः"=लेढ्धि by 'झषस्तथोर्धोऽधः' (2280)=लेढ् ढि by 'ष्टुना ष्टुः'=लेढि by 'ढो ढे लोपः' (2335)। लीढः—लिह् तस्=लिढ् धस् ('हो ढः' and झषस्तथोः—) लिढ् ढस् (ष्टुना ष्टुः)=लि ० ढस् ('ढो ढे लोपः')=लीढः—'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (874)। लिहन्ति—लिह्+झि (अन्ति)—झि being ङित् no guna is made to the root, लेक्षि—लिह् सिप्—लेह्सि—लेढ्सि—लेक्सि by 'षढोः कः सि' (295)—लेक् षि (षत्व—by 'आदेश—')। लिचि—लीढः—लीढ। लेक्षि—लिह्वः लिह्मः—(परस्मै)। लीढे—लिह्ते ('टित आत्मने—') लिढ् ते want of guna for ते is ङित्—'हो ढः' and 'झषः—'=लिढ् ढे (ष्टुना ष्टुः) लि ० ढे (ढो ढे लोपः)=लीढे, 'ढ्रलोपे पूर्वस्य—' (174), लिहाते—लिहते। लिक्षे—लिढ् से absence of guna owing to the ङित्त्व of से then ढत्वकत्वषत्व as before (लेक्षि)। लिहाथे लीढ्वे (लिह् ध्वे—लिढ् ढ्वे—लि ० ढ्वे—लीढ्वे) लिहे—लिह्वहे लिह्महे—(Here ends लट्)। लेढु—लिह् तिप्—लिह् तुप्—लेह् तु—लेढ् धु ('हो ढः' and 'झषः—')—लेढ् ढु (ष्टुनाष्टुः)—ले ० ढु—(ढो ढे लोपः)—लेढु। लीढाम्—लिह् तस्—लिह् ताम्—लिढ् धाम्—लिढ् ढाम्—ली ० ढाम—लीढाम्। लिहन्तु, लीढि—लिह्हि—लिह्धि by 'हुझल्भ्यो—र्हेर्धिः' लिढ् ढि by 'हो ढः' and 'ष्टुनाष्टुः'—ली ० ढि by 'ढो ढे लोपः' and 'ढ्रलोपे पूर्वस्य दीर्घोऽणः। (174). लीढम् लेहानि—लिह् मिप्—लेह् आट्नि—लेहानि। लेहाव। लेहाम। अलेट्—अट् लिह् तिप् (लङ्)—अलेह्त्=अलेह् ० by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' अलेढ्=अलेड्—अलेट् by 'वाऽवसाने'। अलिक्षत्—अलिक्षत these are the लुङ् in परस्मै and आत्मने in conection with क्स which replaces च्लि by 'शल इगुपधादनिटः क्सः' (2336)। Thus अट् लिह् च्लि तिप्—अलि-

ऌ क्स त् ( क्स is कित् hence no guna and as there is no सिच् so त् is not prefixed with the augment ईट् and no इट् because लिह् is अनिट् )—अलिढ् सत्—अलिक् सत् by 'षढोः—'—अलिक् षत्—अलिक्षत्। Similarly अलिक्षत। अलिक्षताम् ( परस्मै )—अलिक्षाताम्॥ ( आत्मने )। अलिक्षन् ( परस्मै )—अलिक्षन्त ( आत्मने )। अलीढ—optional form in the आत्मनेपद in case of the elision of क्स by 'लुग् वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' ( 2365 ) अलिक्षावहि ( क्सपक्षे ), अलिह्वहि ( लुक्पक्षे )। अलेक्ष्यत्—( लृङ्—परस्मै )—अलेक्ष्यत ( लृङ्—आत्मने )।

चक्षिङ् to express clearly. It is used in the sense of 'seeing' also. The इकार of चक्षिङ् is अनुदात्त and is intented to attach the affix युच to it ( चच् ), cp—'अनुदात्तेतश्च हलादेः' ( 3129 ) e. g. 'विचक्षणः प्रवदन्' where विचक्षण is derived with युच् or अन। But though चक्षिङ् is इदित् or इकार—eliding i.e. drops its इकार, yet we cannot attach the augment नुम् to it by 'इदितो नुम् धातोः' ( 2262 ), for the rule 'इदितो नुम् धातोः' has been explained thus—'अन्त इदितः' i.e those roots which drop their final ( अन्त्य ) इकार are termed as इदितः, the word अन्त being taken from the rule—'शीः प्यादान्ते' ( 3574—7.1.57 ) which invariably precedes the rule 'इदितो नुम् धातोः ( 2262—7.1.58 ). Now, चक्षिङ् does not drop its final इकार, because it ends in ङ् hence the इकार though dropped is not final thus we cannot attach नुम् to it. Here one may rejoin thus—you ( Bhattoji ) have said that the इकार of चक्षिङ् is अनुदात्त, and this इकार elides ; therefore चक्षिङ् is अनुदात्तेत् or अनुदात्त—eliding, whence it is evident that the root is आत्मनेपदी by the rule 'अनुदात्तङित आत्मनेपदम्' ( 2157 ). Then

why did the सूत्रकार attach the letter ङ् ( which is nothing but an indicatory of आत्मनेपद ) to the root चक्षि ( चक्ष् ) ? To answer this he ( Bhattoji ) says ङकारस्तु etc—The drift of his saying is this :—there are two sorts of आत्मनेपदs—one temporary or provisional ( अनित्य ) and the other persistent or नित्य । The आत्मने which is directed by pronouncing the term 'अनुदात्तेत्' i.e. the आत्मने—which results from the elision of any अनुदात्त letter in the root ( as in चक्षिङ् where इ disappears ) falls in the former class i.e. is अनित्य or may or may not be strictly adhered to e. g. 'स्फायन्—' where शतृ is affixed to 'स्फायी वृद्धौ' ( to increase ). But as it ( स्फायी ) drops its ई which is अनुदात्त, the proper form would have been 'स्फायमानः' with शानच् and not स्फायन् with शतृ as we have it here. Thus it is obvious that 'an आत्मनेपद which is the consequence of the elision of any अनुदात्त letter in the root is अनित्य'—( अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्—परिभाषा ). And this is indicated by the final letter ङ् in this root in as much as what ends in ङ् must be taken as नित्य आत्मनेपद and not अनित्य । Thus the intention of the सूत्रकार in adding ङ् to चक्षि is to show that the root is always आत्मनेपद । चष्टे—चक्षिङ् ( चक्ष् )+ते=चक्ष्+ते=च ० ष् ते by 'स्कोः संयोगाद्योरन्ते च' ( 380—8.2.29 )=चष्टे by 'ष्टुना ष्टुः' ( 113 ); चक्षाते—चक्ष्+आते आताम्—'टित आत्मनेपदानां टेरे' चक्षते by 'आत्मनेपदेष्वनतः' ( 2258 ) । Now the अधिकार सूत्र is आर्द्धधातुके—( 2432—2.4.35 ) which is followed by :—

मित—। 'भैर्जुस्' ( ३।४।१०८ ) इत्यतो 'भैर्जुस्' इत्यनुवर्तते । 'लङः शाकटाय-

नस्येव' ( २४६२—३।४।१११ ) इत्यतो 'लङः' इति च। तदाह—'लङो ऽजुस्' इति। विषयेत्यतः पूर्व्वसूत्रे शाकटायनग्रहणं विकल्पार्थम्। तच्चेहापि चकारेण अनुकृष्यते। तदाह—'वा' स्यादिति। तदेव दर्शयति—अद्विषुः ( अट् द्विष् झि (जुस्)—अद्विषुस् ); अद्विषन् ( अट् द्विष् झि—'झोऽन्तः'—'संयोगान्तस्य लोपः' )। अद्वेषम्—मिप्प्रत्ययस्य पित्वाद् धातोः 'पुगन्तलघूपधस्य चेति गुणः। तस्थस्थमिपामिति मिपोऽमादेशः। द्विष्यात् इति—उभयोर्लिङोरेकवचने रूपम्। एकत्र (विधिलिङि) ङित्वात् अन्यत्र (आशीर्लिङि) कित्वात्—गुणाभावः। द्विवहुवचनयोस्तु—द्विष्यातम्—द्विष्यास्ताम्। द्विष्युः—द्विष्यासुरित्यस्ति विशेषः। एवमुत्तममध्यमपुरुषयोरिति ध्येयम्। द्विषीत इति। तङि—विधिलिङ्येव रूपमेतत्। आशीर्लिङि तु द्विक्षीष्ट ( द्विष् सीष्ट ( सीयुट् सुट् त = सीय्स्त = सीस्त = सीष्ट ) द्विक् षीष्ट षढोरिति षस्य कत्वम्—इण्कोरादेशप्रत्यययोरिति षत्वम् ) इत्यादि। लुङिपरस्मैपदे रूपमाह—अद्विक्षदिति। शल इगुपधादनिटः क्सः' ( २३३६ ) इति च्लेः क्सः। क्सस्य—कित्वाद् द्विषो गुणाभावः। पूर्व्ववत् कत्वषत्वे। एवमात्मनेपदे अद्विक्षत इति। लुङो ङित्वेन टित्वाभावादेत्वाभावः। अन्यत्—परस्मैपदिवत्। दुह प्रपूरणे। अत्र प्रपूरणशब्दस्य व्युत्पत्तिलभ्यार्थं वाचयति—प्रपूरणं पूरणाभाव इति। तथाविधव्याख्यानस्य बीजमाह—धात्वर्थं बाधते कश्चिदिति। कश्चिदिति उपसर्गं लक्षयति—कश्चिदुपसर्गो धात्वर्थं बाधते। विपरीतार्थं नयति इति भावः। अतएव प्रोपसर्गस्यात्र न प्रकृष्टार्थः किन्तु अभावरूपोऽर्थ इति द्रष्टव्यम्। दोग्धि—इति। दुह तिप् इति स्थिते 'पुगन्तलघूपधस्य चे'ति ( २१८५ ) गुणेन—दोह् ति इति जाते 'दादेर्धातोर्घः' ( ३२५ ) इति हस्य घत्वे दोघ् ति सम्पद्यमाने 'झषस्तथोर्धोऽधः' ( २२८० ) इति तस्य धः। एवं दोघ् धि इति स्थिते 'झलां जश् झशि' ( ५२ ) इति घस्य जश्त्वेन गः। ततो रूपम्। दुग्धः इति। दुह तस्—'सार्व्वधातुकमपित्' इति तसः अपित्त्वेन ङित्वाद् गुणाभावः। पूर्व्ववत्—घत्वधत्वजश्त्वानि। धोक्षि इति। दुह सिप् इति स्थिते पुगन्तेति गुणः। दादेरिति घः। एवं दोघ् सि इति जाते 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( ३२६ ) इति धोघ् सि इति भवति। ततः

'खरि चे'ति ( १२१ ) चर्त्वेन—घस्य कत्वे सस्य षत्वं ततो रूपम्। दुग्धे इति। टित आत्मनेपदानामिति एत्वम् ( दुह् त—दुह् ते )। पूर्ववत्—गुणाभावघत्वजश्त्वानि। धुग्ध्वे—एकाच इति दस्य धः। गुणाभावघत्वजश्त्वानि प्राग्वत्। दोग्धु—तिपः पित्वाद् गुणादिकं दोग्धिवत्। 'एरु'रिति उत्वम्। दुग्धि इति। दुह् हि इति स्थिते गुणाभावः प्राग्वत्। 'हुझल्भ्यो हेर्धि'रिति हेर्धिरादेशः। घत्वजश्त्वे। दोहानि—इति—मेर्निरिति मिपो निरादेशः। आडुत्तमस्य पिच्चेति आडागमः। पित्वाद् गुणश्च। धुक्ष्व—दुह् स्व इति स्थिते दस्य भष्भावो धः। घत्वचर्त्वषत्वानि। यद्वा 'ढो ढः' ( ३२४ ) इति ढः। 'षढो'रिति कः। ततःषत्वम् इति। धुग्ध्वम्—दुह ध्वम् प्राग्वत्प्रक्रिया। दोहै—दुह्+इट् ( लोडुत्तमः ) आडागमे आटश्चेति वृद्धिः। पित्वाद् गुणः। अधोक् इति। अट् दुह् तिप् ( लङ् ) इति स्थिते इतश्चेति तिप इकारलोपः। ए॰ पित्वाद् गुणेन अदोह् त् इति जाते 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति त् लोपः। ततो दादेरिति हस्य घः। एकाचो बशोभषिति दस्य धः। 'वाऽवसाने' इति चर्त्वविकल्पात्=अधोक्—अधोग् इति रूपद्वयम्। अदोहमिति—अट दुह मिप् इति गुणः। तस्थस्थमिपां तांतंतामः—इत्यमादेशः। अथ लङि तङि रूपमाह—अदुग्ध इति। अट् दुह् त इति स्थिते हस्य घः। तस्य धः ( झषस्तथोरिति )। घस्य गः। अधुग्ध्वम् इति। अट् दुह् ध्वम्=एकाचो बशो भष्—इति विशेषः। अन्यत् स्पष्टम्। अथ लुङि—परस्मैपदे रूपमाह—अधुक्षत् इति। शल इगुपधादिति क्सः। कित्वाद् गुणाभावः। धत्वघत्वचर्त्वषत्वानि। एवं तङि अधुक्षत इत्यत्र। लुग्वा दुहदिहलिहगुहामिति सूत्रोच्चारणस्य फलमाह—लुकपक्षे इति। त, थास्, ध्वम्, वहि, इत्येतेषु—परेषु—लङि इव लुङ्यपि रूपचतुष्टयम् बोध्यम् इत्यर्थः। तथाच रूपाणि—अदुग्ध। अदुग्धाः। अधुग्ध्वम्। अदुह्वहि इति। दिह उपचये—इति। वृद्धावित्यर्थः। प्रणिदेग्धि इति। 'नेर्गदनद—' इति णत्वम्। धातोर्गुण-घादेशजश्त्वधत्वानि दोग्धिवत्। लिह—इति। लेढि इति। लिह तिप् इति स्थिते पुगन्तेति गुणः। 'हो ढः' ( ३२४ ) इति ढः। 'झषस्तथोर्धोऽधः' ( २२८२ ) इति तस्य धः। एवम् लेढ् धि इति जाते 'ष्टुना ष्टुः'

(११२) इति 'लेढ् हि' अस्य ढः। ततो 'ढो ढे लोपः' (८३३५) इति ढलोपे लेढि इति। लीढ इति—ङित्त्वाद्गुणाभावः। ढत्वढलोपौ प्राग्वत्। ततः 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (१७४)। लिढन्ति—स्पष्टम्। लेक्षि इति—सिपः पित्त्वाद्गुणः। हस्य ढः। तस्य कः (षढोः कः—' इति)। षत्वमिति क्रमेण प्रक्रिया। लीढे इति। प्रत्ययस्य टेरे। ङित्वाद् गुणविरहः। 'हो ढः,' 'ढो ढे लोपः,' 'ढ्रलोपे पूर्वस्य—' इति प्रक्रियाविधायकसूत्राणि। लिक्षे—टेरेत्वम्। क्रियम् अन्यत् लेक्षिवत्। लीढ्ढ्वे इति—लिह् ध्वे इति स्थिते—'हो ढः,' ष्टुना ष्टुः' 'ढो ढे लोपः' 'ढ्रलोपे—'इति प्राग्वत्। लेढु इति। लिह् ति=लिह् तु=लेढ् धु=लेढ् ढु=लेढु। लीढाम् इति। लिह्ताम् (तसस्तामादेशः) ढत्वधत्वष्टुत्व—ढलोपदीर्घाः। लिढ्ढि इति। लिह् हि इति स्थिते—"हुझल्भ्यो हेर्धि'रिति लिह् धि इति जाते ढत्वष्टुत्व—ढलोपदीर्घाः प्राग्वत्। 'लेखानि' इत्युक्तेन गुणः। दोहानि—'मेनिं'—'आडुत्तमस्य—' इति। अलेट् इति। अट् लिह् त (इतश्चेति तिप इलोपः)=अलेह् त इति स्थिते 'हल्ङ्याब्भ्यो-दीर्घात् सुतिस्यपृक्तं हल्' इति (२५२) तलोपे ढत्वं तस्य 'वाऽवसाने' इति चर्त्वं विकल्पात्—अलेड्—अलेट् इति रूपे। अलिचत्—अलिचत इति। लुङि—पदद्वये रूपद्वयम्। च्लेः क्सः। गुणाभावः। हस्यढः। तस्य कः। षत्वम्। अलि-चताम्—अलिचाताम् इति। प्रक्रिया ऊह्या। अलीढ अलिक्षि इति—'लुग् वा—' इति 'तवास्थ्यमवहिषु—' लङ्वत् इति प्रागुक्तम्। अलिह् त इति स्थिते ढत्व-धत्वष्टुत्वढलोपदीर्घाः। अलिचावहि—क्सपक्षे रूपम्। 'अतो दीर्घो यञि' इति दीर्घः। अलिह्वहि लुक्पक्षे रूपम्। अलेक्ष्यत्—अलेक्ष्यत इति—लृङि रूपम्। गुणढत्वकत्व-षत्वादिकं प्राग्वत्॥ चक्षिङ इति। व्यक्तायां वाचीति। स्पष्टीकरणे इत्यर्थः। अर्थे दर्शनेऽपीति। 'विश्वान्यन्यो भुवनाभिचष्टे, विश्वारूपा अभिचष्टे शचीभिः' इत्यादि-स्थलेन व्याख्यानादिति भावः। इकारोऽनुदात्तो युजर्थ इति। चक्षिङ् इत्यस्य—इकार अनुदात्तः, स (इकारः) च युजर्थः=युच्प्रत्ययार्थः। युच्प्रत्ययो यथा स्यादिति-अमर्थम् इकारानुबन्ध इत्यर्थः। अथोदाहृत्य दर्शयति 'विचक्षणः—' इति। चक्षिङ् इत्यस्य इकारोलुप्यते। स च अनुदात्तः। अतश्चक्षिङ् अनुदात्तेत् (अनुदात्तलोपौ)

भवति। अतएव 'अनुदात्तेतश्च हलादेः' इति युच्। ननु यदि चक्षिङ् इदित् भवति तर्हि 'इदितो नुम् धातोः' इति नुम् प्रसज्येत। तत्राह—नुम् तु नेति। तत्र हेतुमाह—'अन्ते इदितः' इति व्याख्यानात् ( अभियुक्तैरित्यर्थः ) इति। 'गोः पादान्ते' ( ३५७४—७।१।५७ ) इत्यतः 'इदितो नुम् धातोः' ( २२६२—७।१।५८ ) इत्यत्र 'अन्ते' इत्यनुवर्त्य—'ये धातवः 'अन्ते इदितः' तदुत्तरं नुमागमः स्यान्नान्यस्य' इत्यर्थः। 'चक्षिङ्' इति च अन्ते इदित् न भवति इकारस्य अन्तवर्त्तित्वाभावात्। अतो नुम् न। ननु इकारोऽनुदात्तार्थः। न लुप्यते। तर्हि अनुदात्तेत्त्वलक्षणमात्मनेपदमादाय 'चक्षिङ्' इत्यस्य आत्मनेपदित्वंस्यात्—किं पुनः ङकारानुबन्धकरणेन ? इति प्राप्ते आह—ङकारस्तु इति। अयमत्र भावः। नित्यानित्यभेदेन द्विविधमिहात्मनेपदम्। तत्र अनुदात्तेत्त्वलक्षणमनित्यम्। ङकारानुबन्धविशिष्टन्तु नित्यम्। चक्षिङ् इति च नित्यम् आत्मनेपदित्वेनैव प्रयुज्यते। तच्च ङकारानुबन्धकरणादेव ज्ञायते। अन्यथा—अनुदात्तस्य इकारस्य लोपात् पुनः ङकारानुबन्धकरणं व्यर्थं स्यादिति। तद्विशेदाहृत्य दर्शयति 'स्फायन्निति—'। स्फायन् इत्यत्र स्फायी वृद्धौ—इति धातुः। तस्य शतरि स्फायन् इति। स्फायतेरीकारस्य अनुदात्तस्य लोपे सत्यपि—तस्य तङ् न भवति। तथा सति शानजेव स्यात्—न शतृ। अतः 'अनुदात्तेत्वप्रयुक्तम्—'इत्यादि सम्यगेव। चष्टे इति। चक्षिङ् त—चक्ष् ते—चक्ष्ते—चष्ते—चष् ते—'स्कोः संयोगाद्योः' ( २८० ) इति कलोपः। ष्टुत्वम्। चष्टे इति सुगमम्। आर्द्धधातुके इत्यधिकृत्य इति—इत्यनुवर्त्तते इत्यर्थः। इदं ( आर्द्धधातुके इति ) सूत्रम्—(२४३२—२।४।३५) संख्यकं, न तु ( २२०७—६।४।४६ ) इत्येतत् संख्यकम्।

२४३६। चक्षिङः ख्याञ्॥ २।४।५४॥

२४३७। वा लिटि॥ २।४।५५॥

टी—। अत्र भाष्ये खशादिरयमादेशः। असिद्धकाण्डे 'शस्य यो वा' ( वा १५८६ ) इति स्थितम्। ञित्वात् पदद्वयम्। चख्यौ—चख्ये। चक्शौ—चक्शे। 'चयो द्वितीयाः—' ( वा

५०२३ ) इति तु न। चर्त्वस्यासिद्धत्वात्। चचक्षे। ख्याता—क्शाता। ख्यास्यति—ख्यास्यते। क्शास्यति—क्शास्यते। अचष्ट। चक्षीत। ख्यायात्—ख्येयात्। क्शायात्—क्शेयात्।

The root चक्षिङ् is replaced by ख्याञ् when any आर्धधातुक (affix) follows (2436). चक्षिङ् is optionally replaced by ख्याञ् in लिट् (2437).

Here i.e under the rule 'चक्षिङः ख्याञ्' in भाष्य (of Patanjali) this substitute (ख्याञ्) is seen to have 'ख् श' at the outset i.e there it is stated as ख्शाञ्' and not 'ख्याञ्' as we have it here. Then by the saying 'यथोत्तरं मुनीनां प्रामाण्यम्'—The authority of the three sages rests on him who comes later'—the rule now figures as 'चक्षिङः ख्शाञ्' whence we come to learn that चक्षिङ् is replaced by ख्शाञ् when any आर्धधातुक follows. In असिद्धकाण्ड i.e under the jurisdiction of 'पूर्वत्रासिद्धम्' (8-2-1) there runs the vartika 'the श (of ख्शाञ्) is optionally replaced by य (when an आर्धधातुक follows). ख्शाञ् is ञित् or ञ-eliding; hence (by 'स्वरितञितःकर्त्रभिप्राये क्रियाफले'—2158) it admits of two पद e.g. the परस्मैपद and आत्मनेपद (in आर्धधातुक)। Thus in लिट् we have चख्यौ—चख्ये and चक्शौ—चक्शे। The process is thus —चक्षिङ्+णल्=ख्शाञ् णल्=ख्या णल्=ख्या औ (by 'आत औ णलः'—2371)=ख्या ख्या औ (द्वित्व)=खा ख्या औ (हलादिः शेषः)=खख्यौ (ह्रस्वः)=कख्यौ ('अभ्यासे चर्च')=चख्यौ (by 'कुहोश्चुः'—2245); Similarly चक्शौ। In आत्मनेपद the rules are 'लिटस्तझयोरेशिरेच्' (2241) and 'अतो गुणे' (191), and 'खरि च' (121) which makes

the ख् preceding श changed into क । Thus चक्ख्‌ and चक्शे are formed. Now in शत्वपक्ष i.e in the case of चक्शौ and चक्शे when once क preceding श is formed by 'खरि च' ( 121—3. 4. 55. ) then again this क cannot by changed into ख by the dictum ( Vartika ) 'चयो द्वितीयाः शरि' 'चय letters i. e. the first ( वर्गीय ) letters are substituted by the second ( वर्गीय ) letters when शर् or श ष and स follow, in as much as the चर्त्व i.e., the rule 'खरि च' ( 8. 4. 55 ) falls within the असिद्धकाण्ड ( पूर्व्वत्रासिद्धम् ) and cannot therefore be applicable here in 'वा लिटि' ( 2. 4. 55 ). When चक्षिङ् is not substituted by ख्याञ or ख्‌शाञ् then the form is चचक्षे ( चक्ष् + त = चक्ष + ए = चचक्ष् ए ). Here there is no परस्मैपद form, for चक्षिङ is ङित् and not ञित् like ख्‌शाञ् above. In लुट् ख्याता—क्‌शाता the आत्मनेपद and the परस्मैपद are equal in form. In लङ् the form is अचष्ट—अट् चक्ष त = अचक्ष् त = अच ० ष्‌ त by स्कोः संयोगाद्योः'—( 380 ) = अचष्ट by 'ष्टुनाष्टुः' ( 113 ). In विधिलिङ्—चक्षीत। In आशीर्लिङ—ख्यायात्—'ख्येयात् ( परस्मै ), ख्यासीष्ट ( आत्मने ), क्‌शायात्—क्शेयात् ( परस्मै ), क्‌शासीष्ट। The option of एत्व ( एत्वविकल्प ) is by the rule 'वाऽन्यस्य—' ( 2378 )।

मित—1 सूत्रद्वयार्थस्तु—स्पष्टत्वाद्‌ नावमुक्तः। 'चक्षिङः ख्याञ् इत्यादेशः स्यादार्धधातुके परे' इति पूर्व्वसूत्रार्थः। 'चक्षिङः ख्याञादेशो वा स्याल्लिटि परे' इति परसूत्रार्थः। अत्र भाष्ये इति—। 'चक्षिङः ख्याञ' इति सूत्रभाष्ये—इत्यर्थः। ख्‌शादिरयमादेश इति। नायं 'ख्याञ' किन्तु 'ख्‌शाञ्' इति भावः। तेन यथोत्तरं मुनीनां प्रामाण्यमिति ख्‌शाञ् एवेष्यते न ख्याञ्। अथात्र शत्वविकल्पमाह—असिद्धकाण्डे इति। पूर्वत्रासिद्धम—इति सूत्रात् परमित्यर्थः। 'शस्य यो वा' इति वार्तिकमिदम्। ञित्त्वात् पदद्वयमिति। ख्‌शाञ इति ञिद् भवति। ततश्च

'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (२१५८) इति परस्मैपदमात्मनेपदञ्च इति। तदेव दर्शयति—चख्यौ—चख्ये—। चक्शौ—चक्शे इति। तत्र परस्मैपदपक्षे—चख्यौ—चक्शौ इति। 'आत औ णलः' (२३७१) इति णल औकारादेशः। द्वित्वहलादिशेषकुत्वचर्त्वानि भ्वादिकवित्प्रक्रियावत्। चक्शौ इत्यत्र अनेन चख्शौ इति स्थिते खरि चेति चर्त्वेन शकारात्—पूर्वस्य खस्य—कः। ननु तस्य कस्य च पुनः 'चयो द्वितीयाः शरि' इति वार्त्तिकवचनात् खकारादेशः स्यात् इति चेत्। उच्यते। चर्त्वस्यासिद्धत्वादिति—। 'खरि चेति' (१२१—८।४।५५) सूत्रं हि असिद्धायां त्रिपाद्यां पठितम्। तेन तद्विहितस्य चर्त्वस्य—सपादसप्ताध्यायामसिद्धत्वम्। 'चक्षिङः ख्याञ्' 'वा लिटि' इत्येतौ—च सपादसप्ताध्याय्यामेव वर्त्तेते इति द्रष्टव्यम्। ख्शादेशाभावपक्षे तु चक्षिङः केवलात्मनेपदित्वात् चचक्षे—इत्येव। लुटि परस्मैपदात्मनेपदयोः समानत्वात्—ख्याता—क्शाता इति। लृटि ख्यास्यति—इत्यादि स्पष्टम्। लङि—अचष्ट इति—अट् चक्ष् त—अचक्ष् त—अ च०ष् त 'श्नो'रिति कलोपः ष्टुत्वम्। विधिलिङि—चक्षीत। आशीर्लिङि तु ख्यायात्—ख्येयात् (वाऽन्यस्य संयोगादेरिति एत्वविकल्पः) 'लङि—ख्यासी' ष्ट। एवं क्शायात्—क्शेयात्—क्शासीष्ट इति। खरि चेति शकारात् पूर्वस्य खस्य चर्त्वेन कः। अथ लुङि रूपं दर्शयितुमाह—

२४३८। अस्यतिवक्तिख्यातिभ्योऽङ् ॥३।१।५२॥

टी—। एभ्यश्च्लेरङ् (स्यात्)। अख्यत्—अख्यत। अक्शासीत्—अक्शास्त। "वर्जने ख्शाञ् नेष्टः" (वार्त्तिक १५८२)। समचक्षिष्ट—इत्यादि।

अथ पूष्यन्ता अनुदात्तेतः। ईर १०१८ गतौ कम्पने च। ईर्त्ते। ईराञ्चक्रे। ईरिता। ईरिष्यते। ईर्त्ताम्। ईर्ष्व। ईर्ध्वम् ऐरिष्ट। ईड् १०१९ स्तुतौ। ईट्टे।

अङ् is ordered in place of (the affix) च्लि coming after these (roots, viz—अस् (दिवादि), वच्, and ख्या—the substitute of चक्षिङ्)। Thus अख्यत्—अख्यत which result from the optional substitution of य in place of श् by the dictum 'क्शस्य यो वा' (वार्त्तिक), the परस्मै and आत्मने being accounted for by the ञित्त्व if 'ख्शाञ्'। The process is thus:—अट् चक्षिङ् च्लि तिप्=अ ख्याञ् अङ् त्=अ ख्या अ त् (यत्पक्ष)=अ ख्य् अ त् by आतो लोप इटि च (२३७२)=अख्यत्; similarly अख्यत। Now in the शत्पक्ष (when श does not make room for य) the च्लि, of अट् चक्षिङ्—च्लि तिप् or अख् शाञ् च्लि तिप्, is replaced by सिच् (and not by अङ्) giving अ ख्शा सिच् तिप् whence in accordance with the process in सिच् (Here, ईट् and सक् only for the root is अनिट्) we get अक्शासीत् (in परस्मै) and अक्शास्त (in आत्मने)। Recollect that त is not अपृक्त and thus you cannot prefix ईट् to it (त) by 'अस्तिसिचोऽपृक्ते' (२२२५)।

वर्जने etc—This is a Vartika and means—'ख्शाञ् is not planted in place of चक्षिङ् when the latter denotes to give up or throw off etc (in connection with any उपसर्ग)'। Thus समचक्षिष्ट—(सम्—अट् चक्षिङ् सिच् त=सम्—अ चक्ष् इट् स् त (ख्या—is अनिट् and not चक्षिङ्)=समचक्षिष्ट by ष्टुत्व) etc.

अथ पृच्यन्ता etc i.e. we take up now the अनुदात्तेत (or the roots that drop thier अनुदात्त letters) up-to पृची सम्पर्चने 'to bear connection with' 1030. ईर to go and to shake or tremble. This root is सेट्। ईर्+ते (आत्मने because it is अनुदात्तेत्)=ईर्ते other forms are ईराते ईरते; ईर्षे ईराथे ईर्ध्वे; ईरे ईर्वहे ईर्महे। ईराञ्चक्रे—आम् comes in by 'इजादेश्च गुरुमतोऽनृच्छः' (२२३०); also the rules 'कृञ्चानुप्रयुज्यते

लिटि' and 'आम्प्रत्ययवत्—' are applicable here. ईडिता ( लुट्, इट्,ता ) ईडिष्यते (लृट्), ईडाम् लोट् sing. 1st pers) ; ईड्ढ्वं (लोट्, ध्व—घत्व)। ईड्ढ्वम् ( लोट्, ध्वम् ) ; ऐडिष्ट—this is the लुङ् 3rd per. sing.—( आट्, ईड् इट्, सिच् त—आ ईड् इस्त—ऐडिष्ट by वृद्धि ( 'आटश्च' ), and षत्व। In लङ् the forms are ऐडे ऐडाताम् ऐडत etc, and in लुङ् the other forms are ऐडिषाताम् ऐडिषत etc. ईड् means to praise, to worship etc. Cp.—'नौमीड्य तेऽभ्रवपुषे etc. ब्रह्मस्तुति in भागवत—10th chap. ; also 'प्रसादये त्वामहमीशमीड्यम्' गीता—11th chap. ईट्टे—ईड्+ते here ड becomes ट by 'खरि च' (121) and त becomes ट by 'ष्टुना ष्टुः' (113).

मित—। 'च्लेः सिच् ( ३।१।४४ ) इत्यतश्च्लेरित्यनुवर्त्तते। तदाह—एभ्यश्च्लेरिति। एभ्य इति अस्यतीत्यादिभ्यः। 'अस्यतौ'ति च दिवादि रूपम्। तेन दैवादिकोऽयमस्धातुर्नत्वादादिकः। तस्य च लुङि 'अस्यतेस्थुक्' इति थुगागमेन आस्थत् इति रूपम्—तथाच भट्टिः 'यशांसि सर्व्वेषुभृतां निरास्थत्' ( प्र. स. )। अस्य च ( अस धातोः ) पुषादिपाठात् तत्र वक्ष्यति। वक्तीति 'ब्रुवो वचिः' ( २४५२ ) इति 'वच परिभाषणे' इति चोभयोरेव ग्रहणम्। अवोचत् इति रूपम्। ख्यातीति 'चक्षिङः ख्याञ्' इत्यत्र स्पष्टम्। तस्य च परस्मैपदात्मनेपदभेदेन 'ख्याञ्' इत्यस्य च 'शस्य यो वा' इति वार्त्तिकात् यत्वशत्वरूपपक्षद्वयभेदेन च रूपचतुष्टयमित्याह—अख्यत्—अख्यत। अक्शासीत्—अक्शास्त इति। तत्र प्रथमयुगले अङो ङित्वात् 'आतो लोप इटि चे'ति ( २३०२ ) उभयत्रैव धातोरालोपः। अडागमादयस्तु भागवत्। द्वितीययुगले तु अङभावः सिच्। अनिट्त्वादिडभावः। पूर्व्वत्र अप्टक्तत्वादीडागमः। उत्तरत्र ( आत्मनेपदपक्षे ) तु तत्प्रत्ययस्यापृक्तत्वं नेति ज्ञातव्यम्।

वर्ज्जने इति। वार्त्तिकमिदम्। '( उपसर्गयोगात् ) वर्ज्जनार्थकस्य चक्षिङः ख्शाञादेशो नेति' तदर्थः। तदेव दर्शयति—समचक्षिष्ट इति। सम्‌उपसर्गाच्चक्षिङोलुङि सिचि इडागमे रूपम्। इण्कोरिति षत्वम्। ष्टुनाष्टुरिति ष्टत्वम्।

अथ पृच्यन्ता इति। पृची सम्पर्च्चने ( १०३० ) इत्यन्ता इति शेषः। अनुदात्तेत

आत्मनेपदिन इत्यर्थः। ईर गतौ कम्पने चेति। चुरादौ त्वयम् 'ईर क्षेपे' (१८११) इति पठ्यते। तत एव प्रेरयति इत्यादि न त्वस्मादिति द्रष्टव्यं धातूनामनेकार्थत्वात्। ईर्त्ते इति स्पष्टम्। ईराते ईरते। ईर्षे ईराथे ईर्ध्वे इत्यादावुक्तव्याख्यायामुक्तम्। ईराञ्चक्रे—इजादेश्चेत्याम्। कृञ्चेति कृञोऽनुप्रयोग आम्प्रत्ययवदितीत्यात्मनेपदमनुप्रयोगस्य। ईरिता (लुट्)। ईरिष्यते (लृट्)। ईर्त्ताम् (लोट्) ईराताम् ईरताम्। ईर्ष्व ईराथाम्। ईर्ध्वम्। ईरै ईरावहै ईरामहै। लङि तु ऐर्त्त ऐराताम् ऐरत। ऐर्थाः ऐराथाम्। ऐर्ध्वम्। ऐरीत्यादि। लुङि रूपमाह—ऐरिष्ट इति आडजादीनामित्याट्। आटश्चेति वृद्धिः। सिजिडागमश्च। एवमैरिषाताम् ऐरिषत। ऐरिष्ठाः इत्यादि। लृङि ऐरिष्यत। लिङि—एकत्र ईरीत अन्यत्र ईरीषीष्ट। ईड स्तुताविति—... पुरूर्ध्व तमीडे (सौमि) इत्यादौ दर्शनात्। ईट्टे इति। डस्य चर्त्वेन टः। तप्रत्ययस्तु ष्टुत्वेन टः इति। अथास्य 'से' 'ध्वे' इति सार्व्वधातुकप्रत्ययेऽपि परत इडागमः स्यादित्याह—

२४३९। ईशः से ॥७।२।७७॥

२४४०। ईडजनोर्ध्वे च ॥७।२।७८॥

दी—। ईशोऽडजनां 'से' 'ध्वे'—शब्दयोः सार्व्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईडिषे। ईडिध्वे। 'एकदेशविकृतस्यानन्यत्वात्' (परि ३८) ईडिष्व। ईड्ढ्वम्। 'विकृतिग्रहणेन प्रकृतेरग्रहणात्—' ऐड्ढ्वम् (१*)। ईश १०२० ऐश्वर्य्ये। ईष्टे। ईशिषे। आस १०२१ उपवेशने।

---

(१*) 'ईड्ढ्वम्' इत्यस्य—विकृतिग्रहणेनत्यस्मादुत्तरत्रैव पाठो न्याय्यः। तस्य विकृतिग्रहणेनेत्यादिना समर्थितत्वादन्यथायमेकदेशेत्यादिपरिभाषान्तर्गत एव स्यादिति पाठप्रक्षेपोऽत्र विभावनीयः। तत्त्वबोधिन्यां तु 'ईडिध्वम्' इति दृश्यते। तच्चिन्त्यम्। तथात्वे विकृतिग्रहणेनेति वचनमपार्थमित्यपि द्रष्टव्यमित्यलम्।

आस्ते। 'दयायासश्च' (२३२४)। आसाञ्चक्रे। आस्स्व। आध्वम्। आसिष्ट। आङः शासु १०२२ इच्छायाम्। आशास्ते आशासाते। आङ्पूर्व्वत्वं प्रायिकम्। तेन 'नमोवाकं प्रशास्महे' इति सिद्धम्। वस १०२३ आच्छादने। वस्ते। वस्से। वध्वे। ववसे। वसिता। कसि १०२४ गतिशासनयोः। कंस्ते। कंसाते। कसते। 'अयमनिदित्' इत्येके। कस्ते। तालव्यान्तोऽप्यनिदित् (?)। कष्टे। कशाते। कद्दे। काड्ढ्वे। निसि१०२५ चुम्बने। निंस्ते। दन्त्यान्तोऽयम्। आभरणकारस्तु तालव्यान्त इति बभ्राम। निंस्से। णिजि १०२६ शुद्धौ। निङ्क्ते। निङ्च्चे। निञ्जिता। शिजि १०२७ अव्यक्ते शब्दे। शिङ्क्ते। पिजि १०२८ वर्णे। 'सम्पर्चने' इत्येके। 'उभयत्रे'त्यन्ये। 'अवयवे' इत्यपरे। अव्यक्ते शब्दे इतीतरे। पिङ्क्ते। पृजि इत्येके। पृङ्क्ते। वृजी १०२९ वर्ज्जने। दन्त्योष्ठ्यादिरिदित्। वृक्ते। वृजाते। वृच्चे। इदित् इत्यनेत्र। वृङ्क्ते। पृची १०३० सम्पर्चने। पृक्ते।

षूङ् १०३१ प्राणिगर्भविमोचने। सूते। सुषुवे। सुषुविषे। सोता। सविता। 'भूसुवोः—(२२२४) इति गुणनिषेधः। सुवै। सविषीष्ट। असविष्ट—असोष्ट—। शीङ् १०३२ स्वप्ने।

The augment इट् comes in before the सार्व्वधातुक words or affixes like से and ध्वे of (i.e. coming after) the roots ईश्, ईड् and जन्। The breaking up of the योग or Sutra ('ईशीडजनां

सेध्वयोः' ) is to express in a marvellous way ( and not to serve some special purpose ). For ध्वं is carried back to ईश ( former rule ) and से is carried down to ईड and जन ( latter rule ); so that से and ध्वं may serve as complements to both the rules. Thus the सूत्रकार could have made only one aphorism ; such as 'ईशीडजनां सेध्वयोः in stead of 'ईशः से' and 'ईडजनोर्ध्वे च'। But the diction of the latter in point of beauty or felicity is superior to the former. Hence Bhattoji says वैचित्र्यार्थः। Cp.—also 'विचित्रा पाणिनेः कृतिः'। Thus with इट् we have ईशिषे ( ईश् इट् से—by षत्व ) and ईशिध्वे। Note that the augment इट् was restricted to the आर्धधातुक only by—'आर्धधातुकस्येड् वलादेः' but here we have it in the सार्वधातुक also.

एकदेशविकृतस्य etc. It is a परिभाषा। It means—'when a whole ( thing ) is deformed by one of its parts it is no other ( than what it was before ), just as a dog does not cease to be called as such when it is disfigured by one of its limbs, say, tail or leg or ear etc. (In our case in hand से is the original whole & स्व is its deformation where ए is replaced by व by—'सवाभ्यां वामौ' ( २२५२ ) but yet it ( स्व ) will have the augment इट् prefixed to it in conformity with the above maxim or परिभाषा। Thus we have ईशिष्व ( ईश् इट् स्व )। But on this ground you cannot argue that ध्वम् will also have the aug. इट् prefixed to it because it is also the deformed representation of ध्वं (just as स्व is of से )—For here the question is otherwise or just the reverse. ध्वम् is not the disfigured representation ( एकदेशविकृत ) of ध्वं as स्व is of से

on the contrary—ध्वम् is the original whole ( प्रकृति ) and ध्वं is its deformed or modified image. Hence by—

'विकृतिग्रहणेन—etc.' 'A changed or modified thing cannot pass for its original form·' The drift is this ;—If I say bring me a dog you may come with a good one or with a deformed one ( because you know that it is also a dog no matter whether it is tailless or lame—This is एकदेशविकृत-न्याय ) । But if I say bring me a deformed one of the species, you cannot bring me a good dog, for you are asked to bring a disfigured one and not one in good physique.—This establishes what is known as 'विकृतिग्रहणेन प्रकृतेरग्रहणम्' i.e. Any ( grammatical ) operation laid down for the विकृत affix etc. cannot extend to its प्रकृति or real form or in other woods प्रकृति does not replace its विकृति । Thus we have, without इट्, ईड्ढ्वम् ( ईड् ध्वम्—ईड् लोट् ध्वम् ) and ऐड्ढ्वम् ( लङ् ध्वम् ) and not ईडिढ्वम् ( as Tattwabodhini has—which is evidently a copyist's slip ) and ऐडिढ्वम् ।

ईश to rule supreme. ईष्टे—ईश् ते 'व्रश्चभ्रस्ज—' and 'ष्टुनाष्टुः' (११३)। ईशिषे । ईशिध्वे । आस to take seat. आम् comes in लिट् by—दयायासश्च ( २३२४ ) giving आसाञ्चक्रे । आस्स्व ( आस्+स्व ) ; आध्वम्—आस्+ध्वम् here स् elides by 'धि च' ( २२४८ ) । आसिष्ट ( लुङ्—आट् आस् इट् सिच् त—आ आस् इष् त ) । The root शास् or शास् preceded by the उपसर्ग आङ् ( आ ) means to wish or hope आशास्ते etc.—easy—It is generally preceded by आङ् but not always thus ; नमोवाकं प्रशास्महे ( उत्तरचरित ) 'we pronouce or utter the word of salutation' where प्रशास्महे which means कुर्महे 'we do or utter' owing

to the multifarious meanings of roots, is seen to be preceded by the उपसर्ग प्र also. नमोवाकम् means the utterance of 'the word of obeisance.' The full verse is :—

इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।

विन्देम देवतां वाचममृतामात्मनः कलाम् ॥" उत्तरचरित।

वस to wrap or cover. वर्च्य as in आच्छम् above. ववसे लिट्, कसि to go or to instruct कंस्ते etc. by 'इदितो नुम् धातोः'। कंसते— by 'आत्मनेपदेष्वनतः' ( २२५८ )। Some say that the root is not इदित् i.e. it is कस and not कसि। This also ends in श and other than इदित् i.e. कश—whence we get कष्टे ( by ष्टुत्व ) कक्षे ( कश् से by व्रश्च ( २९४ )=कष् से—by 'षढोः कः सि' कक्से—कक्षे ;—षत्व)। कड्ढ्वे कश्ध्वे—कष्ध्वे—कड्ध्वे 'झलां जश्—'—कड्ढे 'ष्टुना—'। णिसि to kiss easy—'णोनः'। आमरणकारस्तु etc. वभ्राम—committed a mistake in taking it as णिश्। उभयत्र i.e. both to colour ( paint ) or connect. पिङ्क्ते here the अनुस्वार the result of नुम् changes into ङ by अनुस्वारस्य ययि परसवर्णः and ज becomes ग by 'चोः कुः' ( ३०८ ) and then क् by 'खरि च'। वृजी—( वृज् ) to throw off. दन्त्योष्ठादि i.e. the preceding letter of it is the दन्त्योष्ठ व ( अन्तःस्थ व ) and not ओष्ठ्य व or वर्गीय ब। ईदित्—i.e. its drops its final ई। This final ई is to prohibit the augment इट in निष्ठा by the rule 'श्वीदितो निष्ठायाम्' ( 3039—7. 2. 14 ). Thus वृक्तः। वृङ्क्ते—वृजी+से=वृन्ज्ते=वृन्ग्ते by 'चोः कुः' (३०८)=वृङ्क्ते by 'खरि च' ( 121 )। वृङ्क्षे—वृज्+से=वृक्से= वृक्षे। Some say that it is इदित् and conjugates with नुम् as वृङ्क्ते etc. पृची to connect or bear relation to etc.

षूङ् ( सू ) to be delivered of a child—सूते by 'धात्वादेः षः सः'। सुषुवे in लिट्—द्वित्व, हलादिशेष, ह्रस्व and उवङ् by 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' ( २७१ )। षत्व by 'इण्कोः'। सुषुविषे—here there is no इड्विकल्प by 'स्वरतिसूति—' ( २२७९ ) nor the prohibition of इट् by 'श्र्युकः किति' ( २३८१ ) which bars the former; but the इट् is नित्य ( persistent ) here by the क्रादिनियम under 'कृसृभृवृ—( २२९३ )। द्वित्व etc., as before. सोता—सविता ( लुट् ) इड्विकल्प by स्वरति सूति—etc. for the क्रादिनियम is in लिट् only. सुवै ( सू+ऐ ( आट् इ वृद्धि by 'आटश्च' ) ) The rule 'भूसुवोस्तिङि' ( २२२४ ) prohibits गुण enjoined by 'सार्वधातुकार्ध—' (२१६८) and thus paves the way for उवङ् '( अचि श्नु—etc. )' whence सुऐ=सुवै )। सविषीष्ट—आशीः। असविष्ट—असोष्ट—इड विकल्प by स्वरतिसूति etc. for here सिच् being पित् bars admittance to 'श्र्युकः किति'; 'प्रासोष्ट कौशल्या सुखेन रामम्'—भट्टिः 1st. शीङ् ( शी ) to sleep, to lie down etc.

मित—। 'इडत्त्यर्ति व्ययतीनाम्' ( ७।२।६६ ) इत्यत इडित्यनुवर्तते। 'रुदादिभ्यः सार्वधातुके' ( ७।२।७६ ) इत्यतः सार्वधातुके इति च। ईशः इति, 'ईडजनोः' इति च षष्ठ्यन्तम्। तदाह—ईशोडजनामित्यादि। व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायेन सूत्राक्षरविभजनं, नात्र सूत्रार्थः। तथा सति 'ईश् धातोः परस्सेप्रत्ययस्य सार्वधातुकस्य इडागमः स्यात्' इति 'ईडजनोश्च परतो ध्वे इत्यस्य च सार्वधातुकस्य—इडागमः स्यादिति चार्थः स्यात्। एवञ्च ईशो ध्वेप्रत्ययस्य इट् न स्यात्। तदाह—योगविभागो वैचित्र्यार्थ इति। वैचित्र्यञ्च—ध्वे इत्यस्य—पूर्वत्रापकर्षः से इत्यस्य च परत्रानुवृत्तिरित्येवं रूपम्। यद्यपि 'ईशोड्जनां ध्वे' ( भाष्यम् ) इत्येवं सूत्रितेऽपि विवक्षित' गमेरत तथापि—योगविभागोऽत्र रमणीयतर इति पाणिनेराचार्यस्याशयः। यथोक्तमुदाहरति—ईडिषे—ईडिध्वे इति। स्पष्टम्।

एकदेशविकृतेति—परिभाषेयम् ( एकदेशविकृतमनन्यवत् ) अयमर्थः। यः

कश्चिच्छब्द एकदेशेन अङ्गमात्रेण विकृतोऽन्यथाकृतः सोऽनन्यो: भवति। अन्यो न भवति अपितु यथापूर्व्वं विज्ञायते। यथा शुनि शून्यपुच्छेऽपि श्वत्वाचतिरवत्। नहि शून्यपुच्छः श्वा अश्वो वा कपिर्वा भवति किन्तु यथापूर्व्वं श्वा एव। एवं यथा से—प्रत्ययस्य इड् भवति तथा 'सवाभ्यां वामौ' (२२५२) इत्येकारस्यैकदेशविकृतस्य स्वप्रत्ययस्य स (इट्) भवितुमर्हति अतएव ईडिष्व इति सिद्धम्। ननु तथा सति ध्वे इत्यस्य एकदेशविकृतौ ध्वमित्यस्यापीडागमः स्यात्। तथाच ईड्ढ्वम—ऐड्ढ्वम् इत्यादि न सिध्येत् इत्याशङ्का—समाधत्ते—

विकृतिग्रहणेन प्रकृतेरग्रहणादिति। यथा पुरुषमानयेत्युक्ते खञ्जो वा अन्धो वा अविकलाङ्गो वा कश्चिदानीयते (एकदेशविकृतमनन्यवत्)। किन्तु यदि 'कश्चिद विकलाङ्ग आनीयतामित्युच्यते तर्हि—न कश्चिदविकलाङ्ग आनीयते किन्त्वन्धो वा खञ्जो वा कश्चिद विकलाङ्ग एव एवमिहापि। त आताम् अ थास् आथाम् ध्वम् इत्युपदेशानुसारात् ध्वम् इति प्रकृतिः। 'टित आत्मनेपदानां टेरे' इत्येकारादेशात् आदेशस्य च विकारत्वात् (आध्वम्) ध्वे इति विकृतिरेव। तस्य (ध्वे इत्यस्य) चेड्विधीयते। अतः स (इट्) प्रकृते ध्वमी न भवति। ततश्च—सिद्धम् ईड्ढ्वम् ऐड्ढ्वमिति।

ईश ऐश्वर्ये इति। ईष्टे—ईश् ते इति स्थिते—'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति शस्य षः। ष्टुनाष्टुरिति तस्य टः। ईशिषे। ईशिध्वे स्पष्टम्। आसेति। आध्वम्—धि चेति सलोपः। आसिष्ट (लुङ्—आट्—सिच्, इट् षत्वष्टुत्वे)। आङःशासिति। प्रायिकं प्रायोवादः। न सार्व्वत्रिकमित्यर्थः। तथाचोत्तरचरितम्—'नमोवाकं प्रशास्महे।' अत्र शास्धातोः प्रपूर्व्वत्वमपीति भावः। नमोवाक इति नमः (इति) वचनम्। वचेर्घञि रूपम् 'चजोः कु'रितिकुत्वम्। प्रशास्महे कुर्महे इत्यर्थः—धातूनामनेकार्थत्वादिति—शेखरे स्पष्टम्। तेन नमस्कुर्महे इति स्पष्टार्थ इति ज्ञेयम्। वध्वे इति। धिचेति सलोपः। कसौति। शासनमनुज्ञा उपदेशो वा। इदित्वान्नुम्। कंसते इति। 'आत्मनेपदेष्वनतः' (२२५८) इति भस्य अदादेशः। कश इति। अनिदित्वान्नुमभावः। तालव्यान्त इति। कश् इतीत्यर्थः। कष्टे इति। व्रश्चत्यादिना प्राग्वत्। कचे इति। व्रश्चादिना षत्वे, षढोः कः सीति कत्वे, 'आदेश—'

इति षत्वे च रूपम्। चकङ्क्षे इति। चलङ्कुले। निंक्षे इति। णो न इति णत्वम्। नुमनुस्वारौ। चचाम इति—भक्षं चकारेत्यर्थः। 'शुम्भिसञ्ज्ञनीयश्च्यव्यायेऽपि' इति सूत्रे वृत्तौ तालव्यान्तत्वादर्शनात् दन्त्यान्त एवेति भावः। निङ्क्षे इति। पूर्व्ववन्नत्वम्। नुम्। अनुस्वारः। जस्य चोः कुरिति कुत्वेन गः। तस्य चर्त्वेन कः। अनुस्वारस्य ययीति परसवर्णो ङः। निङ्क्ष इति। षत्वं शेषं प्राग्वत्। निञ्जिता अत्र परसवर्णस्य जकारत्वात् अनुस्वारस्य ञादेशः। शिञ्जिपिञ्जी—निञ्जिवत्। उभयेति। 'वर्षं' 'सम्पर्चने' चेत्यर्थः। वृजीति। वर्जनं परित्यागः। दन्त्योष्ठ्यादिरिति। वर्णौघो नेति यावत्। ईदित् इति। अतएव 'श्वीदितो निष्ठायाम्' (३०२८) इति वृक्त इत्यत्र निषेधः। वृक्ते इति। जस्य प्राग्वत् कुत्वचर्त्वे। वृचे इति। कुत्वचर्त्वषत्वानि। वृङ्क्ते इति। इदित्वादिना मते रूपमिदम्। पृची इति। अयमपि ईदित्। पृक्ते इति। स्पष्टम्।

षूङ् इति। प्राणिगर्भविमोचनं प्रसवः। सूते इति। धात्वादेः षः सः इति सत्वम्। सुवाते। सुवते इत्याद्यन्यत्। सुषुवे इति। द्वित्वहलादिशेषह्रस्वादेशाः। अचिश्नुधात्विति उवङादेशश्च। सुषुविषे इति। 'स्वरतिसूति—' इति इड्विकल्पं बाधित्वा 'श्र्युकः किति' इत्यनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सोता—सविता इति। स्वरतसूतीत्यादिना इड्विकल्पः। सुवै इति। अत्र सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते—'भूसुवोस्तिङि' (२२४८) इति निषेधः। अचिश्नुधात्विति उवङ्। सविषीष्ट इति। आशीर्लिङि गुणे—इडागमे च रूपम्। असविष्ट—असोष्ट—इति। स्वरतीति—इड्विकल्पः। शीङ् (शी) इति। स्वप्नो निद्रा शयनं वा। अयं नेट्। ङित्त्वात् आत्मनेपदम्। अथात्र विशेषं दर्शयितुमाह—

**२४४१। शीङः सार्व्वधातुके गुणः ॥७।४।२१॥**

**टी—। 'क्ङिति च' (२२१७) इत्यस्यापवादः। शेते। शयाते।**

The root शी is gunnated when any सार्व्वधातुक (affix) follows. This rule supersedes the rule 'क्ङिति च' (2217—

so far as सार्वधातुक is concerned.) In the case of आर्धधातुक, however, the root शी will have गुण (by—'सार्वधातुकार्धधातुकयोः')। Thus शी+ते=शेते। शे+आते=शय् आते by 'एचोऽयवायावः' (61).

मित—। शीङ्धातोः सार्वधातुके परे गुणः स्यादिति सूत्रार्थः। क्ङिति चेत्यस्यापवाद इति। 'सार्वधातुकार्धधातुकयोः' (२१६८) इति गुणे प्राप्ते 'क्ङिति च' (२२१७) इति निषेधः प्राप्तः। तमपि बाधित्वा 'शीङः—' इत्यनेन पुनर्गुणविधानमिति भावः। अयं सार्वधातुकविषयः। आर्धधातुकविषयेतु 'सार्वधातुकार्धधातुकयो'रित्यनेनैव गुण इति तत्त्वबोधिन्यां स्पष्टम्। शयाते इति। 'एचोऽयवायावः' (६१) इति अयादेशः। अथाऽऽस्मात् परस्य झस्य रुडागमः स्यादित्याह—

२४४२। शीङो रुट् ॥७।१।६॥

दी। शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शेध्वे। शये। शेवहे। शिश्ये। शयिता। अशयिष्ट।

अथ स्तौत्यन्ताः परस्मैपदिनः। ऊर्णुस्तूभयपदी। यु। १०३३ मिश्रणे अमिश्रणे च।

The augment रुट् is prefixed to the substitute अत् of झ coming after the root शी। Thus शी+झ=शी+अत=शे रुट् अत=शेर् अत=शेरत=शेरते by टित आत्मनेपदानां टेरे। शेषे—शी+से गुण and षत्व by 'इण्कोः—' 'आदेश—' (211—12)। शेध्वे here 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' does not apply; hence no मूर्धन्यादेशः। शये—शी+इट् (उत्तम पुरुष लट्) शी+ए (by टित आत्मने)=शे ए=श य् ए। शिश्ये—शी+ए (लिट्)=शी+ए (लिटस्तझयोरेशिरेच्)=शी—शी—ए=शि—शी—ए (अभ्यासः)=शिश्ये by 'इको यणचि' (47); शयिता—लुट इट ता गुण। अशयिष्ट—

इत। Other forms are अशयिषाताम् अशयिषत। अशयिष्ठाः etc. In लृङ् the forms are अशयिष्यत etc.

अथ स्तौत्यन्ता etc.—Then ( we take up ) the परस्मैपदी roots up to ष्टुञ् १०४३ स्तुतौ। The roots ऊर्णु and ष्टु are उभयपदी; यु means both to mix and not to mix.

मित—। 'झोऽन्तः' (७।१।३) इत्यतो झ इत्यनुवर्तते। 'अदभ्यस्तात्' (७।१।४) इत्यतः अदिति च। 'शीङः' इति च पञ्चम्यन्तम्। तदाह—शीङः परस्येत्यादि। अदिति लत्वानुरोधेन षष्ठ्या विपरिणम्यते; तदाह—झादेशस्य अत इति। शेरते—इति। झ इति स्थिते धातोर्गुणे प्रत्ययस्य अदादेशे टित इति एत्वे च शे अते इति जाते रुट्। रुडित्यस्य उकार उच्चारणार्थः। टकार इत्। रमात्रं तिष्ठति। 'आद्यन्तौ टकितौ' इति टित्वादाद्यवयवः। शे र् अते=शेरते। शेषे। इण्कोरादेशप्रत्यययोः (२११—१२) इति षत्वम्। शेध्वमिति। इणः परत्वेऽपि षीध्वमित्युक्तेर्ध्वं इत्यस्य मूर्धन्यादेशो न। शये इति—एचोऽयवायावः (६१) इत्ययादेशः। शिश्ये इति। ह्रस्व इति अभ्यासस्य ह्रस्वादेशः। इको यणचि (४७) इति यण्। शयिता इति—लुट्, इट्, अयादेशः। अशयिष्ट इति—लुङ्। प्रागवत्।

अथ स्तौत्यन्ता इति। ष्टुञ् १०४३ स्तुतौ इत्यन्ता इत्यर्थः। ऊर्णुष्टूभयपदीति। ऊर्णुञ् ष्टुञ् च उभयपदीत्यर्थः ञित्त्वात्। यु इति—सेट्। अमिश्रणं पृथग्भावः। अथोकारान्तानां वृद्धिं दर्शयितुमाह—

२४४३। उतो वृद्धिर्लुकि हलि ॥७।३।८९॥

दी—। लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य। यौति। युतः। युवन्ति। युयाव। यविता। युयात्। इह उतो वृद्धिर्न। भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्न' इति व्याख्यानात्। विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात्। यूयात्। अयावीत्। रु १०३४ शब्दे।

In the case or matter of लुक् ( i.e. as for as the roots of the अदादि class are concerned ) the short उ ( of a root ) gets वृद्धि when a हल् or consonant-leading पित् (प्—eliding ) सार्व्वधातुक follows except when the root is duplicated ( i.e. when यङ् लुक् follows) thus यौति ; युत: ( not पित् but ङित् ) ; युवन्ति ( ङित्—उवङ् ) similarly यौषि, यौमि etc. युयाव ( वृद्धि of the अङ्ग by—'अचो ञ्णिति'—२५४ ) । यविता—लुट् इट् गुण । युयात्—विधिलिङ् is सार्व्वधातुक—hence 'अकृत् सार्व्व—' ( २२—८४ ) does not apply.

इह भाष्य etc —Here, that is in connection with यासुट् or विधिलिङ्, उ of the root यु cannot have the वृद्धि substitute by 'उतो वृद्धि:—' ; for in भाष्य ( under 'हल: श्न: शानज् झौ—' २५५०—३।१।८३ ) we find the explanation 'पिच्च ङिन्न ङिच्च पिन्न' i.e., that which is पित् ( as तिप् ) cannot be ङित् and what is ङित् cannot be पित् । And the first explanation पिच्च ङिन्न will not give rise to गुण ( not being ङित्) because पित् (as तिप्) is barred ङित् by ( यासुट् which is specially enjoined, cp.—the rule 'यासुट परस्मैपदेषूदात्तो ङिच्च' (२२०९ ) । Thus because यासुट् is ङित् and because ङित् is not पित् so the rule 'उतोवृद्धि—' does not apply in विधिलिङ् and consequently we get युयात् and not यौयात् । [ Some, however, hold a defferent view and explain that according to the परिभाषा 'संज्ञापूर्व्वकोविधिरनित्य:' ( वृद्धि is a संज्ञा ) युयात् will not have वृद्धि owing to the अनित्यत्व of the rule 'उतोवृद्धि:—' ( २४४३ ) for had it, been so, पाणिनि would have said 'उत औत् etc.' instead of उतो वृद्धि:—etc. ] यूयात् ( आशीर्लिङ् ) ; दीर्घ by 'अकृतसार्व्व—' (२२९८) । Here also you cannot expect वृद्धि for it is आर्द्धधातुक and यासुट् is here कित् by 'किदाशिषि' ( २२१६ ) । अयावीत् ( लुङ् )—अट यु इट् सिच् ईट् ( तिप् )—

वृद्धि by 'सिचि वृद्धिः परस्मैपदेषु' ( 2297 ) and the elision सु ( सिच् ) by 'इट ईटि' ( 2266 ) । रु to make sound—yelp—or bark etc.

मिल—। उतः ( उकारस्य ) + वृद्धिः + लुकि इलीतिच्छेदः। 'नाभ्यस्तस्याचि पिति सार्व्वधातुके' (२५०२—७।३।८७) इत्यतः पितीति सार्व्वधातुके इति चानुवर्त्तते। 'न अभ्यस्तस्य' इति संघातोऽप्यनुवर्त्तते। तदाह—पिति हलि सार्व्वधातुके इति नलभ्यस्तस्येति च। सूत्रे लुकि इत्यस्य व्याख्यानं—लुग्विषये इति। लुग्विकरणे अदादावित्यर्थः। अन्यत्र 'षु ९४१ प्रसवैश्वर्य्ययोः' ( भ्वादिः ) भवति। एवं सुनोतीत्यादौ वृद्धिर्न। यौति इति। स्पष्टम्। एवं यौषि यौमीत्यादयः। उतः किम्। एति (इण् गताविति धातुः)। लुकीत्यस्य च सार्थक्यं दर्शितम्। हलि किम्। यवानि, यवाव इत्यादि। 'आडुत्तमस्य पिच्चे'ति पित्त्वेऽपि हलादित्वाभावाद् वृद्धिर्न। न लभ्यस्तस्य किम्? योयोति ( यु इत्यस्य यङ्लुकि रूपम् )। रोरोति (रु यङ्लुक्)। सार्व्वधातुके किम्? यूयात्—( आशीर्लिङ् )। 'किदाशिषि' ( २२१६ ) इति कित्त्वादार्धधातुकत्वाच्च वृद्ध्यभावः। युतः—युवन्ति इत्यादीनां ङित्त्वात् ( 'सार्व्वधातुकमपित्' ) न वृद्धिः। युवन्तीत्यत्र 'अचिश्नु धातु—' (२७१) इत्युवङ्। युयाव णलो णित्त्वात्—'अचो ञ्णिति' (२५४) इति वृद्धिः। यविता लुट् आर्धधातुकत्वाद्वृद्ध्यभावः। युयात् इति—विधिलिङि रूपम्। इह तिपः पित्त्वेऽपि यासुटो ङित्त्वाद् उतो वृद्धिं निरस्यति—इहेति। युयात्—इत्यत्र ( विधिलिङि वा )। स्वोक्तिं भाष्यकारवचनात् समर्थयते—भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानादिति। एतच्च 'हुलः श्नः शानज्झौ' ( २५५७—३।१।८७) इत्यत्र भाष्ये स्पष्टमिति नागेशः। एवं यासुटः ङित्त्वेनापित्त्वात्—वृद्ध्यभावः। ननु तर्हि पूर्व्ववाक्येन 'पिच्च ङिन्न' इत्यंशेन तिपः पित्त्वेन ङित्त्वस्य बाधात् 'क्ङिति चे' त्यस्याप्रवृत्त्या गुणः स्यादित्याशङ्क्य आह—विशेषविहितेनेति। 'यासुट् परस्मैपदेषु उदात्तो ङिच्च' ( २२०९ ) इति हि विशेषेण विधीयते यासुटः पित्त्वं मासूदिति। अतएव ङिता पितो बाधः स्पष्ट एव। अतो नापि गुणः। केचित्तु 'पिच्च ङिन्न ङिच्च पिन्ने'ति भाष्यवचनमनाश्रित्य सुयात् युयादित्यादि व्याचख्युः। तेषामयमाशयः। 'उतो वृद्धि—'रिति हि संज्ञापूर्व्वकोविधिः ( वृद्धिशब्दः संज्ञावाचकं

'वृद्धिरादैजि'ति सूत्रात्)। तेन 'संज्ञापूर्व्वको विधिरनित्यः' इति परिभाषानुसारत एवात्र वृद्धिर्न भविष्यति। अन्यथा 'उतो वृद्धि—' रित्यनुक्त्वा 'उत् औदित्येव ब्रूयादिति तत्त्वबोधिन्यां स्पष्टम्। सूयात्—आशीर्लिङ्। आर्द्धधातुकत्वान्न वृद्धिः। अयावीदिति। सिचि वृद्धि—'रिति (२२९७) वृद्धिः। 'इट ईटि (२२६६) इति सलोपः। रु शब्दे इति। अथास्मात् परस्य सार्व्वधातुकस्य ईड्विकल्पार्थमाह—

२४४४। तुरुस्तुशम्यमः सार्व्वधातुके ।।७।३।९५।।

टी—। एभ्यः परस्य सार्व्वधातुकस्य हलादेस्तिङ ईड् वा स्यात्। 'नाभ्यस्तस्य—' (२५०३) इत्यतोऽनुवृत्तिसम्भवे पुनः सार्व्वधातुकग्रहणमपिदर्थम्। रवीति—रौति। रुवीतः—रुतः। हलादेः किम्? रुवन्ति। तिङः किम्? शाम्यति। सार्व्वधातुके किम्? आशिषि रूयात्। विध्यादौ तु रुयात्—रुवीयात्। अरावीत्। अरविष्यत्। 'तु' इति सौत्रो धातुर्गतिवृद्धिहिंसासु। 'अयञ्च लुग्विकरण' इति स्मरन्ति। तवीति—तौति। तुवीतः—तुतः। तोता। तोष्यति। णु १०३५ स्तुतौ। नौति। नविता। टुक्षु १०३६ शब्दे। क्षौति। क्षविता। क्ष्णु १०३७ तेजने। क्ष्णौति। क्ष्णविता। ष्णु १०३८ प्रस्रवणे। स्नौति। सुष्णाव। स्नविता। स्नूयात्। ऊर्णुञ् १०३९ आच्छादने।

The augment ईट् comes optionally before the सार्व्वधातुक and हलादि (having consonant in the beginning) तिङ् (तिप्, तस्, सिप्, थस् etc.) affixes following upon these roots viz. तु, रु, स्तु, शमि and

यम्। We could have carried down the word 'सार्व्वधातुके' to this rule ('तुरुस्तु etc.') from its predecessor 'नाभ्यस्तस्याचि पिति सार्व्वधातुके' (२५०२—७।३।८७), had there been no word as 'सार्व्वधातुके' mentioned in this posterior one. Hence (from the conduct of Panini's we infer that) the mentioning or taking up again of the term सार्व्वधातुके is to dispense with the carrying of the पित् occurring in the rule 'नाभ्यस्तस्याचि—' (२५०२)। The result is that not only हलादि 'पित्' सार्व्वधातुकs get the aug. ईट् but any हलादि तिङ् सार्व्वधातुक। Thus रवीति (पित्) etc. रवीति रौति—In the former case, the पित् सार्व्वधातुक, being preceded by the aug. ईट् which is अजादि and not हलादि, does not get the effect of the rule 'उतो वृद्धिर्लुकि हलि' (२४४३) and this results in the gunnation (having गुण) of the root 'रु' by 'सार्व्वधातुकार्द्धधातुकयोः' (२१६८)—रु ईट् तिप्=रौ ईति=रव् इति=रवीति। In the latter case, there being no अजादि prefix as ईट्, the root gets वृद्धि as usual by 'उतोवृद्धिः—' रुवीतः—रुतः—In the former case, because the affix तस् is ङित् so it is disallowed to have गुण nor can it have वृद्धि by 'उतोवृद्धिः—।' for it is not पित् (which brings ईट् cp.—'अपिदर्थम्)। But as the aug. ईट् is अजादि so the substitute उवङ् ('अचिश्नुधातु—' २७१) replaces the उ of रु giving रुव् (ईतस्) whence we get रुवीतः। In the latter case there being no अजादि प्रत्यय, उवङ् does not come in nor comes in the वृद्धि for तस् is not पित् and we get रुतः as the alternative form. Why say 'हलादेः' (in your वृत्तिः)? Witness रुवन्ति—where the fact of अजादित्व of the subsequent affix अन्ति (झि—'झोऽन्तः') bars the application of ईट् and nor

does it get वृद्धि for भक्ति is ङित् and not पित्। It is formed by उवङ् as above. Why have you ushered the term तिङः (into your expl.)? mark the form शाम्यति—where शम् being followed by श्यन् (दिवादिभ्यः श्यन्) which is not तिङ् does not get ईट् (the दीर्घादेश—is by 'शमामष्टानां दीर्घः—२५१८)। Why सार्व्वधातुके?—Because in the case of an आर्द्धधातुक,as आशीर्लिङ् there is no chance of ईट्—as रूयात् (रु+यात्—'अकृत्—' (२२९४) directs दीर्घ) but in विधिलिङ् etc. (also लोट् and लङ्) there will be option of ईट् as रुयात्—रुवीयात् (ईट् उवङ्) also रौतु—रवीतु (लोट्), अरौत्—अरावीत् (लङ्)। अरावीत्—(अट् रु इट् आर्द्धधातुकस्येट्—) सिच् ईट् (अस्तिसिचोऽपृक्ते) त् (तिप्)=अरौ (सिचिवृद्धिः—२२९७) इस् ईत्=अराव् ईत्—elesion of स् by इट् ईटि)—Note that लुङ् being 'आर्द्ध—' does not have the ईट् of 'तुरुस्तु—' similraly अरविष्यत्—(लृङ्) is wanting in ईट्। The root 'तु' is taken up in the rule (सूत्र) and does not occur in the धातुपाठ of पाणिनि hence it is सौत्र। It means movement, enhancement and injury. The old grammarians remember i.e. take it as लुग्विकरण—or अदादिगणीय—। Thus तवीति—तौति etc.—the process of eojugation is similar to that of रु above. तोता। (ताष्यति) the root is अनिट् hence you cannot have तविता तविष्यति। In लुङ् and लृङ्—अतावीत्—अतोष्यत्। षु to praise easy. टुक्षु to make sound: टु is for अथु च cp.—'ट्वितोऽथुच्'—क्षवथुः (spitting or sputum). क्ष्णु to sharpen. ष्णु to stream or flow. स्नौति by धात्वादेः षः सः, सुषाव—षत्व by इण्कोः—and आदेशप्रत्ययोः (२११—१२) वृद्धि for णिल as before. स्नविता—लुट् इत्। स्नूयात्—by 'अकृत्—'(२२९८). ऊर्णुञ् to wrap up or cover. It is सेट् and उभयपदी—

मित—। तु रु स्तु शमि अम् एषां समाहारः। ततः पञ्चम्या एकवचनम्। उतो वृद्धिर्लुकि हलीत्यतो—( ७।३ ८९ ) हलीत्यनुवर्त्तते। 'भूसुवोस्तिङि' ( ७।३।८८ ) इत्यतस्तिङि इति। 'ब्रुव ईड्' ( ७।३।९३ ) इत्यत ईडिति। 'यङो वा' (७ ३।९४) इत्यतो वेति च। सूत्रस्थसार्व्वधातुक इति च षष्ठ्या विपरिणम्यते व्याख्यानुरोधात्। तदाह—एभ्यः परस्य सार्व्वधातुकस्येत्यादि। नाभ्यस्तस्येति। इत्यतो—तस्मात् सूत्रात्। अनुवृत्तिसम्भवे—सार्व्वधातुकपदस्यानुवर्त्तनशक्यत्वेऽपि। सार्व्वधातुकग्रहणमत्र सूत्रे इत्यर्थः—अपिदर्थमिति। नाभ्यस्तस्येति सूत्रे—'नाभ्यस्तस्याचि पिति—' ( २५०७—७।३।८७ ) इति पित्त्वस्यानुवृत्तिनिर्देधार्थमिति भावः। तत्फलञ्च अन्यत्रापि ( अपिद्विषयेऽपि ) सार्व्वधातुके ईड् विधिर्यथा स्यात्—। अत एव वृत्तौ—'हलादेस्तिङ' इत्युक्तं न तु 'हलादेः पित' इति द्रष्टव्यम्। एवञ्च पितः अपितश्च सार्व्वधातुकस्य ईडागमः स्यादिति संक्षेपः। तत्र पितो यथा रवीति—रौति। अपितो यथा—रुवीतः रुतः इति। रुवीतीत्यत्र—रु ईट् तिप् इति स्थिते तिपो हलादित्वाभावात् उतोवृद्धिरित्यस्याप्राप्त्या 'सार्व्वधातुकार्द्ध—' ( २१६८ ) इति गुणः। अवादेशः। रौतीत्यत्र ईडागमस्य वैकल्पिकत्वेन ईडभावात् तिप उतो वृद्धिरिति वृद्धिः। रुवीतः इति। 'सार्व्वधातुकग्रहणमपिदर्थमि'त्युक्तेरीट्। अचिश्नुधात्विति उवङ्। पक्षे रुतः—अच्परत्वाभावादुकारस्य उवङादेशो न। हलादेः किमिति। रुवन्ति—अत्र झेरादेशस्य अतीत्यस्य अजादित्वादीडागमो नेति भावः। पूर्व्ववदुवङ्। तिङः किमिति। शाम्यति—अत्र यद्यपि तिङ्प्रत्ययः परतो विद्यते तथापि श्यना व्यवहितत्वात्तस्याव्यवहितपरत्वं नास्ति। अतो नेट्। 'शमामष्टानामि'त्युक्तेर्दीर्घः। आर्द्धधातुकस्य—ईडागमो मा भूदिति पृच्छति सार्व्वधातुके किमिति? रुयात्—'अकृत्—' ( २२९८ ) इति दीर्घः। विध्यादौ लिति। आदिपदेन लङ्लोटौ ग्राह्यौ। एष्वपि ईड्विकल्प इत्यर्थः। रुयात्—रुवीयात्—इति। पूर्व्ववत् सार्व्वधातुकत्वादकृदिति न प्रवर्त्तते। अतो न दीर्घः। उत्तरत्र ( ईट् पक्षे ) ईट् उवङ्। एवम्—अरवीत्—अरौत्। रवीतु—रौतु इत्यादि। अरावीत्—अट् रु इट् सिच् ईट् त् ( तिप् ) सिचिवृद्धिरितिवृद्धिः। इट ईटि—इति सलोपः। अरविष्यत्—लङ् इट्। लिति।

सौत्रः—सूत्रेष्वेव निबद्धः। न तु धातुपाठे उपदिष्टः। लुग्विकरण इति। आदादिक इति भावः। अरत्नि ग्रहा इति योज्यम्। तवीति—तौतीत्यादि, रवीति—रौतीत्यादिवत्। तौता—तौष्यति अनिट्त्वादिडभावः। टुक्षु इति। ट्वित्करणमथुजर्थम्। क्षुतोऽथुच्। क्षवथुः। ष्णु इति—धात्वादेः षः स इति सादेशः। प्रस्रवणं क्षरणं प्रवाहो वा। सुष्णाव इति। षोपदेशत्वात्—सुषुवे इत्यादिवत् इण्कोरित्यादिना षत्वम्। ऊर्णुञिति। ञित्वादुभयपदी। सेट्। अथ 'उतो वृद्धि'रिति या वृद्धिर्विहिता—सा ऊर्णोतेर्विकल्पं नेष्यते इत्याह—

## २४४५। ऊर्णोतेर्विभाषा ॥७।३।९०॥

दी—। वा वृद्धिः स्याद्धलादौ पिति सार्व्वधातुके। ऊर्णौति ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। "ऊर्णोतेराम् नेति वाच्यम्" (वार्त्तिक १८०२)।

The short उ of the root ऊर्णु optionally gets वृद्धि when a हलादि (having a consonant before) पित् सार्व्वधातुक follows. Thus ऊर्णौति (वृद्धि)—ऊर्णोति (no वृद्धि—) but गुण by 'सार्व्वधातुकार्द्ध—'); ऊर्णुतः—no वृद्धि because तस् is not पित् and no गुण because it is ङित् where गुण is forbidden by 'क्ङिति च'। ऊर्णुवन्ति—ऊर्णु+उवङ्+अन्ति। Prohibition of गुण and वृद्धि as in ऊर्णुतः। Similarly in ऊर्णुते etc which also are अपित् and ङित्। ऊर्णुवाते (उवङ्)। ऊर्णुवते (उवङ् and अते in place of अन्ते by 'आत्मनेपदेष्वनतः' (२२५८)।

'ऊर्णोतेराम् न—etc. This is a Vartika. It means that ऊर्णु (though it is obviously इजादि and गुरुमान् yet) will not have आम् (in लिट्)—for by another Vartika. 'ऊर्णोतेर्णुवद् भावो वाच्यः'। It has to be said that ऊर्णु becomes as णु (एकाच्) (when an

आर्द्धधातुक follows )'—under the rule 'च्चियौ' दीर्घात्' (२०१५). we have come to learn that ऊर्णु is treated as niether गुरुमान् nor अनेकाच्। Hence no आम्।

मित—। 'उतो वृद्धिः—' (७।३।८९) इत्यतो वृद्धिरिति हलीतिचानुवर्त्तते—'नाभ्यस्तस्याचि—पिति सार्व्वधातुके' (७।३।८७) इत्यतः पितीति सार्व्वधातुके इति च। विभाषेति वार्थकः। तदाह—न वृद्धिरित्यादि। ऊर्णौति (वृद्धिपक्षे)—ऊर्णोति (वृद्ध्यभावात्—'सार्व्वधातुकार्द्ध—'इति गुणः)। ऊर्णुतः—अपित्वान्न वृद्धिर्ङित्वाच्च-'क्ङिति चे'ति निषेधान्न गुणः। अजादित्वाभावाच्च नोवङ्। ऊर्णुवन्ति—गुणवृद्ध्यभावात् अजादित्वादुवङ्। ऊर्णुवाते उवङ्। ऊर्णुवते—उवङ्। 'आत्मनेपदेष्वनतः' (२२५८) इति अत्। टित इति एत्वं च।

'ऊर्णोतेराम् ने'ति—वार्त्तिकमिदम्। 'ऊर्णोतेर्णुवद्‌ भावो वाच्यः'. इति च्चियौ दीर्घात्—(२०१५) इत्यत्र वक्ष्यति। तस्य चायमर्थः—ऊर्णुधातुः 'ऊर्णु' इति न गृहीतव्यम् किन्तु णुवत्। तेन चायम् नापि इजादिः ('ऊ' इत्यंशस्याभावात्) नापि अनेकाच्—'णु' इत्यस्य एकाच्त्वात्। अतो नापि 'इजादेरित्यादिना नापि कास्प्रत्यया-दित्यादिना आम प्राप्नोति। अथानन्तरकर्त्तव्यमाह—

## २४४६। न न्द्राः संयोगादयः ॥६।१।३॥

दी—। अचः पराः संयोगादयो नदराः द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। णत्वस्यासिद्धत्वात्। "पूर्व्वत्रासिद्धोयम-द्विर्वचने" (परि—१२७) इति त्वनित्यम्। 'उभौ साभ्यासस्य' (२६०६) इति लिङ्गात्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः।

Of a संयोग (conjunction) the first letters such as न, द and र—which follow an अच् (vowel) are not duplicated (in लिट् etc.). Here in ऊर्णु, र्णु is the conjunct or संयोग letter ('हलो-

ऽनन्तराः संयोगः ) of which र् ( र् ण् उ ) follows upon ऊ which is an अच्। Now according to the rule 'अचादेर्द्वितीयस्य' ( २१७६ ) 'र्णु' should have duplication but by the present one र् is dismissed. Hence Bhattoji says that नु only is duplicated in view of the invalidity ( असिद्धत्व ) of the णत्व। The idea is this—the न in ऊर्णु ( read in the धातुपाठ ) was originally दन्त्य न and not मूर्द्धन्य ण। But the Same ( न ) has turned cerebral ( ण ) in connection with the र् in ऊर्णु by the rule 'रषाभ्यां नो णः समानपदे' (२३५—८।४।१)। Now the rule 'रषाभ्यां etc' falls under the असिद्धकाण्ड by 'पूर्व्वत्रासिद्धम्' ( ८।२।१ )। Therefore it ( रषाभ्यां— ) is invalid or is not to take effect when any operation is concerned with the foregoing chapters. द्वित्व or duplication is enunciated in the sixth chapter. Hence though णत्व is effected by 'रषाभ्याम्—' yet on the ground of the invalidity of its progenitor ( रषाभ्याम्—' ) it ( ण ) is treated as असिद्ध or non-existant. Thus the original न ( dental ) with its vowel ( उ ) gets reduplication. Nor can it be argued that—by the परिभाषा 'पूर्व्वत्रासिद्धीयमद्वित्वे or अद्विर्वचने' 'All the rules enumerated under the rule पूर्व्वत्रासिद्धम्' ( ८।२।१ ) are असिद्ध or invalid except where द्वित्व or द्विर्वचन or duplication is to take effect'—the above णत्व is valid ( in as muchas it concerns द्वित्व )। Because the above परिभाषा is अनित्य ( and therefore cannot be adhered to here). And to this i.e., our inference of अनित्यत्व the rule 'उभौ साभ्यासस्य' ( २६०६ ) bears testimony. For the rule अनितेः ( २४०८—८।४।१९ ) directs णत्व of नि in case an उपसर्ग having the condition ( निमित्त) of णत्व precedes, as प्राणिति

( breathes ). Now in चङ् to have the form प्राणिणत् Panini has made another sutra which make both the ण cerebral. But as 'अनितेः' ( २४०८ ) has effected the णत्व of नि we could have, without the help of the rule उभौ etc., got two cerebral णs by duplication. Therefore it is inferred that 'अनितेः' (८।४।१९) having fallen under the असिद्धकाण्ड, Panini has made the rule 'उभौ—' to inform us thereby that the परिभाषा 'पूर्वत्रासिद्धीयमद्वित्वे' ( or अद्विर्वचने ) is अनित्य or not persistent. ऊर्णुनाव—ऊर्णु + णल् = ऊर् नु नु अ = ऊर्णुनौ अ ( अचो ञ्णिति—२५४ ) = ऊर्णुनाव् अ। ऊर्णुनुवतुः—ऊर् नु नु अतुस् = ऊर्णुनुवङ् अतुस् ( अचि श्नु—२७१ )=ऊर्णुनुवतुः। ऊर्णुनुवुः—ऊर्णुनुवङ् उस् = ऊर्णुनुव् उस्।

भित—। नेति निषेधार्थको नञ्शब्दः। न्द्रा इति पृथक् पदम्। न् द् र एषां द्वन्द्वात् प्रथमाबहुवचनम्। तच्च विशेष्यम्। संयोगादय इति च विशेषणम्। तदाह—संयोगादयो नदरा इति। संयोगानामादय इति विग्रहः। 'एकाचो द्वे प्रथमस्य' ( ६।१।१ ) इत्यतो द्वे इत्यस्ति। 'अजादेर्द्वितीयस्य' ( ६।१।२) इत्यतोऽजादेरिति च। 'अजादेरिति कर्मधारयात् पञ्चमी—( अच् चासौ आदिश्चेति )—तदाह। अचः परा इति। 'आदिभूतादचः परा इत्यर्थः' इति नागेशः। नुशब्दस्य द्वित्वमिति। धातुपाठे ऊर्णु इत्यस्य नस्य दन्त्यत्वमेव। णत्वं तु 'रषाभ्यां नो णः समानपदे' (८।४।१९) इत्यनुसारात्। तच्च (णत्वं) 'पूर्वत्रासिद्धम्' ( ८।२।१ ) इत्यनुसारतः अत्र षष्ठाध्याय—कार्य्यावसरे असिद्धमेव। अतः ( असिद्धत्वात् ) द्वित्वाद्यर्थं कार्य्यं न लभते। अत आह णत्वस्यासिद्धत्वादिति। एवं नुशब्दस्यैव द्वित्वम्। ननु 'पूर्वत्रासिद्धीयमद्वित्वे' ( अस्यार्थः अग्रे वक्ष्यते ) इति परिभाषाबलात् अत्र णुशब्दस्य द्वित्वं साध्यताम् इति चेदत्रोच्यते। 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषा हि अनित्या। कुत एतज्ज्ञायते इति चेत्। तत्राह—'उभौ साभ्यासस्य' ( २६०६ ) इति सिद्धादिति। अयं भावः। 'अनितेः' (२४०८) इति हि उपसर्गस्थान्निमित्तादनितेर्नकारस्य णत्वं विदधाति

तत् प्र + श्रनि + णिच् + लुङ् श्रट् + तिप् इति स्थिते श्रनेन ( श्रनितेः इत्यनेन ) 'नि' इत्यस्य णत्वे कृते 'श्रजि' ( २३१५ ) इत्यनेन नि इत्यस्य कृतणत्वस्य द्वित्वे च प्राणिणत् इति सिद्ध्यत्येव। पुनः 'उभौ साभ्यासस्य' ( २६०६ )—'साभ्यासस्य श्रनितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति'—इत्यर्थकसूत्रकरणं किमर्थम्। न चैतत्तर्हि व्यर्थमिति वाच्यम्। तस्य ज्ञापकत्वेन सप्रयोजनत्वात्। एतच्च तेन ज्ञाप्यते। पश्यति भगवान् पाणिनिर्यत् श्रनितेरित्यनेन श्रसिद्धकाण्डस्थितेन कृतणत्वस्य णस्य श्रसिद्धत्वमिति। श्रतस्तस्य श्रसिद्धत्वाद् द्वित्वं भवितुं न इति। एतदेव च 'उभौ साभ्यासस्य' ( २६०६ ) इति सूत्रप्रणयने बीजम्। तदर्थं तत् ज्ञायते यत् 'पूर्व्वत्रासिद्धीयमद्विर्वचने' इति परिभाषा श्रनित्या इति। पूर्व्वत्रासिद्धीयमद्विर्वचने इत्यस्यायमर्थः। पूर्व्वत्रासिद्धमित्यधिकारे भवम्। गहादित्वाच्छः। 'पूर्व्वत्रासिद्धम्' ( ८।२।१ ) इति सूत्रात् परवर्त्ति सर्व्वं सूत्रं द्वित्वकार्य्यं विहाय सर्व्वत्रान्यत्रेत्यर्थः। एवञ्च द्वित्वप्रकरणे श्रनुपस्थानात् तस्य ( शास्त्रस्य ) सिद्धत्वमेव नासिद्धत्वमिति। श्रत्र नागेशः—'यत् पूर्व्वत्रासिद्धीयं शास्त्रम् तत्र द्वित्वे इत्युपतिष्ठते इत्यर्थः। तत्र पूर्व्वत्रेत्यनेनान्वेति। एवञ्च द्वित्व भिन्नं पूर्व्वं तेदमसिद्धमित्यर्थः। द्वित्वस्य तु श्रन्यत्रासिद्धत्वं भवत्येव। श्रत्र द्वित्वशब्देन षाष्ठम् ( षष्ठाध्यायगतम् ) श्राष्टमिकञ्च (श्रष्टमाध्यायगतम्) श्रविशेषात्। लिङ्गादिति। श्रन्यथा श्रनितेरित्यनेन कृतणत्वस्य द्वित्वे प्राणिणदित्यादिः सिद्धावुभाविति सूत्रं व्यर्थं स्यादेवञ्च णत्वविधानस्यानुपस्थानमिति भावः' इति। प्रकृते उदाहरणं दर्शयति—ऊर्णुनाव इति। श्रत्र रेफस्य ( ऊर्णु इत्यस्य )—द्वित्वविधानं सूत्रप्रयोजनम्। ततः 'श्रजादे—' इति नुशब्दस्य द्वित्वे प्रथमखण्डस्य ( श्रभ्यासस्य ) नकारस्य 'रषाभ्याम्—' इति णत्वम्। द्वितीयखण्डस्यस्य तु 'श्रट् कुप्वाङ्' इति णत्वं प्रवर्त्तते। उभौ साभ्यासस्य इति लिङ्गात्। 'श्रचो ञ्णिति' ( २५४ ) इति वृद्धिः। 'एचोऽयवायाव' इत्यावादेशः। ऊर्णुनुवतुः इति। उवङ्। शेषं प्राग्वत्। एवम् ऊर्णुनुवुरित्यत्र।

२४४७। विभाषोर्णोः ॥१।२।३॥

दी—। इडादिप्रत्ययो वा ङित् स्यात्। ऊर्णुविथ—

ऊर्णुनविथ। ऊर्णुविता—ऊर्णविता। ऊर्णौतु—ऊर्णोतु। ऊर्णवानि। ऊर्णवै।

An affix, having the aug. इट् in the beginning, becomes ङित् optionally provided it ( the affix ) comes after the root ऊर्णु। Thus ऊर्णुनुविथ—( ङित् पक्ष—उवङ् इट् )—ऊर्णुनविथ—( there being no ङित्, the second नु gets guna इट् )। Similarly ऊर्णुविता ( ङित्—लुट् ता ) ऊर्णविता—( without ङित् गुण )। ऊर्णौतु—ऊर्णोतु like ऊर्णौति—ऊर्णोति under 'ऊर्णोतिर्विभाषा' ( २४४५ )। ऊर्णवानि ( आनि—'आडुत्तमस्य पिच्च—' though the affix आनि is पित् yet 'ऊर्णोतेः—' does not operate for आनि is अजादि and not हलादि )। Thus गुण comes in by 'सार्वधातुकार्धधातुकयोः'।' Similarly ऊर्णवै। [ Now in लङ् ( और्णोत् ) option of वृद्धि by—'ऊर्णोतेः—' and गुण by 'सार्वधातुकार्ध—' being due, we look forward— ]

मित—; 'गाङ् कुटादिभ्योऽञ्णिन्ङित्' ( १।२।१ ) इत्यतो ङित्—इति। 'विज इट्' ( १।२।२ ) इत्यत इडिति चानुवर्तते। तदाह—इडादिप्रत्यय इति। 'ऊर्णोतेः परः इडादिप्रत्ययो वा ङिदिति सूत्रार्थः। ऊर्णुनुविथ—ङित् पक्षे इदम्। क्ङिति चेति निषेधात्' 'सार्वधातु—' इत्यस्याप्रसक्तेर्गुणाभावः। 'अचिश्नु—' ( २७१ ) इत्युवङ्। ऊर्णुनविथ—ङिदभावे इदम्, 'सार्व—' इति द्वितीयनुशब्दस्य गुणः। अवादेशः। एवम् ऊर्णुविता—ऊर्णविता ( लुट् इट् )। ऊर्णौतु—ऊर्णोतु इति—'ऊर्णोतेर्विभाषा' ( २४४५ ) इति वृद्धिविकल्पः। ऊर्णवानि इति। आटः पित्त्वेऽपि आनीत्यस्य हलादित्वाभावान्न वृद्धिः। गुणः। एवम् ऊर्णवै। अथ लङि आडागमे आटश्चेति वृद्धौ और्णु त् इति स्थिते ऊर्णोतेर्विभाषा ( २४४५ ) इति वृद्धि—विकल्पे 'सार्व—' ( २१६८ ) इति गुणे च प्राप्ते गुण एव स्यान्न वृद्धिरित्याह—।

२४४८। गुणोऽपृक्ते ॥७।३।९१॥

दो—। ऊर्णोति गुणः स्यादपृक्ते हलादौ पिति सार्व्व-धातुके। वृद्ध्यपवादः। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। इह वृद्धिर्न। 'ङिच्च पिन्न' इति भाष्यात्। ऊर्णूयात्। ऊर्णवि-षीष्ट—ऊर्णुविषीष्ट। और्णुवीत्। और्णविष्टाम्।

( The short उ of ) ऊर्णु gets guna when an अपृक्त, हलादि पित् सार्व्वधातुक ( as तिप् and सिप् ) follows. This supersedes वृद्धि ( directed by 'ऊर्णोतिविभाषा'—२४४५ ). Thus और्णुत्=और्णोत्। In the same manner और्णोः। In विधिलिङ्—ऊर्णुयात्, ऊर्णुयाः etc. Here there is no वृद्धिः on the authority of the statement 'ङिच्च पिन्न' of भाष्य ( see 'उतो वृद्धिः—' २४४३ )। ऊर्णूयात्—आशीः ( परस्मै ), दीर्घ by 'अकृत्—' ( २२९४ )। ऊर्णविषीष्ट—ऊर्णुविषीष्ट—आशीः (आत्मने)—option of ङित्त्व or गुणाभाव, cp—'विभाषोर्णोः' ( २४४० ) । उवङ् comes in the latter case owing to ङित्त्व। और्णुवीत्—और्णुविष्टाम etc. These are the optional परस्मै लुङ् forms by the rule 'विभाषोर्णोः' in the ङित्त्वपक्ष with उवङ्। But in the ङित्त्वाभावपक्ष गुण only being due by 'सार्व्व—' ( २१९५ ), we look forward :—

मित—। 'ऊर्णोतिर्विभाषा—' ( २४४५—७।२।६० ) इत्यत ऊर्णोतिरिति। 'उतो वृद्धिर्लुकि हलि'—( २४४३—७।३।८९ ) इत्यतो हलीति। 'नाभ्यस्तस्याचि पिति सार्व्वधातुके'—( २५०२—७।३।८७ ) इत्यतः पितीति सार्व्वधातुके इति चानु-वर्त्तते। तदेतत् सर्व्वं मनसि कृत्वा आह—ऊर्णोति गुणः स्यादित्यादि। वृद्ध्यपवाद इति। 'ऊर्णोतिर्विभाषा' ( २४४५ ) इत्यस्मात् प्राप्तस्य वृद्धिविकल्पस्य अपवाद इत्यर्थः। अतएव ( वृद्ध्यभावात् ) यथाप्राप्तम् ( 'सार्व्व—' २१९८ ) नुशब्दस्य गुण एवेत्याह और्णोत्। और्णोः इति। तिप् सिपावेवात्र अपृक्तौ इति ज्ञेयम्। परस्मपदे एवम्। आत्मनेपदे तु और्णुत और्णुवातामित्यादि बोध्यम्। अथ

विधिलिङि परस्मैपदे रूपमाह—ऊर्णुयात्—ऊर्णुया इति। अत्र वृद्धिः कुतो नेत्यत आह—इडिति। 'ङिच्च—पिन्न' इति भाष्यादिति। एतच्च भाष्यवचनम् 'उतो वृद्धिः—' (२४४३) इति सूत्रव्याख्यानावसरे—स्पष्टीकृतमिति तत्रैव द्रष्टव्यमिति। आत्मनेपदे—ऊर्णुवीत ऊर्णुवीथा इत्यादि उवङा रूपं ज्ञेयम्। ऊर्णूयात् इति। आशीर्लिङि परस्मैपदे रूपमिदम्। 'अकृत्—' (२२९८) इति दीर्घः। इडभावात्—ङित्त्वाभावः। अतएव विभाषोर्णोरित्यस्याप्रवृत्तिः। पित्त्वाभावात्—सार्वधातुकत्वाभावाच्च 'ऊर्णोति र्विभाषे'ति वृद्ध्यभावोऽपि। अथात्मनेपदे रूपमाह—ऊर्णविषीष्ट—ऊर्णुविषीष्ट इति। इडादित्वात् ङिद्भावे पूर्वत्र गुणः उत्तरत्र तु ङित्सत्त्वादुवङ्। लुङि परस्मैपदे उवङ्गुणवृद्धिभेदात्—रूपत्रयम्। तत्र उवङि रूपमाह—और्णुवीत्। और्णुविष्टाम् इति। आडागमे वृद्धौ और्णु इट् सिच् इट् त्=और्णु ईत् इति स्थिते 'विभाषोर्णोः' (२४४९) इति ङित्पक्षे गुण ( वृद्धी ) बाधादुवङ्। इदानीम् ङिद्भावपक्षे गुणवृद्धिभेदेन रूपद्वयं दर्शयितुं तदुपयोगिशास्त्रमवतारयति—

२४४९। ऊर्णोतेर्विभाषा ॥७।२।६॥

टी—। इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात्। पक्षे गुणः। और्णावीत्। और्णाविष्टाम्। और्णाविषुः। और्णवीत्। द्यु १०४० अभिगमने। द्यौति। द्योता। षु १०४१ प्रसवैश्वर्य्ययोः। प्रसवोऽभ्यनुज्ञानम्। सोता। असौषीत्। कु १०४२ शब्दे। कोता। (परस्मैपदिनो गताः)॥ ष्टुञ् १०४३ स्तुतौ। स्तौति—स्तवीति। स्तुतः—स्तुवीतः। स्तुते—स्तुवीते। 'स्तुसुधूञ्भ्यः—' (२३८५) इतीट्। अस्तावीत्। 'प्राक्सितात्—' (२२७६) इति षत्वम्। अभ्यष्टौत्। 'सिवादीनां वा—' (२३५९)—पर्य्यष्टौत्—पर्य्यस्तौत्। ब्रूञ् १०४४ व्यक्तायां वाचि।

( The short उ of ) ऊर्णु gets वृद्धि optionally when the affix सिच् having the aug. इट् in the beginning follows in Parasmaipada. वृद्धि being optional in the alternative case, we have गुण। Thus in the वृद्धिपक्ष—और्णावीत् etc. ( आट् ऊर्णु इट् सिच् ईट् त् whence respectively by 'आटश्च,' the present rule, and इट ईटि—we have—और्णौ ईत्—और्णाव् ईत् )। Similarly और्णाविष्टाम्, और्णाविषुः etc. In the गुणपक्ष—और्णवीत् ( as before with गुण in the place of वृद्धि )। Similarly और्णविष्टाम्—और्णविषुः etc. [ From these cases it is quite evident, as in the case of श्वि in भ्वादि under 'ह्म्यन्त'. ( २४२१ ), that ऊर्णु has three different लुङ् forms according as it is followed by उवङ्, वृद्धि and गुण ; Thus :—

with उवङ् :—और्णुवीत्, और्णुविष्टाम्, और्णुविषुः etc.,

with वृद्धि :—और्णावीत्, और्णाविष्टाम्, और्णाविषुः etc.,

and with गुण :—और्णवीत्, और्णविष्टाम्, और्णविषुः etc.

By the bye, it should also be remembered in this connection, that there are three rules dealt with here, which apparently harp on the same tune but are markedly different when their import is taken into consideration. It is therefore important to bear in mind the source whence each of them springs. We enumarate them below along with their sources with the serial number both of Si. Kau. and अष्टाध्यायी:—

| | |
|---|---|
| नाभ्यस्तस्याचि पिति सार्वधातुके ( २६०६—७।३।८७ ) <br> उतो वृद्धिर्लुकि हलि ( २४४३—७।३।८९ ) | 'ऊर्णोतेर्विभाषा' ( २४४५—७।३।९० ) |
| गाङ् कुटादिभ्योऽञ्णिन् ङित् ( २४६१—१।२।१ ) <br> विज इट्— ( २५२६—१।२।२ ) | 'विभाषोर्णोः' ( २४४७—१।२।३ ) |

सिचि वृद्धिः परस्मैपदेषु (२२९७—७।२।१) } 'ऊर्णोतेर्विभाषा'
नेटि (२२६८—७।२।४) } (२४४९—७।२।६)

यु to go towards or to keep sexual intercourse, यौति—by 'उतो वृद्धिः—' (2443)। षु means प्रसव (permision) and ऐश्वर्य (power) सौति etc. असौषीत् by सिचि वृद्धिः—(2297) and षत्व by 'आदेशप्रत्यययोः—' (212) and सत्व by 'धात्वादेः'। ष्टुञ् to praise (Here end the परस्मैपदी roots). The root is उभयपदी and अनिट्—स्तौति—स्तवीति। स्तुतः—स्तुवीतः [See the rule 'तुरुस्तुशम्यमः—' (2444)]. सत्व by 'धात्वादेः षः सः' and ष becoming स, ट becomes त। In लुङ् इट् comes in by 'स्तुसुधूञ्भ्यः परस्मैपदेषु' (2385). Hence the form is अस्तावीत् (अट् स्तौ ईत्)। The स of स्तु turns cerebral (ष) in connectien with a condition lying in an उपसर्ग as अभ्यष्टौत्—(अभिस्तु + लुङ् त) by the rule 'प्राक् सितात्—' (2276). And the स of स्तु optionally becomes ष when परि, नि and वि precede as—पर्यष्टौत् (with षत्व परि स्तु + लङ् त्)—पर्यस्तौत् (without षत्व)। In लोट् स्तौतु—स्तवीतु etc. (परस्मै), and स्तुताम्—स्तुवीताम् etc. (आत्मने) by 'तुरुस्तु'। In लङ्—अस्तौत्—अस्तवीत् etc. (परस्मै) and अस्तुत—अस्तुवीत etc. (आत्मने) In विधिलिङ् स्तुयात्—स्तुवीयात् etc. (परस्मै) and स्तुवीत etc. (आत्मने)। In आशीर्लिङ्—स्तूयात् etc. (परस्मै) and स्तोषीष्ट—etc. (आत्मने)। In लिट्—तुष्टाव, तुष्टोथ (want of इट् by 'क्रसभृ—' २२९३) तुष्टुव etc. (परस्मै), and तुष्टुवे etc. (आत्मने)। In लुङ् परस्मै is shown above and in आत्मने the forms are अस्तोष्ट—अस्तोषाताम् etc. ब्रूञ् to speak clearly. The root is उभयपदी and अनिट्।

मित—। 'सिचि वृद्धिः परस्मैपदेषु' (७।२।१) इति सूत्रम्। नेटि (7.2.4) इत्यत इटीति चानुवर्तते। तदाह—इडादौ सिचीत्यादि। पचे गुण इति। वृद्ध्यभाव

पक्षे 'सार्व्वधातुकार्द्ध—' ( २१६० ) इति गुण इत्यर्थः। अथ वृद्धिपक्षे आह—और्णावीत् इति। आजागमे आट्श्चेति वृद्धौ च और्णु इट् सिच् ईट् त—और्णुवीत् ( इट ईटीति सलोपः ) इति स्थिते अनेन वृद्धौ और्णौ ईत् इति। तत आवादेशे रूपम्। अथ गुणपक्षे आह—और्णवीत् इति। सिचि वृद्धिवर्ज्जं सर्व्वं समानम्। तदेवं ऊर्णुधातोर्लुङि उवङ्वृद्धिगुणभेदैस्त्र रूपत्रयम् वेदितव्यम् ( त्रिधातोरिव ) :—

उवङ्—और्णुवीत् ( और्णुवङ् ईत् ) और्णुविष्टाम् इत्यादि
वृद्धिः—और्णावीत्, और्णाविष्टाम् इत्यादि
गुणः—और्णवीत्, और्णविष्टाम् इत्यादि। किञ्च—

'ऊर्णोति विभाषा' (२४४५—७।२।६०), 'विभाषोर्णोः' (२४४७—१।२।३) ऊर्णोतेर्विभाषा (२४४८—७।२।६) इति वाक्यतः प्रतीयमान-समानार्थकानामपि सूत्रतः प्रविभिन्नार्थानां भेदो न विस्मर्त्तव्यः। षु इति—षोपदेशत्वात् धात्वादेरिति सभाव। सौति इति। प्रसवोऽभ्यनुज्ञानमिति। अभ्यनुज्ञानमनुकूलीभावः सम्मतिप्रदानमिति यावत्। ष्टुञ् स्तुताविति। अत्र पञ्चेपदिनो गताः। अयमपि षोपदेशः। ञित्वादुभयपदी। अनिट्। स्तौति—स्तवीति इत्यादि। 'तुरुस्तुशम्यमः—'( २४४४ ) इति ईडागमः। अथानिट्त्वाल्लुङि इडभावे इड्विधानार्थमाह—स्तुसुधूञ्भ्य ( २३८५ ) इति। अट्स्तौ इट् सिच् ईट् त इति स्थिते इट ईटीति सलोपः। आत्मनेपदे तु—अस्तोष्ट—(वृद्ध्यभावात् गुणः) इत्यादि ज्ञेयम्। उपसर्गस्यान्निमित्तात् स्तौतेः षत्वमाह अभ्यष्टौत् इति। प्राक्सितादित्यादिना ( २२७६ ) अभिपूर्व्वात् स्तौतेर्लङि परस्मैपदे रूपम्। परिनिविभ्योगात्तु षत्वविकल्प इति दर्शयति—पर्य्यष्टौत्—पर्य्यस्तौदिति। एवं न्यष्टौत्—न्यस्तौत्। व्यष्टौत्—व्यस्तौदित्यपि ज्ञेयम्। स्तौते र्लोटि लङ्वद्रूपम्। लङि अस्तौत्—अस्तवीत्। अस्तुत—अस्तुवीत इत्यादि। विधिलिङि स्तुयात्—स्तुवीयात्। स्तुवीत इत्यादि। लिटि तुष्टाव—तुष्टुवे, ( थलि क्रादिनियमात् ) तुष्टोथ। लृटि स्तोष्यति—स्तोष्यते इत्यादि। लुङि दर्शितम्। लृङि—अस्तोष्यत्—ष्यत। आशीर्लिङि—स्तोषीष्ट इत्यादि। ब्रूञ्—अनिडुभयपदी—

२४५० । ब्रुवः पञ्चानामादित आहो ब्रुवः ॥३।४।८४॥

दी—। ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। अकार उच्चारणार्थः। आह। आहतुः। आहुः।

( The five लिट् affixes ) णल, अतुस्, उस्, थल् and अथुस् replace optionally the five लट् affixes तिप् तस् झि सिप् and थस् in परस्मैपद of the root ब्रू, and then ब्रू itself is replaced by आह। The short अ in आह is for facility in pronunciation. Thus ब्रू+तिप्=आह्+णल् (अ)=आह। Similarly आहतुः and आहुः।

मित—। ब्रुव इति। अत्र आद्यो 'ब्रुवः' पञ्चम्यन्तः द्वितीयस्तु षष्ठ्यन्त इति ज्ञेयम्। 'परस्मैपदानां णलतुसुस्थलथुस्' (३।४।८२) इत्यव्यवहितं पूर्वसूत्रम्। लिटो लटो वेत्यतो लटो वेत्यनुवर्त्तते। तदाह—ब्रुवो लटः परस्मैपदानामिति। णलादयः पञ्चेति। एतदुक्तंभवति—तिप्स्थाने णल् (अ), तस् स्थाने अतुस् इत्यादि। अथुसन्तोऽयमादेशक्रमः। ब्रुवः स्थाने 'आह' इति च स्यात्। अकार उच्चारणार्थ इति। 'आहस्थः' (२४५१) इति सूत्रादधिगम्यते। 'आह्' इत्यादेशः। एवञ्च ब्रू लट् तिप् इति स्थिते आह् णल् (अ) इति भवति। तत्र—आह इति। एवमाहतुराहुरिति।

२४५१ । आहस्थः ॥८।२।३५॥

दी—। झलि परे। चर्त्वम्। आत्थ। आहथुः।

The final i. e. the 'ह' of आह is replaced by थ when a झल् letter follows. Thus ब्रू+सिप्=आह्+थल्=आथ्+थल्=आत्थ थ by चर्त्व, cp—'खरि च' (१२१)। आहथुः—आह्+अथुस्।

मित—। आहः+थ इति छेदः। तत्र आह इति 'आह्' इत्यस्य षष्ठ्यन्तम्। 'अलोऽन्त्यस्य' इति हमात्रस्य स्थाने थकारादेशः। तेन 'आह्' इत्यस्य हस्थाने थः

स्यात् झलि परे इति सूत्रार्थः। झलीति च 'झलो झलि' (८।२।२६) इत्यतोऽनुवर्तते। चर्त्वमिति। आह् इति स्थिते अनेन हस्य थत्वे आथ् थ इति जाते खरि चेति (१२१) पूर्वं थकारस्य चर्त्वेन तकारादेश इत्यर्थः। एवम् आत्थ इति भवति। आहादेशस्य अकारान्तत्वे तु अलोऽन्त्यपरिभाषया हकारादकारस्यैव आदेशः स्यात्। तथा सति आह्थ थल् इति स्थिते 'हो ढः' इति हकारस्य ढत्वे चर्त्वे च आट्थ स्यादित्यनिष्टमापद्येत इति ध्येयम्। प्रक्रियाव्याख्यानात् 'आहस्थः' इत्येव सुवचमित्याहुरिति तत्त्वबोधिनी (३९४ पृष्ठे)। नागेशस्तु महाप्राणादेशप्रकरणात् 'आहस्थ' इति नोक्तमित्याह। आहथुरिति। स्पष्टम्। अथ थलाद्यभावपक्षे आह—

## २४५२। ब्रुव ईट्॥७।३।९३॥

दी—। ब्रुवः परस्य हलादेः पित ईट् स्यात्। 'आत्थ' इत्यत्र स्थानिवद्भावात् प्राप्तोऽयं झलीति थत्वविधानान्न भवति। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। आर्धधातुकाधिकारे—

The augment ईट् is prefixed to a हलादि (consonant—leading) पित् (affix) following the root ब्रू। Now the affix थल् also is पित् and हलादि and the substitute आह by स्थानिवद्भाव is no other than ब्रू so that the aug. ईट् becomes (by this rule) due to थल्। To avoid this Bhottoji says आत्थ etc. Granted that आह is ब्रू itself by स्थानिवत्त्व and also that थल् is हलादि पित् but observe that आह replaces ब्रू when a झल् follows (cp—'झलि परे' under the preceding rule 'आहस्थः') and not when हल् follows. Thus though 'थ' of थल् is included both in झल् and हल् yet it will not have ईट् which is recommended here by pronouncing the words हलादि etc. and not झलादि etc. ब्रवीति ब्रू ईट् ति—ओ ईति ('सार्व—'

२१६८ )—ब्रव् ईति । ब्रूतः—no ईट् for तस् is ङित् and not पित् ; hence ( because ङित् ) no गुण also. ब्रुवन्ति being ङित् does not get गुण but being अजादि, अन्ति necessitates उवङ् by 'अचिश्नु—( २७१ ) । ब्रूते easy. In the jurisdiction or matter of आर्द्धधातुक we look on—

मित—। ब्रुव इति पञ्चम्यन्तम् । तदाह—ब्रुवः परस्य इति । 'नाभ्यस्तस्याचि पिति सार्व्वधातुके' ( २६०६—७।३।८७ ) इत्यतः पितीति, 'उतो वृद्धिर्लुकि ( २४४३—७।३।८९ ) इत्यतो हलीति चानुवर्त्तते । तदाह—हलादेः पित इति । अत० 'नाभ्यस्तस्य'त्यतः 'सार्व्वधातुके' इत्यप्यनुवर्त्तते इति बोद्धव्यम् । तेन 'उवक्थ' इत्यत्रार्द्धधातुकत्वादीड् नेति नागेशः । 'गुणोऽपृक्ते' ( २४४८—७।३।९१ ) इत्यस्मात् अपृक्त इति तु नानुवर्त्तते । तथा सति 'ब्रवीति' इत्यस्यासिद्ध्यापत्तेरिति दिक् । ननु 'स्थानिवदादेशः—' ( ४९—१।१।५६ ) इत्यनुसारात् स्थानिवद्भावेन आहादेशोऽपि ब्रवीत्यर्थं विहितं कार्य्यं लभते ( गुरुवद् गुरुपुत्रे वर्त्तितव्यमिति यथा )। ततः ( आह इत्यस्मात् ) परः थल्प्रत्ययश्च हलादिर्भवति । अतस्थलोऽपोडागमः स्यादित्याशङ्का—निराकरोति—'आत्थ' इत्यत्रेति । 'आहस्थः' ( २४४१ ) इति पूर्व्वसूत्रव्याख्यायाम् 'झलि परे' इत्युक्तं न तु 'हलि' परे इति । अत्र तु हलादेरित्युच्यते न तु झलादेरिति । अतो, नेट् । ( थल् इत्यस्य—'थ' इत्यचरं हलीति झलीति चोभयतेऽप्यास्ति । अतो, विधानबलात्—( हलादेरित्युक्तेः ) तदत्र न भविष्यतीति निर्गलितार्थः) । ब्रवीति इति । 'सार्व्व—' ( २१६८ ) इति गुणः अवादेशः । ब्रूतः इति । ङित्त्वाद् गुणाभावः । अपित्वादीडागमविरहः—ब्रुवन्ति इति । अपित्वादीडभाव । ङित्त्वाद् गुणाभावः । अन्तेरजादित्वादुवङ् । ब्रूते इति । ब्रुवः पञ्चानामित्यत्र परस्मैपदानामित्यनुवृत्तेरत्र आहादेशो न । ब्रुवाते । ब्रुवते ( उवङ् ) इत्यादि । अथार्द्धधातुके एव परतो ब्रुवोवचिरादेशः स्यादित्याह आर्द्धधातुकाधिकारे इति—

## २४५२ । ब्रुवो वचिः ॥२।४।५३॥

दी—। उवाच । ऊचतुः । ऊचुः । उवचिथ—उवक्थ ।

ऊचे। वक्ता। ब्रवीतु—ब्रूतात्। 'ङिच्च पिन्न' इत्यपित्त्वादीण्न्। ब्रवाणि। ब्रवै। ब्रूयात्। 'अस्यतिवक्ति—' (२४३८) इत्यङ्।

वचि i.e. वच् is put in the place of ब्रू when any आर्द्धधातुक (affix) follows. Thus ब्रू+लिट् णल्=वच् णल्—वच् वाच् अ ('अत उपधाया' (२२८२)—व वाच—उवाच by सम्प्रसारण cp—'लिट्यभ्यासस्योभयेषाम्' (२४०४)। ब्रू+अतुस्—वच् अतुस्—उच् अतुस् by 'असंयोगाल्लिट् कित्' (२२४२) whence अपित् लिट् affixes like अतुस्, उस् etc are कित्—and then by 'वचिस्वपि यजादीनां किति' (२४०९) व is samprasaranated. Then by the परिभाषा—'पुनः प्रसङ्गविज्ञानात् सिद्धम्' (cp. ईजतुः under वचिस्वपि etc (२२०९) we by duplication get उच् उच अतुस्—उ उचतुस्—ऊचतुः by सवर्णदीर्घ। Similarly ऊचुः and ऊचे etc. Here the rule 'अभ्यासस्यासवर्णे' (2290) does not apply for no असवर्ण vowel follows upon the अभ्यास। (Mark the distinction of the process of derivation in उवाच and ऊचतुः etc. In the former case the root is first duplicated and then the अभ्यास gets सम्प्र. whereas in the latter cases the roots first get सम्प्र. and then duplication and सवर्ण दीर्घ)। उवचिथ—उवक्थ—option of इट् (because वच् is अनिट्) according to the भारद्वाजनियम under 'ऋतो भारद्वाजस्य' (२२९६)। Observe also that according to Nagesha the term 'सार्वधातुके' must be carried down from 'नाभ्यस्तस्याचि—' (2606) along with the term पिति there into the rule 'ब्रुव ईट्' (2452); otherwise वच् णल् would give उवकीथ and not उवक्थ which is intended; for वच् by स्थानिवद्भाव gets the operations due to ब्रू and the affix थल् is a हलादि पित् (for थल् is the substitute of सिप् which is पित्) आर्द्धधातुक, and thus has every chance of having

the aug. ईट् prefixed to it ( बल् )। And this suggestion or rather explanation is more logical and to the place than what is brought forward by Bhattoji (see his वृत्ति under ब्रुव ईट्—2452)। वक्ता and not वचिता because अनिट्। ब्रवीतु—ब्रूतात् the former gets ईट् by 'ब्रुव ईट्' and गुण by 'सार्व—' ( 2168 ) but the latter gets neither of the two ( ईट् and गुण ) owing to the ङित्त्व of तातङ् cp—the statemet of भाष्य—'ङिच्च पिन्न' under 'उतो वृद्धि:—(2443)। ब्रवाणि—ब्रू+आनि is पित् but not हलादि hence no ईट् but ब्रू gets गुण owing to its पित्त्व। Similarly ब्रवै। ब्रूयात्—विधिलिङ्। उच्यात्—ब्रू+यात् ( आशी: )—वच् यात् ( किदाशिषि )—उच् यात् by 'वचि स्वपि—' (2409) Now by 'अस्तिवक्ति—' ( 2438 ) अङ् being due to वच्, we look forward :—

भित। ब्रुवो वचिरिति। ब्रुवो वचिरित्यादेश: स्यादार्धधातुके इति सूत्रार्थ:। उवाचेति—। ब्रुवो वचिरादेशे द्वित्वात्परम् 'लिट्यभ्यासस्योभयेषाम्' ( २४०८ ) इत्यभ्यासस्य सम्प्रसारणम्। अङ्गस्य 'अत उपधाया' (२२८२) इति वृद्धिश्च। ऊचतुरिति वच्यादेशे—वच् अतुस् इति स्थिते लिटि धातोरनभ्यासस्येति द्वित्वं बाधित्वा 'वचिस्वपि-यजादीनां किति' ( २४०९ ) इति प्राक् सम्प्रसारणे उच् अतुस् इति जाते द्वित्वम् उच् उच् अतुस् इति। न च सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति न्यायात् कुतो द्वित्वम् इति वाच्यम्। पुन: प्रसङ्गविज्ञानात् सिद्धमिति न्यायान्तरेण तस्य बाधासामर्थ्यात्। एवञ्च उ उच् अतुस् इति स्थिते असवर्णपरत्वाभावात् 'अभ्यासस्यासवर्णे' ( २२९० ) इत्यस्याप्रवृत्तेः इयङभावेन ( हेतुना ) 'अक: सवर्णे दीर्घ:' इति सवर्णदीर्घात् ऊचतुरिति। एवम् ऊचु:। इत्यादि। उवचिथ—उवक्थेति। भारद्वाज नियमाद् इड् विकल्प:। उवक्थेत्यत्र ब्रुव ईडितीडागमो तत्र 'नाभ्यस्ताचि—( २६०५ ) इत्यत: 'सार्वधातुके' इत्यस्यानुवृत्तेरिति नागेशमतं प्रागुपन्यस्तम् ( ब्रुव ईडित्यत्रैव )। ब्रवीतु—ब्रूतात् इति। पूर्वस्य हलादित्वात् पित्त्वादीट् गुणश्च।

उत्तरत्र तु तातङो ङित्त्वेनापित्त्वाद्वृद्धिगुणौ नेति दर्शयति—'ङिच्च पिन्ने'ति। एतच्च 'उतो वृद्धिः—' (२४४३) इत्यत्र व्याख्यातम्। अचाधि 'आनि' इत्यस्याजादित्वा-दीड् न। पित्त्वाद् गुणः। रुवाभ्यामिति चलम्। एवं अवे इति। किमादावधातुकोप-देशस्य वचेः 'वचिस्वपी'—ति सम्प्रसारणम्। अथ लुङि वचेरु लिरङ्स्यादित्याह—

२४५४। वच उम् ॥७।४।२०॥

दी—। अङि परे। अवोचत्—अवोचत।

अथ शास्यन्ताः परस्मैपदिनः। इङ् त्वात्मनेपदी। इण् १०४५ गतौ। एति। इतः।

The root वच् gets the aug. उम् (उ) when अङ् follows. उम् is मित्। Hence by मिदचोऽन्त्यात् परः (३०) it (उ) is but after अ of वच्. Thus अट्, वउच्, अङ्त्—अवोच्, अत् by आद् गुणः (६९) अवोचत्। Similarly अवोचत (आत्मने)। Want of गुण and वृद्धि owing to ङित्त्व of अङ् the substitute of च्लि।

अथ शास्यन्ताः etc—i. e. Now we take up the परस्मै roots upto शासु १०७५ अनुशिष्टौ under 'सिपि धातोर्वा' (2485). Of them इङ् is आत्मने—। इण् to go=एति, गुण by 'सार्व—' (2168); इतः—no guna because तस् is ङित्।

मित। वच उमिति। वचधातोरुमागमः स्यादङि परे। 'ऋदृशोऽङि गुणः' (७।४।१६) इत्यतः 'अङि' इत्यनुवर्तते। 'मिदचोऽन्त्यात् परः' (३०) इति परिभाषया अकारात् परमुकारो बोध्यः। आद्गुणः। अवोचत् (परस्मै) अवोचत (आत्मने) इति स्पष्टम्। अङो ङित्त्वाद् गुणवृद्धी न स्तः।

अथ शास्यन्ता इत्यादि। शासु १०७५ अनुशिष्टौ (सिपिधातो—२४८५) इत्यन्ता इत्यर्थः। तत्र इङ् इत्यात्मनेपदी ङित्त्वात्। इणिति। एति—'सार्व—' इति गुणः।

इत: ङिद्वत्त्वान्न गुण:। अथास्य अजादौप्रत्यये ( इ अन्ति ) इत्यत्र ङित्त्वाद् गुणाभावेन इयङपवादीयण् स्यादित्याह—

२४५५। इणो यण् ॥६।४।८१॥

दी—। अजादौ प्रत्यये परे। इयङोऽपवाद:। यन्ति। इयाय।

The root इण् makes room for यण् when an affix having अच् or vowel at the outset follows.

This overrules इयङ् enjoined by 'अचिश्नु—' (271-6.4 77). But गुण (सार्व—2168) and वृद्धि ( अचो ञ्णिति'—254 ) will supersede इयङ् from the fact of their ( गुण and वृद्धि ) being subsequent to इयङ्—thus अयनम् (इ + ल्युट—अनट्) and आयक: (इ + ण्वुल्—अक)। Now in the case in hand इ + अन्ति = य् अन्ति = यन्ति by अतो गुणे (191). इयाय—इ + णल् by व्यपदेशिवद्भाव—इ इ णल—इ ऐ अ = इ—आय—इयङ् आय—इय् आय—इयाय—cp 'अभ्यासस्यासवर्णे' (2290).

मित—। इणो यणिति। 'अचिश्नु—( 6/4/77 ) इत्यनुवर्त्तते। 'आसप्तमाध्याय—परिसमाप्तेरङ्गाधिकार' इति भाष्यवचनात् अङ्गमिति च। तेन अङ्गाक्षिप्त-प्रत्यय विशेषणत्वेन 'अचि' इत्यस्य तदादिविधित्वादाह। अजादौप्रत्यय इति। इयङोऽपवाद इति। 'इण—' इत्यस्य—अचोल्यपेक्षाया परत्वादितिभाव:। गुणवृद्धी तु अस्यापि ( इयङ: ) बाधिके। अयनम्। आयक:। यन्ति इति—इण् अन्ति इति स्थिते अनेन यण्। सर्वादेश:। इयाय इति। व्यपदेशिवद्भावेन इ इत्यस्य द्वित्वम्। अङ्गस्य अचो ञ्णिति इति वृद्धिरायादेशश्च। अभ्यासस्यासवर्णे (2290) इतीयङ्। एकाचो द्वे प्रथमस्य इत्यादौ व्यपदेशिवद्भावो व्याख्यात:। अतुसि विशेषमाह—

२४५६। दीर्घं इण: किति ॥७।४।६९॥

दी— । इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ—इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन् । इयात् । ईयात् ।

The reduplicate ( अभ्यास ) of the root इण् becomes long when कित् लिट् follows. By 'असंयोगाल्लिट् कित्' ( 2242 ) अतुस्, उस् etc. are कित् । Hence इण्+अतुस्=इ इ अतुस् ( here यण् due by इणो is barred by this rule )=ई इयङ् अतुस् दीर्घ =ई इय् अतुस्=ईयतुः । Similarly ईयुः । इययिथ—इयेथ—by the option of इट् according to भारद्वाजनियम, थल् is पित् लिट् hence 'दीर्घ इणः—' does not apply, thus in the former इ इ इट् थ—इ ए इथ by सार्व—( 2168 )—इ अय इथ—इयङ् अयिथ by 'अचिश्नु—' ( 271 )—इय् अयिथ—इययिथ and in the latter इइ थ—इएथ—इयङ् एथ—इय् एथ—इयेथ । ऐत्—लङ्—आट् इत्—आइत्—वृद्धि by 'आटश्च' ( 269 ) । Similarly ऐताम् and आयन् । Note that आट् comes in because having fallen under the आभीय (असिद्धवदत्राभात्) the subsequent rule 'इणो यण्' ( 2455—6.4.81 ) is invalid. इयात्—विधिलिङ्, ईयात्—आशीर्लिङ्, दीर्घ by 'अकृत्—' ( 2298 ).

मित— । दीर्घं इण इति । इण इति षष्ठ्यन्तम् । किदनुवृत्तिलभ्यस्य लिटि इत्यस्याभेदकम् 'अत्र लोपोऽभ्यासस्य' (२६२०—७।४।५८) इत्यत अभ्यासस्येति वर्तते । 'व्यथो लिटि' ( २३५३—७।४।६८ ) इत्यतो लिटीति च । तदाह—इणोऽभ्यासस्येत्यादि । "किति इति किम् । इयाय । न च परत्वाद्दीर्घेऽपि अभ्यासविकारे बाध्यबाधकभावेन पुनः प्रसङ्गविज्ञाने नैयङिरूपसिद्धिरितिवाच्यम् । अभ्यासविकारे बाध्यबाधकभावाभावेन परत्वप्रवृत्तौ इयङुत्तरं दीर्घे अनिष्टापत्ते'रिति नागेशः । तत्त्वबोधिनीकारास्तु "किति किम् इययि । अत्र वदन्ति । इह दीर्घे

क्ङितेऽपि—'अभ्यासस्यासवर्णे' । (२२९०) इतीयङा रूपसिद्धेः किदिति व्यर्थम् । न च दीर्घस्य इयङि (पुनःप्रसङ्गविज्ञानात्)—दीर्घविधानं व्यर्थमिति वाच्यम् । ईयतुः ईयुरित्यत्र—'वार्णादाङ्गं बलीयः' इति यणि कृते दीर्घविधेरावश्यकत्वात् । किञ्च लिटीत्यनुवर्तनमपीह व्यर्थमेव व्यावर्त्याभावादि"ति । अत्र मतद्वयोर्नागेशमतमेव साधीयः प्रतिभाति लाघवादिति सुधीभिर्विभावनीयम् । ईयतुरिति । इइ अतुस् इति स्थिते पूर्वस्य (अभ्यासस्य) अनेन दीर्घः । अतुसः कित्त्वादुत्तरखण्डस्य (इकारस्य) अचि श्नुधात्विति इयङादेशः । एवम् ई इय् अतुस् इति भवति । ततो रूपम् ; एवमेव ईयुरिति । ऐत् इति । आट् इ (लङ्) त्—आटश्चेति वृद्धिः । आयन्निति । इ (लङ्) अन् इति स्थिते— । 'इणो यण्' (६।४।८१) इति परत्वात् प्राप्तम् । तस्य तु 'असिद्धवदत्राभात्' (६।४।२२) इत्याभीयतया असिद्धत्वात् आडजादीना-मित्याडेव स्यात् । वृद्धिरायादेशौ । इयात्—विधिलिङ् । क्ङित्त्वाद्गुणवृद्ध्योरभावः । ईयात्—आशीर्लिङ्—'अकृत्—' (२२९८) इति दीर्घः ।

## २४५७ । एतेर्लिङि ॥७।४।२४॥

दी— । उपसर्गात् परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । 'उभयत आश्रये नान्तादिवत्—' अभीयात् । अणः किम् । समेयात् । 'समीयात्' इति प्रयोगस्तु भौवादिकस्य ।

The अण् (इ) of the root इण् coming after an उपसर्ग becomes ह्रस्व when the आर्धधातुक कित् लिङ् i.e. आशीर्लिङ् follows. The word आर्धधातुके in the वृत्ति seems to be an interpolation or a slip on the part of the writer in as much as the expr. 'किति लिङि' is enough to convey the presence of आशीर्लिङ् । The instance is निर् इयात् where the अण् or इ (अण् is the प्रत्याहार

constituting the first three letters अ इ ञ) of the root इण् is made ह्रस्व and not दीर्घ by 'अकृत्सार्वधातुकयोः—(2298) । 'उभयत आश्रये नान्तादिवत्' this is a varttika as is evident from the character of its being written in भाष्य—under 'अन्तादिवच्च' (75—6-1-85)—though it is not recognised here (with the asterisk *) as such in both Manorama and Tattwabodhini. It means that the rule 'अन्तादिवच्च' (75—6.1.85) will not apply where an operation such as—the एकादेश or the single substitute—rests on both the preceding (पूर्व) and the succeeding (पर) words.' This varttika has been put forth here to show that the अण् or इ of the आशीर्लिङ् form of इण् will not become ह्रस्व by the present rule 'एते लिँङि' when it follows upon the उपसर्ग्स अभि, अति, परि etc. The drift is this—By 'वार्णादाङ्गं बलीयः' (परि—) ईयात्—may be made इयात् by this rule, but then by एकादेश under 'अकः सवर्णे—' will figure as अभीयात् in connection with अभि । If you say, let by 'अन्तादिवच्च' (75), this एकादेश rest on the परशब्द ईयात् (thus अभ् ईयात्); but then अभ् is not an उपसर्ग । Then (if you argue) let the एकादेश ई rest on अभी (thus अभी—यात्) but then यात् is not the formation of the root इ । Thus it is brought home that the rule 'अन्तादिवच्च' will not apply where the एकादेश rests on both the पूर्व and the पर words. Nor can you argue again—let अभ् be taken as अभि by the परिभाषा 'एकदेशविकृतमनन्यवत्' what is disfigured by one part is the same (as before)'. This you cannot say for this परिभाषा is अनित्य—and is not to be adhered to everywhere (See प. शेखर and also भाष्य—and Kaiyata under—

अन्तादिवच्च 6.1.85 and उपसर्गाद्ध्रस्वः—' 7.4.23 ). Why say 'अणः' in the वृत्ति ?—Witness समेयात्। Here आ + इयात् = एयात् then सम् एयात् = समेयात् where ए is not अण् and therefore there is no ह्रस्वादेश। But समीयात्—( as is seen elsewhere ) is not derived from the root इण् to go in आशीर्लिङ् with the prefix सम् added to it ; on the other hand it is taken as the आशीर्लिङ् form of the root ई to go obtained from the conjunction of the root कटी ( कटि + ई )—( आदि )—read along with इट, किट, कटी ( 313 ) under 'ह्मयन्तक्षण—' ( 2299 ). Thus सम् + ईयात्—where the ई is lengthened by the rule—'अकृत्सार्व—' ( 2298 ).

मित—। एतेरिति। 'केऽणः' ( ७।४।१३ ) इत्यतः अण इति, "उपसर्गाद्ध्रस्व ऊहतेः" रित्यत (७।४।२३) उपसर्गाद्ध्रस्व इति, 'अयङ्यि क्ङिति' इत्यतः किति इति चानुवर्तते व्याख्यानात्। तदाह—उपसर्गात् परस्येत्यादि। 'किति लिङि' इत्यनेनैव आर्धधातुकलाभे ( आशीर्लिङः किंत्वादार्धधातुकत्वाच्च ) पुनरार्धधातुकग्रहणं चिन्त्यप्रयोजनमित्याहुः। अत्रा प्रक्षिप्तमेतदिति मन्तव्यम्। निरियात् इति स्पष्टम्। ननु 'अभीयात्' इत्यत्रापि अभ्युपसर्गात् परस्य एतेरनेन ह्रस्वो दुर्वार—इति चेत्। सत्यम्। किन्तु ह्रस्वे कृतेऽपि एकादेशाद् दीर्घो भवत्येव। ततः कृतेऽपि ह्रस्वे न कश्चिद् विशेषः। न चान्तादिवत् ( ७५ )—सूत्रमाश्रित्य इष्टसिद्धिः स्यादित्यपि वाच्यम्। पूर्वपरोभयशब्दाश्रयविधौ तस्याप्रवृत्तेरिति वार्त्तिकमुपन्यस्यति—उभयत आश्रये नान्तादिवदिति। पूर्वपरशब्दयोरुभयमप्याश्रित्य अवलम्ब्य यत्र विधिः प्रवर्तते तत्र 'अन्तादिवत्'—सूत्रेण न कश्चिदर्थ इति तदर्थः। तदुक्तमन्तादिवत् सूत्रे ( ६।१।८५ ) एवं विधस्थले भाष्ये—'अथ यत्रोभयमाश्रीयते किं तत्र पूर्वस्यान्तवद् भवति आहोस्वित् परस्यादिवद्भवति। उभयत आश्रये नान्तादिवत् *। किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। लौकिकोऽयं दृष्टान्तः। तद्यथा। लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति। स तयोः पर्यायेण कार्यं करोति। यदा

तदुभौ युगपत् प्रेप्सतः नानादिक्षु च कार्ये भवतः। तत्र यद्यसौ अविरोधार्थी भवति उभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति। यौगपद्याभावात्। नास्ति यौगपद्येन सम्भव' इति। अत्र कैयटः—'उभयत इति। यथा एतेस्त्विति ह्रस्वत्वमुपसर्गात् परस्य विधीयमानम् अभीयात् परीयादित्यादौ न भवति। तथाहि अन्तादिशब्दौ अवयवविशेषवाचिनौ। तत्र यदि पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव (एकादेशस्येत्यर्थः) परं प्रति कथमादिवद्भावः स्यादेवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः' इति। 'उपसर्गाद्ध्रस्वः—' (७।४।२३) इत्यत्रापि भाष्यकैयटयोरिदं विशदम्। ननु तर्हि एकादेशं परस्यादिवत् कृत्वा अभ् ईयात् इति स्थिते 'अभ्' इत्यस्य एकदेशविकृतन्यायेन उपसर्गत्वमादाय—ईयादित्यस्य ह्रस्वं विधास्याम इति चेत्। न। 'एकदेशविकृतमनन्यवदित्यस्य लक्ष्यानुसारेणैव प्रवृत्तिर्नेत्थं सार्वत्रिकीति—शेखरे स्पष्टम् इत्यास्तां तावत्। अणः किमिति? तथाहि समेयादित्यत्र एकारस्य [सम्—एयात् (आ+इयात्)] अण्त्वाभावान्न ह्रस्व इति भावः। ननु च समीयादित्यपि क्वचिद् दृश्यते। तत्र कागतिरिति चेत्तत्राह—समीयादिति लिङि। भौवादिकस्य (भ्वादि+ठञ्+६ष्ठी १व) भ्वादौ पठितस्य। तथाहि क्रान्तचयेति (२२९९) इति सूत्राघटात् इट किटकटी (३१८—१९—२०) गतौ इत्यत्र कटी+इ इति इकारोऽपि धात्वन्तरं प्रश्लिष्यते इति केचिदित्युक्तम्। तस्य इधातोराशिषि 'अकृत् सार्वधातुकयोः' (२२९८) इति दीर्घे यथोक्तरूपसिद्धिर्भवत्येवेति सर्वं सुस्थम्। एवमेव शेखरकारा अपि चेति संक्षेपः। अथ लुङि इण्धातोर्'गा' इत्ययमादेशः स्यादित्याह—

२४५८। इणो गा लुङि ॥२।४।४५॥

दी—। 'गातिस्था—' (२२२३) इति सिचो लुक्। अगात्। अगाताम्। अगुः। इङ् १०४६ अध्ययने। नित्यमधिपूर्व्वः। अधीते। अधीयाते। अधीयते।

The substitute गा takes the place of इण् in लुङ्। Thus इण्+सिच्+त्—अट् गा ० त्, सिच् elides by 'गातिस्था—' (२२२३) for it has been said under 'गाति—' that 'गापाविह इणादेशपिबती गृह्येते'। Similarly अगाताम् अगुः by 'आतः' (२२२७). इङ् to study. It is always preceded by अधि। Thus अधि—इते—अधीते त is ङित् by 'सार्वधातुकमपित्' hence no गुण। अधीयाते—अधि इ आते—अधि इयङ् आते by 'अचिश्नु—'(२०१)—अधीय् आते। Similarly अधीयते by इयङ् and 'आत्मनेपदेष्वनतः' (२२५८)। इङ् is replaced by गाङ् in लिट् by—

मित—। इणो गेति। इणो गादेशः स्याल्लुङीति सूत्रार्थः। तत्र अट् गा सिच् त् इति स्थिते सिज्लोपार्थमाह—'गाति' (२२२३) इति एतश्च तत्रैवोक्तं यत्—'गापाविहेणादेशपिबती गृह्येते' इति। अगुरिति। 'आतः' (२२२७) इति जुस्। इङिति। ङित्वादात्मनेपदी। अनिट्। अध्ययन इति। अधिरिति नियमपूर्वकपाठद्योतनार्थमिति भावः स्पष्टम्। अतएव 'गुरोरधीते,' 'पराशिषस्त्वामम-धीयते ये' (शकु०), 'सोऽध्यैष्ट वेदान्' (भट्टिः) इत्यादि संगच्छते। अधीयाते इति। अधि इ आते इति स्थिते अचिश्नुधात्विती इयङ्। ततः सवर्णदीर्घः। एवम् अधीयते। 'आत्मनेपदेष्वनतः' (२२५८) इति अदादेशः। अथास्य लिटि गाङादेशः स्यादित्याह—

२४५८। गाङ् लिटि ॥२।४।४८॥

. दौ—। इङो गाङ् स्याल्लिटि लावस्थायां विवक्षिते वा। अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अध्ययै। गुणायादेशयोः कृतयोरुपसर्गस्य यण्। 'पूर्वं धातु-रुपसर्गेण—इति दर्शनेऽन्तरङ्गत्वाद् गुणात् पूर्वं सवर्णदीर्घः प्राप्तः। 'ऐरध्ययने वृत्तम्' (३०२६) इति निर्देशान्न भवति।

अधैयत। परत्वादियङ्। तत आट् वृद्धिः। अधैयाताम्। अधैयत। अधैयि। अधैयवहि। अधैयमहि। अधीयीत। अधीयीयाताम्। अधीयीध्वम्। अधीयीयः। अधैयीष्ट।

The root इङ् is replaced by गा in लिट् when the लकार i. e. लिट् has already taken effect (this is the view of the varttikakara ) or when the application of the same ( लिट् ) rests in the mind only (This is the opinion of the Bhashyakara ). अधिजगे—अधि—इ+लिट् एश्=अधि—गा+ए—then apply द्वित्व, ह्रस्व, चुत्व and जश्त्व as before similarly elsewhere. The drift is that the rule ( द्विर्वचनेऽचि ) will not apply here for it would give अधीगे and therefore इ has first of all to be replaced by गा। अध्ययै—अधि—इ+लोट् इ=अधि—इ+ऐ ( by आटश्च )=अधि—अय् ऐ by गुण and अयादेश, then अध्ययै। This is according to the opinion 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण'। But according to the view 'पूर्वं धातुरुपसर्गेण—etc ( दर्शन=opinion ) सवर्ण—दीर्घ is first of all legitimate due to its अन्तरङ्गत्व। This ( अन्तरङ्गत्व ), however, will not take effect on the score of the ज्ञापक or लिङ्ग in 'गेरध्ययने—' where अध्ययन ( अधि—इ+ल्युट्—अनट् ) has no सवर्णदीर्घ but it has been effected by गुण, अयादेश and ण्यण् as in अध्ययै we have done. अध्यैत—अधि—आ इ+लङ् त=अधि—ऐत by the text' अधीयीत—विधिलिङ् इङ्+ईत and सवर्णदीर्घ। अध्यैषीष्ट —आशीर्लिङ्।

मित—। गाङ्लिटि। 'इङश्च' (२।४।४८) इत्यतः इङ इत्यनुवर्तते। लावस्थायाम् इति। अयमभाशयः—लावस्थायाम् अर्थात् लिड्लक्ष्ये लकारे प्रयुक्ते सति इङो गाङिति वार्त्तिककृन्मतम्। लकारे ( लिटित्यर्थः ) विवक्षिते एव इङो

गाङिति भाष्यम्। एवञ्च उभयत्रापि सति द्विर्वचनेऽचीति निषेधो न प्रवर्त्तते। पूर्वं द्वित्वनिमित्तस्याचोऽभावात्। उत्तरत्र तु अनैमित्तिकत्वादित्यन्यत्र विस्तरः। एवं कृते गाङादेशे द्वित्वकृत्वपुत्वादय इति बोध्यम्। अध्ययै इति—लोडुत्तमैक वचने रूपम्। पुनरादेशयोरिति। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'तिमतेनेदम्। मतान्तर माह—पूर्वमिति। दर्शने इति=मते इत्यर्थः। अन्तरङ्गत्वादिति सवर्णदीर्घस्येत्यर्थः। अध्यायनेऽपि हि पाणिनिना साधितम् तत्र (अध्ययनम्—अधि—इ+ल्युट्) प्राग्वत्धातोर्गुणेऽयादेशे यणि च सिद्धम्। अत उभयमपि साध्विति भावः। नागेशस्तु पूर्वमेव भाष्यसम्मतमित्याहेत्यलम्। अध्यैतेति। लुङि आटि वृद्ध्या रूपम्। अन्यत् स्पष्टं मूले।

## २४६०। विभाषा लुङ्लृङोः ॥२।४।५०॥

**टी—। इङो गाङ् वा स्यात्।**

The root गाङ् is optionally substituted for इङ् in लुङ् and लृङ्।

मित—। विभाषेति—'इङश्च' (२।४।४८) इत्यत 'इङ्' इत्यस्ति। 'गाङ् लिटि' (२।४।४९) इत्यतो गाङ् इति च। तदाह—इङो गाङ् वेति। 'लुङ्लृङो'रिति सप्तम्यन्तम्। तेन 'इङो गाङ् वा स्याल्लुङि लृङि' चेत्यर्थः।

## २४६१। गाङ्कुटादिभ्योऽञ्णिन्ङित्॥१।२।१॥

**टी—। गाङादेशात् कुटादिभ्यश्च परे अञ्णितः प्रत्यया ङितः स्युः।**

Such affixes as drop neither ञ nor ण् are designated or treated as ङित् (ङ्—dropping) when they follow the sub-

stitute गाङ् and the roots of the कुटादि class. Thus, सिच् coming after अधि—in अ गा स् त is ङित, then we look forward :—

मित—। गाङ्किति—। गाङ् कुटादिभ्यः + अञ्णित् + ङित् इतिच्छेदः। तत्र 'अञ्णित्' इति। ञ् च ण् च ञ्णौ।' तौ इतौ यस्य स ञ्णित्। न तथा— अञ्णित्। सूत्रे गाङिति। 'गाङ् लिटी'ति, गाङादेशः। न तु 'इणो गा लुङि' (२४५०) इत्यस्य—नापि 'गाङ् गताविव्यस्ये'ति दर्शयति। गाङादेशात् इति। गाङ् च कुटादयश्च इति द्वन्द्वात् पञ्चम्यन्तम्। एतेन अधि इङ् सिच् त इत्यत्र विभाषा लुङ्लृङोरिति गाङ्पक्षे—अधि अगा स् त इति स्थिते सिच्प्रत्ययस्य च गाङादेशात् परत्वात् ङित् संज्ञायामाह—

२४६२। घुमास्थागापाजहातिसां हलि ॥६।४।६६॥

ई—। एषामात ईत् स्यात् किङत्यार्द्धधातुके। अध्यगीष्ट—अध्यैष्ट। अध्यगीष्यत—अध्यैष्यत। इक् १०४३ स्मरणे। अयमप्यधिपूर्व्वः। 'अधीगर्थदयेशाम्—' (६१६) इति लिङ्गात्। अन्यथा हि 'इगर्थे' इत्येव ब्रूयात्। 'इणवदिक इति वक्तव्यम्' (वार्त्तिक १५७७)। अधियन्ति। अध्यगात्। केचित्तु आर्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः। तन्मते यण् न। तथाच भट्टिः—'समीतयो राघवयोरधीयन्' इति। वी १०४८ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु—प्रजनं गर्भग्रहणम्। असनं क्षेपनम्। वेति। वीतः। वियन्ति। वेषि। वेमि। वीहि। अवेत्। अवीताम् अवियन्। अडागमे सति अनेकाचत्वाद् यण् इति केचित्। अव्यन्। अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते। एति। ईतः।

इयन्ति। ईयात्। ऐषीत्। या १०४९ प्रापणे। प्रापणमिह गतिः। प्रणियाति। यातः। यान्ति।

The आ of the roots दा, धा (called घु), मा, स्था, गा, पा, हा and षो (सो or सा) becomes ई when a हलादि (having a consonant in the beginning)) गित्, कित् or ङित् affix follows. By the previous rule सिच् after गा is ङित्। Thus अधि अ गा सिच् त = अधि अगीस्त्—अधि-अगीष्त by 'इण्कोः' and 'आदेश—' (२११।१९)—अध्यगीष्ट by 'ष्टुना ष्टुः' (११३)। Here सिच् does not elide by 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' (२२२२) for गाङ् is आत्मनेपदी। Now गाङ् being optional in लुङ् by 'विभाषा लुङ् लृङोः' (२४६०), another form is अध्यैष्ट—अधि इ सिच् त—अधि—आट् इ सिच् त by 'आडजादीनाम्'—अधि ऐस् by आटश्च' (२६९)—अधि ऐष्ट as above—अध्यगीष्यत—अध्यैष्यत (लृङ्—विभाषा लुङ्लृङोः); इक to remember. This also is preceded by अधि from the fact of Panini's own practice in the rule 'अधी-गर्थदयेशां कर्मणि (६१६). Had it not been preceded by अधि he could have said इगर्थदयेशां etc.—इण्वदिक etc. This is a varttika meaning 'It has to be said that the operations meant for इण् to go such as 'इणो यण्' (२४५५), 'दीर्घ इणः किति' and इणो गा लुङि etc. are also equally due to the root 'इक् to remember'। Thus अध्येति—अधीतः अधियन्ति etc. also अध्यगात्—अध्यगाताम्—अध्यगुः as before under 'इणो गा—'(२४५८) [Note carefully the difference between गा (इणो गा—') and गाङ् ('गाङ् लिटि' २४५९)। The latter gets ई in place of its आ but the former does not].

केचित्तु etc. Some assert that the similar operations are as—cribed to इक् only when any आर्धधातुक affix follows the same

( इङ् )—This assertion is due to the statement 'इणवदिकः' of the varttikakara under 'इणो गा लुङि' ( २४५८ ) where the affixes of लुङ् only are concerned. Hence according to them इङ् will not be replaced by यण् directed by 'इणो यण्' ( २४५५ ) which refers to सार्वधातुक प्रत्ययs only. Thus in place of अधि यन्ति above they will have अधि—इयन्ति = अधीयन्ति with इयङ्; similarly in places of अधियन्तु etc. they will read अधीयन्तु etc. As for example—'ससीतयो राघवयोरधीयन्', remembering the two Raghavas ( Rama and Lakshman ) along with Sita' of Bhatti III—where अधीयन् ( अधि इ शतृ १मा १व ) is formed with इयङ् and not यण् ( which gives अधियन् ) । वी means 'movement', 'pervasion', 'conception', 'wish', 'casting', and 'eating.' वेति—by 'सार्व—' ( २१६८ ) वियन्ति—वी + इयङ् + अन्ति । वीहि—no gunnation for हि is अपित्—by 'सेर्ह्यपिच्च ( २२०६ ), अवेत् ( लङ् ) । अवियन्—इयङ् । [ N. B.—Nagesha says that this root (वी) will be conjugated in ( the form ) moods लट्, लिट, लङ् and विधिलिङ् only and will not be followed by any आर्धधातुक except यञ् and अप्—as Bhashya has under—'अजेर्व्य-घञपोः' २२९२ ].

अडागमे सति etc—Some conjugate अव्य न् ( अट् वी अन् ) in place of अवियन् in लङ् on the ground that after the augment अट् ( अ ) has been prefixed to the root वी, it ( वी ) becomes अनेकाच् ( pollysyllabic—as अवी ) and thus paves the way for यण् enjoined by 'एरनेकाचोऽसंयोगपूर्वस्य' ( २७२ )। Bhattoji prefers इयङ् (अभिश्नु—२११) to यण् because if अट् operates first on वी then there will be no अनेकाचत्व, for अट् is असिद्ध, as the rule 'लुङ्-लङ्-

लङ्चुडुदात्त:'(2206—6.4.71) falls under'—'असिद्ध वदत्राभावात्'(6.4 22). Hence it ought to have इयङ् and not यण्—this is elaborately dealt with by Nagesha under this rule. Here i. e in वी, ईकार is another root taken jointly with वी (वी+ई)। Hence we have also एति ईत: इयन्ति ( इयङ् and not यण् for the root is long and not short as इण् ( इ )) etc. ईयात्—विधि and आशी:। The diff. is in dual etc. ईयाताम् (विधि) and ईयास्ताम् (आशी:) etc. ऐषीत्—लुङ्, सिति वृद्धि—'and अलोप by 'इट—इठि' (२२६६)। या to go for प्रापण here means movement. प्रणियान्ति by 'नेर्गदनद घुमास्यतिहन्ति याति—' (२२८५)। In लङ्, या has जुस् in place of झि by :—

मित—। घुमास्थेति—। घु ('दाधाघ्वदाप्') मा स्था गा पा जहाति: (हा) सा एषाम् समाहारद्वन्द्वात् षष्ठी—। सेति षोऽन्तकर्म्मणीत्यस्य—क्ततात्वस्य निर्द्देश:। अत्र हाको ग्रहणं किन्तु, न हाङ एव व्याख्यानात्। 'आर्द्धधातुके'(६।४।४६) इत्यधिकृतं वर्त्तते। 'आतो लोप ईटि च' (६।४।६४) इत्यत 'आत' इति। 'ईद्यति:' (६।४।६५) इत्यत 'ई' इति। 'अनुदात्तोपदेशवनोतितनोत्यादीनामनुनासिकलोप: क्ङिति' (६ ४।३७) इत्यत: 'क्ङिति' इति चानुवर्त्तते। तदाह—एषाम् आत ईत् स्यादित्यादि। हलीति कितीत्यस्य विशेषणं तदाह—हलादौ कितीति। अध्यगीष्ट—अधैष्ट (लुङ्) इति अध्यगीष्यत—अधैष्यत (लङ्) इति च विभाषा लुङ्लृङो-(२४६०) इति गाङादेशविकल्प:। अध्यगीष्ट इत्यत्र—अधि इ च्लि त इति स्थिते—प्राग् गाङोदेशस्ततोऽडागम इति—अधि अ गासिच् त—अधि अगा स् त इति जाते 'गातिस्थाघुपाभूभ्य:—' इति सिचो लुङ् न। परस्मैपदित्वाभावात्। एवञ्च गाङ्कुटादिभ्य—इत्यादिना सिच ङित्त्वे—अनेन आकारस्य—ईदादेशे—अधि अगीष् ट इति भवति इण्कोरिति षत्वम्। ष्टुणा ष्टुरिति ष्टुत्वञ्च। तत इको यणिति यणादेश:। अधैष्ट इत्यत्र—(गाङभावपक्षे इदम्) अधि इ सिच् त इति स्थिते आडजादीनामित्याडागमे आटश्चेति वृद्धौ अधि ऐ स् त इति जाते पूर्व्ववत् षत्वष्टुत्वयणादेशा:। एवम्

अध्यगीष्यत इत्यादावपीति बोध्यम्। इगिति। अधिपूर्व्वत्वस्य निदर्शनमाह—अधीगर्थदयेशामिति। लिङ्गात्—ज्ञापकात्। अन्यथा हीति। यदि ह्ययमधिपूर्व्वो नाभविष्यत् तदा इगर्थदयेशामित्यत्रैव असूत्रयिष्यदन्यथा प्रामादिकत्वप्रसङ्गादिति भावः।

‘इण्वदिक इति वक्तव्यमिति’। वार्त्तिकमिदम्। ‘इण्धातोर्विहितं यण्—दीर्घ गाङादेशादिकार्य्यमिक्धातावपि उपतिष्ठते’ इति तदर्थः। यण्—इणो यण् (२४५५) दीर्घः—‘दीर्घ इणः किति’ (२४५६)। गाङ्—इणो गाङ् लुङि (२४५८)। तत्र यण् गादेशयोरुदाहरणमाह—अधियन्ति इति अध्यगात् इति च। अत्र मतान्तरमप्यस्ति। तदाह—केचित्त्विति। आर्द्धधातुकाधिकारोक्तस्य आर्द्धधातुकाधिकारे उक्तस्य ‘इण्’ इत्यस्य इति सम्बध्यते। एवेति—न तु सार्व्वधातुकाधिकारोक्तस्येति भावः। अतिदेशमाहुरिति केचिदित्यत्रान्वीयते। अतिदेश इति—कस्यचित् कार्य्यमुक्त्वा तस्यैव कार्य्यस्य विषयान्तरे निक्षेपोऽतिदेशः। अयं भावः—इणो गा लुङीति सूत्रम् इण आर्द्धधातुकगतां व्यवस्थामाह। तत्रैव च वार्त्तिककारवचनं—‘इण्वदिक—’ इति। अतः केचिद्वाच्यते यत्—इण्धातोरार्द्धधातुकारोक्तमेव कार्य्यम् इक् धातावुपतिष्ठत इति। अत एवैषामते यण् न। तदेवाह—तन्मते यण् नेति किन्तु इयङ् एवेति भावः। सतीत्यर्थोरिति। अत्र अधीयन् इत्यस्योच्चरन्नित्यर्थः। तत्र पदम्—अधिपूर्वस्य एतेः शतरि प्रथमैकवचनम् (अधि इ अत्—अधि इयङ् अत्) एवञ्चात्र इयङेव न यण्। तथा सति अधियन् इति स्यादिति ध्येयम्। रायवयोरिति। अधीगर्थदयेशामिति षष्ठी। वेतीति। कान्तिरिच्छा। ‘वशिव्यधवस्तोः’(३२९२) इति सूत्रात् नायं सार्व्वत्रिकः। किन्तु सार्व्वधातुकमात्रप्रयोगविषय इति शब्देन्दुशेखरे स्पष्टम्। वेवीति—। गुणः। वियन्ति। इयङ्। वीहि। सेर्ह्यपिच्चेति अपित्त्वाद् गुणाभावः। अधियन्निति। अट्वी अन्निति स्थिते अचिश्नुधात्विति इयङ् अडागमे सतीति। अधी अन् इति स्थिते आगमेन धातुमेकीकृत्य अनेकाच्त्वलाभः। ततः ‘एरनेकाचोऽसंयोगपूर्व्वस्य—’ (२७२) इति यणिति भावः। एतच्च मतं दूषितं शब्देन्दुशेखरे। तथाहि—‘लुङ्लङ्लृङ्क्ष्वडुदात्तः’ (६।४।७१) इति सूत्रस्य—‘असिद्धवदत्राभात्’ (६।४।२२) इति सूत्राधिकारे पठितत्वात् अडित्यस्य ‘एरनेकाच—’ (६।४।८२) इति सूत्रविहितं

कार्य्यं प्रत्याभीयतया असिद्धत्वम्। तथा सति अनेकाच्त्वमपि निवर्त्तते। अनेकाच्त्वा—भावाच्च कुतो यण्। अत इयङ् एव प्राप्नोतीति शब्देन्दुशेखरे विस्तरेणोपपादितमिति दिक्। अव्यन्निति—तेषां मते इत्यर्थः। अत्र वी इत्यत्रेत्यर्थः। वी ई इतिच्छेद इति भावः। एतच्च भाष्ये स्थितम्। एतीति। गुणः। ईत इति। ङित्त्वाद्गुणाभावः। इयन्ति इति। इयङ्। ईयात् इति। विधौ आशिषि च समानम्। अन्यत्र तु इयाताम् ( विधि ) ईयास्ताम् ( आशीः— ) इत्यादि। ऐषीत् इति। आट्। सिचि वृद्धिरिति वृद्धिः। येति—प्रापणमिह गतिरिति। णिजर्थस्यावश्यकाभावात्। प्रणियातीति—'नेर्गदनद—' ( २२८५ ) इति णत्वम्। अथास्मात् परस्य—लङि झेर्जुस् वा स्यादित्याह—

२४६३। लङः शाकटायनस्यैव ॥३।४।१११॥

दी—। आदन्तात् परस्य लङो झेर्जुस् वा स्यात्। अयुः—अयान्। यायात्। यायाताम्। यायास्ताम्। अयासीत्। वा १०५० गतिगन्धनयोः। गन्धनं सूचनम्। भा १०५१ दीप्तौ। ष्णा १०५२ शौचे। श्रा १०५३ पाके। द्रा १०५४ कुत्सायाम् गतौ। प्सा १०५५ भक्षणे। पा १०५६ रक्षणे। पायास्ताम्। अपासीत्। रा १०५७ दाने। ला १०५८ आदाने। 'द्वावपि दाने' इति चन्द्रः। दाप् १०५९ लवने। प्रणिदाति—प्रनिदाति। दायास्ताम्। अदासीत्। ख्या १०६० प्रकथने। अयं सार्व्वधातुकमात्रविषयः।

"सस्थानत्वं नमः ख्यात्रे" ( वर्त्तिक १५९१ ) इति वार्त्तिकं तद्भाष्यञ्चेहलिङ्गम्। 'सस्थानो जिह्वामूलीयः'। स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः। 'सम्पूर्व्वस्य ख्यातेः

'प्रयोगो न' इति न्यासकारः। प्रा १०६१ पूरणे। मा १०६२ माने। अकर्मकः। 'तनौ ममुस्तत्र न कैटभद्विषः' इति माघः। उपसर्गवशेनार्थान्तरे तु सकर्मकः। 'उदरं परिमाति मुष्टिना'। 'नेर्गदनद—' (२२८५) इत्यत्र नास्य ग्रहणम्। प्रणिमाति—प्रनिमाति। वच १०६३ परिभाषणे। वक्ति। वक्तः। अयमन्तिपरो न प्रयुज्यते। 'बहुवचनपरः' इत्यन्ये। 'झिपरः' इत्यपरे। वच्मि। वच्यात्। उच्यात्। अवोचत्। विद १०६४ ज्ञाने।

[ N. B.—The rule lit. means—According to Shakatayana alone जुस् is put in place of झि coming after an आकारान्त root. Hence according to others (including Panini himself) अन् is the substitute for झि। Thus the acceptance of the term शाकटायन indicate option and एव is to serve some special purpose elsewhere—'छिद् च' ( लिङादेशस्याङ्कथातुस'ज्ञ एव स्यात् ) लिङाशिषि ]

जुस् takes the place of झि optionally when the latter follows an आकारान्त root. Thus अयुः—अयान् ; अयात्—विधि and आशी। यायाताम्—विधि, यायास्ताम्—आशी। अयासीत्—लुङ् अट्यासक् इट्सिचइट न् by 'यमरमनमातां सक्च' (२३७७)। या means movement and indication. भा—to glitter or look bright. ष्णा ( स्ना ) to purify स्नाति—अस्नात्—सस्नौ—अस्नासीत्—स्नास्यति etc. श्रा to cook. द्रा—to move in a contemptuous manner. प्सा—to eat—पप्सौ। पा to protect. पायास्ताम्—and not पेयास्ताम् etc. for in 'एलिङि (2374) and in 'गातिस्थाघुपा—' (2223), the root पा to drink ( पिबादेश ) is

takeh and not पा to protect ; hence we have neither एत्व nor the elision of सिच्। Similarly अपासीत्—where सिच् does not elide for the same reason. ला to take. Chandra holds that both रा and ला mean to give. दाप् to cut off. Note that by 'दाधा घ्वदाप' this दाप् is not घुसंज्ञक hence प्रणिदाति—प्रनिदाति by 'शेषे विभाषाऽकखादावषान्त उपदेशे' and not प्रणिदाति only by नेर्गदनद etc. (228)। दयासाम etc like पायास्ताम् etc. ख्या to explain. This root is used in सर्व्वधातुक ( लट् लोट लङ् विधिलिङ् ) only and this we infer from the Varttika—

The drift is this :—It has been established by the Varttika and the Bhashya under—चक्षिङ् ख्याञ् that ख्याञ् is ख्शादि i.e. to be treated as beginning with ख्श् and not ख्य so that in the uses like 'नमः ख्यात्रे' there will be no change of स्थानत्व or जिह्वामूलीयत्व in as much as the rule 'शर्परे विसर्जनीय—' will take effect due to the असिद्धत्व of 'य' in ख्या by the वार्त्तिक 'असिद्धे शस्य यवचनं विभाषा' But this explanation does not hold good if ख्यात्रे is derived as ( ख्या प्रकथने ) + शतृ + ४र्थी १व ) for य replaces श and not vice versa. Thus य is not असिद्ध and therefore 'कुप्वोः—' applies and directs जिह्वामूलीयत्व। But the authority of Bhasya and Varttika rules supreme here and leads us to infer that 'ख्या प्रकथने' should be used in सार्व्वधातुक ( लट्, लोट्, लङ् and विधिलिङ् ) only ; for this single case of शतृ, indicates, by generalisation, the validity of our inference.

Cp—'सस्थानत्वं नमः ख्यात्रे' (1591) and the भाष्य—under it. "'ख्शादिर्वा' (वार्त्तिक)। अथवा ख्शादिर्भविष्यसि। कैनेदानीं क्शादिर्भवति। चर्लेन

अथ ख्यादिः कथम्। 'असिद्धे शस्य यवचनं विभाषा' (वार्त्तिक)। असिद्धे शस्य विभाषा यत्वं वक्तव्यम्। किं प्रयोजनम्। 'प्रयोजनं सौप्रख्ये तुग्विधि (वार्त्तिक)। सौप्रख्य इति योपधलक्षणो वुञ्विधिर्भवति। सौप्रख्यीय इति वृद्धाच्छ इति छो भवति। ❀ ❀ ❀ 'सस्थानत्वं नमः ख्यात्रे (वार्त्तिक) नमः ख्यात्रे इति सस्थानत्वं न भवति। (भाष्य)—under 'चक्षिङः ख्याञ्' (2-4-54) P—210. The meaning of the Varttika is—Had ख्याञ् not been ख्शादि then in uses like नमः ख्यात्रे (ख्यातृ + ४र्थी १०) there would arise सस्थानत्व i.e., जिह्वामूलत्व as a result of combination by 'कुप्वोः ꣻकꣻपौ च' (142) and not, विसर्जनीय by 'शर्परे विसर्जनीयः' (150).

The Nyasakara opines that ख्या, preceded by सम्, is not used in सार्वधातुक as well. Thus forms like संख्याति etc. are wrong and संख्या etc. are derived from the substi tute ख्याञ् of चक्षि and not from ख्या प्रकथने (cp Nagesha). प्रा to fill. मा to measure. Intransitive, cp Magha under—'ममौ ममुः etc. The line in full in—ममौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः—The joy arising from the arrival of the hermit (Narada) was not measured in the person of the foe of Kuitabha (Krishna) i.e. he was overwhelmed with joy. ममुः—मा + लिट् उस्। But the root (मा) is trans. when it affords a different sense due to any उपसर्ग e.g.'उदरं परिमाति मुष्टिना' cte.cp. नैषध। In full the line is उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु'—Is some inquisitive person measuring the belly of the sister of Dama with the breadth of his palm—i.e. Damayanti is slenderbellied.. This मा is not to be confused with 'माङ् in the rule 'नेर्गद—(2285). Thus it gives प्रणिमाति etc by शेषे विभाषा—। वच् to express clearly—वक्ति etc. This root does not take अन्ति

after it. Hence वचन्ति is wrong. Some say that it is not used in the piural number so that वचन्ति, वक्थ, वचन्तु, etc are wrong. Others hold that it is not used in dual ( वा—भि ? ) so that वक्तः, वक्थः वच्वः etc ( Or—वचन्तु &c ), are erroneous. [ Here the reading is द्विपरः or भिपरः] । Hence it is fair to use it in singular only. वग्धि—वच्+हि=वच्धि by हुझल्भ्यो—(2428)=वक्धि by 'चोः कुः' (378) वग्धि by झलां जश्; वच्यात्—विधि। उच्यात्—आशीः—'किदाशिषि—'वचिस्वपि—gives सम्प्र. अवोचत्—'वच उम' सवर्णदीर्घः। विद to know.

मित—। लङ इति। 'झेर्जुस्' ( ३।४।१०८ ) इति 'आतः' ( ३।४।११० ) इति चानुवर्तते। तदाह—आदन्तात् परस्येति। शाकटायनग्रहणं विकल्पार्थम्। तदाह—जस् वेति। एवकारस्तु भिन्नक्रमः। 'लिट् च' ( ३।४।११५ ), 'लिङ् आशिषि' ( ३।४।११६ ) इत्यादावस्यान्वयः। तथाच व्याख्यानम् ( लिट्चेत्यत्र ) 'लिडादेशस्तिङ् आर्धधातुकसंज्ञ एव स्यान्नतु सार्व्वधातुकसंज्ञः' ( २१७२ ) इति—तदेवं अया अन् इति स्थिते जुस्विकल्पात् अयुः अयान्—इति। यायात्—इति। विधिराशीश्च (लिङ्)। यायाताम् ( विधिः )। यायास्ताम् ( आशीः )। अयासीत्। 'यमरमनमातां सक् चे'ति सगागमः सिच इट् च। वेति। वाति। अवात्। अवासीत् इत्यादि। एवं भाश्रेत्यादयोऽपि। स्नाति इत्यादि धात्वादेरिति सत्वम्। पायास्तामिति। 'गातिस्थाघुपाभूभ्यः—' इति सिज्लुक् 'एर्लिङि' इति एत्वं च न। तत्र तत्र पिबतेरेव ग्रहणादिति विभावनीयम्। द्रावपीति—रा च दा चेत्य भावपीत्यर्थः। प्रणिदातीत्यादि। घुसंज्ञात्वाभावाद् 'नेर्गद—'(२२४५) इति न। किन्तु 'शेषे विभाषेति' णत्वविकल्पः। दायास्ताम्। अदासीदिति। 'दाधा घ्वदाप्' इति दापेर्घुसंज्ञात्वविरहात् 'गातिस्थे'ति एर्लिङीति' च न प्रवर्त्तते। तेन एत्वसिज्लोपौ न। अयं सार्व्वधातुकमात्रविषय इति। आर्धधातुकविषये ख्याधातोः प्रयोगो नास्तीति भावः। तदेव प्रमाणयति—सस्थानत्वमिति। वार्त्तिकमिदम्। तत्र तद्व्याख्यानपरं भाष्यमपि ज्ञापकमित्याह—तद्भाष्यञ्च ह लिङ्गमिति। तथाच भाष्यम्—'चक्षिङः ख्याञ् ॥२।४ ५४॥ किमयं कशादिराहोस्वित् ख्यादिः।

'चक्षिङः ख्शाञ्ख्याञौ' (वार्तिक)। चक्षिङः ख्शाञ्, ख्याञ्, इति ख्शादिः ख्यादिश्च। ख्शादिर्वा (वार्तिक) इत्यादि'। अवशिष्टम् आकरव्याख्यायामुक्तम्। अत्र वार्त्तिकार्थं स्वयमेव व्याकरोति। सस्थानो जिह्वामूलीय इत्यादिना। ख्याञे इति शकारान्तस्य ख्याञ्शब्दस्य चतुर्थ्येकवचनम्। 'नमः स्वस्ति—' इत्यादिना चतुर्थी। 'नमः ख्याञे' इति कस्यचित् प्रयोगो वार्त्तिककारेण उदाहरणव्यपदेशेन उक्तम्। अन्यदुक्तं भाष्ये स्पष्टीकृतम्। अत्रायमभिप्रायः—'चक्षिङः ख्याञ्' इति सूत्रस्थवार्त्तिकेन तद्भाष्येण च ख्याञादेशः ख्शादिरिति प्रतिपादितम्। ततश्च 'असिद्धे शस्य यवचनं विभाषा' इति वार्त्तिकात् 'नमः ख्याञे' इत्यत्र शकारस्थानिकस्य यकारस्य—असिद्धत्वात् 'शर्परे विसर्जनीयः' (१५०) इत्यस्य प्रवृत्तेर्जिह्वामूलीयत्वं (सस्थानत्वम्) न भवति। किन्तु 'ख्या प्रकथने' इत्यस्य ख्याधातोरेवोत्तरं शतृप्रत्ययं विधाय—'ख्यात' इति रूपसाधने यकारस्य—शकारस्थानिकत्वाभावेन असिद्धत्वाभावात् 'शर्परे विसर्जनीयः' इत्यस्य प्रवृत्तिर्नास्त्येव खर्परत्वेऽपि शर्परत्वाभावात्। ततश्च 'कुप्वोः ᳲकᳲपौ च' (१९२) इत्यस्य प्रवृत्त्या जिह्वामूलीयत्वं दुर्वारमेव। एवमन्यत्रापि ज्ञापकस्य सजातीयापेक्षत्वात्। एवञ्च तर्हि भाष्यवार्त्तिकप्रामाण्याद् विज्ञायते ख्याधातोः सार्वधातुकमात्रविषयत्वं नार्धधातुकविषयत्वम् इत्यहो! सूक्ष्मेक्षिकावत्त्वं तत्रभवतो दीक्षितस्य वैयाकरणवर्यस्य।

अथात्र न्यासकार—संवादमाह। सम्पूर्वस्य ख्यातेरिति। सार्वधातुकविषयेऽपि सम्पूर्वस्यास्य—प्रयोगो नास्तीत्यर्थः। तेन संख्याति इत्यादि न प्रयोक्तव्यम्। संख्या इत्यादि तु चक्षिङः ख्याञादेशस्यैवेति व्याख्यानमेवात्र शरणमिति शेखरकाराः। मेति सकर्मकत्वमुदाहरति। तनौ ममुरिति। तपोधनाभ्यागमसम्भवा मुद इत्युत्तरार्धम्। तपोधनस्य (नारदस्य) अभ्यागमात्—आगमनात् सम्भवन्तीति तादृश्यः मुदः हर्षाः कैटभद्विषः कृष्णस्य तनौ—देहे न ममुः परिमिता नाभूवन्। हर्षातिरेको बभूवेति भावः। ममुरिति—लिट् उस्। अकर्मकत्वमपि—दर्शयति। 'उपसर्गवशेनेति। अत्र परिमातीति परिच्छेदार्थकम्। नैषधीयश्लोकोऽयम्। 'कुतुकी कोऽपि दमस्वसुः किमु' इत्युत्तरार्धम्। कुतुकी कौतुकवान् कोऽपि दमस्वसुर्दमयन्त्याः उदरं मुष्टिना

न तु मुष्टिद्वयेन परिमाति परिगृह्णाति किम् अन्यथा कथमेतावत् चौणत्वमस्या उदरस्येति आकृतिप्रशंसा कृशोदरीणां प्रकृतिसुभगत्वात्। वक्ति इति।: एतेन स्वमते द्विवचनपरोऽप्यस्तीति दर्शितम्। अभियुक्तसंवादमाह—अन्तिपर इति। लङ् बहुवचने एव प्रयोगाभाव इत्यर्थः। बहुवचनपर इति न प्रयुज्यते इत्यध्याहार्य्यम्। एवम् 'द्विपर' इत्यत्र। [अत्रमूले 'द्विपर' इति युक्तः पाठः, 'झिपर' इति तु न सुष्ठु] तेन सर्व्वत्रार्थ—कवचने प्रयोगोऽस्तीति निर्व्विवादम्। वग्धि इति। 'हुझलभ्यो—' इति हेर्धिः। चोः कुरिति (३७८) इति—कुत्वम्। झलां जश्—' इति जश्त्वम्। उच्यादिति। किदाशि इति किच्वाद् वचिस्वपीत्यादिना सम्प्रसारणम्। अवोचदिति। अस्यतिवक्ति-ख्याति इत्यङ्। वच उम् इत्युम्। सवर्णदीर्घः। विद ज्ञाने इति।

२४६४। विदो लटो वा ॥ ३।४।८३॥

दो।—वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः, विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे वेत्ति। वित्त इत्यादि। विवेद। विविदतुः। 'उषविद'—(२३४१) इत्यामपक्षे 'विद' इत्यकारान्तनिपातनान्न लघूपध-गुणः। विदाञ्चकार। वेदिता।

The (nine) परस्मैपद affixes of लट् (तिप् to मस्) coming after विद् are optionally replaced by णल् etc (the nine लिट् affixes णल्, अतुस् up to म) thus विद्+णल्=वेद्+अ=वेद—gunnated by 'पुगन्तलघूपधस्य च' (२१४९)। Note that the rule 'लिटि धातोरनभ्यासस्य' (२१७७) does not apply here though णल् follows for the root is followed by लट् and not लिट्। Similarly in other cases. विदतुः it is ङित्—hence no गुणः। विवेद—लिट्—विविद्+अ—विवेद अ by 'पुगन्त—'। With आम् by 'उषविदजागृभ्योऽन्यतरस्याम्' (२३४१) we have

विदाञ्चकार and not वेदाञ्चकार for विद ends in अकार in 'उषविद—and thus इ of विद् ceases to be उपधा ( 'अलोऽन्त्यात् पूर्व—' ) in the case of आम् ( आम्पच ) । And this अकारान्तत्व of विद is a case of निपातन । ( Also Bhashya has—' निपातनादगुणत्वम्'—Nagesha ). This निपातन is in connection with आम् alone and not with any other affix. वेदिता—विद इट्ता ( लुट् ) ।

मित । विद इति पञ्चमी । लट् इति—षष्ठी । परस्मैपदानां णलतुस्— ( २१८२—३।४।८२ ) इति सर्व्वमनुवर्त्तते । तदाह—वेत्तेर्लटः परस्मैपदानामित्यादि । वेद इति । लिङादिग्रत्वाभावात् 'लिटि धातो—( २१७७ ) इति न प्रवर्त्तते । पुगन्तलघूपधस्य चेति ( २१८९ ) गुणः । विदतुरिति ङित्त्वाद् गुणाभावः । एवमन्यत्र । पत्ते इति लटीत्यर्थः । वेत्तीत्यादि स्पष्टम् । विवेद लिट् । सुगमा प्रक्रिया । उषविद—' ( २४४१ ) इति । आम्पचे—आम्प्रत्यये सति 'विद' इति 'उषविद—' इति सूत्रे इत्यर्थः । अकारान्तनिपातनात्—निपातनमाश्रित्य—अकारान्तग्रहणात् च न लघूपधगुणः ( २१८९ ) इकारस्योपधात्वाभावादितिभावः । एतच्च 'आम्सन्नियोगेन' इति शेषः । तदुक्तं भाष्ये—'निपातनादगुणत्वमिति' इति शेखरे स्थितम् । एवञ्च 'अतो लोप' ( २३०८ ) इत्यल्लोपोत्तरं स्थानिवद्भावेन अकारान्तत्वम् आश्रित्य—लघूपधगुणो नेति हृदयम् । वेदिता—लुट् । स्पष्टम् ।

## २४६५ । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥३।१।४१॥

**दी—। वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । इतिशब्दात् ।**

आम् after विद in लोट्, want of गुण ( of विद ), लुक् or disappearnce of लोट् and the अनुप्रयोग or after-use of कृ ending in लोट् i.e, the affixing of the words करोतु कुरुताम् etc. to विद—

all these are optionally enjoined in an irregular way. Here (in the rule) there is no intention of specifying the person or number. And this is inferred from the (force of the) word इति in the rule. The idea is—'विदांकुर्वन्तु' is the 3 per. pl. Hence by this it is not to be understood that the लोट् form कुर्वन्तु alone affords the alt. form विदांकुर्वन्तु। But all the remaining लोट forms in other persons and numbers such as करोतु, कुरु, करवाणि—etc will have the alt. forms विदाङ्करोतु, विदाङ्कुरु, विदाङ्करवाणि etc. against them. This is the force of the word इति which implies 'in like manner.'

मित—। विदांकुर्वन्त्विति। एतच्च सामान्येन निर्दिष्टम् न तु 'वेत्तु' इत्यस्यैव पाक्षिकः 'विदांकुर्वन्तु' इति निपातनाद इति भवति इत्यर्थः। इतिशब्दः प्रकारार्थकः। तेन एवम्प्रकारे रूपे इति लभ्यते। ततश्च पुरुषान्तरे च भवतीत्यर्थः सम्पद्यते। तदेवाह—वेत्तेरित्यादिना। 'कास्प्रत्ययादाम्—' (३।१।३५) इत्यत आमित्यनुवर्त्तते। 'कृञ्चानुप्रयुज्यते लिटि' इत्यव्यवहितपूर्व्वसूत्रात् 'अनुप्रयुज्यते' इति चेति ज्ञेयम्। गुणाभाव इति। 'वेत्तेर्लोटि' इत्येतेन सम्बन्धः। लोटो लुगिति वेत्तेरिति सम्बध्यते। लोडन्तस्येति। लोट्प्रत्ययान्तकृधातोः करोतु—कुर्व्वित्यादेः पश्चात्संयोगश्च वा विकल्पेन निपात्यते अनियमापेक्षं विधीयते इत्यर्थः। गुणाभाव इत्यादौ सर्व्वत्र 'निपात्यते' इत्यध्याहृत्य व्याख्येयम्। ननु सूत्रे 'विदांकुर्व्वन्तु' इति प्रथमपुरुषबहुवचनान्तं दृश्यते। तत् कुतो 'लोडन्तकरोत्यनुप्रयोगश्च' इति सामान्येन निर्दिष्टमित्याशङ्क्याह—पुरुष-वचन इति। तयोः (पुरुषवचनयोः) लोट्प्रयोगत्वेन नान्तरीयकतया उच्चार्य्यमाणत्वात्। अस्मिन्नेव पुरुषे अस्मिन्नेव वचने नान्यत्रेति एवंविधा सूत्रकारस्य न विवक्षेति भावः। तेनान्यत्र पुरुषे वचने च भवत्येवेति भावः। कुत इत्यत आह—इति शब्दात्—ल्यब्लोपेऽत्र पञ्चमी। प्रकारवाचकमिति शब्देनास्मिन्न विधानात्। यद्वा—हेतावेषा पञ्चमी। तत्रापि स एवार्थः। एवञ्चातोऽयं

वैकल्पिकं न प्रत्येतव्यमित्यर्थः। अन्ये तु इति शब्दादत्र कर्तृत्वपरत्वे पदे विवक्षिते। एतेऽप्यविवक्षिते नागरीयकत्वादिवेल्पपरे। कौट् तु उच्चारणसामर्थ्याद् विवक्षिते एवेत्यादि शब्देन्दुशेखरे व्याख्यातम्। वैनेरामिति। आमार्थकत्वेन विदधातोरामप्रत्यय इति ज्ञेयम्। इदानीमनुप्रयुज्यमानस्य करोतु कुर्वन्ति—इत्यादि रूपं विवक्षुस्तदुपयोगि शास्त्रमवतारयति—

२४६६। तनादिकृञ्भ्य उः ॥३।१।७९॥

दी—। तनादेः कृञश्च उप्रत्ययः स्यात्। शपोऽपवादः। तनादित्वादेव सिद्धे कृञ्ग्रहणं 'गण-कार्यस्यानित्यत्वे' लिङ्गम्। तेन 'न विश्वसेदविश्वस्तमि'त्यादि सिद्धम्। विदाङ्करोतु।

The affix उ is enjoined after तनादि roots and the root कृञ् (कृ). This (उ) supersedes शप् (कर्त्तरिशप्)। In the rule 'तनादिकृञ्भ्य उ' the pronunciation of the term 'तनादि' being sufficient enough to include कृञ् as well (which also is तनादि), the utterance of the root 'कृञ्' serves as an indication that the operations with reference to classes of roots (गण) are not obligatory (अनित्य). Hence forms like 'न विश्वसेत् etc.' are correct. Here श्वस् being अदादि, the form should have been श्वस्यात्—and not श्वसेत् which is formed by taking श्वस् as भ्वादि and adding शप् etc, thereto. [ But Nagesha asserts that as Bhashya rejects कृञ् of तनादिकृञ्भ्यः so no such indication is proper to be suggested, and takes न विश्वसेत् etc. as an archaism. ] Now in the case in hand विदाम्—कृ+उ-तिप्=विदाम्+कर्+उतु=विदाम्—करोतु by 'सार्व—' (2168).

मित—। तनादिकृञ्भ्य उरिति। तनादेरिति कृञश्चेति च पञ्चम्यन्तम्। शपोऽपवाद इति। 'कर्त्तरि शप्' इत्यस्यापवाद इत्यर्थः एतेन सार्वधातुकविषये एव

उप्रत्ययस्य प्रवृत्तिरिति शेषम्। तनादित्वादेव सिद्धे इति—तनादिगणे कृञ्धातुरपि परिगणितः। तेन तस्याग्रहणेऽपि दोषो न स्यात्। तथापि यद् विशिष्य ग्रहणाति तत् ज्ञापयत्याचार्यः परिभाषामिमां 'गणकार्य्यमनित्यमि'ति। अथानित्यत्वज्ञापने किं फलमत आह—तेनेति। न विश्वसेदित्यत्र श्वसितेरादादिकत्वेऽपि 'अदिप्रभृतिभ्यः शप्' इति शब्लुकोऽप्रवृत्तिरितिभावः। शप् लुकि हि सति 'विश्वस्यात्—' इति स्यात्। किञ्च विश्वस्तम् इत्यत्र इट् प्राप्तः सोऽपि न। [ शेखरकारास्तु भाष्ये—कृञ्ग्रहणस्य—( तनादिसूत्रे ) प्रत्याख्यानादथार्थे ( गणकार्य्यस्यानित्यत्वज्ञापने ) तात्पर्य्यमयुक्तं न विश्वसेदित्याद्यार्थमेव। ज्ञापितेऽपि तथाविताप्योभावाच्चेत्यर्थ इत्याहुः। एतत्तु गणकार्य्यमनित्यम् इत्यत्र परिभाषाह्वतौ खोक्तिविरोधाच्चिन्त्यम् इति सुधीभिर्विभावनीयमित्यलम् ]। विदाङ्करोतु इति। विदाम्—कृ उ तु इति स्थिते 'सार्व्व—' इति धातोर्गुणः। रपरत्वम्। तुपः पित्त्वाच्च उप्रत्ययस्य गुणः।

२४६७। अत उत् सार्व्वधातुके ॥६।४।११०॥

वृ—। उप्रत्ययान्तस्य कृञोऽकारस्य उत् स्यात् सार्व्वधातुके क्ङिति। उदिति तपरसामर्थ्यान्न गुणः—विदांकुरुतात्। विदांकुरुताम्। 'उतश्च—' (२३३४) इति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्। विदांकुरु। विदाङ्करवाणि। अवेत्। अविताम्। 'सिजभ्यस्त—' (२२२६) इति झेर्जुस्। अविदुः।

उत् is the substitute for the अ of कृ, after उ has been affixed to it, when a सार्व्वधातुक कित् or ङित् follows. This उत् being तपर i.e. having त् after it will not have guna. Thus विदाङ्कुरुतात्—विदाम—कृ + उ + तातङ् = विदाम्—कर + तात = विदाम्—क् उत् रु + तात = विदाङ्कुरुतात् ( ङ by अनुस्वारस्य ययि परसवर्णः )। Similarly विदाङ्कुरुताम्

in तस्। Observe that उत् which is substituted in place of अ of क् अर् उ ( this उ is by तनादिकृञ्भ्य उ ) changes क into कुर् and thus gives opportunity to 'पुगन्तलघूपधस्य' ( 2189 ) to come in. Hence Bhattoji says तपरसामर्थ्यात् etc. Then in विदाम्—कृ + उ ( तनादिकृञ्भ्य उ ) + हि = विदाम् कुरु = हि elides by 'उतश्च प्रत्ययादसंयोग पूर्वात्' (2334). But if हि disappears, there is no सार्वधातुक following विदाङ्कुरु then how can you apply 'अत उत्—' ( this rule ) ? To answer this he says—Indeed there is no सार्वधातुक at the elision of हि। But this हि is असिद्ध for the rule उतश्च प्रत्ययात्—'(6. 4. 106) falls under 'असिद्धवदत्राभात्' (6.4.22) and hence it is आभीय and also it is the आश्रय or the sphere of application viz. कृ is the same (समान) in both the cases (i.e. हि and उ) : Thus we have विदाङ्कुरु। [ Note—that 'उतश्च प्रत्ययात्—' is a नित्यविधि hence it bars the subsequent rule 'अत उत्—' by परनित्यान्तरङ्गापवादानाम्—'(परि)। Thus the necessity of the above explanation ]. विदाङ्करवाणि—Here 'अत उत्—' does not apply for आनिप् is पित् by 'आडुत्तमस्य पिच्च' and not क्ङित्। But the उप्रत्यय directed by'तनादिकृञ्—' is gunnated on account of this पित्त्व of आनिप्। Hence विदाङ्करो आनि—विदाङ्करर् आनि etc. Similarly—करवाव,—करवाम ; अवेत् ( लङ् )—गुण, अक्रियाम् etc.

मित—। अत उदिति। अत इति षष्ठी। 'उतश्च प्रत्ययादसंयोगपूर्वात्' ( २३३४—६।४।१०६ ) इत्यत 'उतश्च प्रत्ययात्' ( उप्रत्ययान्तस्य ) इत्यनुवर्त्तते। 'नित्यं करोतेः'(२५४८—६।४।१०८) इत्यतः करोतेः कृञः इति। 'गमहनजनखनघसां लोप क्ङित्यनङि' ( २३६२—६।४।९८ ) इत्यतः क्ङिति इति च। तदाह—उप्रत्ययान्तस्य कृञ इत्यादि। नन्वेवं विदाङ्कुरु तातङ् इत्यस्य—विदाङ् करतात् इति स्थिते अनेन

विदाङ्कुरुत तात् इति जाते 'कुरु'इत्यस्य—लघूपधत्वात्'पुगन्तेति' गुणः स्यादित्याशङ्क्य आह। तपर—सामर्थ्यान्न गुण इति। एतच्च स्थानिवदादेशोऽनल्विधाविस्यत्र 'श्वादेशेऽल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः'इति वार्त्तिकप्रत्याख्यानावसरेभाष्ये 'कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा स्यादस्ति च लघूपधत्वम्। तत्र लघूपधगुणः प्राप्नोतीत्युपक्रम्य 'नैष दोषः। करोतौ तपरनिर्देशात् सिद्धमि'ति समाहितमित्यनुसन्धेयं तत्रैवेति दिक्। एवञ्च 'कुरु' इत्यस्य तलोपे विदाङ्कुरुतात् इति सिद्धम्। उप्रत्ययस्य (द्वितीयस्य उकारस्य) तु तातङो ङित्त्वाद् गुणाभाव इति ध्येयम्। विदाङ् इत्यत्र उकारस्य 'मोऽनुस्वारः' 'अनुस्वारस्य ययि परसवर्णः' इति सूत्राभ्यामिति बोध्यम्। एवं विदाङ्कुरुताम् (तसस्तामादेशः)। ननु 'विदाङ्कुरु' इत्यत्र कुर्वित्यंशः कथं सिद्धः। तथाहि 'तनादिकृञ्भ्य उ'रित्यनेन विदाङ्करु—इति स्थिते 'परनित्यान्तरङ्गा-पवादानाम्—' इति न्यायात् परमपि 'अत उत् सार्वधातुके' (६।४।११०) इति सूत्रम् 'उतश्च प्रत्ययादसंयोगपूर्वात्' (६।४।१०६) इत्यनेन बाध्यते। तस्य नित्यत्वात्। ततश्च हिलोपे कृते 'विदाङ्करु' इति स्थिते सार्वधातुकस्य हेरभावात् 'अत उदिति कथं प्रयुज्यते। तत्राह—'आभीयत्वेन' भाधिकार (असिद्धवदत्राभात्—६।४।२२ इत्येनमध्ये) पतितत्वेन 'लुकः' हिलोपस्य—असिद्धत्वादुक्तम् 'करु'इत्यस्यककारादकारस्य उकारादेश इति भावः। विदांकरवाणीति। आडागमस्य पित्त्वादत उदित्यस्याप्रवृत्तेरु-प्रत्ययस्य गुणः पित्त्वादेवेति ध्येयम्। अवेदित्यादि। स्पष्टम्। अथ मध्यमे सिपि विशेषमाह—

२४६८। दश्च ॥८।२।७५॥

टी—। धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा। अवेः—अवेत्। अस १०६५ भुवि। अस्ति।

The final (i. e. द) of the दकारान्त पद of a root is optionally replaced by रु or र् when the affix सिप् follows. Thus अवेः—अवेत्। अ विद सिप्=अवेद्स्—अवेर्'स्=अवेरः स् elides by 'हल्ङ्याब्भ्यो दीर्घात्

सतिसप्तक' हल्' ( 252 ). Similarly without रुत्व in the alt. case. The root अस् is used in the sense of भू i. e. to be.

मित—। दर्श्येति। 'सिपि धातोरुर्वा' (८।२।७४) इत्यव्यवहितं पूर्वसूत्रम्। 'पदस्य' (८।१।१६) इत्यधिकृतं वर्तते। 'भाजो जश्त्वोऽन्ते' (८।२।३९) इत्यतोऽन्ते इति चानुवर्तते। यदा तदन्तविधिरिति श्रयम्। दान्तस्य पदस्येति। अर्थात् धातोः ऽन्त्यस्य इति दकारस्येत्यर्थः। सिपि किम्? तिपि अवेत् इत्येव। 'दान्तस्य धातोरुर्वा' इत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः। तच्चिन्त्यम्। वेत्सीत्यत्रापि-प्रसङ्गात्। चर्त्वस्यासिद्धत्वेन दान्तत्वात्—इति तत्त्व बोधिनी। अवेः—अवेदिति। पूर्वत्र दस्य रुः। उत्तरत्र तदभावात् 'हल्ङ्याब्भ्यो दीर्घादिति'सूत्रयत्नेन अपृक्तस्य सः लोपः। खरिचेत्युत्तरत्र चर्त्वम्। अस् भुवीति। भवनं भूः। सत्तायामित्यर्थः। अथास्तेः क्ङिति परे विशेषमाह—

२४६९। श्नसोरल्लोपः ॥६।४।१११॥

दी—। श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति। स्तः। सन्ति। 'तासस्त्योः—' (२१८१) इति संलोपः। असि। स्थः। स्थ। अस्मि। स्वः। स्मः। 'आर्द्धधातुके' (२४३२) इत्यधिकृत्य—

The अ of श्न i. e. श्नम् (रुधादिभ्यः श्नम्) and of असि i.e. अस् elides when a सार्वधातुक कित् or ङित् (affix) follows. Thus अस्+तस् (ङित्)=स्तः। Similarly सन्ति स्थः स्थ: etc. अस्+सिप् here the 1st स् disappears by 'तासस्त्योः—' (2111). Now under the sphere of 'आर्धधातुके' (2432—2. 4. 35) follows the rule—

मित—। श्नसोरिति। श्नेति 'रुधादिभ्यः श्नम्' इति श्नमो ग्रहणम्। श्न अस् श्नसौ (द्वन्द्वः)। शकन्ध्वादित्वात् पररूपम्। अदिति तपराकारस्य ग्राहकम्। तत्र लुप्तषष्ठीकं तदाह—श्नस्य अस्तेश्च अकारस्येति। 'श्नसत्-सार्वधातुके' (६।४।११०)

इत्यतः सार्वधातुके इत्यनुवर्त्तते। तदाह—सार्वधातुके इति। केचित्तु 'श्नसोरल्लोपः' इत्येव सूत्रितव्यमित्याहुः। नागेशस्तु 'चत ( दीक्षितसम्मतौ ) सार्वधातुके इति निष्फलम्। आर्द्धधातुके तस्य ( अस्तेः ) भूभावात्। ईशामासे-त्यादौ 'अत आदे'रिति दीर्घे—परस्य लोपेऽपि चत्यभावात्। अस्य सार्वधातुके एव सत्त्वाच्च' इत्याह। 'गमहन—' ( ६।४।९८ ) इत्यतः क्ङितीत्यनुवर्त्तते। तदाह—क्ङितीति। स्तइत्यादि स्पष्टम्—। आर्द्धधातुकविषये अस्तेर्भूभावः स्यादित्याह—

२४७०। अस्तेर्भूः ॥२।४।५२॥

टी—। बभूव। भविता। अस्तु। स्तात्। स्ताम्। सन्तु।

अस्ति or अस् is replaced by भू when any आर्द्धधातुक affix follows. बभूव etc easy.

मित—। अस्तेरिति। अस्तेर्भूभावः स्यादार्द्धधातुके परे इत्यर्थः। अन्यत् स्पष्टम्। अथास्य हौ परे विशेषमाह—

२४७१। घ्वसोरेद्धावभ्यासलोपश्च ॥६।४।११९॥

टी—। घ्वसोरस्तेश्च एत्वं स्याद्धौ परेऽभ्यासलोपश्च। आभीयत्वेन एत्वस्यासिद्धत्वाद्धेर्धिः। 'श्नसोः—'( २४३८ ) इत्यल्लोपः। एधि। तातङ्पक्षे एत्वं न। परेण तातङा बाधात्। 'सकृद्गतौ—' ( परि· ४१ ) इति न्यायात्। स्तात्। स्तम्। स्त। असानि। असाव। असाम। 'अस्तिसिचः—' ( २२२५ ) इतीट्। आसीत्। 'श्नसो—' ( २४३८ ) रल्लोपस्या-भीयत्वेनासिद्धत्वादाट्। आस्ताम्। आसन्। स्यात्। भूयात्। अभूत्। सिचोऽस्तेश्च—विद्यमानत्वेन विशेषणादोषन्।

The final of घु ( दा and धा )and अस् is substituted by एत् ( ए )

and the reduplicate ( अभ्यास ) of the former elides when हि follows. Thus अस्+हि=अ एहि. Now this rule being आभीय or having fallen under असिद्धवदत्राभात् ( 6. 5. 22 ), this एत्व is असिद्ध or invalid ( i. e. अस् is to be taken as अस् itself ( ending in a cons. and not अस ( ending in a vowel ). Thus the rule 'हुझल्भ्यो हेर्धिः' comes and we get—अ ए धि. Then by श्नसो:—( 2469 ) अ elides and we finally have एधि। In the case of तातङ् स् of अस् will not make room for ए because it is barred by तातङ् which comes later (तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्—(2197—7. 1. 35). Now will appear एत्व again after it has been barred by तातङ्, for एत्व+तातङ् operate simultaneously ( युगपत् ) on अस् and by 'विप्रतिषेधे परं कार्यम्' ( 175—1. 4. 2 ) तातङ् ( तुह्यो:—7. 1. 35 ) overthrows एत्व ( घ्वसोरेद्—6. 4. 119 )—which once being overthrown will not be allowed to rise again on the authority of the परिभाषा—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव'—of two rules applying simultaneously ( in a certain case ) that which is ( once ) superseded by the other will remain as such ( superseded or vanquished ) i. e. will no more operate'. स्तात्—अस्+हि=अस् ए तातङ्=अस् ० तातङ्=अस्तात्=स्तात् श्नसोरल्लोपः। स्तम्—अस्+तस्=अस् तम् by तस्थस—' ( २१८८ )=स् तम् by अल्लोप। Similarly स्त। असानि etc. here there is absence of अल्लोप because आट् is पित्। आसीत्—अस्+लङ् तिप्—आट् अस् त्—आस् ईट् ( अस्ति—2225 ) त्=आस् ईत्। Now in अस्+लङ् तस् where तस् being ङित् the rule श्नसो:—( 2469 ) operates first giving ० स् तस्। If so then 'आडजादीनाम्' ( 6. 4. 72 )

will not apply for there is no अच्। To solve this difficulty Bhaṭṭoji says 'श्नसो:—' अल्लोपस्य etc. The meaning is—both अल्लोप and आट् are directed with reference to अ of अस्। Thus अ is common place of application ( समानाश्रय ), ( and also both 'श्नसो—' and 'आडजादीनाम्' are आभीय rules )। Hence अल्लोप is treated as असिद्ध or invalid ( non-existent ) when the aug. आट् is intended to apply. Thus अस् तस्=आट् ० स् ताम्=आ अस् ताम्=आस्ताम्। Similarly आसन् etc. स्यात्—विधिलिङ—अल्लोप। भूयात्=आशी—' see 'श्नसोर्:' । अभूत्—Here there is want of the aug. ईट् ( अस्तिसि—२२२५ ), for both सिच् and अस् are present ( अस् is present by स्थानिवद्भाव )।

मित—। घ्वसोरिति। घु च अस् चेति द्वन्द्वः। तयोरिति षष्ठीद्विवचनम्। घ्वसोः एत् हौ अभ्यासलोप: चेतिच्छेद:। घोरिति दारूपधारूपाणाम्। एत्वमेकारत्वम्; अस्तोऽन्त्यस्येति अन्त्यदकारसकारयो: स्थाने एकारादेश:। तेनायमर्थ:। हौ परे घोरस्तेश्च अन्त्याचरस्य एत्वं स्यादघोस्तु अभ्यासलोपोऽपीति। तदेवम् अस् हि इति स्थिते सकारस्यैत्वे—अ ए हि इति जाते एकारस्य झलत्वाभावाद् 'हुझल्भ्य इति हेर्धित्वं न भवति। तत् समाधत्ते आभीयत्वेनेति। 'हुझल्भ्य:—' (2425—6. 4. 101) 'घ्वसोरेत्—' (6. 4. 119) इति द्वयमपि असिद्धवत्सूत्राधिकारे स्थितम्। तेनाभीयत्वम्। द्वयमपि अस्धातो: सकारमाश्रित्य प्रवर्त्तते। ततः समानाश्रयत्वं स्फुटमेव। अत एत्वस्यासिद्धत्वम् हेश्च धिरादेश: सिध्यति। ननु तर्हि धित्वं प्राग्विधीयताम् विप्रतिषेधे इति न्यायादिति चेत्, न। तथा सति हित्वाभावादेत्वस्याप्यप्रवृत्ते:। अवधि इति सम्पद्यमाने श्नसोरित्यल्लोपे—एधि इति भवति। तुह्योस्तातङिति तातङ् पक्षे—आह। तातङ् पक्षे एत्वं नेति। तत्र हेतुमाह—परत्वात् तातङा बाधादिति। 'तुह्यो'रिति सप्तमाध्यायप्रथमपादगतम् ( ७।१।३५ )। अत: परत्वम्। ततश्च एत्वस्य बाध:। ननु बाधितोऽपि पुन: प्रसङ्गवान् भवेदित्याशङ्का निरा-

करोति सकृद्गताविति। परिभाषेयम्। 'सकृद् गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति। सकृत् युगपत् गतौ प्राप्तौ सत्यामिति शेषः। भावे क्तौ। यत् शास्त्रं बाधितं पर्युदस्तं भवेत् तत् बाधितमेव पर्युदस्तमेव चिरायेति यावत्। [एतद्बाधनन्तु न सर्व्वत्रिकं किन्तु लक्ष्यानुसारादेवेति ज्ञेयम्। तथाचैवंविधस्थले व्याख्यानमेव शरणमन्यथा 'पुनःप्रसङ्गविज्ञानात् सिद्धम्' इति परिभाषाया वैयर्थ्यं स्पष्टमेवेति ज्ञेयम्]। तदेवम् अस् हि इति स्थिते एत्वाभावात् अस् तात् इति जाते श्नसोरित्यल्लोपे—स्तात् इति भवति; स्तम् इति। अल्लोपः। तसस्तमादेशः। एवं स्त इत्यत्र थस्य तादेशः। अन्यत् समानम्। असानि इति—आटः पित्वेन ङित्त्वाभावादल्लोपाभावः। एवम् असाव। असामेति। अथ लङि तिपि ईडागममाह—अस्तिसिच इति। ननु अस् लङ् तस् इति स्थिते श्नसोरित्यल्लोपात् स् ताम् इति जाते अजभावात् आडजादीनामित्याडागमः कथमित्यत आह। आभीयत्वेनासिद्धत्वादिति। आडागमशास्त्रस्यापि ( ६।४।७२ ) असिद्धवत्सूत्राधिकारस्थितत्वात् पूर्व्ववत् समाधाने सति आस्ताम् इति भवति। एवमासन्निति। स्यात्—विधि। भूयात्—आशीः। अभूत् इति। विद्यमानत्वेन विशेषणत्वादिति। एतच्च 'अस्तिसिचो—' सूत्रव्याख्यायां स्पष्टमित्यलम्। अथोपसर्गवशादस्तेः षत्वमाह—

**२४७२। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।।८।३।८७।।**

**टी—। उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद् यकारेऽचि च परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। 'यच्परः' किम्? अभिस्तः। मृज् ष् १०६६ शुद्धौ।**

Of अस्ति i' e. अस् the स् coming after the इण् ( इ and उ ) letter of an उपसर्ग and (the indeclinable) प्रादुस्, changes into ष when a यकार and an अच् follow. Thus निष्यात्—निषन्ति (instance of उपसर्गेणः ) and प्रादुःष्यात्—प्रादुः षन्ति ( inst. of प्रादुस् )। Here (in निष्यात् प्रादुःष्यात् ) the यकार is of यासुट् and in निषन्ति and प्रादुःषन्ति,

the अच् is of अस्ति। [ Note that उपसर्गेण: and प्रादुस: qualify the स only of अस् and not अस् itself. Hence in प्रादुरासीत् प्रादुरस्ति etc. there is no षत्व ]। Why say 'यच् परः' ? Witness—अभिस्त: where तस् is not अजादि। मृजूष् ('मृज्) to purify. [Tattwavodhini reads मृज् and that is preferable for the root is not षित् on the ground that it has need of the rule 'षिद्भिदादिभ्योऽङ्' for the word मृजा is read under भिदादि class]'

मित—। उपसर्ग प्रादुर्भ्यामिति। उपसर्गप्रादुर्भ्याम् अस्तिः सच्परः इति च्छेदः। उपसर्गेण प्रादुस इति द्वन्द्वात्—पञ्चम्यन्तम्। 'इण्कोः' (८।३।५७) इति वर्त्तते। तस्य प्रयोजनवशादिण्मात्रम् उपसर्गेण सम्बध्यते। न तु कोरित्यपि असम्भवात्। किञ्च यद्यपि 'उपसर्गप्रादुर्भ्याम्' इत्यस्य समस्तपदत्वेन इण् इत्यस्य उभयोरपि विशेषणत्वं स्फुटं तथापि उत्तरत्र फलाभावात् पूर्व्वेणैवास्य अन्वय—इत्याह उपसर्गेण: प्रादुसश्चेति। उभयमपि पञ्चम्यन्तम्। तत्र अस्तेः सस्य विशेषणं न त्वस्तेः। तथा सति 'प्रादुरासीत् प्रादुर्भवन्ति' इत्यादावपि षत्वं स्यादिति द्रष्टव्यम्। यचि परे इति। य च अच् च यचौ। तौ परौ यस्मात् इति विग्रहः। एतदस्ते विशेषणम्। तदाह—यकारे अचि च परे इति। यकारपरत्वेन निष्यात् प्रादुःष्यादिति। अचि तु—निषन्ति—प्रादुःषन्ति इति। अत्र अजिति अकारमात्रस्य ग्राहकमित्यपि ज्ञेयम्। यच्परः किमिति? अभिस्त इत्यत्र अस्तुपसर्गस्य इण: परत्वेऽपि अस्तेः सकारस्य यकारपरत्व-मकारपरत्वं वा नास्ति। अतो न षत्वम्। मृजूष्* इति। ऊकारषकारावितौ। मृज्मात्रं तिष्ठति। तत्र ऊदित्त्वम्—'स्वरतिसूतिसूयतिधूञूदितो वा' इतीड्विकल्पः सिध्यति। षित्करणन्तु निष्फलमित्याहुः। अथास्य इदन्तार्थमाह—

---

* तत्त्वबोधिन्यां मृज् शुद्धौ इति पठ्यते। उक्तञ्च तत्रैव अयं न षित्। भिदादि पाठसामर्थ्यात्' इति। भिदादिगणे मृजाशब्दस्य पाठसत्त्वात् षिद्भिदादिभ्यो ऽङित्यासात आवश्यकाभावात् मृज—धातोरन्ते षकारो नानुबन्ध इत्यर्थः। ऊदित्त्व-मिड्विकल्पार्थमिति ज्ञेयम्।

२४७३ । मृजेर्वृद्धिः ॥७।२।११४॥

टी—। मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे। 'क्ङित्यजादौ वेष्यते' (वार्तिक ५०५७)। 'व्रश्च—' (२८४) इति षः। मार्ष्टि। मृष्टः। मृजन्ति—मार्जन्ति। ममार्ज। ममार्जतुः—ममृजतुः। ममार्जिथ—ममार्ष्ठ। मार्जिता—मार्ष्टा। मृड्ढि। अमार्ट्। अमार्जम्। अमार्जीत्—अमार्क्षीत्। रुदिर् १०६५ अश्रुविमोचने।

The इक् i. e. the ऋ of मृज् gets the वृद्धि substitute when any धातुप्रत्यय * ( तिप् तस् etc. ) follows. But by the varttika 'क्ङित्य-जादौ वेष्यते' this वृद्धि is optional when an अजादि (having a vowel preceding ) क्ङित् affix follows. Thus मृज् + तिप् = मार्जति by 'उरण् रपरः' = मार्ष्ति by 'व्रश्चभ्रस्जसृजमृजयज—' (204) = मार्ष्टि by 'ष्टुना ष्टुः' (113). मृष्टः—मृज् + तस् = मृष् त—मृष् ट, तस् is ङित् hence no गुण nor वृद्धि and as it is not अजादि hence the varttika does not apply. मृजन्ति—मार्जन्ति, अन्ति is अजादि ङित् hence the option. ममार्ज ( लिट् ) वृद्धिः। ममार्जतुः—ममृजतुः—अतुस् is अजादि कित्। ममार्जिथ—ममार्ष्ठ—option of इट् owing to the ऊदित्त्व of मृजू। In the इडभावपक्ष षत्व of ज by 'व्रश्चभ्रस्ज—'। So मार्जिता—मार्ष्टा ( लुट्ता )। मृड्ढि—मृज् + हि = मृड् धि by 'हुझल्भ्यो हेर्धिः' = मृष् धि by 'व्रश्च—' = मृड् धि by 'झलां जश—' = मृड्ढि by 'ष्टुना—,' by 'सार्वधातुकमपित्' हि is अपित् hence no guna and Vriddhi of the इक् of मृज्। अमार्ट्—अट् मृज ( लङ् ) तिप्—अमार्ज् त्, अमार्ष्—त् elides by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (252) = अमार्ड्—

* For the introduction of this धातुप्रत्ययः see मित—below.

अमार्ट् by 'वावसाने'। अमार्जम् (लङ्) मिप् (अम्)। अमार्जीत्—अमार्क्षीत् (लुङ् तिप्)—option of इट् for मृज् is ऊदित् and 'स्वरतिसूति—' applies. In the वृद्धि and in the इडभावपक्ष—षत्व of ज। सिच् elides in the former by इट ईटि। And in the latter the ष turns into क by षढोः कः सि and the स of सिच् becomes cerebral by 'ष्टुना—' (113)। रुदिर् (रुद) to weep. It is इरित्। Hence the rule 'इरितो वा' (2264) will apply in लुङ् (च्लि)।

मृज—। मृजेर्वृद्धिरिति। 'इको गुणवृद्धी' इत्यत इक इति षष्ठ्यन्तमुपतिष्ठते, यथोद्देशं संज्ञापरिभाषमिति न्यायात्। तदाह—मृजेरिको वृद्धिरिति। धातुप्रत्यये परे इति। यद्यपि 'धातुप्रत्यये—' इति नात्र सूत्रेऽस्ति, नापि कुतोऽप्यनुवर्ततेऽश्रुतत्वात् तथापि 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'ति परिभाषाबलादिदम्। तथाच मृजिग्रहणात्तत्प्रत्यय आक्षिप्यते। एतच्च तत्सूत्रस्थभाष्ये स्पष्टम्। तथाच तद्वचनम्—''मृजेर्वृद्धिविधौ क्ङिप्रतिषेधः *। मृजेर्वृद्धिविधौ कान्तस्य—प्रतिषेधो वक्तव्यः। कंसपरिमृड्भ्यां कंसपरिमृड्भिः(१)। धातोः स्वरूपग्रहणे वा तत्प्रत्यय—विज्ञानात् सिद्धम् *। अथवा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् सिद्धमिति। तेन धातुप्रत्यय एव परतो वृद्धिर्नान्यत्रेति निष्कर्षः। 'क्ङित्यजादौ वेष्यते' इति। वार्त्तिकमिदम्। अजादौ क्ङिति परे मृजेरिको वा वृद्धिरिति तदर्थः। एतदपि—'इहान्ये—वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते। परिमृजन्ति—परिमार्जन्ति...। तदिहापि साध्यम्' इति 'इको गुणवृद्धी'' इति परिभाषासूत्रस्थ भाष्यमनुसृत्येति ध्येयम्। एवं प्रकृते मृज् सिप् इति स्थिते अनेन वृद्धौ 'व्रश्चभ्रस्जसृजमृज—' (२९४) इति जस्य षः। ततः ष्टुना ष्टुरिति (११३) तस्य टः। अष्ट इत्यत्र तसः क्ङित्त्वात् क्ङिति इति

---

(१) कंसपरिमृड्भ्याम् इति। कंसेति धातुपात्रम्। तत्परिमार्ष्टि इति क्विप्। कंसपरिमृट् (धातुपात्रमार्जकः)। ततो भ्याम्। भ्यामि परतो न इति मार्ष्टि इति न भवति। भ्यामो विभक्तित्वेन धातुप्रत्ययत्वाभावादिति—कैयटप्रदीपे स्पष्टम्।

निषेधात् न वृद्धिनापि गुणः। अजादित्वाभावाद् वृद्धिविकल्पविरहः—मृजन्ति—मार्जन्ति इति वार्त्तिकानुसारादिदम्। एवं ममार्जतुः—ममृजतुः (अतुस्)। मार्जिता—मार्ष्टा (लुट्ता—ऊदित्वादिड्विकल्पः)। मार्जिष्यति—मार्क्ष्यति (लृट्)। अमार्जीत्—अमार्क्षीत् (लुङ्—ऊदित्वादिड्विकल्पः। पूर्ववत् इट ईटीति सिच् लोपः। उत्तरत्र तु व्रश्चेति जस्य षः। तस्य 'षढोः कः—' इति कः। इणकोरादेशप्रत्यययोरिति सिचः सस्य षः)। ममार्ज—णलि वृद्धिः। ममार्जिथ—ममार्ष्ठ पूर्ववदिड्विकल्पः। उभयत्रैव वृद्धिः। थलङ्गुले। मृड्ढीति। मृज् हि इति स्थिते हुझल्भ्यो हेर्धिरिति धिः। मृज् धि। व्रश्चेति षः। मृष् धि। 'झलां जश—'. इति डः। मृड् धि। ष्टुना ष्टुरिति मृड्ढि। तातङि—मृष्टात्। अमार्ट् इति—लङि अमृज् त् इति स्थिते वृद्धौ अमार्ज् त् इति जाते 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (२५२) इति तलोपः। ततः षत्वजश्त्वचर्त्वानि॥ रुदिर इति। सेट्। इरित्करणम् 'इरितो वे'ति च्लेरङ् विकल्पार्थम्।

## २४७४। रुदादिभ्यः सार्वधातुके ॥७।२।७६॥

दी—। रुद्, स्वप्, श्वस्, अन्, जक्ष्—एभ्यो वलादेः सार्वधातुकस्येट् स्यात्। रोदिति। रुदितः। हौ परत्वादिटि ङित्वं न। रुदिहि।

The aug. इट् is prefixed to the वलादि (having वल् letters in the beginning) सार्वधातुक coming after the roots रुद, स्वप्, श्वस्, अण् and जक्ष्। Thus रोदिति etc. In रुद इट् हि by the सकृद्गतिन्याय इट bars the ङित्व of हि; hence रुदिहि—हि is अपित्; then no गुण।

मित—। रुदादिभ्य इति। आदिग्रहणादगणं पठित्वादर्शयति—रुद, स्वप् इत्यादि। वलादेरिति। 'आर्द्धधातुकस्येड्—(७।२।३५) इत्यतोऽनुवृत्तेरिति भावः। हौ परत्वादिति। सकृद्गतौ विप्रतिषेधे—इति न्यायादिति बोध्यम्। रुदिहि। हेरपित्त्वादगुणाभावः। अथ लङि तिपि ईडागमविकल्पं सूत्रद्वयेन दर्शयति—

२४७५। रुदश्च पञ्चभ्यः ॥७।३।९८॥

दी—। हलादेः पितः सार्व्वधातुकस्यापृक्तस्य ईट् स्यात्।

The aug. ईट् is enjoined to the अपृक्त सार्व्वधातुक, which is पित् as well as हलादि, following the five रुदादि roots.

मित—। रुदश्चेति। 'नाभ्यस्तस्याचि पिति सार्व्वधातुके' इत्यतः पितीति सार्व्वधातुके इति चानुवर्त्तते। उतो वृद्धिर्लुकि हलीत्यतः हलीति। 'गुणोऽपृक्ते' इत्यतोऽपृक्त इति 'अ च ईट्' इत्यत ईडिति च। तदाह—हलादेः पित इत्यादि। रुद स्वप् इत्यादिभ्यः पञ्चभ्य परतो हलादेः पित इत्याद्यर्थः। मतान्तरे—ईट् प्रदेशे अट् सादित्याह—

२४७६। अड् गार्ग्यगालवयोः ॥७।३।९९॥

दी—। अरोदीत्—अरोदत्। अरुदिताम्। अरुदन्। अरोदीः—अरोदः। अरोदम्। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्याम् अन्तरङ्गत्वाद् यासुट्। रुद्यात्। अरुदत्—अरोदीत्। ञिष्वप् १०६८ शये। स्वपिति। स्वपितः। सुष्वाप। सुषुपतुः। सुषुपुः। सुष्वपिथ—सुष्वप्थ।

According to Gargya and Galava the aug. अट् (and not ईट्) is enjoined to the हलादि पित् अपृक्त सार्व्वधातुक following the above mentioned five roots रुद, स्वप etc. Thus अरोदीत् (with ईट्—अरुद ईटत्) and अरोदत् (with अट्—अरुद अट् त्)। The aug. अट् is barred in both cases by the subsequent injunctions ईट् and अट्, cp—'विप्रतिषेधे—'। अरुदन्—अन् is not हलादि hence no अट्। प्रकृति etc.—यासुट being अन्तरङ्ग (intimate and internal) in compari-

sion with अट् ('अड्गार्ग्य—') and ईट् ('रुदश्च—') which are attached to the special or particular affixes (तिप्) of a root, will supersede these and both (अट् and ईट्) being once barred will not have further application, cp.—the परिभाषा 'असिद्धं बहिरङ्गमन्तरङ्गे'। The idea is—'अड्गार्ग्य'—(7.3.99) and रुदश्च (7.3.98) both being subsequent (पर) to यासुट् परस्मै—(3. 4. 103) should have precedence over the latter but as यासुट् is more closely related to the affixes तिप् etc. than each of the augments अट् and ईट् for the former is concerned with all the परस्मै terminations तिप् etc. in general (सामान्यापेक्ष) whereas each of the latter relates to a particular affix तिप् only (विशेषापेक्ष). Moreover यासुट् is अल्पापेक्ष only (परस्मै) and the आगमs are बह्वपेक्ष (परस्मै, पित्, हलादि, अपृक्तसार्वधातुक). Hence यासुट् is अन्तरङ्ग and अट् and ईट् are बहिरङ्ग।

N. B.—Nagesha suggests that as this sort of अन्तरङ्गत्व and बहिरङ्गत्व are not found in the भाष्य so it is proper to take यासुट् as नित्य and the अट् and ईट् as अनित्य so that after यासुट् has been added giving यासुट् तिप्=यात्, the latter two will cease to apply as यात् is not अपृक्त।

अरुदत्—अरोदीत्—both are लुङ् singular. The former is with अङ् by 'इरितो वा' (2269) and the latter with सिच्, ईट् etc. ञिष्वप्—(स्वप्) ञि for क्तप्रत्यय in the active voice by 'ञीतः क्तः' (3088). It is षोपदेश and अनिट्। स्वपिति स्वप् ईट् तिप्। सुष्वाप—सम्प्र. by 'लिट्यभ्यासस्योभयेषाम्' (2408) and षत्व by इण्कोः and आदेश—(211-12). सुषुपतुः—the सम्प्र. of the root is by 'वचिस्वपि—' (2409) as अतुस् is कित्, कित्व ; सुषुपिथ—सुषप्थ—option of ईट् by भारद्वाज नियम।

नित—। अडिति। गार्ग्यस्य गालवस्य च वैयाकरणयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्व्वधातुकस्यापृक्तस्य अडागमः स्यादिति सूत्रार्थः। अतएव अरोदीत् (ईट्)—अरोदत् (अट्)। स्पष्टं सर्व्वम्। प्रकृतीति। प्रकृतिप्रत्यय-विशेषापेक्षाभ्याम् इति अडीड्भ्याम्—इत्यस्य विशेषणम्। अडीड्भ्याम् इति 'पञ्चमी विभक्ते' (६२९) इति भेदे पञ्चमी। अयं स्पष्टार्थः—अडीटावुभावपि सार्व्वधातुक-हलाद्यपृक्तपित् (तिप्) इति प्रत्ययविशेषमपेक्ष्य प्रवर्त्तेते। तेनैतौ बह्वपेक्षौ। यासुट् तु परस्मैपदप्रत्ययमात्रापेक्षं प्रवर्त्तते। तेनायमल्पापेक्षः। अतोऽयमन्तरङ्गो विधिः। पूर्व्वस्तु बहिरङ्गः। 'असिद्धं बहिरङ्गमन्तरङ्गे' (परि—) इति। यद्यपि परत्वात् 'अड् गार्ग्य—' (७।३।९९) 'रुदश्च—' (७।३।९८) इत्यडीटौ प्राप्नुतस्तथापि 'यासुट्—' (७।४:१०३) इत्यस्यान्तरङ्गत्वाद् यासुडेव भवति न तु अडीटौ इति। नागेशस्तु न मन्यते, तथाच तद्ग्रन्थः—"...वस्तुत इदं बहिरङ्गत्वं (अडीटयोरित्यर्थः) भाष्ये क्वापि नाश्रितमिति परिभाषाप्रकरणे निरूपितम्। तस्मान्नित्यत्वादत्र यासुटि कृते अपृक्तत्वा-भावेन अडीटोः प्राप्त्यभावेन तयोरनित्यत्वादित्यन्ये (इति वयमित्यर्थः)'। अयमर्थः—एवंविधस्थले भाष्यकृता बहिरङ्गपरिभाषा नाश्रिता। तस्मान्नित्यानित्यपक्षाश्रयणमेव श्रेयः। यासुट् कृताकृतप्रसङ्गित्वान्नित्यः। अडीटावनित्यौ। एवञ्च यासुटि कृते अकृते यात्—इति जाते—तिपोऽपृक्तत्वाभावात्तौ न प्राप्नुत इति ध्येयम्। अरुदत्—अरोदीत्—इति इरितो वेति (२२६९) पूर्व्वत अङ्। अन्यत्र सिचि ज्ञेयः। ञिष्वप् इति। ञित्करणं कर्त्तरि क्तार्थम्—'ञीतः क्तः' (३०८८) इति। षोपदेशोऽनिट् च। स्वपिति इति 'रुदादिभ्यः—' इतीट्। सुष्वाप इति। लिट्यभ्यासस्योभयेषा-मिति (२४०८) अभ्याससम्प्रसारणम्। पूर्व्वरूपः। 'इणकोः' आदेश—' (२११-१२) इति षत्वम्। सुषुपतुरिति—वचिस्वपि यजादीनां किति' (२४०९) इति सम्प्रसारणम्। ततो द्वित्वम्। पूर्व्ववत् षत्वम्। सुषुपिथ—सुष्वप्थ—भारद्वाज-नियमादिड्—विकल्पः। अथ सु, वि इत्याद्युपसर्गविशेषवशात्—स्वपेः षत्वं स्यादित्याह—

२४७७। सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥८।३।८८॥

टी—। एभ्यः सुप्यादेः सस्य षः स्यात्। 'पूर्व्वं धातुरुपसर्गेण युज्यते'। किति लिटि परत्वात् सम्प्रसारणे षत्वे च कृते द्वित्वम्। 'पूर्व्वत्रासिद्धीयमद्विर्वचने' परि १२३)। सुषुषुपतुः। सुषुषुपुः। पिति तु द्वित्वेऽभ्यासस्य सम्प्रसारणम्। षत्वस्यासिद्धत्वात् ततः पूर्व्वं हलादिः शेषः। (२१७९)। नित्यत्वाच्च। ततः सुपिरूपाभावान्न षः। सुषुष्वाप। सुस्वप्ता। अस्वपीत्—अस्वपत्। स्वप्यात्। सुप्यात्। सुषुप्यात्। अस्वाप्सीत्। श्वस १०६९ प्राणने श्वसिति। श्वसिता। अश्वसीत्—अश्वसत्। श्वस्याताम्। श्वस्यास्ताम्। 'ह्म्यन्तक्षण—'(२२९८) इति न वृद्धिः। अन १०७० च। (प्राणन इत्यर्थः) अनिति। आन। अनिता। आनीत्—आनत्।

The स of सुपि, सूति and सम, coming after the उपसर्गs सु, वि, निर् and दुर् becomes ष ; सुपि is the root स्वप् with सम्प्र. and इप्रत्यय। सूतिः (delivery)—सू + क्तिन्। समः—सम् + अच्। Thus सुषुप्तिः, सुषूतिः and सुषमः विषमः etc. As the sutrakara takes सुप् and not स्वप्, so the forms like दुःस्वप्नो 'सुस्वप्नो भवेत्' etc. are correct. Now there are two परिभाषाs—'पूर्व्वं धातुरुपसर्गेण युज्यते ततः साधनेन' and 'पूर्व्वं धातुः साधनेन युज्यते तत उपसर्गेण'। If the latter is here resorted to, then सु स्वप् + अतुस् will give सुसुषुपतुः without षत्व of the अभ्यास 'सु' (सुप्) though it follows the उपसर्ग सु। Thus the rule 'सुविनिर्दुर्भ्यः—' fails. Nor can it be argued that the अभ्यास 'सु' will have षत्व by the परिभाषा 'एकदेशविकृतमनन्यवत्'—that which is deformed by one

part ( as सु is devoid of ष् in the अभ्यास here ) remains the same ( as before ) ; for this परिभाषा will not apply here as the अभ्यास सु has no meaning, cp.—the परिभाषा—'अर्थवद् ग्रहणे नानर्थकस्य । It is therefore that Bhattoji says 'पूर्वं' धातुरुपसर्गेण—युज्यते, etc.—The root is first joined with the उपसर्ग । Thus स्वप् अतुस्=सुप् अतुस् by 'वचिस्वपियजादीनां किति' ( 2409 ) for अतुस् is कित् लिट् । Then with the उपसर्ग सु added to it, we have, सुसुप् अतुस्=सुषुप् अतुस् ( षत्व )=षुषुप् अतुस् (duplicaiion after सम्प्र. and षत्व ) । Though the rule सुविनिर्दुर्भ्यः—( 8. 3. 88 ) is read under the triad ( त्रिपादी ) yet षत्व will not be invalid with reference to the previous chapter namely in the sixth only when duplication is to take effect, cp—the परिभाषा—'पूर्वत्रासिद्धीयमद्विर्वचने' । 'Invalid if with reference to the rules in the previous chapter ( पूर्वत ) will not be regarded as such so far as the द्विर्वचन or द्वित्व is concerned,' cp.—also the Bhashya 'षुपिभूतो द्विरुच्यते' '(स्वप् ) will be doubled after it has become षुप् ( with सम्प्र and षत्व ) । Thus सुषुप् षुप् अतुस्= सुषुषुपतुः by हलादिशेष । Similary सुषुषुपुः ।

N. B.—Nagesha holds that as Bhasya is in favour of the परिभाषा—'पूर्वं' धातुः साधनेन etc.' and not 'पूर्वं' धातुरुपसर्गेण etc.' so it is wise to expound as 'सुपिसम्बन्धिसस्य षत्वम्'and not 'सुपेःसस्य षत्वम्'। In this explanation there is no need of having recourse to सम्प्र and षत्व first and then to द्वित्व ; but द्वित्व etc. may come first so that the अभ्यास 'सु' will have षत्व by attraction ( सम्बन्ध ) । Also see मित—below.

पिति तु etc. णल is पित् because it is substitute of तिप् । Thus in

स्वप् + णल् the root will be first duplicated (for णल् not being कित्—'वचिस्वपि—' does not apply and hence no सम्प्र at the outset) and then the अभ्यास will have सम्प्र by 'लिट्यभ्यासस्योभयेषाम्' (2408). Now the form being (with सु) सुप् स्वप् अ, the अभ्यास सु will not become cerebral by सुविनिर्दुर्भ्यः—(8. 3. 88) which is here असिद्ध because द्वित्व is already effected and the परि—पूर्व्वत्रा—सिद्धीयम्—' does not apply. And षत्व being असिद्ध, 'हलादिः शेषः' which is a नित्यविधि applies first giving सुसुस्वाप् अ। The अभ्यास सु not bringing out the sense of सुप् (सुपिरूपत्वाभावात्) does not become षु। Thus we get सुसुष्वाप (the षत्व of स्वप् is by इणकोः and आदेश—' 211—12). अस्वपीत् (रुदश्च पञ्चभ्यः)—अस्वपत् ('अड्गार्ग्य—) स्वप्यात्—विधिलिङ्, सुप्यात्—आशीः (कित्) सम्प्र by 'वचिस्वपि—' सुषुप्यात्—षत्व by सुविनिर्दुर्भ्यः—।अस्वाप्सीत्—लुङ्—सिचि वृद्धिः। श्वस् to breathe or draw breath. श्वसिति etc. easy. अन् also means to draw breath सेट्। अन + लिट् by 'अत आदेः (2248); आनीत्—आनत्—ईट् and अट्।

मित—। सुविनिर्दुर्भ्य इति। सुपिसूतिसमा इति पञ्चम्यर्थे प्रथमा। तदाह—सुप्यादेरिति। तत्र सुपीति स्वप् इत्यस्य कृतसम्प्रसारणस्य इगन्तस्य ग्रहणम्। तेन स्वपधातोः सम्प्रसारणाभावमुतस्य न भवति। सुस्वपिति। सुस्वपुः। सूतिरिति सूधातोस्तिन्नन्तम्। सम इति पचाद्यजन्तम्। सुषुप्तिः। सुषूतिः। सुषमा परमा शोभेत्यमरः। विषम इत्याद्युदाहरणम्। 'सङ्गेः साऊः ष'इत्यतः स इत्यनुवर्त्तते। तदाह—सस्येति। मूर्धन्य इति चाधिकृतम्। तदाह—षः स्यादिति। शास्त्रेऽस्मिन् परिभाषाद्वयं विद्यते—'पूर्व्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' इत्येकः पक्षः। 'पूर्व्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण'—इति च पक्षान्तरम्। तत्र यदि परः समाश्रीयते—तर्हि—सु इत्युपसर्गयोगेन सुस्वप् अतुस् इति स्थिते परत्वाद् 'वचिस्वपि—' (६।१।८) इति सम्प्रसारणे,—लिटिधातोरिति (६।१।१५) द्वित्वे, हलादि शेषे च कृते

सु सु सुप् अतुस् इति जाते अभ्यासस्थस्य सु इत्यस्य कथं षत्वम्?—सात्पदाद्यो (२१२३) रिति निषेधात्। नापि—सुविनिर्दुर्भ्य: इत्यादिना षत्वम्। सु इत्यस्य सुपिरूपत्वा-भावात्। न च एकदेशविकृतमनन्यवदिति परिभाषया भवतीति वाच्यम्। अर्थवद्-ग्रहणे नानर्थकस्येति सुइत्यस्यानर्थकत्वात्। तस्मादस्मिन पक्षे षत्वं दुरुपपादमेव इति मत्वा आह—पूर्व्वं धातुरुपसर्गेणेति। एवं च सु स्वप् अतुस् इति स्थिते स्वयमेव प्रक्रियां दर्शयति—किति लिटोत्यादिना। 'असंयोगाल्लिट् कित्' (२२५२) इति अतुस: कित्त्वम्। परत्वादिति 'लिटि धातोरभ्यासस्य' (६।१।८) इति द्वित्वविधायकशास्त्रा-पेक्षया 'वचिस्वपि यजादीनां किति (६।१।१४) इति सम्प्रसारणशास्त्रस्य परत्त्वादित्यर्थ:। ततश्च सु सुप् अतुस् इति स्थिते सुविनिरिति षत्वेन: सुषुप् अतुस् इति जाते द्वित्वम्; ननु सुविनिर्दुर्भ्य—इत्यस्य त्रिपादीगतत्वेन षत्वस्यासिद्धत्वात् कथं द्वित्वम्? तत्राह। 'पूर्व्वत्रासिद्धोयमद्विर्वचने। द्वित्वे कर्त्तव्ये पूर्व्वत्रासिद्धशास्त्रम् प्रवर्त्तते, कृते तु द्वित्वे तन्ने'ति' तदर्थ:। अतएव 'षुपिभूतो द्विरुच्यते' इति भाष्यम्। एवञ्च—द्वित्वाद्-त्वादिशेषे इण्कोरादेशप्रत्यययोरित्युत्तरखण्डस्य षत्वे च सुषुपतुरिति। एवं सुषुपुरिति। पिति लिति। णलस्तिबादेशत्वेन पित्त्वात् वचिस्वपीत्यस्याप्रवृत्ते: सम्प्रसारणाभावात् पूर्व्वं द्वित्वम्। ततोऽभ्यासस्य 'लिट्यभ्यासस्य—' इति सम्प्रसारणम्। एवं च सु सुप् स्वाप् णल् इति भवति। षत्वस्यासिद्धत्वादिति—कृते हि द्वित्वे पूर्व्वत्रासिद्धीयमिति न्यायो न प्रवर्त्तते। अत: सुविनिर्दुर्भ्य:—इति षत्वमसिद्धम्। अतएव तत: 'षत्वात्' पूर्व्वं 'प्राक्' हलादि: शेष: (२१७९) इति प्रवर्त्तते इति वाक्यशेष:। नित्यत्वाच्चेति! अभ्युच्चयोऽयम्। षत्वस्यासिद्धत्वाद्धलादिशेषस्य नित्यत्वाच्च (कृताकृतप्रसङ्गित्वेन—कृतेऽपि षत्वे प्राप्नोति अकृतेऽपि) इत्यर्थ:। एवम् सु सुष्वाप् अ इति जाते अभ्यासस्थ 'सु इत्यस्य सुपिरूपत्वाभावात् न षत्वम्। एकदेशविकृतमनन्यवदि'ति हि न प्रवर्त्तते 'अर्थवद्ग्रहणे नानर्थकस्य' इति न्यायादित्युक्तम्। 'इण्कोरादेश—' (२११-१२) इत्युत्तरखण्डस्य षत्वे सुसुष्वाप इति। [द्रष्टव्यम्—सुषुपतुरित्यत्र पूर्व्वं धातुरुप-सर्गेणेति यदुक्तं तन्नागेशो नानुमन्यते। तथाच तद्ग्रन्थ:—'यदि तु' सुपिसम्बन्धिसस्येति सूत्रार्थ:', अभ्यासस्थोऽपि सुपिसम्बन्धी भवत्येव तदीय (सुपिसम्बन्धीय)—द्वितीय-प्रयोग-

सम्बन्धित्वादित्युच्यते तदा षत्वात् पूर्व्वं द्वित्वेऽपि न दोषः। इदमेव युक्तम्, पूर्व्वं धातुः साधनेनेति सिद्धान्तात्। अतएव भाष्ये सुपिभूती द्विरुच्यते इति प्रचुरः पाठः। अन्यथा अभ्यासस्य आनर्थक्यात्तत्सम्बन्धिनः षत्वमेव न स्यादिति निरूपितं स्यादित्याहुः। भाष्यप्रदीपे तु मतान्तरेण 'सुपिभूती द्विरुच्यते' इति केचित् पठन्ति। पूर्व्वत्रासिद्धीयमद्विर्वचने इति कृतषत्वस्य द्विर्वचनमिति तेषां भावः' इत्युपन्यस्तम्।] अस्वपीत्—अस्वपत् इति। पूर्व्वत्र इट् अन्यत्र अट्। स्वप्यात् विधिलिङ्। सुप्यात्—आशिषः किच्वात् 'वचिस्वपि' इति सम्प्रसारणम्। सुषुप्यात्—सुविनिर्दुर्भ्यः' इति षत्वम्। अस्वाप्सीत्—सिचि वृद्धिः। श्वस प्राणन इति। सेट्। श्वसिनत्। अन चेति। अयमपि प्राणने इत्यर्थः। आन इति। अत आदेरिति दीर्घः। आनीत्—आनत् इति। आडजादीनामित्याट्। अनीटौ।

२४७८। अनितेः ॥८।४।१९॥

टी—। उपसर्गस्थान्निमित्तात् परस्यानितेर्नस्य णः स्यात्। प्राणिति। जक्ष १०७१ भक्षहसनयोः। जक्षिति। जक्षितः।

ण is the substitute of the न of अनिति coming after a condition ( of णत्व ) lying in the उपसर्ग। Thus प्राणिति। जक्ष to eat and to laugh. सेट्। जक्षिति by 'रुदादिभ्यः सार्व्वधातुके' (2474).

मित—। अनितेरिति। उपसर्गादसमासेऽपि णोपदेशस्य' इत्यत उपसर्गादिति वर्त्तते। 'रषाभ्याम्—'इत्यतो 'नो णः' इति च। तदाह—उपसर्गस्थादित्यादि। प्राणिति इति। व्यवधाने तु न स्यात्। पर्य्यनिति इत्यादि शब्देन्दुशेखरे विस्तरः। जक्ष सेट्।

२४७९। अदभ्यस्तात् ॥७।१।४॥

टी—। झस्य अत् स्यात्। अन्तापवादः। जक्षति। 'सिजभ्यस्त—' (२२२६) इति झेर्जुस्। अजक्षुः। अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम। रुदादयः पञ्च गताः॥

जागृ १०१२ निद्राक्षये। जागर्त्ति। जागृतः। जाग्रति। 'उषविद—' (२३४१) इत्याम् वा। जागराञ्चकार—जजागार।

The झ (of the affix झि) coming after an अभ्यस्त root ('जक्षित्यादयः षट्' 428) is replaced by अत्। Thus झि becomes अति and not अन्ति। This supersedes the rule 'झोऽन्तः' (2169). In लङ्, झि is replaced by जुस् by 'सिजभ्यस्त—' (2336). Ujjaladatta is wrong in taking it (जक्ष) as अन्तस्थादि i. e. reading as यक्ष—for जक्ष। Five roots of the अदादि class end here.

जागृ to keep awake. जागर्त्ति—गुण and रपरत्व। जागृतः (ङिद्वत्)। जाग्रति—ङिद्वत् and यण् (४७) after अदादेशः)। In लिट् आम् comes optionally by 'उषविद—' (2341). Thus जागराञ्चकार (जागृ-आम् गुण रपर) जजागार (वृद्धि)।

सित—। अदिति; 'झोऽन्त' इत्यतो झ इत्यनुवर्तते। तदाह—झस्येति। अभ्यस्तात् परस्य झस्येति शेषः। अन्तापवाद इति। स्पष्टम्। जक्षतीति। 'जक्षित्यादयः षट्' (४२८) इत्यभ्यस्तसंज्ञा। अयमिति जक्ष इत्यर्थः। अन्तस्थादिरिति य कारादिरित्यर्थः। अन्यत् स्पष्टम्।

जागृ इति। निद्राक्षयो जागरणम्। सेडयम्। जाग्रति—अदादेशः। 'इको-यणचि' (४७)। अन्यत् सुगमम्।

२४८०। जाग्रोऽविचिण्णल्ङित्सु ॥७।३।८५॥

टी—। जागर्त्तेर्गुणः स्याद् विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च। जजागरतुः। अजागः। अजागृताम्। अभ्यस्तत्वाज्जुस्।

The root जागृ is gunnated or gets गुण in the case of वृद्धि (वृद्धिविषये) excepting that occurring in the cases of वि, चिण् and णल् and (also gets गुण) in the matter of the prevention of गुण (प्रतिषेधविषये) excepting that i.e. prevention of गुण in the matter of ङित्। The plain meaning is this—जागृ will have no guna when the affixes वि, चिण् and णल् follow and also when any ङ—eliding affix follows. Thus जागृविः, अजागारि (चिण्) and जजागार (णल्) also जागृतः, जागृथः (ङित्)। But in other cases it (जागृ) will have the substitute e. g. जजागरतुः (with गुण because अतुस् is कित् and not ङित्)। N. B.—Note that without this rule the form would have been जजागृतुः (without गुण) by 'क्ङिति च' (22417). Similarly जजागरुः (with गुण) and not जजागृुः (without it); अजागः—अजागृ लङ् तिप्—अजागर् त् by 'इतश्च' and 'सार्व—'—अजागर् तलोप by 'हल्ङ्याब्भ्यः—' (252)—अजागः by 'खरवसानयोर्विसर्जनीयः' (76). अजागृताम्—ङित्, hence no गुण। Now अजागृ + झि = अजागृ जुस् by 'सिजभ्यस्तविदिभ्यश्च' (2226) then by—

मित—। जाग्र इति। जागृ: + अविचिण् णल् ङित्सु इति छेदः। तत्र जाग्र इति षष्ठ्यन्तम्। मिदेर्गुणः इत्यतो गुण इत्यनुवर्तते। तदाह—जागर्तेर्गुणः स्यादिति। वि, चिण्, णल्, ङित् एषां द्वन्द्वात् नञ्समासान्तानां पञ्चमीबहुवचनम्। नञा चात्र पर्युदासविधिरेवाश्रीयते। तदाह—विचिण्णल्ङिद्भ्योऽन्यस्मिन्निति। चिण्णल्पर्युदासात्—वृद्धिविषयेऽप्यस्य प्रवृत्तिः। तदाह—वृद्धिविषये इति। किञ्च ङित्-पर्युदासात् गुणप्रतिषेधविषयेऽपि। तदाह—प्रतिषेधविषये चेति। गुणप्रतिषेधविषये चेत्यर्थः। अयमत्र निष्कर्षः—विचिण्णल्ङित्येतद्वृद्धिविषयं विहाय ङित्स्वरूपगुणप्रतिषेधविषयं च वर्जयित्वा अन्यत्र वृद्धिविषये गुणप्रतिषेधविषये च जागर्तेर्गुणः स्याद् विचिण्णल्ङित्सु तु गुणो न। तद् यथा। वि—

जागर्वि: । विप्रत्ययस्य वकारादित्वमादाय इकारस्य उच्चारणार्थत्वं परिकल्प्य केषाञ्चिन्मते क्रमावपि न—जजागर्थान् । णिच्—अजागारि । णल्—जजागार । किन्—जागृतः । प्रकृतमुदाहरति—जजागरतुरिति । अत्र अतुसः कित्त्वेऽपि क्ङिति चेति न प्रवर्त्तते इति द्रष्टव्यम् । अन्यथा यणि जजाग्रतुरिति स्यात् । लङुदाहरति अजाग इति । इत्यत्र तीकारलोपे हल्ङ्यादिना अपृक्तलोपे च खरवसानयोरिति रेफस्य विसर्जनीयः । अजागृताम्—इति । ङित्वान्न गुणः । अथ अजागृ झि इति स्थिते 'सिजभ्यस्त—' (२२२६) इति जुसि—अजागृ जुस् इति भवति तदाह—अभ्यस्तत्वादिति ।

२४८१ । जुसि च ॥७।३।८३॥

टी— । अजादौ जुसि इगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् ? जागृयुः । आशिषि तु जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि—अजागरीत् । 'जागृ इस्' इत्यत्र यण् प्राप्तः । तं सार्व्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्त्तिगुणः । तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, नेटीति (२२६८) निषिद्धा । ततः 'अतो हलादेः—' (२२८४) इति बाधित्वा, 'अतो ल्रान्तस्य' ( २२३० ) इति वृद्धिः प्राप्ता, 'ह्म्यन्तक्षण—' ( २२९९ ) इति निषिध्यते । तदाहुः—

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्व्वाः प्राप्तयो नव ॥' इति ।

दरिद्रा १०७२ दुर्गतौ । दरिद्राति ।

An अङ्ग (verbal basis), ending in इक् (इगन्त ), takes गुण when the affix जुस् , beginning with a vowel follows. Thus अजागरुः

( अजागर उस्—ऋ. ending)—अजागर् उस् ) । Why say अजादि—? Notice—जागृयुः—जागृ या उस्—here उस् is intervened by या which is हलादि hence no guna. But in आशीर्लिङ् जागृ is gunnated by 'जाग्र:—' (2480) because here यासुट् is कित् ( किदाशिषि ) and we have जागर्यात् etc. In लुङ् अजागरीत् etc. The process is thus :— when the from ( in लुङ् sing. ) at first, with इट् and सिच् is = जागृ इस्, then we have यण् by इको यणचि (147) which is barred by सार्वधातुकगुण ('सार्व—' 2184 ) which again is superseded by वृद्धि ( 'सिचि वृद्धि:—' 2297) and this वृद्धि also is put aside by गुण ( जाग्रोऽविचिण्णल्ङित्सु—2489 ). Thus गुण being established and the form now being जागर् इस्, the हलन्तवृद्धि by 'वदव्रजहलन्तस्याच:'. (2267) comes in (as जागर् is हलन्त), but it is superseded by the prohibition 'नेटि' (2268). Then comes the optional rule 'अतो हलादेर्लघो:' (2284) to act upon जागर् इस्, but this 'अत:—' etc. is set aside by the special rule 'अतो ल्रान्तस्य' ( 2330 ) which enjoins वृद्धि । And finally this अतो ल्रान्तस्य—too is prohibited from taking effect by the rule 'ह्म्यन्तक्षण श्वसजागृणिश्व्येदिताम्' (299 )—which contains the very root जागृ in conformity with the परिभाषा—'लक्षणप्रतिपदोक्तयो: प्रतिपदोक्तस्यैव । Thus here are nine injunctions in all, to take effect on जागृ in सिच्; and of these the injunction of गुण by 'जाग्रोऽवि—' ( 2480 ) only takes effect and all the rest are dismissed. Hence the remark of the Grammarians here :— 'There are nine rules whereof यण् comes first, acting (in turn) upon अजागरीत् ( अजागृ इस् ईत्—अजागर् इस् इत्—अजागर ईत् ) ; namely यण् ( इको—'), गुण ( 'सार्व—' ) वृद्धि ( सिचिवृद्धि—), गुण ( 'जाग्रोऽविचिण्—' ), वृद्धि ( वदव्रज— ), प्रतिषेध ( नेटि' ), विकल्पन (' अतो-

हलादि—' ), again वृद्धि ( अतो ल्रान्तस्य ) and निषेध ( 'ह्म्यन्त—' )। And of all these 'जाग्रोऽवि—' only is taken up to act upon the form. दरिद्रा—to fall in distress, to be badly off etc. It is सेट्।

मित—। जुसि चेति। अङ्गस्येत्यधिकृतं वर्त्तते। 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्त्तते। 'इको गुणवृद्धी' इति परिभाषोपतिष्ठते। इको विशेषणत्वेन तदन्तविधिस्तदाह—इगन्ताङ्गस्येति। 'क्सस्याचि' इत्युतोऽचीत्यनुवर्त्तते। तदादिविधिः। तदाह—अजादावित्यादि। अजागृ उस् ( जुस् ) इति स्थिते 'सार्व्वधातुकमपित्' इति ङित्त्वेन ङित्त्वात् तदादेशस्य जुसोऽपि तदभावात् 'जाग्रोऽविचिण्णल्ङित्सु' इत्यत्र ङितः पर्युदासात् गुणे अप्राप्ते इदं सूत्रम्। एवमनेन गुणे सति अजागर् उस् अजागरुः। जागृयुरिति—जागृ या ( यासुट् ) जुस्। अत या इत्यनेन हलादि प्रत्ययेन, व्यवधानाद् गुणो न। जागर्यात् इति। किदाशिषीति यासुटोऽत्र कित्त्वाद् 'जाग्रोऽवि—' इति गुणः। अथ लुङि अजागरीत् इत्यस्य साधने नवानां सूत्राणां प्राप्तिरस्ति। तत्र केषां बाधः कस्य च नियमेन प्राप्तिसम्भावनेति दर्शयति—जागृ इस् इत्यत्रेति। इटि सिचि च सतीत्यर्थः। यण्—इको यणचि (४७)। सार्व्वधातुकगुणः—सार्व्व (२४६८)। वृद्धिः—'सिचि वृद्धिः—' (२२८७), जागर्त्तिगुणः—' जाग्रोऽवि—' (२४८०) एतस्यैव नियमेन प्राप्तिसम्भावना। अन्यगुणादीनां सूत्राणि चांगलव्याख्यायाम् उक्तानि। एवञ्च अट्जागर् इस् इति स्थितेरकारान्तत्वेन हलन्तलक्षणा वृद्धिः प्राप्नोतीत्याह। तत्र क्वते इति। गुणेकृते हलन्तलक्षणा—वदव्रजहलन्तस्याचः (२२६७) नेटीति पाठम्) 'अतोहलादे'रिति विकल्पं बाधित्वेयस्य कर्तृपदम् अतो ल्रान्तस्येति। रकारान्तलक्षणमादायैवास्य—प्रवृत्तिरितिज्ञेयम्। ह्म्यन्तेति। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति अस्य प्राबल्यम्। अत्राभियुक्तोक्तिं प्रमाणयति—तदाहुरिति। तद्वा इति शेषः। गुणो वृद्धिरिति। अर्थः सुगमः पूर्व्वोक्तानामेवात्र संग्रहात्। यणपूर्व्वा इति। यण्—( विधिः ) पूर्व्वो येषामिति विग्रहः। तेन यणविधिरपि तेषामेकतम इति नव प्राप्तयः॥ दरिद्रेति। दुर्गतिर्दारिद्राम्। आकारान्तः सेट्चायं धातुः।

२४८२। इद्दरिद्रस्य ॥६।४।११४॥

दो—। दरिद्रातेरिकारः स्याद्धलादौ किङति सार्व्व-धातुके। दरिद्रितः।

The final (आ) of दारिद्रा is replaced by इ when a हलादि किङ् त सार्व्वधातुक as तस्, थस्, थ etc follows. Thus दरिद्रा तस् दरिद्र तस् —दरिद्रितः। Similayly दरिद्रिथः etc.

मित—। इदिति। दरिद्रस्येति सौत्रो ह्रस्वः। 'गमहन—' इत्यतः किङ्तीत्यनुवर्त्तते। ई ह्ल्यघोरित्यत हलीति। 'अत उत् सार्व्वधातुके' इत्यतः सार्व्व-धातुके इति च। तदाह—हलादावित्यादि। इकारः स्यादिति—अलोन्त्यस्येति आकारस्य इकारादेशः। 'श्नाभ्यस्तयोरातः' इति पूर्व्ववर्त्तिसूत्रापवादः। दरिद्रितः इति। सार्व्वधातुकमपित् इति तसः ङित्त्वम्। एवं थस्, थ इत्यादिषु। अस्य भौ विशेषमाह—

२४८३। श्नाभ्यस्तयोरातः ॥६।४।११२॥

दो—। अनयोरातो लोपः स्यात् किङति सार्व्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। 'आत औ णलः' (२३७१) इत्यत्र 'ओ' इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अतएव ज्ञापकादाम् नेत्येके। ददरिद्रौ। ददरिद्रतुरित्यादि। यत्तु णलि 'ददरिद्रा' इति तन्निर्मूलमेव।

वार्त्तिकाणि—'दरिद्रातेरार्द्धधातुके विवक्षिते आलोपो वाच्यः,' 'लुङि वा,' 'सनि णलि ल्युटि च न' (त्रीणि)।

दरिद्रिता। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट्सकौ—अदरिद्रासीत्। चकास्ट १०७४ दीप्तौ। झस्य अत्। चकासति। चकासाञ्चकार। 'धि च' (२२४१) इति सलोपः; सिच एवेत्येके। चकाद्धि। चकाधि इत्येव भाष्यम्।

The आ of the affix श्ना and of an अभ्यस्त root (such as दरिद्रा) elides when a कित् or ङित् सार्वधातुक follows. झि is ङित् by 'सार्वधातुकमपित्'. hence दारिद्रा + झि = दरिद्रा + अति (अदभ्यस्तात्) = दरिद्र् अति = दरिद्रति। दरिद्रा being अनेकाच् will have आम् by the Varttika 'कास्यनेकाज्ग्रहणं कर्त्तव्यम्' under 'कास्प्रत्ययादाममन्त्रे लिटि' (2306). दारिद्राञ्चकार—दरिद्राम्बभूव etc. आत औ णल: etc.—this is the opinion of Kaiyata under 'वर्ष्वकजाद्द घसाम्' (3096—7.2.17) The meaning is Pannini's ordaining of आत औ णल: in lieu of 'आत औ णल: i.e. the expression of 'औ' inplace of औ' is in order to make the hearing of औकार clear in दरिद्रा after the आकार of the same has been dropped by the Varttika—दरिद्रातेरार्द्धधातुके विवक्षिते आलोपो वाच्यः'। From this indication दरिद्रा will not have आम् after it; for if आम् is attached there will be no णल्। इत्येके i. e. Kaiyata and others. यत्तु etc.—Because ददरिद्रा is against Paninian arrangement and also opposed to भाष्य and Kaiyata. निर्मूलमेव—totally groundless.—दरिद्राते etc. These are the three Vartikas :—

'In the matter of (lit when there is an intention of dealing with) आर्द्धधातुक the root दरिद्रा drops its आ, as—दरिद्रिष्यति ; मा

is dropped optionally in लुङ् e. g, अदरिद्रीत्—अदरिद्रासीत् ; but it is not dropped altogether in सन् ( दिदरिद्रासति ) ण्वुल् ( दरिद्रायकः ) and ल्युट् ( दरिद्राणः )। भाष्य however says दिदरिद्रिषति also.—

Cf— 'न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥'
—भाष्य under 'इद्दरिद्रस्य'।

दरिद्रिता—लुट्—आलोप इट् ता। अदरिद्रात्—लङ्, अदरिद्रिताम् by इद्दरिद्रस्य। अदरिद्रुः जुस् by सिजभ्यस्तविदिभ्यश्च (2226), दरिद्रियात् विधिलिङ् by 'इद्दरिद्रस्य'। दरिद्रयात्—आशी—आलोप by the Varttika—दारिद्रीतेरार्धधातुके विवक्षिते etc. अदरिद्रीत्—लुङ् optional form by the Varttika 'लुङि वा'। अदरिद्रासीत् लुङ् without आलोप। चकास ( चकास् ) to shine लट्। भस्य अत् i.e. by अदभ्यस्तात्। चकासाञ्चकार—आम् owing to अनेकाच् त्व of चकास्। Now चकास्+हि=चकास् धि by हुझल्भ्यो हेर्धिः। Some ( including कात्यायन ) say that the rule 'धि च' will not apply here for this स् is not of सिच्, but of the root itself. Hence चकास् धि=चकाद् धि by झलां जश् झशि। But Bhashya says that any सकार will be dropped by the rule 'धि च'। Hence we will have चकाधि and this has to be adhered to by 'यथोत्तरं मुनीनां प्रामाण्यम्'। Bhattoji, therefore, says चकाधि इत्येव भाष्यम्।'

मित—। श्नाभ्यस्तयोरिति। 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यतो 'लोपः क्ङिति' इत्यनुवर्तते। 'अत उत् सार्वधातुके' इत्यतः सार्वधातुके इति च। तदाह—अनयोरातो लोपः स्यादित्यादि। श्नेति—'क्र्यादिभ्यः श्ना' इत्यस्य ग्रहणम्। तत्फले क्रीणन्ति। क्रीणते। पुनन्ति इत्यादि। प्रकृते तु दरिद्रति इति। क्ङिति किम्? क्रीणाति ददाति। अनेकाच् त्वादिति—एतच्च 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यत्र 'कास्यनेकाज्ग्रहणं कर्तव्यमिति' वार्त्तिकबलादिति बोध्यम्। कैयटादीनां मते तु आम् नेत्याह 'आत औ णलः' इत्यत्रैव। तथाचास्मिन्

सूत्रे औकारस्थले 'ओकार' एव विधातव्यः प्रथमत्यागे मानाभावात्—। तेन 'ओ' इत्येव सिद्धे सति यदौकारग्रहणं करोति तज्ज्ञापयत्याचार्यो यद् दरिद्रातेरालोपे ('दरिद्रातेरार्धधातुके इति वक्ष्यमाणवार्त्तिकेनेत्यर्थः) कृतेऽपि औकार श्रवणं यथा स्यादिति। अन्यथाहि आलोपोत्तरं ददरिद्र इत्येव स्यात्। अथ किमेतस्य ज्ञापने फलमित्याह। अतएव ज्ञापकादामान्नेत्युक्ते इति। इति कैयटादय इत्यर्थः। आमि सति णलोऽभावादिति भावः। अयमत्र कैयटग्रन्थः—'दरिद्रातेरनित्य आमित्यात औ णल इति औकारे विधातव्ये औकारविधानेन ज्ञापितम्। ओकारस्य प्रश्लिष्टावर्णत्वादुच्चारणे लाघवम् भवति। औकारस्य तु विश्लिष्टावर्णत्वादोकारादविकृत-तरत्वाच्च गौरवमित्योकार एव विधेयः। तत्र वृद्धिरेचीति वृद्धौ कृतायाम् ययावित्यादि सिध्यति (यया + ओ = ययौ)। ददरिद्राविति तु आकारलोपेन सिद्ध्यति। तदर्थमौकारविधानमनित्यत्वमामादामो ज्ञापयती'ति। तन्निर्मूलमेवेति—भाष्यकैयट-विरोधादिति भावः। अथेदानीं वार्त्तिकं—तदुपन्यस्यति—

'दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः'। अतएव ददरिद्रावित्यादि सिध्यति। 'लुङि वेति'। भाष्ये तु 'अद्यतन्यां वे'ति दृश्यते। उदाहृतञ्च तत्रैव। अदरिद्रासीत् (इट् सकौ—'यमरमनमातां सक् च')—अदरिद्रात् इति। तेनार्थ-कथनपरतया बोद्धव्यमित्याहुः। लुङि आल्लोपो वेति वार्त्तिकार्थः। 'सनि ण्वुलि ल्युटि च न'। आल्लोप इति सम्बध्यते। तेन दिदरिद्रासति। दरिद्रायकः (ण्वुल्)। दरिद्राणः (ल्युट्) इति। भाष्ये तु इहरिद्रस्येत्यत्र—

'न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्युक्ते दिदरिद्रिषतीति च।

इति सनि आल्लोपविकल्प एव दृश्यते।

'दरिद्रातेरार्धधातुके विवक्षिते—' इति वार्त्तिके 'विवक्षिते' पदग्रहणस्य अयं भावः। दरिद्राति इति दरिद्रः (दरिद्रा + अच्)। अत्र अच् प्रत्ययात् प्राक् आल्लोपो यथा स्यात् इति। आर्धधातुके परे इति परसप्तम्याश्रयणे तु आल्लोपप्रवृत्तौ 'श्याद्व्यधा—' इति

णप्रत्यय एव स्यात्। ततश्च कृते णप्रत्यये 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यात्। आर्धधातुके विवक्षिते इत्युक्ते तु पूर्व्वमाल्लोपेन श्याद्व्यधादिप्रवृत्त्या अच् प्रत्यय एव भवेदिति भावः। स्पष्टमिति दिक्। दरिद्रिता—लुट्। आलोप इडागमः। अदरिद्रादित्यादि लङ्। अदरिद्रुः—सिजभ्यस्तेति झेर्जुस्। दरिद्रियात्—विधिलिङ इहरिद्रस्येतीकारः। दरिद्र्यात्—आशीः—आर्धधातुके विवक्षिते—' इति वार्त्तिका—दालोपः। अदरिद्रीदित्याद्यूह्यम्। 'चकास (चकास्) दीप्तौ'। अनेकाच्। भस्य अदिति। अदभ्यस्तादित्यनेनेत्यर्थः। चकास् हि इति स्थिते रूपद्वयमित्याह—धि चेति। वार्त्तिकमते धि चेति सूत्रं सिज्विषयकं तेन चकाधि: सलोपो न भवति। ततो धित्वे सकारस्य जश्भावे कृते चकाद् धि इति भवति। भाष्यकारैस्तु 'धि चेति समान्यस्य लोपः' इत्युक्त्वा चकाधि इत्येव न्याय्यमित्युक्तम्—तेन भाष्यप्रामाण्यात् चकाधीत्येव सम्यगित्यलम्।

## २४८४—। तिप्यनस्तेः ।।८।२।७३ ।।

**दी—। पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः। स—सजुषोरुरित्यस्यापवादः। अचकात्—अचकाद्। अचकासुः।**

The सकार at the end of a पद is dropped when followed by तिप् but not, if this सकार is of अस्। This overrules 'ससजुषो: रुः'। Thus अचकात् etc. easy.

मित—। तिपि इति। तिपि अनस्तेरितिच्छेदः। अनस्तेरिति प्रसज्य—प्रतिषेध इत्याह—न तु अस्तेरिति। पदस्येत्यधिकृतम्। 'झलां जशोऽन्ते' इत्यतोऽन्ते इत्यनुवर्त्तते। ससजुषो इत्यतः स इति च। तदाह—पदान्तस्येत्यादि। ससजुषोरिति स्पष्टम्। अचकादिति—अचकास् तिप् इति स्थिते तिपः इ—लोपे हल्ङ्याब्भ्यो दीर्घादिति अपृक्तलोपे च अचकास् इति भवति। अनेन सस्य दत्वे अचकाद् इति भवति। ततो 'वावसाने' इति चर्त्वजश्त्वे इति ध्येयम्। अचकासुः—सिजुसि पूर्व्ववत्।

२४८५। सिपि धातोरुर्वा ॥८।२।७४।

टी—। पदान्तस्य धातोः सस्य रुः स्याद् वा। पक्षे जश्त्वेन दः। अचकाः—अचकात्। शासु १०७५ अनुशिष्टौ। शास्ति।

The स of a root at the end of a पद becomes रु optionally. Then by 'खरवसानयोः—' it (र) becomes विसर्ग। In the alternative case it will be द due to जश्त्व। Thus अचकाः etc. शास् to instruct लट्।

मित—। सिपीति पूर्व्ववदनुवृत्तिः। पक्षे इति। वसुस्रंसित्यतस्मादनुवृत्तेरिति भावः। अचका इत्यादि। पूर्व्ववदप्रक्तलोपात् रूपम्।

२४८६। शास इदङ्हलोः ॥६।४।३४॥

टी—। शास उपधाया इत् स्यादङि हलादौ क्ङिति च। 'शासिवसि—' (२४१०) इति षः। शिष्टः। शासति। शशास। शशासतुः। शास्तु—शिष्टात्। शिष्टाम्। शासतु।

The penultimate (आ) of शास turns into इ when the affix अङ् and हलादि क्ङित् follow. Thus अशास् अङ् तिप् (लुङि अङ् by—'सर्त्तिशास्ति—' 2382)—अशिष् अत्—अशिषत्, षत्व by 'शासिवसि—' (2410). In हलादि क्ङिति—शास्+तस् (तस् is ङित् by सार्व्वधातुकमपित्)= शिष् त=शिष्टः by षत्व (शासि—') and ष्टुत्व by 'ष्टुना—' (113), शासति—अदभ्यस्तात् gives अति in place of झि, and अति is अजादि ङित् hence no इदादेशः। शशासतुः—अतुस् is अजादि ङित्। शिष्टात्—तातङ is हलादि ङित्। शिष्टाम्—ताम् in place of तस् which is हलादि ङित्। शासतु—।

मित—। शास + —इत् + अङ्हलोरिति च्छेदः। 'अनिदितां हल उपधायाः क्ङिति' इत्यत 'उपधायाः क्ङिति' इत्यनुवर्त्तते। तदाह—शास उपधाया इत्यादि। एवं तसः ङित्वेन शास् तस् इति स्थिते 'शासिव सौ'ति षत्वे ष्टुत्वेच शिष्ट इति ; किन्तु 'अशिषत्—' इत्यनुपदं स्वयमेव वक्ष्यति। शासतीति। अदभ्यस्ता-दित्यत्। शशासतुरिति। अजादित्वादित्वाभावः। शिष्टात्—तातङो ङलादि—ङित्त्वात्—इदुपदेशः। शिष्टाम्—तसस्तामादेशः। शासत्विति पूर्ववत्। अथ हौ विशेषमाह :—

२४८७। शा हौ ॥६।४।३५॥

हौ—। शास्तेः शादेशः स्याद्धौ परे। तस्याभीयत्वेन असिद्धत्वाद्धेर्धिः। शाधि। अशात्। अशिष्टाम्। अशासुः। अशात्—अशाः। शिष्यात्। 'सर्त्तिशास्ति—' (२३८२) इत्यङ्। अशिषत्। अशासिष्यत्।

शास् makes room for the substitute शा when the affix हि follows. This शादेश being आभीय i.e having fallen under as the असिद्धवत् सूत्र ( 6.4.22 ), ( and there being समानाश्रयत्व ), is असिद्ध or non—existent and hence हि becomes धि by 'हुझल्भ्यो हेर्धिः' ; अशात्—like अचकात्—under तिप्यनिस्तेः ( 2484 ). अशिष्टाम्—by शास इदङ्—'(2486).अशासुः—जुस् of झि। अशात्—अशाः like अचकात्—अचकाः। शिष्यात्—विधि—by 'यासुट्परस्मै—' and इत्'. 'सर्त्ति' etc'explained.

मित—। शा हाविति। शेति लुप्तप्रथमाकम्। पूर्व्वसूत्रात् शास इत्यनु-वर्त्तते ; तदाह—शास्तेरित्यादि। तस्येति शादेशस्य। आभीयत्वेन भाधिकार-पतितत्वेनासिद्धवत्सत्रान्तःपातित्वेनेत्यर्थः। असिद्धत्वादिति। समानाश्रयत्वेनेति भावः। अत आश्रयः शास् इति। 'शा हौ' (६।४।३५) 'हुझल्भ्यो हेर्धिः' (६।४।१०१) इति तदाश्रितविधिद्वयमिति हेर्धिभावे बीजम्। एतच्च असिद्धवत्

सूत्रे स्पष्टम्। अशादिति अचकादितिवत्। अशिष्टाम्—इडादेश:। अशासु:—झेर्जुस्। अशात्—अशा:। सिपि धातो:—' (२४८५) इति रुत्वविकल्प:। शिष्यात्—यासुटो हलादिङित्त्वात् शास इदिति इडादेश:। सर्त्ति—इति स्पष्टम्। अशिषत् इति। शास इदिति इडादेश:। शासिवसिघसीति षत्वम् ;(२४१०)। अशासिष्यत्—लृङ्।

दी—। दीधीङ् १०७६ दीप्तिदेवनयो:। एतदादय: पञ्च धातव: छान्दसा:। दीधीते। 'एरनेकाच:—' (२७२) इति यण्। दीध्याते।

दीधी to shine and grieve. Five roots beginning with this are Vedic ( in use ). दीधीते etc.

मित—। दीधीङिति। ङित्त्वात्तङ्। देवनं शोक:। एतदादय इति। दीधी—धातुमुपक्रम्येत्यर्थ:। इदं माधवमतम्। यणिति—न लियङित्यर्थ:। दीधी, वेवी, षस, षस्ति, वश इति दीध्यादय: पञ्च धातव:। तेषु पुनरुत्तरास्त्रय: परस्मैपदिन इत्युपरित्वात् स्पष्टीभविष्यति।

२४८८। यीवर्णयोर्दीधिवेव्यो: ॥७।४।५३॥

दी—। एतयोरन्त्यस्य लोप: स्याद् यकारे इवर्णे च परे। इति लोपं बाधित्वा नित्यत्वादेत्वम्—दीध्ये। 'दीधीवेवीटाम्' (२१८०) इति गुणनिषेध:—दीध्याञ्चक्रे। दीधिता। दीधिष्यते। वेवीङ् १०७७ वेतिना तुल्ये। वी गतीत्यनेन तुल्येऽर्थे वर्त्तते इत्यर्थ:।

अथ त्रय: परस्मैपदिन:। षस १०७८ षस्ति १०७९ स्वप्ने। सस्ति। सस्त:। ससन्ति। ससास। सेसतु:। सस्तु। सधि।

'पूर्व्वत्रासिद्धम्' ( १२ ) इति सलोपस्यासिद्धत्वात् 'अतो हेः' (२२०२) इति न लुक्। असत्। असस्ताम्। अस:—असत्। सस्यात्। असासीत्—अससीत्। सन्ति। इदित्वान्नुमि कृते 'संस्त् तस्' इति स्थिते 'स्कोः—' (३८०) इति सलोपे, 'झरो झरि सवर्णे' (७८)इति तकारस्य वा लोपः। सन्तः। संस्तन्ति। बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य 'स्कोः—' (३८०) इति लोपाभावात्—संस्ति। संस्तः। संस्तन्ति—इत्येके। वश १०८० कान्तौ। कान्तिरिच्छा। वष्टि। उष्टः। उशन्ति। वक्षि। उष्ठः। उवाश। ऊशतुः। वशिता। वष्टु—उष्टात्। उष्टाम्। उड्ढि। अवट्। औष्टाम्। औशन्। अवशम्। उश्यादाम्। उश्यास्ताम्। 'चर्करीतं च' ( गणसूत्र )। यङ्लुगन्तमदादौ बोध्यम्। ह्नुङ् १०८२ अपनयने। ह्नुते। जुह्नुवे। ह्नवीत। ह्नोषीष्ट। अह्नोष्ट—।

इति तिङन्तादादिप्रकरणम्।

The final ( ई ) of the roots दीधी and वेवी is dropped when any यकार or the letter इ follows. But this rule ( although it is subsequent पर—7.4.53 ) is superseded by 'टित आत्मनेपदानां टेरे' (3.4.79) which is नित्य, by the परिभाषा—'परनित्यान्तरङ्गापवादानाम्—' Thus दीधी+इट् ( 1st. per. sing. )=दीधी ए by 'टित—' Now 'यीवर्णयोः—' will not appear, for there is no इवर्ण following, hence we have दीध्ये by 'इको यणचि' (47). When आम् comes owing to अनेकाच्त्व of दीधी, there will be no guna by 'सार्व्वधातु—' ( 2168 ) due to the prohibition 'दीधीवेवीटाम्' ( 2190 ). दीधिता—

लुट्—दीधी + इट् ( आगम ) + ता = दीध् इता—इ लोप by 'यीवर्णयोः—'= दीधिता. Similarly दीधिष्यते. वेवी means the same thing as the root वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'। It is conjugated like दीधी.

Now we take up the three परस्मै—roots. षस and षस्ति mean to sleep. सस्ति by धात्वादेः षः सः—सस्तः etc easy. सेसतुः—एत्व and अभ्यासलोप by 'अत एकहल्—' ( 2260 ). सधि ( and not सद्धि—see घसादि ). by 'झषस्तथोः—' and 'धि च'. And this सलोप by 'धिच' ( 8.2.25 ) being असिद्ध, धि which is nothing but हि by स्थानिवद्भाव: does not elide by 'अतो हेः' ( 2202 ). असत्—अट् सस् त् ( लङ् ) = असस् o by 'हल्ङ्याब्भ्यो—' ( 252 ) = असत् by 'तिप्यनस्तेः' ( 2484 ). असः—असत् like अचकाः—अचकात्। असासीत्—अससीत् by 'अतो हलादेः—' ( 2284 ). सस्ति etc these are the conjugations of षस्ति. By नुम् and सत्व the root becomes सन् after the second स् has been dropped by 'स्कोः—'( 380 ). Now सन् + ति = सन्ति or सन्ति by 'झरो झरि—' (71). In सन्तः he himself shows process. After नुम् has been attached owing to इदित्त्व (of षस्ति), the form figures as सं स् तस् ( अनुस्वार by 'नश्चापदान्तस्य—' ) which by 'स्कोः—' and 'झरो झरि—' gives with तलोपविकल्प, सन्तः and सन्तः। बहूनां समवाये etc—Some hold that where many ( at least more than two ) consonant conjoin then two consonants do not constitute the designation of conjunction ( संयोगसंज्ञा ). In this case स् will not elide by 'स्कोः—' ( ३८० ) and thus the forms will be as संस्ति —संस्तः etc. वश to wish. सेट्। वष्टि—वश् + ति = वष्ति by 'व्रश्चभ्रस्ज—' = वष्टि by ष्टुना ष्टुः। उष्टः—सम्प्र. by 'ग्रहिज्यावयिव्यधिवष्टि—'। उशन्ति—no आदेश for वश is not अभ्यस्त। वक्षि—वश् सिप्—वष् सि by 'व्रश्च—' = वक्

सि by 'षढोः कः सि' = वक् सि by इणकोः—आदेशप्रत्यययोः (२२१—१२) = वक्षि ; उवाश—सम्प्र. of the अभ्यास by 'लिट्यभ्यासस्योभयेषाम्' (२४०८)। ऊशतुः—वश + अतुस् = उश् by 'वचिस्वपियजादीनां किति' = उश्, उश् अतुस्—उ उशतुस् = ऊशतुः। उश्यात्—यासुट् is कित् hence सम्प्र. उष्टाम्—तस् is replaced by ताम्। उड्ढि—वश + हि = उश् हि by 'सेर्ह्यपिच्च' = उष् धि—उड्ढि—by 'झषां जश्—'। अवट्—घट्, वश्, लङ् तिप्—अवश् त्—अवश् ० 'हल्ङ्याब्भ्यो—' अवष्—अवट्—अवड् by 'वाऽवसाने'। औष्टाम्—श्, तस्—उश्, ताम्—आट्, उष्, ताम्—आ उष् ताम्—औष्टाम् by 'आटश्च' and सवर्णदीर्घ। Similarly औशन्। उश्यातात्—विधिलिङ् वश् + यातात् (कित्)—उश्यास्ताम्—आशीः। चर्करीतञ्च—चर्करीत is a word technically known as यङ्—लुगन्त। This is a गणसूत्र and means that यङ्लुगन्त forms are to be conjugated in the manner of the अदादि roots only, for the गणसूत्र is read in the अदादि class. Hence it is to be understood that श्नम्, श etc should not be attached to यङ्लुगन्त roots. And here also शप् will be dropped (after being added) by the rule 'अदिप्रभृतिभ्यः शपः' (2423). [N. B.—Though the root वश् is entirely Vedic in Panini's arrangement, yet it is found in the secular language also. Cp.—वष्टि भागुरिरल्लोपम्, जयाय सेनान्यमुशन्ति देवाः (कुमार), 'उशन्ति ये निवासम्' (शाकुन्तले), निरमन्तुशिचया (भागवत) etc.] ह्नुङ् (ह्नुङ्) to retract, to be away from view etc. आत्मनेपदी। It is not Vedic. ह्नुते etc. as before.

Here ends the अदादि—Chapter.

भिद—। यीवर्णयोरिति। यीवर्णयोः + दीधीवेव्योरितिच्छेदः। यिश्च इवर्णश्चेति द्वन्द्वः। तयोः। यकारादिकार उच्चारणार्थस्तदाह—यकारे इवर्णे च परे

इति। 'शासस्योर्लोप' इत्यतो लोप इत्यनुवर्त्तते। अलोऽन्त्यस्येति अन्त्यस्यैव लोपः। तदाह—एतयो ( दीधीवेवीधात्वो )—रन्त्यस्य लोप इति। इति लोपं बाधित्वेति। यीवर्णयो र्यत्सूत्रविहितमित्यर्थः। नित्यत्वाद् रेत्वमिति—यद्यपि यीवर्णेति सूत्रम् (7. 4. 53) टित आत्मनेपदानामित्यपेक्षया (3. 4. 79) परं तथापि टित इत्यस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात् परनित्यान्तरङ्गे ति परिभाषया प्राबल्यं पूर्वसूत्रस्य च बाधः। एवञ्च दीधी इट् ( उत्तमैकवचनम् ) इति दीधी + ए इति जाते इवर्ण-परकत्वाभावान्नान्त्यलोपः। किन्तु इको यणचीति दीध्ये इत्येव। ननु दीधी आम् इति स्थिते 'सार्व—' ( २१६८ ) इति गुणः स्यादत आह—दीधीवेवीटामिति। दीधिता—तासि इकारलोपे इडागमः। एवं दीधिष्यते। वेवीङ् इति। वी गतिव्याप्ति प्रजनकान्त्यसनखादनेषुिति भ्वादौ द्रष्टव्यम्। पश्चानां छान्दसानां दीधीवेव्यौ इति द्वौ गतौ इदानीं 'षसषस्तिवश' इति त्रयः परस्मैपदिन आरभ्यन्ते। तदाह—षष स्वप्न इति। 'धात्वादेः षः सः' इति उभयत्र सत्वम्। ससन्ति इति—अभ्यस्तत्वा-भावात् 'झोऽन्त' इत्यन्तादेशः। सेसतुरिति—अत एकहल्मध्ये—इति एत्वाभ्यास-लोपौ। सधीति—धिचेति सलोपः। हुझल्भ्यो—इति हेर्धिः। ननु सलोपात्—परमकारान्तत्वात् धेश्च स्थानिवद्भावेन हित्वात् अतो हेरिति हिलोपः स्यादित्यत आह—सलोपस्यासिद्धत्वादिति। धि चेति हि पूर्वत्रासिद्धमित्यसिद्धकाण्डे पठितमिति ज्ञेयम्। असत् इति। असस् त् इति हल्ङ्यादिना अपृक्तलोपे 'तिप्यनस्ते'रिति सस्य तः। असः—असत् इति। सिपि धातो—रिति रुः। पक्षे—सस्य जश्त्वे चर्त्वविकल्पः। असासीत्—अससीत् इति। अतो हलादेः—(२२७४) इति दीर्घ-विकल्पः। इति षस्धातो रूपाणि।

अथ षस्तिधातो रूपाणि प्रदर्शयन्नाह। संस्तीति। सस्तीरिदित्वान्नुम्। तदेवं षस्ति + तिप् इति स्थिते धातोरिति सत्वे नुमि च सन्स्ति ( मिदचोऽन्त्यात्परः ) इति जाते नश्चे ति अनुस्वारे संस्ति इति भवति। ततः 'स्कोः—' ( ३८०० ) इति सलोपे 'झरो झरि सवर्णे' (७१) इति तकारस्य लोपविकल्पे च सन्ति सन्त्ति इति रूपद्वयम्। सन्त इति तमि स्वयमेव दर्शयति—इदित्वादित्यादिना। स्यष्टम्।

संस्तान्ति इति। अभ्यस्तत्वाभावाद् भेरन्तादेशः। अत्र मतान्तरमप्यस्ति। तदेवाह। बहूनां समवाये इति। यत्र बहूनां द्व्यधिकानामिति यावत् व्यञ्जनानां समवायः संयोगः, तत्र द्वयोर्व्यञ्जनयोः संयोगसंज्ञा नेति तदर्थः। अतएव स्तौरिति सूत्रेण सलोपविरहः संयोगादित्वाभावादिति भावः। अतएव संस्ति इत्यादीनि रूपाणि। इत्येके इति। एके इत्यनेन अरुचिः स्पष्टा। तद्बीजन्तु 'हलोऽनन्तराः संयोगः' इति सूत्रभाष्यविरोधः। तत्रत्य भाष्यादप्ययमप्रामाणिकः। अन्यथा मस्ज्—धातोः सलोपाभावे मग्न इत्याद्यसिद्धेरित्यलम्। स्पष्टञ्चेदं 'हलोऽनन्तरा—' इत्यत्र भाष्ये शब्देन्दुशेखरे च। उष्ट इति। वश् तस् इति स्थिते ग्रहिज्येति सम्प्रसारणम्। व्रश्चेति षत्वम्। वक्षि इति—वश् सिप् इति स्थिते व्रश्चेति षः। 'षढोः कः सि' इति षस्य कः। सिपः षत्वम् ('इणकोरादेश—') इति। ऊशतुरिति—सम्प्रसारणे कृते द्वित्वादि। उष्टात्—तातङो ङित्वात् सम्प्र.। उड्ढि इति। वश् हि इति स्थिते ढौ च सम्प्र. षत्व-जश्त्वादि। अवट् इति। अवश् तिप् (लङ्)—अवष् त् हल्ङ्यादिना अपृक्तलोपः। वाऽवसाने इति चर्त्वविकल्पः—अवट्—अवडिति। औष्टाम्—इति। वेवश् लङ् तस् इति स्थिते ग्रहिज्येति प्राक् सम्प्रसारणम्। ततोऽजादित्वादाट्। आटश्चेति वृद्धौ रूपसिद्धिः। लावस्थायामेवाडिति मते तु आड्जादेरपि तेनाड्विधानान्न दोष इति नागेशो द्रष्टव्यः। अन्यदपीत्थमित्यलम्। चर्करीतमिति—गणसूत्रमिदम्। चर्करीतमिति यङ्लुगन्तम्। एतच्च प्राचां संज्ञा। तेनैतेन 'अदादौ यङ्लुगन्ता अपि 'प्रकृत्योऽन्तर्भूता—' इति प्रकथ्यते। तदाह—यङ्लुगन्तमित्यादि। अतएव यङ्लुगन्तात् परं शबेव न तु श्यन्नादयः। किञ्च तस्य च शपो लुगपि 'अदिप्रभृतिभ्यः—' इति भवति। वश-धातोश्छान्दसत्वेऽपि भाषायामप्यसौ प्रयुज्यते। तथाहि—वष्टि भागुरिरल्लोपम्, जयाय सेनान्यमुशन्ति देवाः (कुमार), निरमन्तुशिक्षया (भागवतम्) इत्यादि। अतश्छान्दसत्वं प्रायिकम्। ह्नुते इति ङित्त्वात्तङ्। अन्यत् पूर्ववदिति शम्।

॥ इति मितभाषिण्यां तिङन्तादादिप्रकरणम् ॥

अथ

# तिङन्तजुहोत्यादि-प्रकरणम्



दी—। हु १०८३ दानादनयोः। आदाने चेत्येके। प्रीणनेऽपीति भाष्यम्। दानं चेह प्रक्षेपः। स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते। इतश्चत्वारः परस्मैपदिनः।

The root हु means to proffer and to partake of. Some say that it means to accept also. भाष्य, however under 'हलीया च शीन्छन्दसि' takes it to mean to satisfy as well. This short of offer is not what is meant by charity in general but, it means an offering (in a restricted or rather sacrificial sense). Thus this offering is made provided the repository or object of the same satisfies the sastric injunctions (वैध) and provided the हविः (or the thing offered) also satisfies the same condition. This (sort of signification of हु) is obtained in a natural way i. e, from usage (लौकिक प्रयोग)। [We should not, therefore, say ब्राह्मणाय जुहोति for ब्राह्मणाय ददाति or कूपे लोष्टं जुहोति for कूपे लोष्टं प्रक्षिपति। Also it deserves notice that the root though meaning दान takes both the accusative and the locative also. Cp.—जटाधरः सन् जुहुधीहपावकम् (भारवि—1st) also अग्नौ जुहोति etc.] Four roots including this are परस्मैपदी (and we are now dwelling on them).

मित—। अथ जुहोत्यादयः श्लुविकरणाः। हु इति। दानं प्रक्षेपः। आदनं भक्षणम्। भाष्यमिति—'तृतीया च होश्छन्दसि' इत्यत्रेत्यर्थः। प्रक्षेप इति। ननु किं यत्र कुत्रचित् प्रक्षेपो दानशब्देनोच्यते? नेत्याह। स चेति। वैधे विधिबोधिते आधारे अग्न्यादौ प्रक्षेप इत्युक्तम्। हविषः 'वैधस्य प्रक्षेप' इत्यनपूरणम्। कुत एतत् ज्ञायते। तत्राह स्वभावादिति—अनादिसिद्धलोकव्यवहारादित्यर्थः। तेन 'विप्राय गां ददाति' 'अन्नमत्ति' इत्यादीनां स्थले जुहोतीत्यपि स्यादिति न भ्रमितव्यमिति भावः। इत्यत्वार इति। हुधातुमारभ्येत्यर्थः।

२४८८। जुहोत्यादिभ्यः श्लुः ॥२।४।७५॥

टी—। शपः श्लुः स्यात्।

श्लु is ordered in place of शप् coming after हु etc.

मित—। जुहोत्यादिभ्य इति। 'अदिप्रभृतिभ्यः शपः' इत्यनुवर्तते। तदाह—शप इति। तदेवं हु+शप्+तिप् इति स्थिते, अनेन हु+श्लु+तिप् इति जाते—आह—

२४८९। श्लौ ॥६।१।१०॥

टी—। धातोर्द्वे स्तः। जुहोति। जुहुतः। 'अदभ्यस्तात्' (२४७९) इत्यत्। 'हुश्नुवोः—' (२३८७) इति यण्। जुह्वति।

A root is doubled when श्लु follows. Thus हु+श्लु+ति=हु हु ति (श्लु disappears after the duplication)=जुहोति by 'कुहोश्चुः' (2245) and 'सार्व—' (2178). जुहुतः no गुण for तस् is ङित्। यण् and not उवङ्—जुह्वति।

मित—। श्लाविति। 'एकाचो द्वे प्रथमस्य' (६।१।१) इति 'लिटि धातोरनभ्यासस्य' इति च वर्त्तते। तदाह—धातोर्द्वे स्त इति। श्लुविति शेषः। जुहोतीति

अभ्यासकार्यमभ्यासहोयुत्वं च (कुहोश्चुः—२२४५)। जुहुतः—क्ङित्वाद् गुणाभावः क्ङिङ्तीति निषेधात्। जुह्वति इति। स्पष्टं मूले। यथिति, न तु उवङ् इत्यर्थः। श्लुरिति द्विवं विधयान्वर्थेति।

२४८१। भीह्रीभृहुवां श्लुवच्च ॥३।१।३९॥

टी—। एतेभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च। जुहवाञ्चकार। जुहाव। होता। होष्यति। जुहोतु—जुहुतात्। हुधिः। जुहुधि। आटि परत्वाद् गुणः। जुहवानि। परत्वाज् 'जुसि चे'ति (२४८१) गुणः। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। ञिभी १०८४ भये। बिभेति।

[N. B.—Take भीह्रीभृहुवाम् as भीह्रीभृहुभ्यः (५मी बहुव).]

आम् comes optionally after the roots भी, ह्री, भृ and हु, and in the case of आम्, the roots undergo the operation enjoined in the matter of श्लु। Thus हु+आम्=हु हु आम्—जुहो आम्—जुहव् आम् then add चकार। ज by कुहोश्चुः (2245) and गुण by सार्व—' (2168). And the alternave form is जुहाव with णल् where the root gets वृद्धि by 'अचो ञ्णिति' (254). In अतुस् and उस्, जुहुवतुः and जुहुवुः with the addition of उवङ्। In थल्, by option of इट्, जुहविथ—जुहोथ. हुधि: i.e by 'हुझल्भ्यो—' (2425). आटि परत्वात् i.e the गुण—enjoined by the rule 'सार्व—' (2168—7.3.84) being subsequent to the यण् enjoined by the rule 'हुश्नुवोः—' (2387—6.4.87), the root हु gets गुण when followed by आट्; thus—जुहवानि (हु हु आट् मिप—जुहु आनि by 'मेर्निः'—जुहोआनि etc). In लङ्—अजुहोत् (तिप्), अजुहुताम् (तस्)

but in ञि the form is अजुहवुः with गुण by 'जुसि च' (2481—7.3.87) which is subsequent to the rule'हुश्नुवोः—।' जुहुयात्—विधिलिङ्, हूयात् आशीः—दीर्घ by 'अकृत्सार्व—' (2298). [ In this connection note that absence of श्नु denotes the absence of श्नु also which thus appears in सार्वधातुक only]. अहौषीत्—अट् हु (लुङ्) सिच् ईट् त् (तिप्)—वृद्धि. by 'सिचि वृद्धिः—'. ञिभी (भी) the result of ञित्करण is evident in 'ञीतः क्तः' (3088). बिभेति—भी भी तिप् by 'श्लौ' (2490). बिभेति by 'ह्रस्वः'and 'सार्व—' अभ्यासकार्य्य।

भित—। भीति। भी, ह्री, भृ, हु इत्येषां द्वन्द्वात् षष्ठीबहुवचनम्। पञ्चम्यर्थे षष्ठी। तदाह—एतेभ्य इति। 'ह्नाम' इति दीर्घं वक्तव्ये—कथमुक्तं 'हुवाम्' इत्युक्तमित्यत्र गौरवी नागेशः। अर्थं ऽप्येवमेव। बहुलं शास्त्रप्रवृत्तिरिति तु तत्त्वम्। 'कास्प्रत्ययाद् दाम—' (३।१।३५) इत्यत 'आम्' 'लिटि' इत्यनुवर्त्तते। 'उषविद-जागृभ्योऽन्यतरस्याम' (३।१।३८) इत्यतोऽन्यतरस्यामिति च। तदाह—लिटि आम् वा स्यादिति। श्लुवदिति 'तत्र तस्येवे'ति सप्तम्यन्ताद्वतिस्तदाह—श्लाविवकार्य्यं'ति। तत्र आम्पक्षे—द्वित्वे, 'सार्व—' (२१६८) इति गुणे, अभ्यासस्य चुत्वे च जुह-वाञ्चकार इति। णलि तु यथापूर्व्वं वृद्धिः—जुहाव। तातङो ङित्वाद् जुहुता-दित्यत्र गुणाभावः। हेधि'रिति—'हुझल्भ्यो—' इत्यनेनेत्यर्थः। आटीति—जुहु आनि इति स्थिते आटः पित्त्वे न 'सार्व—' (७।३।८४) इति गुणविधायकशास्त्रस्य 'हुश्नुवोः—' (६।४।८७) इति यण्विधायकशास्त्रापेक्षया परत्वाद् गुणे जुहवानि इति भावः। लङि तिप्यादौ अजुहोत् इत्यादीनां स्पष्टत्वात् भौ प्रक्रियामाह—परत्वा-दिति। सिजभ्यस्तविदिभ्यश्चे'ति झेर्जुसि—जुसि चेति (७।३।८७) शास्त्रस्य हुश्नुवोरित्य-पेक्षया परत्वादत्रापि गुण एव। अजुहो उस् इति प्रक्रियाप्रकारः। जुहुयात्—विधिलिङ्; हूयात्—आशीर्लि'ङि आर्द्धधातुकत्वात् श्लुवत्कार्यं न। 'अकृत्—' (२२९८) इति दीर्घः। अहौषीत्—लुङि—सिचि वृद्धिरिति वृद्धिः। 'शैवान्यहौषीत् सुतसम्पदे च (भट्टिः)'। ञिभीति। ञित्करणं—'ञीतः क्तः' (३०८८) इत्यत्र स्पष्टम्।

विभेति इति। श्नः श्लुः, द्वित्वमभ्यासकार्यं धातोर्गुणश्च। अथ सार्वधातुकङिति सर्वत्र दीर्घे प्राप्ते विकल्पार्थमाह—

२४९२। भियोऽन्यतरस्याम् ॥६।४।११५॥

दी—। इकारः स्याद्धलादौ क्ङिति सार्वधातुके। विभितः—विभीतः। विभ्यति। विभयाञ्चकार। विभाय। भेता। ह्री १०७५ लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार—जिह्राय। पॄ १०८६ पालनपूरणयोः।

The ह्रस्व इकार replaces the दीर्घ ईकार of भी when a हलादि किङ्त् सार्वधातुक follows. Thus विभितः—विभीतः। In भि—विभी+झि=विभी अति by 'अदभ्यस्तात्' (2479)=विभ्यति by यण्। विभयाञ्चकार etc by 'भीह्री—' (2491). ह्री to feel shame. जिह्रियति—ह्री ह्री झि—जिह्री अति—जिह्रियङ् अति by 'अचि श्नुधातुभ्रुवां—' (272). जिह्राय—etc as before. पॄ means to protect and to fill up.

भित—। भिय इति। 'इद्दरिद्रस्य—' (2482—६।४।११४) इत्यत 'इत्' (इकारः) इत्यनुवर्त्तते। 'गमहनजनखनघसाम्—' इत्यतः 'क्ङिति' इति, 'ई हल्यघोः' इत्यतो हलीति, 'अत उत् सार्वधातुके' इत्यतः सार्वधातुके इति च वर्त्तते। तदाह—इकारः स्याद्धलादावित्यादि। विभित-इत्यादि स्पष्टम्। विभ्यति इति। अदभ्यस्तादित्यत्। यण्। विभयाञ्चकारेति—'भीह्री—' (2490) इत्याम् वा। एवं जिह्रयाञ्चकारेत्यत्र। जिह्रियति इति—अचि श्नुधात्विति इयङ्। भिन्नोऽयं ह्री धातुर्भौवादिकात्—ह्रीघोङ् इत्यस्मादिति द्रष्टव्यम्। पॄ इति। सेट्।

२४९३। अर्तिपिपर्त्त्योश्च ॥७।४।७७॥

दी—। अभ्यासस्येकारोऽन्तादेशः स्यात् श्लौ।

When श्लु follows then इकार forms the final of the अभ्यास of the roots ऋ and पृ। Thus पृ+श्लु तिप्—पृ पृ तिप्—पिपृ तिप—

मित—। अर्तिं इति। 'अत्र लोपोऽभ्यासस्य—' इत्यतोऽभ्यासस्येति। 'भृञामित्' इत्यत इदिति (इकार:), 'निजां त्रयाणा'मित्यत: श्लौ—इति चानुवर्तते। तदाह—अभ्यासस्येत्यादि। एवञ्च पृ+श्लु तिप् इति स्थिते द्वित्वे अनेन—पिपृ—तिप् इति जाते—

## २४९४। उदोष्ठ्यपूर्व्वस्य ॥७।१।१०२॥

दी—। अङ्गावयवौष्ठ्यपूर्व्वो य ऋत् तदन्तस्याङ्गस्य उत् स्यात्। गुणवृद्धी परत्वादिमं बाधेते। पिपर्त्ति। उत्त्वम्। रपरत्वम्। 'हलि चे'ति (३५४) दीर्घ:। पिपूर्त्त:। पिपुरति। पपार। किति लिटि 'ऋच्छत्यॄताम्' (२३८३) इति गुणे प्राप्ते—

उत् i.e उ is the final substitute of an अङ्ग (verbal base) ending in long ऋ which is preceded by a ओष्ठ्य letter (as प्) passing for the part and parcel of the same verbal base (अङ्ग)। The plain meaning is—उत् replaces the long ॠ but this ऋकार must have a labial (ओष्ठ्यवर्ण) for its constant stem and not such as is obtained from the result of combination. Thus पिपृ तस् gives पि पुर तस् by 'उरण् रपर:'—whence we get पि पूर्त्त: by हलि च; but in सम्+ॠ+त—सम् ईर्ण:—समीर्ण' and not समूर्ण: for though म is labial yet it is not a part of ॠ—here, but added to ॠ due to सन्धि। However गुण (सार्व्व—७।३।८४) and वृद्धि (मिचि वृद्धि—७।२।१) etc. being later than this rule bar the same. Thus in तिप by गुण

we get पिपर्त्ति not पिपूर्त्ति। पिपुरति—by उत् and अदादेश of झि। पपार—लिट्। In कित् लिट् i.e in अतुस् etc. गुण being due by 'ऋच्छत्यृताम्—' ( २३७२ ) we look ahead :—

मित —। उदिति। उत्+ओष्ठपूर्व्वस्येतिच्छेदः। 'ऋत इद्धातोः' (७।१।१००) इत्यत ऋत इत्यनुवर्त्तते। अङ्गस्येत्यासप्तमपरिसमाप्तेरधिकारः। तथावर्त्तते। एकम् ( अङ्गम् ) अवयवषष्ठ्यन्तम् ओष्ठ्यस्य विशेषणम्। तदादिविधिः तदाह—अङ्गावयवौष्ठ्य—पूर्व्वो य ऋदिति। अन्यत् तु अनुवृत्तिप्राप्तेन ऋता विशेष्यते। तदन्तविधिः। तदाह—तदन्तस्याङ्गस्येति। एवञ्च तिप्यपि उत्वे प्राप्ते आह—गुणवृद्धीति। 'सार्व्व—' ( ७।३।८४ ) इति गुणस्य उत्वापेक्षया परत्वादेतत्सूत्रबाध इत्यर्थः। तथाच गुणेन पिपृतिप् इत्यस्य पिपर्त्ति इत्येव। सिचि वृद्धिरिति ( ७.२।१ ) वृद्धिर्तदपेक्षया-परेति द्रष्टव्यम्। अथ पिपृतस् इति स्थिते तसः ङित्त्वेन अगुणित्वादाह—उत्वे इत्यादि। उरण्—इति रपरत्वम्। पिपुरति इति। झेरदादेशेन 'अति'—भावे जाते हल्परत्वाभावादुरः स्थानिजातस्योत्वस्य दीर्घो न। अङ्गावयवस्येति किम्? समीर्णः। समपूर्व्वात् क्र्यादिगणाद्धातोः निष्ठायां रूपम्। ऋत इदितीत्वं रपरत्वं हलिचेति दीर्घादेशः। किन्तु मकारस्य ओष्ठ्यत्वेऽपि अङ्गावयवत्वाभावात् उत्वं न भवति इति सुष्ठु व्याख्यातमङ्गावयवस्येति। पपार इति लिट्। अत्र 'अचो ञ्णिति' (7.2.115) इति वृद्धिः परत्वादुत्वं नेति ध्येयम्। श्लोरभावाद 'अर्त्ति—' इति नेत्त्वम्। अथातुसि चान्यत्र च किति लिटि—गुणविकल्पं वक्ष्यन् आह किति लिटीत्यादि—

२४९५। शृदृप्रां ह्रस्वो वा ॥७।४।१२॥

दी—। एषां किति लिटि ह्रस्वो वा स्यात्। पक्षे गुणः। पप्रतुः। पप्रुः। पपरतुः। पपरुः। परिता—परीता। अपिपः। अपिपूर्त्ताम्। अपिपरुः। पिपूर्य्यात्। पूर्य्यात्। अपारीत्। अपारिष्टाम्। 'ह्रस्वान्तोऽयम्' इति केचित्। पिपर्त्ति। पिप्रतः। पिप्रति। पिप्रयात्। आशिषि—प्रियात्।

अपार्षीत्। पाणिनीयमते तु 'तं रोदसी पिपृतमि'त्यादौ छान्दसत्वं शरणम्। डु भृञ् १०८७ धारणपोषणयोः।

ह्रस्व ( ऋकार ) is the optional substitute for these roots—शॄ दॄ and पॄ in कित्—लिट्। Thus when there is no ह्रस्व, गुण comes in (by—ऋच्छत्यॄताम्)। Hence पप्रतुः etc. with यण् ( पृ + अतुस् = पृ पृ अतुस्—पर् प्रतुस् etc. by उरत् (२२४४) उरण्—and इको यणचि ४७ )। Similarly प्रपुः, and पपरतुः with गुण, अण् and रपरत्व etc. परिता—परीता by 'वृतो वा' ( २३८१ )। अपिपः—पृ ( लङ् ) तिप्—अपृ पृत् by श्लौ and इत्व—अपि पृत् by 'अर्ति पिपर्त्योश्च'—अपिपर् त् by 'सार्व—' ( २१६८ )—अपिपर् ०—तलोप by 'हल्ङ्याब्भ्यो—' ( २५२ )—अपिपः by 'खरवसानयोर्विसर्जनीयः'। अपिपूर्ताम् ( लङ्तस् ) उत्त्व by 'उदोष्ठ्य—' and दीर्घ by 'हलि च' ( २५४ )। अपिपरुः by भेर्जुस् and जुसि च ( २४७० ) and the rest is as before. पिपूर्यात्—पृ + यात् ( विधिलिङ् )—पृ पृ यात् ( श्लौ )—पिपृ यात् ( अर्ति—' ) पिपुर् यात् (उदोष्ठ्य—' and 'उरण्—' )—पिपूर्यात्—( हलि च )। पूर्यात्—आशीः—no श्लु and no duplication. अपारीत्—'सिचि वृद्धिः—' ( २२९७ )। Some hold that the root ends in ह्रस्व ऋ ( पृ )। पिपृतः—here 2494—does not aply. अपार्षीत् this पृ is अनिट् hence no elision of सिच्। But this ह्रस्व पाठ ( पृ ) being not admitted by पाणिनि we are to take the forms like पिपृतम् in 'तं रोदसी पिपृतम्' etc as vedic and not classical. डुभृञ् ( भृ ) उभयपदी and अनिट्—to hold and maintain.

मित—। शॄदॄप्रामिति। दयातेर्धित्वात् ऋषम्। 'दयतेर्दिगि लिटि' ( ७।४।९ ) इत्यतो लिटीत्यनुवर्तते। किति इति तु नानुवर्तिलभ्यम् पूर्वसूत्रेषु क्वापि तस्यादर्शनात्। परन्तु न्यायसिद्धमेतत्। तथाहि 'ऋच्छत्यॄताम्' ( ७।४।११ ) इति गुण—

विधायकं पूर्वसूत्रम्। गुणश्च अकिति एव विधीयते क्ङिति चेति निषेधात्। अतः परसूत्रे यत् 'शृदृप्रामि'ति—ह्रस्वो विधीयते स (ह्रस्वः) किति एव भवितुं युज्यते। अत उक्तं किति लिटि इति। एवं ह्रस्वपक्षे—पृ अतुस्—पृ पृ अतुस्—पर् पृ अतुस् उरत् (२२४५)—पपृतुस् ('हलादिः—,' 'इको यणचि')—एवं पप्रुरित्यत्र। दीर्घपक्षेतु—पपॄ अतुस् इति स्थिते उदोष्ठ्यपूर्वस्येति उत्। रपरत्वम्। पपरतुः। एवं पपरुरित्यत्र। परिता—परीता—वॄतो वेति दीर्घविकल्पः। अपिपः इति। पॄ लङ् सिप् इति स्थिते श्लौ द्वित्वे, अडागमे, अर्त्तिपिपर्त्योरिति अभ्यासस्य इत्त्वे, उत्तर खण्डस्य—(अपि पॄत्—अपिपपुर्त्) गुणे रपरत्वे, हल्ङ्यादिना—अपृक्तलोपे च अपिपर्—इति जाते, खरवसानयोरिति विसर्जनीयः। अपिपूर्त्तामिति। उत्त्वं। रपरत्वम्। हलि चेति दीर्घः। अपिपरुः—सिजभ्यस्तेति झेर्जुस्। जुसि चेति गुणः। अन्यत् पूर्ववत्। पिपूर्यात्—विधिलिङि रूपम् इत्त्वोत्त्वदीर्घाः प्राग्वत्। पूर्यात्—आशीर्लिङि। अपारीत्—लुङ्। सेट्त्वात् सिचिवृद्धौ अपार् इ स् ई त् इति स्थिते 'इट ईटि' (२२६८) इति सलोपः। केचिदित्यस्वरसद्योतनार्थम्। पाणिनि—मते दीर्घपाठस्यौचित्यादिति ज्ञेयम्। पिपूतः इति। दीर्घाभावादुदोष्ठ्येति न प्रवर्त्तते इति भावः। एवमन्यत्र। अपारीदिति। दीर्घस्य—सेट्त्वविधानाद् ह्रस्वस्य अनिट्कत्वम्। अतश्च इटः परत्वाभावात्सिज् लोपो नेति निष्कर्षः। छान्दसत्वं शप-मिति। दीर्घविधानाभावादिति हृदयम्। डुभृञ् इति। ड्वित्करणं 'ड्वितः क्त्रि' इत्यर्थम्। भृत्रिमम्। अनिडयं धातुः। ञित्वादुभयपदी—। श्लावित्त्वं स्यादित्याह—

२४९६। भृञामित्॥७।४।७६॥

दी—। 'भृञ्' 'माङ्,' 'ओहाङ्' एषां त्रयाणामभ्यासस्य इत् स्यात् श्लौ। बिभर्त्ति। बिभृतः। बिभ्रति। बिभृध्वे। श्लुवद्भावाद् द्वित्वेत्त्वे। बिभरामास। बभार। बभर्थ। बभृव। बिभृहि। बिभराणि। अबिभः। अबिभृताम्। अबिभरुः।

विभृयात्। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। माङ् १०८८ माने शब्दे च।

इत् ( इकार ) is the ( final ) substitute of the अभ्यास of the three roots भृ, मा and हा ( to go ) when श्लु follows. Thus भृ श्लु ति—भृ भरति—,=बिभर्ति by गुण। बिभृतः no guna because तस् is ङित्। बिभ्रति—झि is replaced by अति, cp—'अदभ्यस्तात्' ( २४७८ )। Then यणादेश। बिभृध्वे and not बिभृढ्वे because 'इणः षीध्वं—' (२२४७) does not apply here. श्लुवद्भावात् etc i.e. by 'भीह्रीभृ—' ( २४९१ ) we have द्वित्व in आम् and ह्रस्व comes by 'अर्ति—' (२४९३)। बभार—भृ णल्—भर् भार्, अ—भभार—बभार by द्वित्व, उरत् ( २२४४ ), वृद्धि, हलादिशेष and अभ्यासे चर्च। बभर्थ—in थल् there is want of इट् by 'ऋतो भारद्वाजस्य' ( २२९६ ) and in बभृव by 'क्रसृभृवृ—' (२२९३)। बिभृहि—no guna because हि is अपित्। बिभराणि just like जुहवानि, cp—( २४९१ )। अबिभः etc like अबिभः etc in ( २४९५ ). अभार्षीत्—सिच् does not elide for भृ is अनिट्। मा—to measure and to sound. आत्मनेपदी and अनिट्।

मित—। 'भृञामिति। 'निजां त्रयाणां गुणः श्लौ' ( २५०२—७।४।७५ ) इत्यव्यवहितं पूर्वसूत्रम्। तेन भृञामिति बहुवचनेन भृञादीनां त्रयाणामेवेति लभ्यते। तदाह—भृञ्माङ् ओहाङ्—एषामिति। अत्र 'लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह—अभ्यासस्येति। इदिति तपरत्वात्तपरस्तत्कालस्ये'ति ह्रस्वेकारमात्रस्य ग्रहणम्। बिभर्ति इति। श्लौ द्वित्वे—तिपः पित्त्वाद् गुणश्च। माङ्—मिमीते। ओहाङ्—जिहीते। त्रयाणां किम्—जहाति। श्लौ किम्—बभार। बिभ्रति—भेरदादेशे—यण्। आत्मनेपदे दर्शयति—बिभृध्वे इति। इणः परत्वेऽपि षीध्वमित्याद्यभावाद् मूर्धन्यादेशो नेति भावः। श्लुवद्भावाद् द्वित्वेत्त्वे इति। 'भीह्री

—' ( २४९१ ) इत्यनेन 'घर्त्ति—' (२४९३ ) इत्यनेन चेति भाव: । विभरामासेति । विभराम्बभूव इत्याद्यपि ज्ञेयम् । कर्मणि तु—विभराम्बभूवे इत्यादि । तथाच नैषधीयश्लोकः—'तपर्त्तुपूर्त्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे' । पक्षे—बभार 'बलिवयं चारुयभारवाला' इति कुमारे । बभर्थ इति—भारद्वाजनियमान्नेडिति भाव: । बभृव इति । 'क्रसभ्—' ( २३९२ ) इति क्रादिनियमादिडभाव: । बिभृहि हेरपित्वान्न गुण: । लङ्सिपि गुणे रपरत्वे हलङ्यादिनापृक्तलोपे विसर्जनीये च रूपम् । अबिभृताम्—इति तसः ङित्वान्न गुणः । अबिभरुः । सिजभ्यस्तेति जुस् । जुसि चेति गुण: । अभार्षीत् इति । अनिट्त्वेन इट: परत्वाभावात्—सिज्लोपाभावः । दीर्घ: । अभृत—इति तङ्पक्षे । 'लिङ्सिचावात्मनेपदेषु'—( २३०० ) इति कित्वान्न गुण: । 'ह्रस्वादङ्गात्' इति सिचो लोप: । माङ्—ङित्वादात्मनेपदी—' अनिट् । अथास्य अभ्यस्तत्वादाकारस्य ईत्वं स्यादित्याह—

२४९७ । ई हल्यघोः ॥ ६।४।११३॥

टी—। श्नाभ्यस्तयोरात ईत् स्यात् सार्व्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । मिमीते । 'श्नाभ्यस्तयोः—' ( २४८३ ) इत्याल्लोप: । मिमाते । मिमते । प्रणिमाता ॥ ओहाङ् १०८९ गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । ओहाक् १०९० त्यागे । परस्मैपदी । जहाति ।

ईत् ( ईकार ) is the substitute for the आ of श्ना and of अभ्यस्त roots but not of घुसंज्ञक roots ( दा and धा ) when a क्ङित् हल् ( त तस् थस् etc ) follows. Thus मा+ते—मा मा ते ( श्लु )—मि माते ( अजामित् )—मिमीते । 'श्नाभ्यस्तयो:—' etc obvious. मिमते by अदभ्यस्तात् ( 2479 ). प्रणिमाता—लुट् sing. third per. of मा with प्र and नि । णत्व by 'नेर्गदनदपतपदघुमा—' ( 2285 ). ओहाङ्—ओ is for

णत्व in निष्ठा, cp—'ओदितश्च' (3019) and ङ् indicates आत्मनेपद ; जिहीते—ज by 'कुहोश्चुः' and इ by 'भृञामित्' and ई by this rule. जिहाते etc like मिमाते etc. ओहाक् is परस्मैपदी। जहाति ; both are अनिट्।

मित—। ई इति लुप्तप्रथमाकम्। 'श्नाभ्यस्तयोरातः' इति सर्व्वमनुवर्त्तते। 'गमहन—' इत्यतः क्ङिति इति। 'अत उत्—' इत्यतः सार्व्वधातुके ईति च तदाह—श्नाभ्यस्तयोरित्यादि। घोरिति प्रसज्यप्रतिषेधस्तदाह—न तु घुसंज्ञकस्येति। तेन दत्तः धत्तः इत्यादौ ईत्त्वं न। क्ङिति किम्—लुनाति (क्र्यादिः)। मिमीते इति। भृञामिति अभ्यासस्य इत्वम्। श्नाभ्यस्तयोरिति स्पष्टम्। प्रणिमाते इति। प्र—णि—मा+लुङ् त। 'नेर्गदनद—' (२२८५) इति णत्वम्। ओहाङ् ओहाक इत्यादौ—ओदित्करणं निष्टानत्वार्थम्। तथाच सूत्रम्—'ओदितश्च' (३०१९)। हीनः, क्षुण्ण इत्याद्युदाहरणम्। जिहीते इत्यादि प्राग्वत्। कुहोश्चुरिति (२२४५) इत्यभ्यासस्य चुत्वम्। जहे इति। प्रथमैकवचने लिटि। ओहागिति। सुगमम्। अथ जहाते र्भृञामित्यनापरिगणितत्वात् तस्यापि इत्प्राप्ते च विशेष व्यवस्थामाह—

## २४९८। जहातेश्च ॥६।४।११६॥

**इत् स्याद्वा हलादौ क्ङिति सार्व्वधातुके। पक्षे ईत्त्वम्। जहितः—जहीतः। जहति। जही। जहितात्।**

इत् or इकार—is the optional substitute for the आ of हा (to give up) when a हलादि क्ङित् सार्व्वधातुक follows, इकार being optional in the alternative case ईत् or ईकार comes in by 'ईहल्यघोः' (2497). Thus जहितः etc. जहति—अदादेश। आल्लोप by श्नाभ्यस्तयोः—(2433). जही—लिट्+णल औ णलः। जहितात्—तातङ्। In हि there are three forms—

मित—। जहातेश्च ति। 'इद्दरिद्रस्य—' (६।४।११४) इत्यत इदिति। 'गमहन—' (६।४।९८) इत्यतः क्ङिति इति। 'अत उत्—' (६।४।११०) इत्यतः सार्वधातुके इति। 'ई हल्यघोः' (६।४।११३) इत्यतो हलि इति चानुवर्त्तते। तदाह—इत् स्यादीति। वेति 'भियोऽन्यतरस्याम्' (६।४।११५) इत्यतोऽनुवर्त्तते। पक्षे ईत्त्वमिति। ई हल्यघोरित्यनेनेत्यर्थः। जहति इति। 'श्नाभ्यस्तयोः—' (२४८३) इत्याल्लोपः। अदभ्यस्तादिति (२४७९) इत्यत्। जहाविति जिठि 'आत औ—' इति औकारादेशः। अभ्यासकार्य्यम्। जहितादितिलातङ्। हौ रूपत्रयमित्याह—

२४९९। आ च हौ ॥६।४।११७॥

टी—। जहातेर्हौ परे आ स्यात् चादिदीतौ। जहाहि—जहिहि—जहीहि। अजहात्। अजहुः। अजहाः।

आ and also इ and ई are the final substitutes for the आ of हा to leave, when हि follows. Thus जहाहि, जहिहि (by 'जहातेश्च') and जहीहि (by ई हल्यघोः)। अजहात्—लङ् तिप् is not किङत् hence no इत्त्व। अजहुः—अजहा+झुस् by 'सिजभ्यस्त—' (२२२६)—अजह् उस्—आलोप by 'श्नाभ्यस्तयोः—' (२४८३)—अजहुः no इत्त्व or ईत्त्व for उस् though किङत् is not हलादि। अजहाः—सिप् is not किङत् hence no इत्त्व or ईत्त्व।

मित—। आ चेति। 'जहातेश्च' इत्यतो जहातेरित्यनुवर्त्तते। तदाह—जहातेरिति। अथ सूत्रस्थस्य चकारस्य ज्ञापकत्वमाह—चादिदीतौ इति। चात्+इत्+ईत् इतिच्छेदः। तत्र इदिति जहातेश्चेत्यस्मात् ईदिति तु 'ई हल्यघोः' (२४९७) इत्यत इति यथायथं ज्ञेयम्। जहाहि—इत्यादि स्पष्टम्। अजहात्—तिपः कित्त्वाभावादित्त्वं न। तसि—अजहिताम्। अजहुरिति। 'श्नाभ्यस्तयो—(२४८३)

रित्याल्लोपे जौजुसिद्धपम्। उस: किद्वत्वेऽपि—हलादित्वाभावात् इत्त्वं न। अजहा: सिपि—। विधिलिङिविशेषमाह—

२५००। लोपो यि।६।४।११८॥

दौ—। जहातेरालोपः स्यात् यादौ सार्व्वधातुके। जह्यात्। 'एर्लिङि' (२३७४) हेयात्। अहासीत्। डुदाञ् १०९१ दाने। प्रणिददाति। दत्तः। ददति। दत्ते। ददौ। 'घ्वसोः—' (२४७१) इत्त्वेत्वाभ्यासलोपौ। देहि। अददात्। अदत्ताम्। अददुः। दद्यात्। देयात्। अदात्। अदाताम्। अदुः। अदित। डुधाञ् १०९२ धारणपोषणयोः दानेऽपीत्येके। प्रणिदधाति।

The आ of the root हा to abandon, disappears when a सार्व्वधातुक, having a य at the outset, follows. हा + यात्—हाहा यात्—जह् यात्—जह्यात्। in आशी.—हेयात् by 'ए:—(२३७४)। अहासीत्—लुङ्—by 'यमरमनमाताम्—' (२३७७)। डुदाञ—to give. By डु—दत्रिमम्। By ञ—उभयपदी; प्रणिददाति—णत्व by 'नेर्गदनद—' (२२८५)। दत्तः—दा + तस्—दादा तस्—ददा तस् by 'श्नाभ्यस्तयो:—' (२४८३)—दद् तस् by 'खरि च' (१२१)—दत्त:। ददति by 'अदभ्यस्तात्—'। दत्ते—as in दत्तः। ददौ—by 'आत औ—'। In देहि we have एत्व and अभ्यासलोप by 'घ्वसो:—' (२४७१)। अददु: by आलोप and जुस्। दद्यात्—विधिलिङ्। देयात्—आशी:—by 'एर्लिङि'। अदात्—अदाताम् etc. लुङ्—elision of सिच् by 'गातिस्थाघुपाभूभ्य: सिच:—'। In लुङ् the आत्मने form is—अदित—अदा सिच् त—अदि सिच् त by 'स्थाघ्वोरिच्च' (२३८९)—अदि o त by 'ह्रस्वादङ्गात्' (२३६७)—अदित and this इ is not gunnated owing to the कित्त्व of सिच् by 'स्थाघ्वो—' mentioned above. डुधाञ् etc. easy.

मिन—। लोप इति। जहातेर्य्यसो जहातेरिति। श्नाभ्यस्तयोरात (६।४।११२) इत्यत आत इति चानुवर्त्तते। 'अत उत्—' इत्यतः सार्व्वधातुके इति च। यि इत्यस्य 'सार्व्वधातुके'इत्यनुवृत्तिलभ्यस्य विशेषणत्वेन तदादिविधिरित्याह—जहातेरात लोप इति। अहासीत् इति लुङि—यमरमनमातां सक् चेति (२३७७) सक् इडागमश्च। डुदाञ्—जित् उभयपदी—। द्विर्त्वे न—ददिमम् इति। प्रणिददाति इति—'नेर्गद—' (२२८५) इति णत्वम्। दत्त इति ददा तस् इति स्थिते ई हल्घ्वोरित्यत्र 'अघो'-रिति निषेधात् ईत्वाप्राप्तौ: 'श्नाभ्यस्तयो—' (२४८२) इत्यालोपः। दद् तस्, ततो खरि चेति (१२१) चर्त्वेन रूपम्। एवं दत्त इत्यादि। ददति—अदभ्यस्तादित्यत्। एवं दधति। अदधत्—स्पष्टम्। अददुः—आल्लोपः। जेर्जुस्। दद्यादित्यादि—जह्यादित्यादिवत्। अदात् इति 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिज्लोपः। सिज्लोपाच्च 'अस्तिसिचोऽपृक्ते' इति न प्रवर्त्तते। अनिट्कत्वान्नेट्। अदुरिति लुङि। अन्यत् प्राग्वत्। अदित इति—लङ् पचे लुङि। तदेव' अदा सिच् त इति स्थिते स्थाघ्वोरिच्चेति इत्वे सिचः कित्त्वं च गुणाभावेन अदि स् त इति जाते ह्रस्वादङ्गादिति सलोपः—अदि त। डुधाञ् इति डुदाञ् वत्।

२५०१। दधस्तथोश्च ॥८।२।३८॥

दो—। द्विरुक्तस्य झषन्तस्य धाधातोर्वशो भष् स्यात् तथयोः परयोः स्ध्वोश्च परतः। वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ। वस्तुतस्तु 'पूर्व्वत्रासिद्धीये न स्थानिवत्'—धत्तः। दधति। धत्थः। धत्थ। दध्वः। दध्मः। धत्ते। धत्से। धद्ध्वे। धेहि। अधित।

अथ त्रयः स्वरितेतः। निजिर् १०८३ शौचपोषणयोः।

भष् is the substitute for the वश् of the root धा—after it has been duplicated and yet has झष् letter at the end—when त

and ध as also स् and ध्व follow. The plain meaning is this :— the term, 'दधः' in the sutra is the genetive ( षष्ठी ) of the form दधा which is the result of duplication of धा ; of दधा—द is बश् ( ब गडदश् ) which therefore is replaced by ध or भष् ( भषंघव् ), दधा becomes झषन्त धा दध् when आल्लोप is effected by 'श्नाभ्यस्तयोरातः' (2433). Thus with तस्—added we have दध् तस् = ध ध् तस्— । Now a difficulty arises—by 'अचः परस्मिन् पूर्व्वविधौ' ( ५० ), this elision of ( आल्लोप ) is स्थानिवत् because the operation is made on the preceding letter द ( of दध् ) । And what does स्थानिवत् mean here ? It mean that the आ, in spite of its elision, is inevitably occupying its position. If so then दध् is as good as दधा ( in substance ). Thus ( दध् ) ceases to be झषन्त । And consequenly the rule fails. So to solve this difficulty Madhava and Vamana assert that on the authority of the Panini's expression, 'दधः—', आल्लोप here should not be considered as स्थानिवत् । But Bhattoji is opposed to this opinion on the ground that Panini has purposely so expressed to indicate the existence of the परिभाषा— "पूर्व्वत्रासिद्धीये न स्थानिवत्" i.e. the स्थानिवद्भाव will not take effect with reference to operations laid down under 'पूर्व्वत्रासिद्धम्' ( ८।२।१ )। Hence Bhattoji's is the more scientific or accurate method of explanation.

मित— । दध इति । दधः + तथोः + च इतिच्छेदः । दध इति कृतद्वित्वाभ्यास— कार्यस्य धाधातोर्ग्रहणम् । तथोरिति तकार—थकारयोः प्रत्यययोर्ग्रहणम् । चकारेण— 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (३२६—८।२।३७) इत्यतः स्ध्वोरित्यस्य समुच्चयः । किञ्चतस्माद झषन्तस्य बशो भष्—इति चानुवर्त्तते । तदाह—दिक्त्वश्चेत्यादि ।

तदेवं धा + तस् इति स्थिते द्वित्वे, अभ्यासस्य ह्रस्वे जश्त्वे च दधा तस् इति भवति। ततश्च दध् इत्यस्य झषन्तत्वेन पूर्व्वावयवस्य दकारस्य वशत्वेन भष्भावो धकारो विधीयते। तदेतद् धकारविधानं व्यर्थम्। 'अचः परस्मिन् पूर्व्वविधौ' (५०) इत्यनेन हि आल्लोपस्य स्थानिवत्त्वम्—लुप्तस्यापि आकारस्य भूतपूर्व्वगत्या अवस्थितिरस्तीति स्थानिवत्त्वार्थः। यतः दकारस्य धकारविधानरूपः पूर्व्वविधिरत्र कर्त्तव्य एव। एवं सति आकारस्य तत्त्वतः (स्थानिवत्त्वेन) सत्वात् झषन्तत्वम् (धकारान्तम्) कथमिति अनिष्टपत्तौ प्राप्तायाम् प्रथमं वामनमाधवयोः समाधानप्रकारं दर्शयति—वचनसामर्थ्यादिति। यद्यपि सूत्रपर्य्यालोचनया यथोक्तं कार्य्यं न सिध्यति तथापि 'धत्त' इत्यादिसिध्यर्थं 'दधः इति यत्नात्—आचार्य्येण पाणिनिना उक्तमतस्तद्वचनमेवात्र प्रमाणमिति कृत्वा अत्र आल्लोपो न स्थानिवदिति निगमनीयमिति तयोर्भावः। तदेतेन मतेनापरितुष्यन् स्वमतं व्यनक्ति—वस्तुतस्त्विति। पूर्व्वत्रासिद्धीये इति पूर्व्वत्रासिद्ध + भवार्थे छः। पूर्व्वत्रासिद्धम् (८।२।१) इत्यसिद्धकाण्डे यो यो विधिरारब्धस्तत्र तत्र स्थानिवद्भावो नादर्त्तव्य इति परिभाषार्थः। अतः परिभाषाबलादेव सिद्धं वचनसामर्थ्याश्रयणरूपः क्लेशो न कर्त्तव्य इति दीक्षितस्याशयः। तदेवं भष्भावेन धध्तस् इति स्थिते द्वितीयधकारस्य 'खरि चे'ति (१२१) चर्त्वेन तः। ततो रूपम्। दधति—अत्। धत्थः—पूर्व्ववद् भष्भावचर्त्वादि। सुध्वोः इत्यस्योदाहरणे—धत्से। धद्ध्वे इति। दध्वः। दध्मः। प्राग्वदाल्लोपः। धत्ते—चर्त्वम्। धेहि—एत्वाभ्यासलोपौ। अधित—लुङि तङ्पक्षे—स्थाघ्वोरिच्चेति आकारस्य इदादेशः सिचः कित्त्वेन गुणाभावः। ह्रस्वादङ्गादिति सिचो लोपः। परस्मै—पदे तु—अधात् इत्यादि।

अथ त्रय इति। निजिर्, विजिर् विष्लृ इत्येते इत्यर्थः। स्वरितेत इति, उभयपदिन इत्यर्थः। निजिर्—इरित्, णोपदेशः, अनिदित्, अनिट् च।

२५०२। निजां त्रयाणां गुणः श्लौ ।।७।४।७५।।

टी—। णिजिर्, विजिर्, विष्लृ एषामभ्यासस्य गुणः

स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेक्ता। नेक्ष्यति। नेनेक्तु। नेनिग्धि।

The reduplicate (अभ्यास) of the roots णिज्, विज् and विष् gets गुण when श्लु is affixed. निज्+तिप्—निनिज् ति (श्लु)—नेनेज् ति (पुगन्तलघूपधस्य च—२१८९)—नेनेक् ति by चोः कुः (३०८)। नेनिजति by अदादेश। नेक्ष्यति—निज् स्यति नेज् स्यति etc. नेनिग्धि—हि is अपित् hence no guna. हि becomes धि by 'हुझल्भ्यो—(२४२५)। Now to have the 'लघूपधगुण' in आनिप् etc. is forwarded the rule :—

मित—। निजामिति। 'श्लव लोपः—' इत्यतोऽभ्यासस्येति वर्तते, अत आह—एषामभ्यासस्येति। नेनेक्ति इति। णो नः—इति नत्वम्। श्लाविति द्वित्वम्। अनेन अभ्यासगुणः। 'पुगन्त—' (२१८९) इत्यनेन च धातूपधगुणः, चोः कुरिति (३०८) इति जस्य कः। नेनिक्तो इत्यादि तङ्पर्यं इति त्रयम्। नेनिजति—अदादेशः। ङित्त्वाद् लघूपधगुणाभावः। नेक्ता—नेक्ष्यति—लघूपधगुणः कुत्वं च। नेनिग्धि इति। अनेनाभ्यासगुणः। हेरपित्वाद् लघूपधगुणो न। 'हुझल्भ्यो—' इति हेर्धिरादेशः। अथानिप् इत्यादौ पकारसत्त्वेऽपि लघूपधगुणो न स्यादित्याह—

२५०२। नाभ्यस्तस्याचि पिति सार्व्वधातुके ॥ ७।३।८७ ॥

दी—। लघूपधगुणो न स्यात्। नेनिजानि। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। नेनिज्यात्। अनिजत्—अनैक्षीत्। अनिक्त। विजिर् १०९४ पृथग्भावे। वेवेक्ति—वेविक्ते। विविजिथ। अत्र 'विज इट्' (२५३६) इति ङित्त्वम् न, 'ओविजी' इत्यस्यैव तत्र ग्रहणात्। 'निजिविजो' रुधादावपि। विष्लृ १०९५ व्याप्तौ। वेवेष्टि—वेविष्टे। लृदित्वादङ्। अविषत्।

तङि क्सः। अजादौ—'क्सस्याचि' (२३३७) इत्यल्लोपः। अवि-क्षत ? (*)। अविक्षाताम्। अविक्षन्त।

The इक् of the short penultimate of an अभ्यस्त root is not gunnated when an अजादि पित् सार्वधातुक follows. Thus—निनिज्, आनिप्—नेनिज् आनि—नेनिजानि—but the अभ्यास gets गुण by the former rule 'निजां त्रयाणाम्—' (२५०२)। अनेनेक्—निज्—लङ् तिप्—अट् नेनेज् त् by अडागम, अभ्यासगुण and लघूपधगुण—अनेनेज् ० by 'हल्ङ्यादि—' (२५२)—अनेनेक् by 'वाऽवसाने' (२०६)। In तस अनेनिक्ताम्—no guna, तस् being ङित्; similarly in झि, अनेनिजुः with जुस and without गुण। नेनिज्यात्—(विधिलिङ्)—यासुट्—ङित्। निज्यात्—आशीः—श्लुभाव is in सार्वधातुक only; hence no duplication. In लुङ्—अनिजत्—अनैक्षीत्। अनिजत् is formed with अङ् in place of च्लि by 'इरितो वा' (२२६९) and अङ् being ङित् the penultimate is not gunnated whereas अनैक्षीत् is formed with 'सिचि वृद्धिः—' (२२९७) and its ज is changed into क by 'चोः कुः' (२७८) and as the root is अनिट् so सिच् does not elide but is changed into ष by 'इण्कोः and आदेश—' (२११—१२)। In आत्मने—the form is अनिक्त—अनिज सिच् त—अनिज् त, by 'झलो झलि' (2281) सिच् is dropped; then कुत्व of ज by 'चोः कुः'। विजिर् to make or remain apart. वेवेक्ति etc. like निजिर्। This जुहोत्यादि विज will have गुण—in connection with the aug. इट् in थल् (thus विवेजिथ) because the prohibition of गुण by the rule 'विज इट्' (२५३६) refers to विज् read as 'ओविजी'

---

(*) अविक्षत इति 'अजादौ' इत्यस्मात् प्राक् पठनीयमिति मिताभाषिण्यां तदुक्तमनु-सन्धेयः।

(भयचलनयोः)—१२९० under तुदादि। निज् and विज् are also read in रुधादिगण। विष्लृ—विष्—लृदित् easy: लृदित्वादङ् i·e by the rule 'पुषादिद्युताद्यलृदितः परस्मैपदेषु' :( २३४३ )। अविचत etc. see under 'शल इगुपधात्—' ( २३३६ )।

निजा—। नाभ्यस्तस्येति। 'मिदेर्गुणः' (७।३।८२) इत्यतो गुण इति। 'पुगन्त-लघूपधस्य च' (७।३।८६) इत्यतो 'लघूपधस्य' इति चानुवर्तते। अतः शेषपूरणेन व्याचष्टे—लघूपधगुणो न स्यादिति। पुगन्त इति तु नानुवर्तते। अभ्यस्तस्य तदसम्भवादिति भावः। अयं सम्मिलितार्थः—'अभ्यस्तस्य धातोर्लघूपधस्याङ्गस्य इको गुणो न स्यादजादौ पिति सार्वधातुके' इति। नेनिजानि इति। निजां त्रयाणामिति अभ्यासस्य गुणः। अनेनेक् इति। लङि—अनिनिज् त् इति स्थिते अभ्यासगुणः, लघूपधगुणः, तकारस्य हल्ङ्यादिलोपः, जस्य कुत्वं चेति। अनेनिजाम्—इति। तसस्तामादेशो गुणाभावश्च। अनेनिजुः—झेर्जुसि गुणाभावे रूपम्। नेनिज्यात्—विधिलिङि यासुट्। ङित्त्वाद् लघूपधगुणाभावः। निज्यात्—आशिषि—कित्त्वाद् गुणाभावः। श्लुवत्त्वाभावाद् द्वित्वाभावः। अनिजत्—अनैक्षीत् इति। उभे लुङि प्रथमैकवचने रूपे। प्रथमं 'इरितो वा' ( २२६९ ) इत्यङि। अपरन्तु सिचि वृद्धौ, जस्य कुत्वे, सिचः षत्वे च सिध्यति। विजिर्, निजिर्वत्। विवेजिथ इति। थलि 'विज इट्' ( २५३६ ) इति गुणनिषेधे प्राप्ते आह—अवेति। ओविजी इति १२९० संख्यकम्। तच्च तुदादौ पठितम्। विष्लृ—इति। स्पष्टम्। लृदित्वा दङ् इति। पुषादि ( २३४३ ) सूत्रेणेत्यर्थः। आत्मनेपदपक्षे क्स इत्याह—लङि क्स इति। 'शल इगुपधादनिटः—' ( २३३६ ) इत्यनेनेति भावः। अजादाविति—एतत्तु 'अविचत' इत्यस्मादूर्ध्वं पठितुं युक्तम्। अत्र अजादिप्रत्यय परकत्वाभावादिति ज्ञेयम्। अतएव इतो प्रश्नसूचकचिह्नं प्रदत्तमिति दिक्।

दो—। अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च। घृ
१०८६ क्षरणदीप्त्योः। जिघर्म्यग्निं हविषा घृतेन। 'श्रुत्वामित'

(२४८६)। 'बहुलं छन्दसि' (३५९८) इतीत्वम्। हृ १०८७ प्रसह्यकरणे। अयं सुवोऽभिजिहर्त्ति होमान्। ऋ १०८८ सृ १०८९ गतौ। 'बहुलं छन्दसि' (३५९८) इत्येव सिद्धे 'अर्त्तिपिपर्त्त्योश्च' (२४८३) इतीत्वविधानादयं भाषायामपि। 'अभ्यासस्यासवर्णे' (२२९०) इतीयङ्। इयर्त्ति। इयृतः। इयृति। आर। आरतुः। 'इडत्यर्त्ति—'(२३८४) इति नित्यमिट्। आरिथ। अर्त्ता। अरिष्यति। इयराणि। ऐयः। ऐयृताम्। ऐयरुः। इयृयात्। अर्य्यात्। आरत्। ससर्त्ति। भस ११०० भर्त्सनदीप्त्योः। बभस्ति। 'घसिभसोर्हलि—' (३५५०) इत्युपधालोपः। 'झलो झलि' (२२८१) इति सलोपः। बब्धः। बप्सति। कि ११०१ ज्ञाने। चिकेति। तुर ११०२ त्वरणे। तुतोर्त्ति। तुतूर्तः। तुतुरति। धिष ११०३ शब्दे। दिधेष्टि। दिधिष्टः। धन ११०४ धान्ये। दधन्ति। दधन्तः। दधनति। जन ११०५ जनने। जजन्ति।

Now, up to the end of the जुहोत्यादि class, are dealt with the roots that are परस्मैपदी as also Vedic. घृ to drip and to shine. Thus जिघर्म्मि etc. घृ+मिप्—घृ घृमि (by श्लु)—घ घर् मि—जघर्मि—जिघर्म्मि—the अभ्यास gets इत्व directed by 'भृञामित्' although घृ is not included in the भृञादि list, by the rule 'बहुल—' (३५९८)। हृ to perform by force, like घृ। ऋ, सृ to go. इत्व enjoined for भृञ्, माङ् and ओहाङ् by 'भृञामित्' might have been transferred to ऋ also by the rule (बहुलं छन्दसि—३५९८) and there was no need of taking ऋ with पृ in the rule 'अर्त्तिपिपर्त्त्योश्च'

( २४९२ )। This indicates that the root ऋ is used in classical sanskrit ( भाषा ) as well. Thus ऋ+तिप—ऋ ऋ ति ( by श्लु )—इर् अर् ति ( 'अर्त्ति—' gives इर् and 'सार्व—' ( 2168 ) gives अर्, रपरत्व is by उरण्—इ अर्त्ति (by 'हलादिः—')—इयङ् अर्त्ति (by 'अभ्यासस्य—')—इय् अर्त्ति—इयर्त्ति। इयृतः—here तस् being ङित् the second ऋ is not gunnated thus इय् ऋतः। इयृति—here इयृ+अति (अदभ्यस्तात्) gives occasion to यण् ( इको यणचि )। आर—लिट; the अभ्यास becomes अर्—by 'उरत्' (२२४५) and the next (ऋ) becomes आर् by 'ऋच्छत्यृताम्' (२२८३) then उपधावृद्धि and finally by हलादिः—and 'अकः सवर्णे—'=आर। इयराणि—ऋ+आनि (लोट्)—ऋ ऋ आनि—इर् अर् आनि by 'अर्त्ति—' and 'आडुत्तमस्य पिच्च'—इ अराणि ('हलादिः—') इयङ् अराणि—'अचि श्नु—' ( २०१ )—इयराणि। ऐयः—ऋ लङ् तिप्—ऋ ऋत् by श्लौ—इर् अ त्—इर् अर् ० by 'हलादि—,' 'अचि श्नु—' and 'हल्ङ्याब्—' आट् इयर by आडजादीनाम्—ऐयः by वृद्धि—(आटश्च—२६९)। ऐयरुः—by अदभ्यस्तात् and झेर्जुस्। इयृयात् विधिलिङ्—इयङ् and गुणाभाव of the next ऋ owing to ङित्त्व of यासुट्। अर्यात्—आशीः—ऋ+यात्, here गुण is effected in spite of the ङित्त्व of यासुट् by the rule 'गुणोऽर्तिसंयोगाद्योः' ( २३८०—७।४।२९)। आरत् (लुङ्)—ऋ+च्लि+तिप्—ऋ+अङ् त् by 'सर्त्तिशास्त्यर्तिभ्यश्च' (२३८२) अर् अत् by 'ऋदृशोऽङिगुणः' (२४०६)—आट् अरत्—'आडजादीनाम्'—आरत्। ससर्त्ति—सृ+लट् तिप्। बभस्ति by श्लु etc. बब्धः—भस्+तस्—भस् भस् तस् ( श्लौ )—बभस् तस् ( 'हलादिः—' and 'अभ्यासे चर्च' )—बभ्स् तस् by 'घसिभसोः—' ( २५५० ) अ of भ is dropped. बभ् तस् by झलो झलि ( २२८१ )—बभ् धस् by 'झषस्तथोर्धोऽधः' (२२८०)—बब् धस् by 'झलां जश्—' ( ५२ )—बब्धः। बप्सति—बभस् अति—'घसिभसोः—' २५५० and अदभ्यस्तात् )=बभ्सति—बप्सति by 'खरि च' ( १२१ )। ज्ञि to know.

चिकेति by हित्व etc. and 'कुहोश्चुः' (२२४५)। तुर to look sharp, to hurry etc. तुतोर्त्ति—तुर् तुर् ति—तुतोर्त्ति। तितुर्यः—दीर्घ by 'हलि च' (३५४)। दिवेष्टि etc. धन to acquire or have paddy। धन् धन्ति—दधन्ति। जन to give birth to. Easy.

मित—। अथ आगणान्तादिति—जुहोत्यादिगणसमाप्तिपर्यन्तमित्यर्थः। छान्दसा इति—एते छन्दस्येव प्रयुज्यन्ते न भाषायामित्यर्थः। ननु तर्हि वैदिकप्रकरणे एवोच्यन्तामिति चेत्। न। जुहोत्याद्यन्तर्भूतत्वेन तत्रैवोक्तेः समीचीनत्वादिति ध्येयम्। घृ इति। प्रयोगमाह—जिघर्त्ति इत्यादि। अथ जिघर्त्तिसाधनप्रकारमाह—भृञामित् इति। यद्यपि घृधातोर्भृञादित्वाभावादित्त्वं न प्राप्नोति तथापि छान्दसत्वात्तदपि द्रष्टव्यमित्याह—'बहुलं छन्दसी'ति। तदेवं द्वित्वे, हलादिशेषे, अभ्यासस्येत्त्वे धातोर्गुणे च रूपं सिद्धम्। प्रसह्यकरणे इति। प्रसह्य तु हठार्थकमित्यमरः। अतएवाभिसह्यकरणे इत्यर्थः। प्रयोगमाह—अयमिति। अभिजिहर्त्ति इति। अभिपूर्व्वात् हृतो रूपम्। ऋ सृ इति। ऋधातोश्छान्दसत्वेऽपि भाषायामपि प्रयोगोऽस्तीत्याह—बहुलं छन्दसीत्येव सिद्धे इति। तथाच 'अर्त्ति—' इत्यत्र अर्त्तेग्रहणेऽपि इत्त्वं स्यादेव 'बहुल छन्दसी'त्युक्तत्वात्। अतः पिपर्त्तिसाहचर्य्याद्धातोरपि भाषायां प्रयोगोऽस्ति इति गम्यते इति भावः। नागेशस्तु 'नायं सार्व्वत्रिक' इति भाष्यस्वरसादित्याह। इयर्त्ति इति। ऋ तिप् इति स्थिते श्लौ द्वित्वे अभ्यासस्येत्त्वे धातोर्गुणे च इर् अर् ति इति भवति। ततो हलादिशेषे—'अभ्यासस्यासवर्णे' (२२९०) इतीयङादेशे च—इय् अर्त्ति—इयर्त्ति इति। तसि गुणाभावादियङादेशाच—इयृतः। झौ तु अदादेशे अभ्यासस्येयङि ङित्त्वाद् गुणाभावे च इयु अति इति स्थिते यणादेशः। आर इति + लिटि ऋ + णल् इति स्थिते द्वित्वे 'अतो ञ्णिति' (२५४) इत्यपेक्षया 'ऋच्छत्यृताम्' (२३८३) इति गुणविधायकशास्त्रस्य परत्वाद् इदं रप्राप्तं गुणः। हलि चेति (३५४) उपधादीर्घः। अभ्यासस्य तु 'उरत्' (२२४४) इति अत्वम् 'उरण्—'इति रपरत्वं च। एवम् अर् आर् अ इति जाते हलादिशेषः सवर्णदीर्घश्चेति भावः। एवमारतुरित्यत। आरिथ इति। भारद्वाजनियमात् इण्निषेधे प्राप्ते आह—इडत्यर्त्ति—इत्यादि। इडप्राप्ति

इति। द्वित्वेत्वगुणहलादिशेषेयङादेशयत्वानि। ऐय इति लिटि प्रथमैकवचने रूपम्। ऋ तिप् इति स्थिते द्वित्वे अभ्यासस्य इत्वे धातोर्गुणे हलादिशेषे हल्ङ्यादिलोपे च इ अर् इति। इयङ्। इय् अर्। आडजादीनामित्याट्। आ इयर्। आटश्चेति वृद्धिः। ऐयः—ऐयर् लावस्थायामेव अट् इति मतेऽपि न दोष इति शेखरे स्पष्टम्। ऐयृताम् इति—तसः क्ङित्त्वाद् गुणाभावः। ऐयरुः इति—झेर्जुस्। जुसि चेति गुणः। इयृयात्—विधिलिङि रूपम्। यासुटो ङित्त्वादगुणः। श्लुवद्भावाद्द्वित्वादि पूर्ववत्। अर्यात् इति—आशिषि रूपम्। अत्र यासुटः कित्त्वेऽपि ( ऋ+यात् इति स्थिते ) 'गुणोऽर्ति-संयोगाद्योः' ( २३८० ) इति गुणः। अर्यात् न च 'अकृत्सार्व—' इति दीर्घः स्यादिति वाच्यम्। तस्य 'रिङ् शयग्लिङ्क्षु' ( २३६७ ) इत्यनेन बाधात्। ननु तर्हि 'रिङ्' एवास्तु इति चेत्। न। तस्य हि 'गुणोऽर्ति—' इत्यनेन बाधः स्पष्टः। अतो गुण एवात्र स्यादिति बोध्यम्। आरत् इति—लुङि प्रथमैकवचनम्। ऋ+च्लि+तिप् इति स्थिते 'सर्त्तिशास्त्यर्त्तिभ्यश्च' ( २३७९ ) इति च्लेरङ्। ऋ अङ् त्। तत 'ऋदृशो ऽङि गुणः' इति गुणे आडागमे च आट अर् अत् इति जाते रूपसिद्धिः। ससर्त्ति इति—सृधातो रूपम्। भसेति। बब्ध इति। भस् तस् इति स्थिते द्वित्वहलादिशेष-जश्त्वेषु कृतेषुबभस् तस् इति। ततो घसिभसोरिति भस् इत्यस्य उपधास्थस्य अकारस्य लोपे बभ्स् तस् इति। झलोझलीति सलोपः। बभ् तस्। झषस्तथोर्धोऽधः। बभ् धस्। 'झलां जश् झशि' ( ५२ )। बब् धस्—बब्धः इति। बप्सति इति। बभस् झि इति स्थिते पूर्ववल्लोपे झेरदादेशे च बभ् स् अति इति। ततो बभ् सति। ततो बप्सति, खरि चेति चर्त्वेन भस्य पः। कीति—प्राग्वद् द्वित्वादि। कुहोश्चुरिति अभ्यासस्य चुत्वम्। तुर् इति। तुतोर्त्ति इति। द्वित्वादि। धातोर्लघूपधत्वाद् गुणश्च। धिषेष्टि इति। धन धान्ये इति। धान्यार्जने इत्यर्थः। दधन्ति इत्यादि सुगमम्।

२५०४। जनसनखनां सञ्झलोः ॥६।४।४२ ॥

दी—। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च। जजातः। जज्ञति। जजंसि। जजान।

जजायात्—जजन्यात्। जायात्—जन्यात्। गा ११०६ स्तुतौ। देवाञ् जिगाति सुम्नयुः। जिगीतः। जिगति।

इति तिङन्तजुहोत्यादिप्रकरणम्।

आकार is made the final substitute of these roots जन, सन् and खन् when a झलादि (having a झल् letter in the beginning) सन् or a झलादि किङ्त् (कित्, ङित्) affix follows. तस् is ङित्—thus जजातः (द्वित्व etc. as before) where न makes room for आ। In सन् जिजासति, सिषासति etc. जज्ञति—जजन्+अति—जज्न् अति by 'गमहनजनखन-घसां लोपः क्ङित्यनङि' (२३६३) because, though अति is ङित् yet it is not झलादि; hence no आकारादेश—जज्ञ् अति by 'स्तोः श्चुना श्चुः' (१११)—जज्ञति। जजंसि—अनुस्वार by 'नश्चापदान्तस्य झलि' (१२३)। जजान लिट्। जजायात्—जजन्यात् by 'ये विभाषा' (२३१९) in विधिलिङ्। जायात्—जन्यात्—आशीः। गा to Praise. देवान् etc. i. e. 'one desirious of wealth praises the gods.' जिगाति by द्वित्व, ह्रस्व, चुत्व etc. as before.

Here ends the जुहोत्यादि chapter.

मित—। जनसनखनामिति। 'विड्वनोरनुनासिकस्यात्' (६।४।४१) इत्यत 'आत्' इत्यनुवर्तते। जनसनखनामिति च षष्ठ्या निर्दिष्टम्। तेन अलोऽन्त्य-परिभाषा चोपतिष्ठते। तदाह—एषामाकारोऽन्तादेशः स्यादिति। सन्झलोरिति द्वन्द्वात् सप्तमीद्विवचनम्। सनि झलि चेत्यर्थः। तत्र सनीति विशेष्यम्। झलिति च विशेषणम्। किञ्च 'अनुदात्तोपदेश—' (६।४।३७) इत्यतः क्ङिति इति च प्रत्ययान्तरं विशेष्यमनुवर्तते। ततो झलिति विशेषणमावर्तते। अतस्तदुभयतास्य तदादिविधिमाश्रित्य—व्याचष्टे—झलादौ सनि झलादौ क्ङिति इति चेति। भाष्ये तु 'अथ किमर्थं समुच्चयः सनि च झलादौ चेति। आहोस्वित् सन्विशेषणं झलादाविति। किं चातः। यदि समुच्चयः सनि अझलादावपि प्राप्नोति। सिसनिषति......।

अथ सन्विशेषणं झल्ग्रहणम्। जातः जातवानित्यत्रापि प्राप्नोति।......यत्तु 'नार्थो झल्ग्रहणेन। योगविभागः करिष्यते। जनसनखनामनुनासिकस्याकारो भवति झलि क्ङिति। ततः सनि च। सनि च जनसनखनामनुनासिकस्याकारो भवति झलीत्येव। तत्रानार्थो झल्ग्रहणेन।' इत्येवं झल्ग्रहणं प्रत्याख्याय व्याख्यातमिति दिक्। जजातः इति। ततो झलादिक्ङित्त्वादाकारः। जज्ञति इति—अदभ्यस्तादिति जजन् अति इति स्थिते 'अति' इत्यस्य झलादित्वाभावात् आकारादेशो न किन्तु 'गमहनजन—' इत्युपधालोप एव। तथा च जज्न् अति इति जाते नकारस्य स्तोः श्चुना श्चुरिति (१११) श्चुत्वेन ञ्। ततो रूपम्। जजंसि इति। नश्चापदान्तस्य झलीति अनुस्वारः। जजायात्—जजन्यात्—इति विधिलिङि 'ये विभाषा' इति आत्वविकल्पः। एवमाशिषि जायात्—जन्यादिति। गा इति। देवान् जिगाति (स्तौति) सुम्नयुः (धनेच्छुः)—इति मन्त्रार्थः। तत्र जिगाति इत्यत्र प्राग्वद् द्वित्वेत्वादि। जिगीतः इति—('ई हल्यघो'रिति ईत्वम्)। अन्यत्र श्नाभ्यस्तयोरित्यालोपे झेरदादेशे च रूपमिति बोध्यम्।

॥ इति मितभाषिण्यां तिङन्तजुहोत्यादिप्रकरणम् ॥

अथ

# तिङन्तदिवादि-प्रकरणम्



दी—। दिवु ११०७ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। झॄषन्ताः परस्मैपदिनः।

दिव् means to play, to desire to win, to play at dice etc, ( with a pledge ), to shine, to praise, to enjoy, to take pride, to sleep, to desire and to move. It is सेट् but being उदित् it is optionally सेट् in क्त्वा by the rule 'उदितो वा' ( ३३२८ ) and always अनिट् in निष्ठा by the rule 'यस्य विभाषा'। We take up roots (beginning with दिव् ) upto झॄष् ( ११३१ ) which are all परस्मैपदी।

मित—। अथ श्यन्विकरणदिवादयः साध्यन्ते। दिवु इति। उदित्करणं निष्ठायामनिडर्थं क्त्वायामिड्विकल्पार्थं च। क्त्वायाम्—देवित्वा, द्यूत्वा। निष्ठायाम्—द्यूतम्। क्रीडायामकर्मकः—दीव्यन्ति माणवकाः। विजिगीषायाम्—शत्रुं दीव्यन्ति—विजिगीषन्ते इत्यर्थः। झॄषन्ता इति। जॄष् झॄष् ( ११३१ ) वयोहानौ इत्यन्ता इत्यर्थः।

२५०५। दिवादिभ्यःश्यन् ॥ ७।१।६९ ॥

दी—। शपोऽपवादः। 'हलि च' ( ३५४ ) इति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत्। षिवु ११०८ तन्तुसन्ताने। परिषिषेव। न्यषेवीत्—न्यसेवीत्। स्रिवु ११०९

गतिशोषणयोः। ष्टिवु ११११० निरसने। केचिदिहेमं न पठन्ति। ष्णुसु ११११ अदने। 'आदाने' इत्येके। 'अदर्शने' इत्यपरे। सुष्णोस। ष्णसु ११११२ निरसने। स्नस्यति। सस्नास। क्नसु १११३ ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। चक्नास। व्युष १११४ दाहे। वुव्योष। प्लुष १११५ च (दाहे इत्येव)। नृती १११६ गात्रविक्षेपे। नृत्यति। ननर्त्त।

श्यन् is attached after the roots of the दिवादि class. This supersedes शप्। [N. B.—note 'कर्त्तरि शप्' is the rule in general for all roots and श्यन्, श, श्नम्, लुक, श्लु etc are special ones]. दीव्यति—here the root is not gunnated for श्यन् is not पित् but ङिद्वत् or ङित् by 'सार्व्वधातुकमपित्'। दिदेव—लिट्—गुण by 'पुगन्तलघूपधस्य च' (२१८९)। Similarly देविता, देविष्यति। अदीव्यत्—लङ्। दीव्येत्—दिव+श्यन् विधिलिङ् यात्—दीव्य+यात्=दीव्य इय् त् by 'अतो येयः' (२२१२)—दीव्येत् य-लोप by 'लोपो व्योर्वलि' (८७५)। दीव्यात्—आशीः। दिव यात्—दीव्यात् by 'हलि च' (३५४)। अदेवीत् लुङ्। षिवु (सिव्)। It is षोपदेश। सीव्यति etc. परिषीव्यति, षत्व by 'परिनिविभ्यः सेवसितसयसिवु—' (२२७५)। परिषिषेव—first षत्व is by 'परिनि—' above and the second by 'इण्कोः, आदेश—' (२११, २१२) for the restriction under (स्थादिष्वभ्यासेन चाभ्यासस्य) (२२७७) does not apply here. न्यषेवीत् etc.—षत्वविकल्प by 'सिवादीनां वाड्व्यवायेऽपि' (२३५९) ष्णसु ष्णस्—स्नुस्यति etc. सुष्णोस षत्व by इण्कोः—etc. प्लुष च i. e प्लुष also means to burn. नृती (नृत्) ईदित् for the prohibition of इट् in निष्ठा, cfo—'श्वीदितो निष्ठायाम्' (३०३९)। It means to move limbs hence 'to dance.' नृत्यति etc. Easy.

मित—। दिवादिभ्यः श्यन्निति। स्पष्टम्। दीव्यति इति। 'सार्व्वधातुकम-

'पिदि'ति श्यनो ङित्त्वान्न गुणः। दिदेव इति—'पुगन्तलघूपधस्य चेति गुणः। दीव्येत् इति। विधिलिङि श्यनि दीव्य + यात् इति स्थिते—'अतो येय' इति 'या' इत्यस्य इय आदेशः। आद्गुणः। लोपो व्योर्वलि, (८७५) इति यलोपः। दीव्यात्—आशिषि श्यनोऽभावादियादेशो न। श्यन् सार्वधातुकमात्रविषयः। षिवु—षोपदेश उदित्। दिवुवद्रूपाणि। परिषीव्यति इति। 'परिनिविभ्यः—'इति षत्वम्। परिषिषेव इति। 'स्थादिष्वभ्यासेन—' इति नियमाभावात् अभ्यासात् परस्यापि इण्कोरिति षत्वम्। न्यषेवीत् इति—'सिवादीनां वाड्व्यवायेऽपि' इति षत्वविकल्पः। ष्णुसु—षोपदेश उदित्। स्नुस्यति इत्यादि। सुष्णोस—इति। इण्कोरित्यादिना अभ्यासस्य षत्वम्। ष्णुषेति। अयमपि दाहे वर्त्तते इत्यर्थः। नृती—नृत्—ईदित्करणं निष्ठायां इट्निषेधार्थम्—श्वीदितो वेति' (२०३८)। नृत्यति इत्यादि सुगमम्। लृटि इड्विकल्पार्थमाह—

२५०६। सेऽसिचि कृतचृतछृदतृदनृतः ॥७।२।५७॥

दी—। एभ्यः परस्य सिज्भिन्नस्य सादेरार्द्धधातुकस्य इड् वा स्यात्। नर्त्तिष्यति—नर्त्स्यति। नृत्येत्। नृत्यात्। अनर्त्तीत्। त्रसी—१११७ उद्वेगे। 'वा भ्राश—' (२३२१) इति श्यन् वा। त्रस्यति—त्रसति। त्रेसतुः—तत्रसतुः। कुथ १११८पूतीभावे ; पूतीभावो दौर्गन्ध्यम्। पुथ १११९हिंसायाम्। गुध ११२० परिवेष्टने। क्षिप ११२१ प्रेरणे। क्षिप्यति। क्षेप्ता। पुष्प ११२२ विकसने। पुष्प्यति। पुपुष्प। तिम ११२३ ष्टिम ११२४ ष्टीम ११२५ आर्द्रीभावे। तिम्यति। स्तिम्यति। स्तीम्यति। व्रीड ११२६ चोदने लज्जायां च। व्रीड्यति। इष ११२७ गतौ। इष्यति। षह ११२८ षुह ११२९ चक्यर्थे। च— क्यर्थस्तृप्तिः। सह्यति। सुह्यति। जॄष ११३० झॄष ११३१ वयोहानौ। जीर्य्यति। जजरतु—जेरतुः। जरिता—जरीता। जीर्य्येत्।

जोर्थ्यात्। 'जृस्तम्भु—' (२२८१) इत्यङ् वा। 'ऋदृशोऽङि गुणः' (२४०६)। अजरत्—अजारीत्। अजारिष्टाम्। झीर्य्यति। जझरतुः। अझारीत्। षूङ् ११३२ प्राणिप्रसवे। सूयते। सुषुवे। 'स्वरतिसूति—' (२२७९) इति विकल्पं बाधित्वा 'श्र्युकः किति' (२३८१) इति निषेधे प्राप्ते क्रादि-नियमान्नित्यमिट्। सुषुविषे। सुषुविवहे। सोता—सविता। दूङ् ११३३ परितापे। दूयते। दीङ् ११३४ क्षये। दीयते।

The aug. इट् is prefixed optionally to the आर्द्धधातुक beginning with a स other than that of सिच् when the same (आर्द्धधातुक) comes after the roots कृत्, चृत्, छृद्, तृद् and नृत्। Thus नर्तिष्यति with इट् and नर्त्स्यति without इट्; similarly निनर्तिषति—निनृत्सति। चिकर्तिषति—चिकृत्सति। कर्तिष्यति—कर्त्स्यति etc. त्रसी—(त्रस्) to fear. तेसतु—तत्रसतुः—option of एत्व and अभ्यासलोप by 'वा जृभ्रमुत्रसाम्' (२३५६)। कुथ—to become putrid or putrify. पुथ—to injure. गुध to encircle. क्षिप to throw off. क्षिप्यति etc.—no guna because श्यन् is not पित्। पुष्प to blossom. तिम etc, to be or to make wet. व्रीड to urge or feel shame. षह etc, to feel pleasure. or delight जृष्, झृष् to grow old. सेट्। ष् is for 'षिद्भिदादिभ्योऽङ्'—जरा। जीर्य्यति दीर्घ by 'हलि च' (३५०)। जजरतुः—जेरतुः by 'जृभ्रमु—' (२३५६)। जरीता—जरिता—इड्विकल्प by 'वृतो वा' (२३८१)। जृस्तम्भु etc.—clear. षूङ् (सू)—षोपदेश and ङित्। Now the लिट्—affixes से, वहे etc. being कित्, the prohibition of the aug. इट् was due by 'श्र्युकः किति' (२३८१—७।२।११) which bars the option of इट् due by 'स्वरतिसूतिसूयतिधूञूदितो वा' (२२७९—७।२।४४) in spite of its posteri-

ority ( 'विप्रतिषेधे परम्—' ) ; But the क्रादिनियम supersedes and the former 'श्र्युकः—' also, on the authority of Panini's taking up of the prohibition of इट् ere the injunction of the same, cp—'पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात्' under 'श्र्युकः—( २३८१ ) । सीता—सविता—by स्वरति etc. दूङ् ( दू ) to repent or grieve. दीङ् ( दी ) to wane.

मित—। स इति। असिचि इति षष्ठ्यर्थे सप्तमी। तदाह—सिज्भिन्नस्य इति। कृतचृतच्छृदतृदनृत इति समाहारद्वन्द्वात् पञ्चम्येकवचनम्। तदाह—एभ्य इति। 'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) इत्यत 'आर्धधातुकस्य इट्' इति 'उदितो वा' ( ७।२।५६ ) इत्यतो वेति चानुवर्तते। तदाह—वा स्यादिति। नर्तिष्यति इत्यादि। एवं सनि—निनर्तिषति—निनृत्सति। इतरेषामपि कर्तिष्यति—कर्त्स्यति। चिकर्तिषति—चिकृत्सति इत्यादि। अनर्तीत् इति। सेऽसिचि—इत्यत्र सिज्भिन्नस्य इड्विकल्प उक्त इति सिचि नित्यमिड् भवति। एवञ्च इट ईटीति सलोपः। इगन्तत्वाभावात् सिचि वृद्धिरित्यस्याप्रवृत्तेः पुगन्तलघूपधस्य चेति गुणः। नेसतुः—ननसतुरिति। 'वा जॄभ्रमुत्रसाम्' ( २३५६ ) इति एत्वाभ्यासलोपविकल्पः। क्षिप प्रेरण इति। क्षिप्यति इति। श्यनो ङित्वाद् गुणाभावः। सिचि अक्षैप्सीत्। एवं पुष इत्यादौ। चकस्तु चकारार्थ इति। षोपदेशो। अन्यत्र 'चक तृप्तौ प्रतिघाते चे'त्युक्तत्वात् चकिः प्रतिघातार्थकोऽपि न तु, केवलं तृप्त्यर्थ एवेति द्रष्टव्यम्। पुरणगुणसुहित इति सूत्रे सुहित सृप्तिरिति कैयटः। जॄष जृष् इति। षितो सेट्कौ च। षित्वात् षिद्भिदादिभ्य—इत्यङ्=जरा; जीर्यति इति हलि चेति (३८०) दीर्घः। जजरतुः—जेरतुः 'वा जॄभ्रमु—' ( २३५६) इति एत्वाभ्यासलोपविकल्पः। जरिता—जरीता इति। 'वॄतो वा' ( २३९१ ) इति दीर्घविकल्पः। जीर्येत्—विधिलिङि—'यतो येयः' ( २२१३ ) इति इयादेशे आद्‌गुणः। जॄष्प्रभृति स्पष्टम्। षूङ्—प्राणिप्रसवे इति। षोपदेशो ङिच्च। सुषुवे इति। 'इण्कोरादेशप्रत्यययो' रिति ( २११—१२ ) अभ्यासात् परस्य षत्वम्। अथ लिट् सीप्रत्यये आह—इति विकल्पं बाधित्वा इति। परमपि विकल्पमित्यर्थः। क्रादिनियमान्नित्यमिड् इति। 'श्र्युकः—'(७।४।११) इति इण्निषेधं बाधित्वा 'कसृभृ—'

( ७।२।१३ ) इत्यत्र प्रोक्तो नियमः प्रवर्त्तते। अतएव सुधातोः क्रादित्वाभावादिट्। एतस्मिन् यद्वक्तव्यम् तद् 'पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात्—' इति व्याख्यानावसरे 'श्र्युकः—' ( २३८१ ) इति सूत्रे विशदीकृतम्। तत्र श्र्युकं 'आर्द्धधातुकस्येड् वलादेः' ( ७।२।३५ ) इति विधिसूत्रं पुरस्तात् ( प्राग् ) वक्तव्यं यत् 'श्र्युकः किति' ( ७।२।११ ) इति प्रतिषेधसूत्रं प्रागुपदिष्टं तदेवंविधज्ञापनफलकमिति। दूयते इत्यादि सुगमत्।

## २५०७। दीङो युडचि क्ङिति ॥६।४।६३॥

दी—। दीङः परस्याजादेः क्ङित आर्द्धधातुकस्य युट् स्यात्। 'वुग्युटावुवङ् यणोः सिद्धौ वक्तव्यौ—' ( वार्त्तिक )। दिदीये।

The aug. युट् is prefixed to an आर्द्धधातुक which is क्ङित् as well as अजादि ( beginning with an अच् ) coming after the root दी। Now युट् is असिद्ध and therefore यण् comes by 'एरनेकाचोऽसंयोगपूर्वस्य' for both the roots 'दीङो—( ६।४।६३ ) and 'एरनेकाचः—' ( ६।४।८२ ) fall under the असिद्धवत् सूत्र ( ६।४।२२ ) and also their place of operation is the same ( दिदी )। Thus the form figures as दिद्ये and not दिदीये which is intended. But if युट् becomes सिद्ध, यण् cannot come in. Hence Bhattoji brings forward the Varttika 'वुग्युटौ etc'—वुक् and युट् are to be treated as सिद्ध in the cases of उवङ् and यण्। Thus दिदीये is formed ( Note that युट् is directed to the affix ( ए ) and not to the root ( दी ) itself ).

मित—। दीङ इति। 'आर्द्धधातुके' ( ६।४।४६ ) इत्यधिकृतम्। अचीति षष्ठ्यर्थे सप्तमी। तदादिविधिः—दीङ इति च पञ्चम्यन्तम्। तदाह—दीङः परस्य अजादेरिति। एतेन 'दी' इत्यस्मात् प्राग् आगमो न विधेयः किन्तु प्रत्ययात् प्रागेवेति ज्ञेयम्। एवं दीदी ए—दिदी ए इति स्थिते नित्यत्वादादौ युटि—दिदी य् ए इति

जाते युटोऽसिद्धत्वाद यण्। एवं च दिद् य् य् ए इति भवति न तु दिदीये इति। अत आह—वुग् युटाविति ( वार्त्तिकम् )। यथासंख्यमन्वयः। वुक उदाहरणं बभूव इत्युक्तं प्राक्। एवञ्च युटः सिद्धत्वाद् यणादेशाभावे दिदीये इति। एतत् सर्वं असिद्धवत् सूत्रे ( २१८७ ) प्रपञ्चितमित्यलम्। अथास्य दीधातोः लुट्लकादौ परत आत्वं स्यादित्याह—

## २५०८। मीनातिमिनोतिदीङां ल्यपि च ॥६।१।५७॥

दी—। एषामात्त्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते। दाता। दास्यते। अदास्त। अदास्थाः। डीङ् ११२५ विहायसा गतौ। डीयते। धीङ् ११२६ आधारे। धीयते। दीध्ये। धेता। मीङ् ११२७ हिंसायाम्। हिंसात्र प्राणवियोगः। मीयते। रीङ् ११२८ स्रवणे। रीयते। लीङ् ११२९ श्लेषणे।

आ is ordered in places of the vowels of the roots मी ( हिंसायाम् ), मि ( डुमिञ् प्रक्षेपणे—स्वादि ) and दीङ् when ल्यप् follows and from the force of the च ( in the rule, it is also known that ) आ is directed to these roots also when an affix which is not श्—eliding, as well as the cause of एच्, follows. Thus with ल्यप्—प्रमाय, उपदाय and with एजनिमित्ते अशिति—माता, दाता etc. अदास्त—लुङ्। Here 'स्थाघ्वोरिच्च' ( २३४९ ) does not apply for दीङ् after it has been changed into 'दा' is not regarded as घुसंज्ञक cp—the varttika 'दीङः प्रतिषेधो वाच्यः' under 'दाधा घ्वदाप्'। डीङ् to move in the sky. धीङ् to put in a place, hence to place etc. मीङ् to expire. लीङ् to embrace—

मित—। मीनातीति। क्र्यादेर्हिंसार्थकस्य ग्रहणम्। मिनोतीति डुमिञ् प्रक्षेपणे इति स्वादेर्ग्रहणम्। 'आदेच उपदेशेऽशिति ( २३७०—६।१।४५ ) इत्यत

स्यादिति वर्त्तते। तदाह—एषामात्वं स्यादिति। चकारादित्याह—चकारादशितीति एज्निमित्ते इति। एतच्च 'आदेचः'—इति सूत्राल्लभ्यते। तथाहि—एजन्तस्य धातोः शिदभिन्ने प्रत्यये परे आत्वं स्यादिति तत्सूत्रार्थः। अतएव अशित् प्रत्यय एचो निमित्तमिति गम्यते। अतश्च एज्निमित्ते अशिति प्रत्यये परत आत्वमिति फलितम्। 'अत्र एज्विषये इत्येव सम्यगिति' नागेशः। दाता इत्यादि स्पष्टम्। स्थापितु प्रणाय, प्रदाय इत्यादि। अदात इति लुङि। तत्र 'स्थाघ्वोरिच्च' (२३८९) इति इत्त्वं न। दीङ आत्वे कृतेऽपि घुसंज्ञकत्वाभावात्। तदुक्तं दाधाघ्वदाप् इति सूत्रे वार्त्तिके—'दीङः प्रतिषेधो वाच्यः' इति। तदेतत् तत्त्वबोधिन्यां स्पष्टमित्यलम्। विहायसा गताविति। उत्पतन इत्यर्थः। आधारे इति। आधारो धारणम्। तेन स्थापने इत्यर्थः। मीङ् हिंसायामिति। स्पष्टं मूले। लीङ् श्लेषणे इति—

२५०९। विभाषा लीयतेः ॥६।१।५१॥

दो—। लीयतेरिति यका निर्देशो न तु श्यना। लीलीङो-रात्वं वा स्यादेज्विषये ल्यपि च। लेता—लाता। लेष्यते—लास्यते। 'एज्विषये' किम्। लीयते। लिल्ये। व्रीङ् ११४० वृणोत्यर्थे। व्रीयते। विव्रिये। 'स्वादय ओदितः' (गण-सूत्र)। तत्फलं तु निष्ठानत्वम्। पीङ् ११४१ पाने। पीयते। माङ् ११४२ माने। मायते। ममे। ईङ् ११४३ गतौ। ईयते। अयांचक्रे। प्रीङ् ११४४ प्रीतौ। सकर्म्मकः। प्रीयते। पिप्रिये।

अथ चत्वारः परस्मैपदिनः। शो ११४५ तनूकरणे।

The term लीयति (in the rule) is expressed with यक् and not with श्यन् i.e. take लीयति as ली+यक् ('सार्वधातुके यक्')+तिप् and not as ली+श्यन् (य)+तिप् so that the root ली read under क्र्यादि may also be included inasmuch as यक् is directed to all

roots. But if it is taken with श्नन् added to it then क्र्यादिलो— will be excluded for श्नन् is a particular affix or विकरण not to be found after क्र्यादि roots. Thus the rule means—आ is optionally arranged for ली ( क्र्यादि ) and लीङ् ( दिवादि ) in the matter of एच् and when ल्यप् follows. As for example लेता—लाता etc. why say 'एज् विषये'—in the matter of एच्' ? Just see the absence of आत्व when follow the सार्व्वधातुक affixes which are beyond एच्त्व ( एच् = ए ओ ऐ औ )। लिल्ये—लिट्। व्रीङ् is used in the sence of वृणोति to choose. स्वादय: etc. This is a गणसूत्र meaning, the roots from षूङ् ( ११३२ ) प्राणिप्रसवे to व्रीङ् ( 1140 ) वृणोत्यर्थे are—ओ—eliding i. e. they are termed ओदित् with a view to enjoining नत्व in place of the—निष्ठाप्रत्यय, cp.—'ओदितश्च' (3019). Thus लीन etc. पीङ् drink etc.—easy. प्री means both to be satisfied and to satisfy. In the former sense it is अकर्म्मक and in the latter सकर्म्मक: ( transitive ). Thus प्रीयते here means तर्पयति— satisfies. पिप्रिये—लिट् with इयङ्

Now we take up the four परस्मै roots शो, छो, षो and दो mentioned below.

मित—। विभाषेति। यकीति। 'सार्व्वधातुके यक्' इत्यननेत्यर्थ:। तन्फलमाह लीलीङोराच्च' वेति। 'आदेच—' इति मीनाति—' इति चानुवर्त्तत इति बोध्यम्। लीति था—विकरणस्य क्र्यादेर्ग्रहणम्। श्नना निर्द्देशे हि तस्य ग्रहणं न स्यात्। किञ्च तथा सति 'विभाषा लीङः' इत्येव ब्रूयात् न'लीयते'रिति भावः। लेता—लाता इति। एज्—विषये एतत्। ल्यपि तु विलाय—विलीय इति। एज्विषये किमिति। 'अशिती'त्यस्य प्रसज्यप्रतिषेधात् श्नन्नित्यस्य च शित्वात् श्नन्विषये आत्त्वं नेति भावः। वृणोत्यर्थ इति। वरणे इत्यर्थ:। वृणोत्यर्थे इति वचनं वैचित्र्यार्थम्। स्वादय इति। गण-

सूत्रमेतत्। षूङ् प्राणिप्रसवे (1132) इत्यारभ्य व्रीङ् वृणोत्यर्थे (1140) इत्यन्तानां ग्रहणम्। ओदित्करणप्रयोजनमाह—तत्फल'न्तु इति। ओदितश्चे'ति (3019) इति निष्ठाप्रत्ययस्य नत्वं यथा स्यात्—लीनः दून इत्यादि। अन्यत् सुगमम्। प्रीङ् प्रीताविति। सकर्म्मक इति। यदा तु प्रीत्या तुष्टिर्लक्ष्यते तदा अत्र प्रमाणं चिन्त्यम्। तत्राकर्म्मकत्वस्यैव नियमात्। तथाच प्रयोगः 'प्रीयन्ते सर्व्वदेवताः' इत्यादि। अतएव नागेशः—'सकर्म्मक इति। अत्र मानन्तु चिन्त्य'मित्याह। पिप्रियै—इत्यादावत्तरं धातोरियङ्। अथ चत्वार इति। शो तनूकरणे इत्यारभ्य दो (1148) अवखण्डने इत्यन्त इत्यर्थः।

२५१०। ओतः श्यनि ॥७।३।७१॥

दो—। लोपः स्याच्छ्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। 'विभाषा घ्राधेट्—' (२३७६) इति सिचो वा लुक्। लुगभावे 'यमरम—' (२३७७) इतीट्सकौ। अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम्। छो ११४२ छेदने। छ्यति। षो ११५७ अन्तकर्म्मणि। स्यति। ससौ। अभिष्यति। अभ्यष्यत्। अभिससौ। दो ११४८ अवखण्डने। द्यति। ददौ। प्रणिदाता। देयात्। अदात्।

अथात्मनेपदिनः पञ्चदश। जनी ११५८ प्रादुर्भावे।

The ओकार of a root ( ending in ओ ) elides when श्यन् follows. Thus श्यति ( शो + श्यन् तिप्—श् य ति ) etc. शशौ—लिट् by 'आदेच:—' (2370) इति आत् and औ; in लुङ्, सिच् elides optionally by 'घ्राधेट्—(2376). Thus अशात् etc. by elision of सिच्, but when सिच् is not dropped we have अशासीत् etc. अश् क् इट् सिच् ईट् त

by the rule 'शमरमनमातां सक् च' (2377)—चाल comes in by 'आदेच:—' later on सिच disappears here also by 'इट ईटि' (2267) and the स of सक् only is heard. अशु:—by आत: (2227)। छो to cut—easy. षो—to destroy. षोपदेश and अनिट्, ससौ by आत (आदेच:—) in लिट्। अभिष्यति by 'उपसर्गात् सुनोतिसुवतिस्यति—' (2270). अभिससौ—no षत्व either of the अभ्यास or of the सक by the restriction under 'स्थादिष्वभ्यासेन—' (2377). दो—to tear off. द्यति by 'ओत: श्यनि'। प्रणिदाता—णत्व by 'नेर्गदनद—' (2285). अदात्—by सिज्लुक्—'गातिस्थाघु—' (2223). देयात्—आशी:—by 'एर्लिङि' (2374).

Now fifteen आत्मनेपदी roots upto वाश्र (1163) शब्दे। जनी to issue or appear :—

मित—। ओतइति। 'घोर्लोपो लेटि वा' (७।३।७०) इत्यतो लोप इत्यनुवर्त्तते तदाह—लोप: स्यादित्यादि। श्यतीत्यादि स्पष्टम्। शशौ—आदेच इत्यात्वे कृते अभ्यासह्रस्व:, आत औ—इति णल औकारादेश:। विभाषा घ्राधेडिति। तत्र लुक्पक्षे अशात् इत्यादि। अशुरिति 'आत:' (२२२७) इति झेर्जुसि रूपम्। लुगभावपक्षे तु शो सिच् तिप् इति स्थिते आत्वे कृते इट् सकौ—अशा सक् इट् सिच् ईट् त्—इट ईटीति (२२५८) इति सिज्लोप:। षोऽन्तकर्म्मणीति। अन्तकर्म्म नाशनमिति नागेश:। अयं षोपदेश: स्यति—धात्वादेरिति सत्वम्। ससौ प्राग्वत्। अभिष्यति—'उपसर्गात् सुनोति—' (२२७०) इति षत्वम्। अभ्यष्यत्—लङ्—'प्राक् सितादड्व्यवायेऽपि' (२२७६) इति षत्वम्। अभिससौ इति—'स्थादिष्वभ्यासेन—' (२३७७) इति नियमादभ्यासस्य उत्तरखण्डस्य च षत्वविरह:। द्यति इति। ओत: श्यनीति ओकारलोप:। प्रणिदाता इति। 'नेर्गद—' (२२८५) इति णत्वम्। देयात् इति— 'एर्लिङि' (२३७४) इत्याशिषि एत्वम्। अदात् इति—'गातिस्थाघु—' (२२२३) इति सिचो लुक्।

पञ्चदश इति। वाश्र (११६३) शब्दे इत्यन्ता इत्यर्थ:। जनी प्रादुर्भावे इति। प्रादुर्भावो जननमाविर्भावश्च—

२५११। ज्ञाजनोर्जा ॥७।३।७९॥

दी—। अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञाते। जज्ञिरे। जनिता। जनिष्यते। 'दीपजन—' (२३२८) इति वा चिण्।

जा is the substitute for ज्ञा and जन् when a शित् or ङ—eliding affix follows. Thus जन—श्यन्+ते—जायते। जज्ञे—लिट्—जजन् ए (ए is कित् by अपिल्लिट् कित्)। Hence by 'गमहन—' (२३६३) we have जज् न् ए elision of the penultimate—जज् ञ् ए by 'स्तोः श्चुना श्चुः'। (१११) जनिता with इट् तास्। In लुङ्, चिण् comes optionally by 'दीपजन—' (२३२८) :—

मित—। ज्ञे ति। 'ष्ठिवुक्लमुचमां शिति' (७।३।७५) इत्यतः शितीत्यनुवर्त्तनादाह—अनयोरित्यादि। जज्ञे इति। अत्र तु आत्वं न, श्यनोऽभावात्। तर्हि जजन् ए इति स्थिते 'गमहन—' (२३६३) इत्युपधालोपे जज्न् ए इति जाते नकारस्य श्चुत्वेन ञः (१११ सू)। अथ लुङि 'दीपजन—' (२३२८) इति चिणः विकल्पे प्राप्ते आह—

२५१२। जनिवध्योश्च ॥७।३।३५॥

दी—। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञिणति कृति च। अजनि—अजनिष्ट। दीपी ११५० दीप्तौ। दीप्यते। दिदीपे। अदीपि—अदीपिष्ट। पूरी ११५१ आप्यायने—पूर्य्यते। अपूरि-अपूरिष्ट। तूरी ११५२ गतित्वरणहिंसनयोः (हिंसनेषु—?)। तूर्य्यते। तुतूरे। धूरी ११५३ गूरी ११५४ हिंसागत्योः। धूर्य्यते। दुधूरे। गूर्य्यते। जुगूरे। घूरी ११५५ जूरी

११५६ हिंसावयोहान्योः। शूरी ११५७ हिंसास्तम्भनयोः। चूरी ११५८ दाहे। तप ११५९ ऐश्वर्ये वा। अयं धातुरैश्वर्ये वा श्यनं तङ् च लभते। अन्यदा शब्विकरणः परस्मैपदीत्यर्थः। केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति। तप्यते। तप्ता। तप्स्यते। 'पत' इति व्यत्यासेन पाठान्तरम्। 'द्युत द्यामानि युतः पत्यमानः'। वृतु ११६० वरणे। पक्षान्तरे वावृत्यते। 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति भट्टिः। क्लिश ११६१ उपतापे। क्लिश्यते। क्लेशिता। काशृ ११६२ दीप्तौ। वाशृ ११६३ शब्दे। वाश्यते। ववाशे।

The penultimate of जनी and वधी does not get वृद्धि when the affix चिण् and a ञ्—eliding कृत् affix ( such as घञ् ) and a ण्—eliding कृत् affix ( such as णमुल् ) follow. Thus अजनि—without वृद्धि। This is the instance of चिण् where ( अजन्+चिण्+त ) the word त is dropped by 'चिणो लुक्' ( २३२८ )। अजनिष्ट—this is with सिच् ( in place of च्लि ) to which इट् is prefixed ( अजन् इट् सिच् त)। सिच् comes in because चिण् is optionally—'दीपजन—'(२३२८)। Similarly अदीपि—अदीपिष्ट and अपूरि—अपूरिष्ट। दीप् means to shine and पूरी means to satisfy as also fill, cp—'रत्न' पूरिऽस्तु वदनमपूरि वारवारिभिः—' साहित्यदर्पण—10th Chap. तूरी to move hastily and to injure. तप ऐश्वर्ये वा i.e. the root means to exercise authority and optionalby gets श्यन् and तङ् ( आत्मनेपद termina-tions ). Alternatively it is शब्विकरण i.e. भ्वादि and परस्मैपदी। Thus तप्यते and तपति mean the samething. Some, however, take

the word वा with the later root हृतु वरणे and construe as वाहृतु वरणे ( i.e. they, namey भट्टिकार and others ) read as तप ऐश्वर्ये and वाहृतु वरणे )। Thus भट्टि reads 'ततो वाहृत्यमाना सा etc.' where वाहृत्यमाना is formed by adding शानच् to वाहृतु ( श्यन्+तङ् )। The sentence means—'she ( Taraka ) then with an amorous turn of mind entered the shed of Rama'. But Nagesha does not sanctions this view of Bhattoji and reads 'as तप ऐश्वर्ये वा and वृतु वरणे explaining the word वा of वाहृत्यमाना as इव हृत्यमाना or हृत्यमानेव कामयमानेव ( cp—'यथेववाशब्दा उपमानार्थकाः' ) 'as if she were debauched.' तप is also taken by some as पत by reading the same in the reverse order. And its example is found in the Vedas—'द्युत द्यामानि' etc. हृत्यते ( हृतु )। वाहृत्यते ( वाहृतु )। क्लिश to fee pain. वाश्र, to make sound वाश्यते etc. cp—'मरुतस्य ववाशिरे'।

मित—। ·जनिवध्योरिति। 'अत उपधायाः' ( ७।२।११६ ) इत्यत उपधाया इति। 'मृजेर्वृद्धिः' ( ७।२।११४ ) इत्यतो वृद्धिरिति। 'अचो ञ्णिति' ( ७।२।११५) इत्यतो ञ्णिति इति। 'आतो युक् चिण्कृतोः' ( ७।३।३३ ) इत्यतः चिण्कृतोरिति (चिणि कृति चेति तदर्थः)। 'नोदात्तोपदेशस्य—' इत्यतो नेति चानुवर्तते। तदाह—' अनयोरुपधाया इत्यादि। 'दीपजन—' ( ३२८ ) इति सूत्रेचिणादेशस्य—वैकल्पिकत्वात्—चिणि अजन् चिण् न इति स्थिते 'चिणो लुक्' इति तशब्दस्य लुकि अनेन उपधावृद्ध्यभावे अजनि इति। इतरत्तु—चिणभावे सिचि इडागमे तप्रत्ययस्य ङित्त्वाद् गुणाद्यभावे रूपम्। एवम् अदीपि—अदीपिष्ट। अपूरि—अपूरिष्ट इति। तूरी गतित्वरण—हिंसनयोरिति। अत्र गतौति यदि पृथग् न गृह्यते तदा तु गतित्वरणहिंसनेषु इति वक्तव्यम्। गतिविषयकत्वरणमित्यर्थके तु मूलोक्तं साध्वेवेति द्रष्टव्यम्। तप ऐश्वर्ये वेति। 'तप ऐश्वर्ये वा वृतुवरणे—' इति धातुपाठे पाठः। तेनात्र वा=शब्दसंयोगवियोगाभ्यां 'तप ऐश्वर्ये वा, वृतु वरणे' इति 'तप ऐश्वर्ये वाहृतु वरणे'

इति च मतद्वयं वर्त्तते। आद्यं—भट्टोजिसम्मतम्। अत आह—अयं धातुरिति। ऐश्वर्यार्थकस्य तपधातोर्दिवादित्वमात्मनेपदित्वञ्च विभाष्यते। अतएव पक्षेऽयं भ्वादिः परस्मैपदी च भवतीति फलितार्थः। अतएव ऐश्वर्ये तप्यते ( दिवादिः ) तपति ( भ्वादिः ) इत्यादि रूपम्। पत इति। व्यत्ययोऽक्षरस्थानविपर्ययः। तत्र प्रयोगं छान्दसमुदाहरति—दा॒ तु धामानि—इति। पत्यमान = ईशान (ईश+शानच्) इत्यर्थः। हत्यते वाहत्यते इति। पूर्वं सुतु इत्यस्य परं तु 'वाहतु' इत्यस्य। 'अत्र वाशब्दः हतुधातोरावयवः। अत्र भट्टिप्रयोगमाह—ततो वाहत्यमाना सीत्यादि। वाहत्यमानेति कामयमानेत्यर्थः। 'अपेत्यमाना' इति वदन्नसूपेत्याः। हतुधातोर्वरणार्थ एव रूढत्वात् प्रकृतानुपयोगित्वाच्च। रामश्चालां रामीटजम् व्यविचत इति। नेर्विश इत्यात्मनेपदित्वाचङ्, 'शल इगुपधादनिटः'—इति ( २३२६ ) क्सः, कित्त्वाद् गुणाभावः। वाश शब्दे—वाश्यते इत्यादि स्पष्टम्। 'मरुतश्च ववाशिरे' इति तदर्थे प्रयोगः—

दौ—। अथ पञ्च स्वरितेतः। मृष ११६४ तितिक्षायाम्। मृष्यति-मृष्यते। ममर्ष—ममृषे। शुचिर् ११६५ पूतीभावे। पूतीभावः क्लेदः। शुच्यति—शुच्यते। शुशोच शुशुचे। अशुचत्—अशोचीत्—अशोचिष्ट। णह ११६६ बन्धने। नह्यति—नह्यते। ननाह। नेहिथ—ननद्ध। नेहे। नद्धा। नत्स्यति। अनात्सीत्। रञ्ज ११६७ रागे। रज्यति—रज्यते। शप ११६८ आक्रोशे। शप्यति—शप्यते।

अथैकादशानुदात्तेतः। पद ११६९ गतौ। पद्यते। पेदे। पत्ता। पद्येत। पत्सीष्ट।

Now the five स्वरितेत: वा उभयपदी roots—मृष, शुचिर्, नह, रञ्ज and शप। मृष to forbear ममर्ष—गुण by 'पुगन्त—' ( २१८९ ) for णल् is पित्

ममथे—no guna for ए is कित् by असंयोगाल्लिट् कित् ( २२४२ ) similarly ग्रशीच—ग्रग्रचे। अग्रुचत् with अङ् by—'इरितो वा' (२२६६)। अग्रोचीत् with सिच् and गुण by 'पुगन्तलघूपधस्य च' ( २१८९ )। अग्रोचिष्ट—in लङ्। नहु to bind—णोपदेश and अनिट। नेहिथ—एत्व and अभ्यासलोप by 'थलि च सेटि' ( २२६१ )। ननद्ध—without इट् नमद् थल—ननध् थ by 'नहो धः' —ननद्ध by 'भषः etc ( २२८० )। अनाङ्क्षीत्—by वदव्रज—( २२६७ ), रञ्ज to have attachment for. रज्यति etc. here न is dropped by 'अनिदितां हल उपधायाः क्ङिति' ( ४१५ )।

अथ etc. अनुदात्तेत i.e. आत्मनेपदिनः। पेदे by 'अत एकहल्मध्ये—' ( २२६० )। पत्सीष्ट by 'खरि च' ( १२१ )।

भित—। स्वरितेत इति। उभयपदिन इत्यर्थः। लिलिचायामिति—सङ्घने इत्यर्थः। ममथे—मस्थे इति। थलः पित्त्वाद् लघूपधगुणः। एशः कित्त्वात्गुणाभावः। अग्रुचत् इति। इरितो वेतिश्रङ्। पचे सिच्। लघूपधगुणः। णह इति। णोपदेशोऽनिट् च। नेहिथ—ननद्ध इति। इट्पचे—'थलि च सेटि' ( २२६१ ) इति 'एत्वाभ्यासलोपौ। इडभावे 'नहो धः' इति हस्य धः। नत्स्यति इति। खरि चेति चर्त्वम्। अनात्सीत् इति। 'वदव्रजहलन्तस्याचः' (२२६७) इति वृद्धिः। रञ्ज रागे—इति। राग आसक्तिः। रज्यति इति। 'अनिदिताम्—' ( ४१४ ) इति नलोपः।

अनुदात्तेत इति। ञिदभावे इत्यन्ता आत्मनेपदिन इत्यर्थः। एत्वाभ्यासलोपौ। पत्सीष्ट—चर्त्वम्। अयाम्नात् चिण् स्वादित्वात्—

२५१३। चिण्ते पदः ॥३।१।६०॥

दो—। पदश्चिण स्यात् तशब्दे परे। प्रपदि। अपत्साताम्। अपत्सत। खिद ११७० दैन्ये। खिद्यते। चिखिदे। खित्ता। अखित्त। विद ११७१ सत्तायाम्। विद्यते।

वेत्ता। बुध ११७२ अवगमने। बुध्यते। बुबुधे। बोद्धा। भोत्स्यते। भुत्सीष्ट। अबोधि—अबुद्ध। अभुत्साताम्। युध ११७३ सम्प्रहारे। युध्यते। युयुधे। योद्धा। अयुद्ध। कथं 'युध्यति' इति—युधमिच्छतीति क्यच्। 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' (परि) इति वा। अनो रुध ११७४ कामे। अनुरुध्यते। अन ११७५ प्राणने। अण्यते। आने। अणिता। 'अन' इति दन्त्यान्तोऽयमित्येके। मन ११७६ ज्ञाने। मन्यते। मेने। मन्ता। युज ११७७ समाधौ : समाधिश्चित्तवृत्तिनिरोधः। अकर्म्मकः। युज्यते। योक्ता। सृज ११७८ विसर्गे। अकर्म्मकः। 'संसृज्यते सरसिजैररुणांशुभिन्नैः'। ससृजिषे। स्रष्टा। स्रक्ष्यते। 'लिङ्सिचौ—' (२३००) इति कित्त्वान्न गुणो नाप्यम्। सृक्षीष्ट। असृष्ट। असृक्षाताम्। लिश ११७० अल्पीभावे। लिश्यते। लेष्टा। लेक्ष्यते। लिक्षीष्ट। 'अलिक्षत। अलिक्षाताम्।

च्लि coming after the root पद is replaced by चिण् when the word त follows i.e. in आत्मनेपद sing. of लुङ्। Thus अपादि—वृद्धि by 'अत उपधायाः' (२२८२), elision of त by 'चिणो लुक्' (२३२८) and चत्व by 'नेर्गदनदपतपद—' (२२८५) अपत्साताम् etc. with सिच्—चर्त्व by 'खरि च' (१२१)। खिद to look morbid. विद to exist. वेत्ता (लुट)—here the root is gunnated by 'पुगन्त—' (२१८५) due to the absence of श्नम् (अपित्) in आर्धधातुक्s. [ Remember in this connection the verse—

वेत्ति वेद विद ज्ञाने विन्ते विद विचारणे।
विद्यते विद सत्तायां लाभे विन्दति विन्दते॥ ]

बुध to know. भोत्स्यते—गुण by 'पुगन्त—', भत्व by 'एकाचो बशो भष्—' and चर्त्व by 'खरि च'। भुत्सीष्ट—आशीः—यासुट् is here कित्। अबोधि—अबुद्ध by 'दीपजनबुध—' (2328). युध to fight आत्मने—। युध्यते etc. But युध्यति etc. may be explained युध्+क्यच्—तिप् meaning 'he wishes to fight' or it may have the परस्मै. conjugation of युध् itself owing to its अनुदात्तेत्त्वलक्षणमात्मनेपदित्वम् (which is not obligatory ;—this परिभाषा is explained before). रुध prefixed with अनु (अनु-रुध) means to desire. अन to breathe etc—easy. मेने by एत्व and अभ्यासलोप। युज् to be absorbed in meditation. And this meditation means to restrain the propensities of the mind. The expression 'चित्तवृत्तिनिरोध' has been taken from पतञ्जलि's योगसूत्र—'योगश्चित्तवृत्तिनिरोधः'. In this sense the root is intransitive but elsewhere transitive cp. 'योग्य' योग्येन योजयेत्' (चुरादि)। सृज् to have relation with—Intransitive e. g संसृज्यते etc. This line is from the रघुवंशम् canto 5th Sloka 69. The meaning is—'(The wind) is embracing or connecting itself with the lotuses blown up by the rays of the Sun'. The full verse is :—

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैरणांशुभिन्नैः।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ५।६९ ॥

विभातवायु meaning प्रभातवायुः is the subject. Mallinatha paraphrases संसृज्यते as संगच्छते and explains as सृजेर्दैवादिकात् कर्तरि लट्। But in भ्वादि vide 'सृज आत्मानमात्मना'(कुमार—II). सस्रजिषे—लिट्। इट् by क्रादिनियम। स्रष्टा—लुट्—अमादेश, यण् and षत्व, cp 'सृजिदृशोर्झल्यमकिति'

( 2408 ), 'इकों यणचि' (4) and व्रश्चभ्रस्जसृज—, ( 296 ) respectively. स्रक्ष्यति—here ष is changed into क by षढोः कः सि (295). Similarly असृष्ट—( लुङ् त ) with सिच् which is कित् by 'लिङ्सिचावात्मनेपदेषु—' ( 2300 ) and अम् does not come in due to कित् ; finally this सिच् disappears by 'झलो झलि' and the ज of सृज् turned into ष् by 'व्रश्च—,' is heard. सृक्षीष्ट—षाशीः—by 'षढोः—' and as above. लिश to become less. लेष्टा—ष by 'व्रश्च—' and गुण by 'पुगन्त—' । लेक्ष्यति by 'षढोः कः सि' । अलिक्षत—लुङ् त by 'शल इगुपधादनिटः क्सः' ( 2336 ) । अलिक्षाताम्—by 'क्सस्याचि' ( 2337 ).

मित—। चित्रिति। 'च्लेः सिजित्यतो' रित्यनुवर्त्तते। पद इति च पञ्चम्यन्तम्। तदाह—पदर्थ ल्विरित्यादि। प्रणपादि। प्रगि—अपद चिन्त इति स्थिते 'अत उपधाया' (२२८२) इत्युपधावृद्धौ—'चिणो लुक्' ( २३२० ) इति तशब्दस्य लुकि अपादि इति जाते 'नेगदनदपत नद—' ( २२८५ ) इति णत्वम्। अपत्साताम् इत्यादि। खरि चेति ( १२१ ) चर्त्वम्। विद सत्तायामिति। रुधादौ वेत्तीत्यादि अयं रुधादौ तुदादावप्यस्ति। तदयं संग्रहश्लोकः—

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते—विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥ इति ॥

बुध अवगमने इति। अवगमनं ज्ञानम्। बुबुधे इति। लिटः कित्वाद् गुणाभावः। भोत्स्यते इति। पुगन्तलघूपधस्येति गुणेकृते एकाचो बशो भष—इति भषभावः। खरि चेति चर्त्वम्। भुत्सीष्ट इति—याम्सुटोऽव कित्त्वाद् गुणाभावः। भषभावचर्त्वे। अबोधि—अबुद्ध इति। 'दीपजन—' ( २३२८ ) इति चिण्विकल्पः। अभुत्साताम् इति कित्वाद् गुणाभावः। अन्यत् प्राग्वत्। युध सम्प्रहारे इति। सम्प्रहारो युद्धम्। युध्यति इति। युधमिच्छतीति। तत्र—युध शब्दः क्विबन्तः। ततः 'सुप आत्मनः क्यच्' इति क्यच्। अनुदात्तेत्वलक्षणमिति—एषा परिभाषा क्वचिद् इत्यत्र व्याख्याता। अत्र 'युध्यति' इत्यस्य परस्मैपदित्वेन समाधानद्वयमपि अनुचितम् इति

नागेशः। तथाच तद्ग्रन्थः—'युध्यमिच्छतीति। व्यत्ययो बहुलमिति सूत्रभाष्ये तु 'प्रतीपमन्य ऊर्मिर्युध्यति' इत्यत्र व्यत्ययेन परस्मैपदम् इत्युक्तम्। एतद्भाष्यविरोधात् अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमपि चिन्त्यमेव।'—इति। व्यत्ययो बहुलमित्यत्र भाष्यमभाधानमुपेत्यापि यत् कण्ठत्वेन अनुदात्तेत्त्वप्रयुक्तत्वेन च परस्मैपदित्वं व्याख्यातं दीक्षितेन, तस्यायमाशयः—व्यत्ययो बहुलमिति हि छन्दोमात्रविषयम्। अतएव तेन लौकिकपद-समाधानमसमीचीनमिति दिक्। अनोरुध इति। अनूपसर्गपूर्वो रुध इत्यर्थः। मेने इति। अत एकहल्मध्ये—(२२६०) इत्येत्वाभ्यासलोपौ। युज समाधाविति। अस्यादेव धातोर्योग इति घञा सिध्यति इति मत्वा आह—समाधिश्चित्तवृत्तिनिरोध इति। पातञ्जलमिदं वचनम् 'योगश्चित्तवृत्तिनिरोध' इति तत्रोक्तेः। अकर्म्मक इति अस्मिन्नर्थे इत्यर्थः। तथाचोक्तम् 'ततो योगाय युज्यस्व' इति गीतायाम्। अन्यत्र तु सकर्म्मक एव। तदुक्तम् योगं युञ्जन् मदाश्रयः—(गीता) 'यथा नियुक्तोऽस्मि तथा करोमि' इत्यादि। सृज—विसर्गे इति। अकर्म्मकत्वमुदाहरति—संसृज्यते इति। अरुणांशुभिन्नैः सौरकरविकसितैः सरसिजैः संसृज्यते सङ्गच्छते प्रभातवायुरित्यर्थः। श्लोकोऽयं रघुवंशे ५मसर्गे ६९ तमः। चन्द्र तथायं आङ्क्तव्याख्यायाम्। अत्र संसृज्यते सम्बध्नाति कमलिनीमित्यर्थ इति व्याचख्यानौ बालमनोरमाकारो भ्रान्तः। प्रकरणविरोधादिति श्लोकपर्यालोचनयास्पष्टम्। संसृज्यते इत्यत्र मल्लिनाथोऽपि सृज्धातुं दैवादिकत्वेन व्याचष्टे इत्यलम्। ससृजिषे इति। क्रादिनियमादिट्। स्रष्टा इति। 'सृजिदृशोर्झल्यमकिति' इत्यम्। यणादेशः। व्रश्चेति (२९५) षत्वम्। ष्टुत्वम्। स्रक्ष्यते इति—अम्। षः, ततः 'षढोः कः सि' (२९५) इति कः। षत्वम्। सृक्षीष्ट इत्याशिषि यासुटः कित्त्वान्न गुणः नाप्यमित्याह—लिङ्—सिचाविति। असृष्ट लुङ्। लिङ्सिचौ—इति न गुणः नाप्यम्। झलो झलीति-सिज्लोप षत्वष्टुत्वे प्रागवत्। लिश अल्पीभावे इति। अल्पीभावो ह्रासः। लेष्टा इति। पुगन्तेति गुणः। 'व्रश्चभ्रस्जसृज मृज यजराजभ्राजच्छशां षः (२४८) इति 'शाम्' इति शकारान्तस्यापि षत्वमित्युक्तेः षः। ष्टुना ष्टुरिति ष्टुत्वम्। लेक्ष्यते इति। षत्वादूर्ध्वं 'षढोः कः—' इति कः। षत्वम्। लिक्षीष्ट इति। यासुटः कित्त्वान्न गुणः।

असृत् प्राग्वत्। असिचत इति 'शल इगुपधादनिटः—' (२३२५) इति क्सः। क्तित्वान्न गुणः। असिचाताम् इति। क्सस्याचि इति (२३२६) अल्लोपः।

दो—। अथागणान्तात् परस्मैपदिनः। राध: ११८१ अकर्म्मकाद्वृद्धावेव। एवकारो भिन्नक्रमः। राधोऽकर्म्मकादेव श्यन्। उदाहरणमाह—वृद्धाविति। यस्मद्रामपराध्यति। द्रुह्यतीत्यर्थः। विराध्यन्तं क्षमेत कः—द्रुह्यन्तमित्यर्थः। राध्यत्योदनः। सिध्यतीत्यर्थः। कृष्णाय राध्यति। दैवं पर्य्यालोचयतीत्यर्थः। दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्म्मकत्वम्। रराध। रराधतुः। रराधिथ। 'राधो हिंसायाम्' (२५३२) इत्येत्वाभ्यासलोपाविह न। हिंसार्थस्य—सकर्म्मकतया दैवादिकत्वायोगात्। राद्धा। रात्स्यति। अयं स्वादिश्चुरादिश्च। व्यध ११८२ ताड़ने। 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। विध्यति। विव्याध। विविधतुः। विव्यधिथ—विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्। पुष ११८२ पुष्टौ। पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। 'पुषादि—' (२३४३) इत्यङ्। अपुषत्। शुष ११८३ शोषणे। अशुषत्। तुष ११८४ वैक्लव्ये। श्लिष ११८६ आलिङ्गने। श्लिष्यति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति।

Now we deal with the परस्मैपदी roots upto the end of this class. In राधः अकर्म्मात् वृद्धौ एव, राधः ends in the Ablative (५मी) and एव joins itself with अकर्म्मकात् and not with वृद्धौ (where it is

seen to exist ); because when राध is सकर्मक it does not take श्यन् and also because the root takes श्यन् in a sense other than वृद्धि ( वृद्धिभिन्नार्थे )। Thus Bhattoji says 'एवकारोभिन्नक्रमः' ( the word एव breaks the order i. e changes its position ) and 'राधोऽकर्मकादेव श्यन्' ( राध takes श्यन्—only when it is Intransitive ). [ In the expression 'उदाहरणमाह—वृद्धाविति' the subject is not Panini, for the annexation of meanings to the roots in the धातुपाठ is usually effected by some one other than Panini]. Now Bhattoji gives the instances of this दिवादि राध in senses other than वृद्धि। यस्मह्यम्—etc. Because ( he ) injures me. The fourth-case-ending in मह्यम् is due to 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' ( 575-1.4.37 ). विराध्यन्तम् etc. 'who can tolerate or forgive one who commits mischief' repeatedly ( क्रियासमभिहारेण )। This line is from the शिशुपालवधम्। The speaker is Balarama, and he refers to शिशुपाल। The full verse is :—

मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ 2 canto. Sl. 43.

Mallinath renders विराध्यन्तम् as अपकुर्वन्तम्। राध्यति ओदनः here राध्यति means 'is being boiled'। कृष्णाय etc. ( determines the fate ; The fourth case-ending is by 'राधीक्ष्योर्यस्यविप्रश्नः' ( ५७७—१।४।३९ )। Here ( in कृष्णाय राध्यति ) the word दैव which is inherent in the meaning of the root cannot make the same ( राध ) सकर्मक ; but the root should be treated as अकर्मक like जीवति ( प्राणान् धारयति ) etc. In रराधतुः, रराधिथ etc. the root राध cannot have एत्व

or अभ्यासलोप sanctioned by 'राधो हिंसायाम्' ( २५३२—स्वादि ); for the हिंसार्थक राध is सकर्मक ( transitive ) and as such should not be identified with the राध of दिवादि। राद्धाति by 'खरि च ( १२१ )। This राध is found in the स्वादि and the चुरादि class ( राध्नोति—राध्नोति )। व्यध to strike. विव्याध—लिट्—सम्प्र. of the अभ्यास by 'लिटाभ्यासस्योभयेषाम्' ( 2408 ) and the दीर्घ of the उपधा is by 'अत उपधायाः' ( 2282 ). विविधतुः—लिट् अतुस्—first by सम्प्र. by 'ग्रहिज्या—' ( 2412 ), then duplication व्यध् अतुस्—विध् अतुस्—विध् विध् अतुस्; अतुस् is कित् hence no guna. विव्यधिथ—विव्यद्ध—थल् option of इट् by भारद्वाज-नियम in 'अतो—' ( 2296 ). थल् is पित् hence द्वित्व takes place first and then the सम्प्र. of the अभ्यास by 'लिट्यभ्यासस्य—'। In the case of विव्यद्ध, थ is changed into ध by 'झषस्तथोर्धोऽधः,' then 'झलां जश्—' ( ५२ )। व्यत्स्यति by 'खरि—' ( 121 )। विध्येत्—विधिलिङ् by 'अतो येयः' ( 2212 ). विध्यात्—आशीः—कित् सम्प्र—। अव्यात्सीत्—लुङ् वृद्धि by 'वदव्रजहलन्तस्याचः' ( 2267 ). पुष् to nourish पोक्ष्यति by 'षढोः कः सि' ( 295 ). अपुषत्—अङ् is ङित् hance no गुण। शुष to dry or to be dried. दुष to defile, pollute. श्लिष to embrace. श्लेक्ष्यति by 'पुगन्त—' ( 2189 ) and 'षढोः'—

अमित—। अथागणान्तादिति। दिवादिगणपरिसमाप्तिपर्यन्तमित्यर्थः। राधः अकर्मकादित्यवावेति। श्नन्निति धातुपाठे वाक्यशेषः। राध इति पञ्चम्यन्तम्। तेन अकर्मकाद् राधो वृद्धावेव श्नन् (दिवादित्वम्) इति प्रतीयमानोऽर्थः। तथा सति अकर्म-कग्रहणं व्यर्थम्। दैवादिकस्य राधोऽकर्मकत्वात्। किञ्च तथात्वे वृद्धिभिन्नार्थे दैवादिकत्वं न स्यात्, दृश्यते च हिंसार्थकस्यापि राधेन श्नन्विकरणत्वमत आह—एवकारो भिन्नक्रम इति। यदा कस्यचिच्छब्दस्य—यथाप्राप्तविन्यासं विभज्य शब्दान्तरेऽन्वयः समन्वीप्सित तदोच्यते भिन्नक्रम इति। इदञ्च एवकारस्य अकर्मकादित्यनेनैवान्वयो न तु वृद्धावित्यनेन-

मिति ध्येयम् । तत् स्वयमेव दर्शयति—राधोऽकर्मकादेवेति । उदाहरणमाहेति । 'आह' इत्यस्य 'पाणिनि' न कर्ता किन्तु तदितर एव धातुपाठेऽर्थसंयोगस्य पाणिनीतरेण प्रायशः कृतत्वादिति बोध्यम् । यन्मह्यमित्यादिना ग्रन्थो इत्युपलक्षणमेवेति मन्तव्यम् । क्रुधद्रुहेति ४र्थी । विराध्यन्तमिति—माघकाव्ये—२य सर्गे—४३ तम श्लोकांशोऽयमिति, आङ्ग्ल-व्याख्यायाम् स्पष्टम् । विराध्यन्तम् अपकुर्वन्तम् इतिमल्लिनाथः । राध्यत्योदन इति । 'अतएव राध्यत्योदनः स्वयमेवेति कर्मवत्सूत्रस्थभाष्यप्रयोगोपपत्तिरिति भाव इति नागेशः । कृष्णाय राध्यतीति । पृष्टो गर्गः शुभाशुभे विवेचयतीत्यर्थः । ननु तर्हि धात्वर्थसंगृहीतादेवपदस्याकर्मकत्वात् धातुपाठे—अकर्मकादिति व्यर्थमित्यत आह—देवस्येति । जीवत्यादिवदकर्मकत्वमिति—जीवति इत्यादौ प्राणान् धारयति इत्यादि यथेत्यर्थः । ननु रराधतुः, रराधिथ इत्यादौ राधो हिंसायामिति एत्वाभ्यासलोपा-वत्र स्यातामित्यत आह—राध इति । तत्र हेतुमाह—हिंसार्थस्येति । तस्य स्वादौ पाठः । उदाहरणं यथा—राध्नोति शत्रुम् हिनस्तीत्यर्थः । दैवादिकत्वायोगात् इति । दिवादौ पाठस्य प्रयोगस्य वाल्मीकिष्वादिष्वर्थः । राद्ध इति—झषस्तथोरिति तस्य धः । झलां जश् इति जश्त्वम् । रात्स्यति इति—खरि चेति ( १२१ ) चर्त्वम् । ननु राध्नोति राधयति इति कथमित्यत आह—अयं स्वादिषु राद्विषेति । विव्याध इति—द्वित्वादुत्तरं 'लिट्यभ्यासस्योभयेषाम्' ( २४०८ ) इति सम्प्रसारणम् । 'अत उपधायाः' ( २२८२ ) इति वृद्धिः । विविधतुरिति—व्यध् अतुस् इति स्थिते 'ग्रहिज्ये'ति (२४१२) प्राक् सम्प्रसारणम् । ततो द्वित्वम् । किन्त्वात्र गुणः । विव्यधिथ—विव्यद्ध इति । भार-द्वाजनियमादिट्कल्पः । उभयत्रैव द्वित्वे कृते लिटीति अभ्यासस्य सम्प्रसारणम् । अत्तः पिन्नाकित्त्वादुत्तरखण्डस्य सम्प्रसारणं न । उत्तरत्र 'झषस्तयो'रिति तस्य धः । जश्त्वम् । व्यत्स्यति इति—प्राग्वत् चर्त्वम् । विध्येत् इति—विधिलिङ्, अतो येयः ( २२१२ ) इति या इत्यस्य इयादेशे 'आद्गुण इति गुणः । विध्यात् इति । आशिषि यासुटः कित्त्वात् ग्रहिज्येति सम्प्र—। अव्यात्सीत् इति—वदव्रजहलन्तस्याचः (२२६७) इति वृद्धिः । धातोरनिट्त्वेन इटः परत्वाभावादिट ईटीति ( २२६९ ) सलोपो न । पुपोष इति । लघूपधगुणः । 'पोक्ष्यति इति । षढोः कः सीति ( २९५ ) कत्वम् ।

षत्वम्। अपुषत् इति—अङो ङित्वान्न गुणः। एवं शुष्यति इत्यम्। ष्टुष वैक्लव्ये इति। विक्लतिसम्पादने इत्यर्थः। ष्टिष्यतीति। श्नन: पित्त्वाभावान्न गुणः। शिश्लिष इत्यादौ श्नोऽभावाल्लघूपधगुणः। श्लिष्यति इति—गुणः। षढोरिति कत्वम्।

२५१४। श्लिषः—॥३।१।४६॥

टी—। अस्मात्परस्यानिटश्च्लेः क्सः स्यात्। पुषाद्यङोऽपवादो न तु चिणः। पुरस्तादपवादन्यायात्।

[ N. B.—The rule 'श्लिष आलिङ्गने' is divided into two parts (1) श्लिषः—and (2) आलिङ्गने। The object of this division of the सूत्र or योग is obvious from the original under—'आलिङ्गने' (3 1 47), in the next half ].

An अनिट् च्लि ( लुङ् affix ), coming after this root ( श्लिष् ), is replaced by क्स। This ( क्स ) supersedes the अङ् directed by 'पुषादि—' (2336) and not the चिण् enjoined by 'चिण् भावकर्मणोः' on the ground of the परिभाषा— 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्'—'Fore—going or prior अपवादसूत्रs bar (only) those rules that invariably come after them and not those that lie remote or intervened (by other rules).,

[ We give below the arrangement of the rules laid down in Panini s Astadhyayi—whence the abone maxim will be clear to the students :—

2336—शल इगुपधादनिटः क्सः—3.1.45.

2343—पुषादिद्युताद्य्लृदितः परस्मैपदेषु—3. 1. 55. (अङ्विधिः)

2438—अस्यतिवक्तिख्यातिभ्योऽङ्—3. 1. 52.

2514—श्लिष आलिङ्गने—3. 1. 46 (क्सविधिः)

2758—चिण् भावकर्मणोः—3. 1. 66 (चिण्विधिः)

N. B—Rules numbering (2336) and (2438) have no bearing upon the पुरस्तादपवाद etc.; they are cited only to show the अनुवृत्ति of क्स and अङ् respectively to 'श्लिष आलिङ्गने and 'पुषादि—' ]।

मित—। श्लिष इति। 'श्लिष आलिङ्गने' इत्येकं सूत्रम्। तद् विभज्य आह—श्लिष इति। योगविभागश्च, यदिष्टसिद्ध्यर्थमारब्धं तदुपरिष्टात् '—आलिङ्गने' (३।१।४६) इत्यत्र—योगविभागसामर्थ्यादित्यस्य व्याख्याने स्फुटीभविष्यति। 'च्लेः सिच्' (३।१।४४) इत्यतः च्लेरिति वर्तते। 'शल इगुपधादनिटः क्सः' (३।१।४५) इत्यतोऽनिटः क्स इति च। तदाह—अस्मात् परस्यानिट इत्यादि। ननु श्लिषधातोः पुषादिगणे पाठात्—'पुषादिद्युताद्य्—' (३।१।५५) इत्यङ् स्यादित्यत आह—पुषाद्यङोऽपवाद इति। नन्वयं क्सादेशश्चिणोऽपवाद इति चेत्? न। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया हि अयम् पुषाद्यङ एव बाधक न तु 'चिण् भावकर्मणोरित्यस्य। एतच्च अष्टाध्यायीसूत्रक्रमात् स्पष्टम्। सूत्रक्रमश्च आङ्ग्लव्याख्यायां दर्शितः। किञ्च चिणो बाधकत्वे 'अश्लेषि कन्या देवदत्तेन' इत्यत्र कर्मणि चिण्—न स्यादितीष्टम् सर्वं मनसिकृत्याह—न तु चिण इति—पुरस्तादपवादन्यायादिति च। अथ योगस्योत्तरार्धं व्याचष्टे—

——। आलिङ्गने ॥३।१।४६॥

टी—। श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र। योगविभाग—सामर्थ्यात् 'शल इगुपधात्—' (२३३६) इत्यस्यापवादं नियमः। 'अश्लिक्षत् कन्यां देवदत्तः'। 'आलिङ्गने एव' इति किम्? समाश्लिषज्जतु काष्ठम्। अङ्। प्रत्यासत्ताविह * श्लिषिः।

* प्रत्यासत्ताविह श्लिषिरित्यपि पाठः; प्रत्यासत्ताविव्येव तु साधीयान्।

कर्म्मण्यनालिङ्गने सिजेव न तु क्सः । एकवचने चिण्। अश्ले्लषि। अश्लिक्षाताम्। अश्लिक्षत। अश्लिक्षाः। अश्लिड्ढ्वम्। शक ११८७ विभाषितो मर्षणे। विभाषित इत्युभयपदीत्यर्थः। शक्यति-शक्यते वा हरिं द्रष्टुं भक्तः। शशाक। शेकिथ-शशक्थ। शेके। शक्ता। शक्ष्यति—शक्ष्यते। अशकत्—अशक्त। सेट्कोऽयमित्येके। तन्मतेनानिट्कारिकासु लृदित् पठितः। शकिता। शकिष्यति। ११८८ गात्रप्रक्षरणे। घर्म्मश्रुतावित्यर्थः। अयं ञीदिति न्यासकारादयः। नेति हरदत्तादयः। स्विद्यति। सिष्वेद। सिष्वेदिथ। स्वेत्ता। अस्विदत्। क्रुध ११८९ क्रोधे। क्रोद्धा। क्रोत्स्यति। क्षुध ११९० बुभुक्षायाम्। क्षोद्धा। 'कथं 'क्षुधित' इति। सम्पदादिक्विबन्तात् तारकादित्वादितजिति माधवः। वस्तुतस्तु 'वसतिक्षुधोः—' (३०४६) इतीड् वक्ष्यते। शुध् ११९१ शौचे। शुध्यति। शुशोध। शोद्धा। षिधु ११९२ संराद्धौ। ऊदित् पाठः प्रामादिकः। सिध्यति। सेद्धा। सेत्स्यति। असिधत्। रध ११९३ हिंसासंराध्योः। संराद्धिर्निष्पत्तिः। रध्यति। 'रधिजभोरचि' (२३०२) इति नुम्। ररन्ध। ररन्धतुः।

क्स is ordered in place of च्लि coming after श्लिष in the sense of 'embracing' only—and not in other sense. Now it may be argued that if by the rule 'श्लिष आलिङ्गने' you establish by force of योगविभाग or सूत्रविभाग (breaking up of the apposition), the नियम or restriction that श्लिष will have क्स in the sense of

आलिङ्गने only and not in any other sense, then we shall bring down the rule 'शल इगुपधादनिटः क्सः' (3.1. 45) to operate on श्लिष ( as if is इगुपध and also शलन्त ) in the sense other than to embrace. To answer this argument Bhattoji says योगविभाग-सामर्थ्यात् etc. The drift is—The authority of योगविभाग leads us to two restrictions ( नियम ) viz :—

(1) क्स is attached after श्लिष in the sense of आलिङ्गन ( embracing) only and not in another sense ; and (2) In other sense too श्लिष cannot have क्स attached to it due by the rule 'शल इगुपधात्—' ।

Because had it been the object of योगविभाग—to establish the former नियम only and not the latter (2) also, then the same ( योगविभाग ) becomes unsound ; for Panini then could have said 'श्लिषः' only for 'श्लिष आलिङ्गने' । Thus from the rule itself it is clear that श्लिषेरालिङ्गने एव क्सो नान्यत्र । Therefore the object of योगविभाग is to include both the नियमs above. अश्लिक्षत् कन्याम् etc.—'Devadatta embraced an unmarried girl'—क्स in the sense 'to embrace.' क्स is कित् hence no guna. Why do you say 'in the sense of embracing only' ?—Witness अङ् —and not क्स—in place of च्लि in the instance समाश्लिषत् etc. 'The wood connected itself with lac.' or vice—versa, Here the sense is not to embrace but to be in close conjunction with, because an inanimate object cannot have the idea of embracing in common with the animate ones. In आश्लिषत् the derivation is आङ्—श्लिष्+लुङ् त्=आश्लिषत् with the aug.

अट् and the affix अङ्। Want of गुण owing to the ङित्त्व of अङ्। सत्यासत्त्याविह श्लिषिः i. e. श्लिष—in समाश्लिषत् etc means close conjunction. कर्मणि etc.—श्लिष meaning other than to embrace will have सिच् after it in the passive voice in लुङ् and not क्स which is reserved for श्लिष् to embrace. श्लिष् meaning other than to embrace would have अङ् after it in the passive voice but as the root in the passive voice becomes आत्मने by 'भावकर्मणोः' (2679) and as अङ् does not come in after आत्मने roots, so the root will have सिच् only in place of 'पुषादि—' अङ्। In the singular number, however, it (श्लिष्) meaning both to embrace and not-to-embrace will have चिण् for the rule 'श्लिषः—' (2514) i. e. (क्स)—bars अङ् and not चिण्। Thus अश्लेषि—अश्लिष् चिण् त—where त elides by 'चिणो लुक्' (2329) and the root gets guna by 'पुगन्त—' (3189). अश्लिक्षाताम्—अ श्लिष् सिच् आताम्—अश्लिक्स् आताम् by 'षढोः कः—' (295)—अश्लिक्ष् आताम् by षत्व—अश्लिक्षाताम्। अश्लिक्षत—by 'आत्मनेपदेष्वनतः' (2268) and the rest is as before. अश्लिष्ठाः—अश्लिष् सिच् थास्—अश्लिष् स् थास्—अश्लिष् थास् by 'झलो झलि' (2281)—अश्लिष्ठास्। अश्लिड्ढ्वम्—अश्लिष् सिच् ध्वम्—अश्लिष् स् ध्वम्—अश्लिष् ध्वम् by 'झलो—' अश्लिड् ध्वम् by 'झलां जश्—' (5)—अश्लिड्ढ्वम् by 'ष्टुना—'(115). शक to be able—उभयपदी। शेकिथ—by 'थलि च सेटि (2261)। अशकत् (अङ्)—अशक्त (सिच्)। Some hold that the root शक is सेट् (i.e.—takes इट्) and according to them it is read as लृ eliding in the अनिट् verses. शकिता etc.—with इट् according to Bhattoji. ष्विदा to perspire षोपदेश (स्विद)। According to न्यासकार and others it is read as 'ञिष्विदा,' but हरदत्त and others

are against that reading. सिध्येद्—षत्व by इण्कोः etc. असिदत्—अङ्। क्षीत्सति—न् by 'सरि च' (121). क्षुध to feel hungry. Madhava derives the word 'क्षुधितः' as क्षुध्+क्विप् (सम्पदादि)—क्षुध् then क्षुध्+इतच् (तारकादि इतच्)। But, in fact, it is derived as क्षुध्+क्त where इट् comes in by 'वसतिक्षुधोर्—' (3046). षिधु (सिध्) to be accomplished or fulfilled. It is erroneous to read it as ऊ—eliding (for it would then have option of इट् by 'स्वरतिसूति—etc'). रध to injure and to fulfil. ररन्धतुः etc—here एत्व and अभ्यासलोप are barred by नुम् and 'न' does not elide by 'अनिदि—ताम्—' (415) for there is no कित् affix following, cp.—'असंयोगा-ल्लिट् कित्'।

भित—। आलिङ्गने इति। योगविभागात् श्लिष इति सूत्रस्य उत्तरार्द्धमिदम्। अथ योगविभागफलं दर्शयति—योगविभागसामर्थ्यादित्यादिना—तस्यायमर्थः। श्लिष इति योगं विभज्य न केवलं 'श्लिषश्लेराश्लिङ्गने एव क्सो नान्यत्र' इत्येक एव नियमो लभ्यते किन्तु नियमान्तरमपि। किन्तादित्यपेक्षायामाह—'शल इगुपधात्—' इत्यस्यायं नियम इति। यथा आलिङ्गनार्थकस्य श्लिषेः क्स एव न अङ् एवम् अनालिङ्गनार्थकस्यापि तस्य अङ् एव न तु 'शल—' इत्यनेन प्राप्तः क्सः। तस्मात् योग-विभागबलेन नियमद्वयं प्राप्तम्। आलिङ्गने श्लिषेश्च्लेः क्स एव न अङ् इत्येकः (१)। अनालिङ्गने श्लिषेश्च्लेरङ् एव न क्स इत्यपरः (२)। अथालिङ्गने उदा—हरति 'अश्लिक्षत् कन्यां देवदत्त' इति—समुपजातसम्भोगवासनामनूढां बालाम् आलिङ्गदित्यर्थः। अत्र अश्लिष् च्लि तिप् इति स्थिते उक्तनियमात् क्से अश्लिष् क्स त इति जाते 'षढोः कः सि' (२९५) इति षस्य कः। सस्य षः। क्त्वान्न गुणः। अथ अनालिङ्गने उदाहरिष्यन् पृच्छति आलिङ्गने किमिति। समाश्लिषज्जतुकाष्ठ-मिति। अत्रापूक्तनियमादेव न क्सः किन्तु अङ्। ङित्वान्न गुणः। यदि जतुकाष्ठमिति समाहारः समाश्रीयते तदा परस्परं समाश्लिषदित्येवमर्थः। यदि तु

जतु काष्ठमिति भिन्नं पदद्वयम् तदा—जतु वा काष्ठं वा कर्तृ। उभयथापि अन्वय-सम्भवादर्थावगतेश्च। भाष्ये तु 'समाश्लिषज्जतुकाष्ठञ्च' इतीयं पाठो दृश्यते। ननु 'समाश्लिषत्' इत्यत्र आश्लिषत् इत्यस्ति। तत् किम् अङागमेन सिद्धं नेत्याह आङ् इति। आङुपसर्गात्—अडागमेनेति भावः। ननु समाश्लिषदित्यत्रापि जतुकाष्ठयोः परस्पराश्लिङ्गनदर्शनात् 'अनालिङ्गने अङ् एवेति' यदुक्तम् तदयुक्तमिति चेत्। नैवम्। जतु हि काष्ठलग्नमेवोत्पद्यते इति स्थितिः। न च तद् बुद्धिपूर्व्वकं, जडस्य तद—भावात्। आलिङ्गनं तु अभिसन्धिपूर्व्वकमेव चेतनवृत्तिरेवेति लोके दृष्टत्वात्तत्र (समाश्लिषदित्यत्र) श्लिषिरालिङ्गनवृत्तिकः किन्तु संलग्नवृत्तिक एवेति मत्वा आह—प्रत्यासत्ताविह श्लिषिरिति। प्रत्यासत्तिः परस्परलग्नवृत्तिकत्वम्। प्रत्यासत्ता-वित्यपि पाठः। प्रत्यासत्तावितीत्र तु साधीयान् प्रत्यासत्तेः सान्निध्यमात्रार्थकत्वादिति-विभावनीयम्।

ननु अनालिङ्गनवृत्तिकस्य श्लिषेः कर्त्तरि अङ् अस्तु कर्म्मणि तु क्स भवत्येव 'भावकर्म्मणो'रिति तस्य आत्मनेपदित्वनियमात्, आत्मनेपदे च अङोऽभावादिति क्से प्राप्ते आह। कर्म्मणि अनालिङ्गने सिजेव न तु क्स इति। यद्यपि क्ससिचो-र्विशेषो नास्ति तथापि अश्लिक्षत अश्लिक्षाः इत्यत्र अदादेश—भलोभालीतिलोपयोः सिच्येव परतः प्रवृत्तिर्न तु क्से परत इति नियमात् 'सिजेव न तु क्स' इत्युक्तम्। ननु किमर्थं सार्व्वत्रिकः? नेत्याह। एकवचने चिणिति। क्स इति हि अङ एव बाधकः न तु चिण इति 'श्लिष—' इत्यस्य व्याख्यानावसरे उक्तम्। अतोऽत्रैकवचने चिण् निर्व्वाध एवेति मन्तव्यम्। तेन आलिङ्गनानालिङ्गनवृत्तिकयोरुभयोरपि एक-वचने लुङि कर्म्मणि चिण् साधारणम् इति फलितम्। अश्लेषि इति। 'अचो ञ्णिति' (७।२।११५) इति वृद्धापेक्षया 'पुगन्त—' (७।३।८६) इति गुणशास्त्रस्य परत्वाद् गुणः। 'चिणो लुक्' (२३२९) इति तप्रत्ययस्य लुक्। अश्लिक्षाताम् इति। अ श्लिष् सिच् आताम् (कर्म्मणि)—अ श्लिष् स् आताम्—अश्लिक् स् आताम् षढोरिति कः।—अ श्लिक् षाताम् 'इण्कोरादेश—' (२११-१२) इति षत्वम्। सिच्यस्य ङित्त्वान्न गुणः (एतत् क्स प्रत्ययेऽपि लभ्यते)। अश्लिक्षत इति+पूर्व्ववत्

कत्वपत्वगुणाभावाः। 'आत्मनेपदेष्वनतः' (२२५८) इति अदादेशश्च (क्वचित्तु 'आत्मनेपदेषु—' इत्यस्याप्रवृत्त्या—अशिश्लिषन्त इति स्यादिति द्रष्टव्यम्) अशिश्लिक्षत इति। अशिश्लिष् सिच् थास् इति स्थिते झलो झलि (२२८१) इति सलोपः। ढत्वम् (क्से तु झल इत्यस्याभावात् अशिश्लिक्षथा इति स्यात्)। अशिश्लिड्ढम् इति। पूर्ववत्—सलोपः। झलां जश्—इति षस्य डः। तत्संसर्गात् ध्वमो धस्य ष्टुना ष्टुरिति ढः। शक इति विभाषित इत्यस्यार्थमाह—उभयपदीति। शेकिथ इत्यादि भारद्वाजनियमादिड्विकल्पे इट् पचे थलि च सेटीति (२२६१) इत्येत्त्वाभ्यासलोपावित्यर्थः। अशकत् इति—परस्मैपदपक्षे पुषाद्यङ्। एवमन्यत्रापि ज्ञेयम्। अनिट्कारिकासु न्यासकारकृतासु इति बोध्यम्। स्वमतेतु सेडितिभावः। अत आह—शकिता इत्यादि। ष्विदा—इति। षोपदेश आदिश्च। धर्मः स्नुताविति—स्वेदचरणे इत्यर्थः। अयं कौदिति। तन्मते ञिष्विदा इत्येव पाठः। किञ्च तन्मते 'ञीतः क्तः' इति वर्तमाने क्तो भवत्येव। नेति हरदत्तादय इति। तन्मतमेवावाश्रितम्। ष्विदा इति—आदित्वात् निष्ठायां सेट्। स्विन्नः। स्विन्नम्। स्वेदितमिति तु 'विभाषा भावादिकर्मणो'रिति सिद्धम्। क्रौत्स्यति इति। खरि चेति चर्त्वम्। क्षुधित इति। क्षुधशब्दे क्विबन्तं विधाय ततः इतजिति माधवमतम्। तन्तु न समीचीनमिति ध्वनयन्नाह—वस्तुतस्त्विति। स्पष्टम्। षिधु संराद्धाविति। संराद्धिः क्रियानिष्पत्तिः। प्रामादिक इति। ऊदित्त्वं तनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भाव इति 'तस्य—'। असिधत्—अङ्। रध इति—निष्पत्तिः सम्पादनम्। ननु 'अत एक हल्मध्ये—' (२२६०) इति ररन्धतुरित्यादौ एत्त्वाभ्यासलोपौ स्याताम् इत्यताह—रधिजभोरिति। एतस्य हि एत्त्वाद्यपेक्षया परत्वान्न तत्प्रवृत्तिः। किञ्च अनिदितामिति (४१५) नलोपोऽपि न प्रवर्तते। 'असंयोगाल्लिट् कित्' इत्युक्तेरव्च अनुनासादीनां संयोगपरत्वादिति बोध्यम्। अथास्य इड्विकल्पः स्यादित्याह—

२५१५। रधादिभ्यश्च ॥७।२।४५॥

टी—। रधू, नश्, तृप्, दृप्, मुह्, ष्णुह्, ष्णिह् एभ्यो

वलाद्यार्धधातुकस्य वेट् स्यात्। ररन्धिथ—ररद्ध। ररन्धिव—रेध्व।

The aug. इट् comes optionally before the वलादि आर्धधातुक following the रधादि roots viz—रध, नश्, तृप् दृप् द्रुह, मुह, ष्णुह and ष्णिह। Thus— ररन्धिथ etc.—no एत्व or अभ्यासलोप because of नुम् directed by 'रधिजभोरचि' ( 2302 ).

मित—। रधेति। तत्र रधादीन् संगृह्णाति—रध, नश् इत्यादिना। आर्धधातुकस्येड् वलादेः (७।२।३५) इत्यस्ति। 'स्वरतिसूतिसूयति-धूञूदितो वा (७।२।४४) इत्यतो वेति चानुवर्त्तते। तदाह—एभ्यो वलाद्यार्धधातुकस्येतित्यादि। ररन्धिथ इत्यादि। रधिजभोरित्यस्य परत्वादेत्वाभ्यासलोपयोर्बाधः। अथ लिड्भिन्न—स्थले इटि सत्यपि रधेः नुम् न स्यादित्याह—

२५१६। नेट्यलिटि रधेः ॥७।१।६२।

टी—। लिड्वर्जे इटि रधेर्नुम् न स्यात्। रधिता—रद्धा। रधिष्यति—रत्स्यति। अङि तु नुम्। 'अनिदिताम्—' (४१५) इति नलोपः। अरधत्। नश ११८४ अदर्शने। नश्यति। ननाश। नेशतुः। नेशिथ।

The aug नुम् is not affixed to रध् when it has इट् after it except in लिट। Thus रधिता etc. without नुम्। But in अङ् it gets नुम् the न of which is dropped by 'अनिदितां हल उपधायाः क्ङिति' ( 415 ). नश्यति etc because नश is णोपदेश। नेशतुः etc—by एत्व and अभ्यासलोप ( 'अत एकहल्मध्ये—' ( 2260 ) 'थलि च—' ( २२६१ )। By रधादिभ्यश्च—इट् is optional to वलादि आर्धधातुकs following नश which is read in रधादि class. Thus when without इट्, the form stands as न नश् थल्, we look ahead :—

मित—। नेटीति। न+इटि+अलिटि (इवे:) इतिच्छेदः। इदितो नुम् धातोरित्यतो नुमित्यनुवर्तते। अलिटि इत्यस्य च पर्युदासतया लिड्भिन्ने प्रत्यये परत इत्यर्थः। तदाह—लिड्वर्ज्ये इटीत्यादि। रधित्वा इत्यादि। रन्त्स्यति इत्यत्र खरि चेति चर्त्वम्। अरधीत। पुषादित्वादङ्। अत्र इटोऽभावान्नुमिति बोध्यम्। अरधत् इति। 'मोऽहं द्विषतेऽरधम्' इति ऋग्वेदे प्रयोगः। णश अदर्शने इति। अदर्शनमभावः नाश इति यावत्। णोपदेशः। नेशतुरित्यादि। 'अत एकहल्मध्ये—' (2260), 'थलि च सेटि' इति यथाक्रमम् एत्वाभ्यासलोपौ। अथ नशधातोः रधादित्वात् 'रधादिभ्यश्च' (२५१५) इति इड् विकल्पः प्राप्तः। तत्र इट्पक्षे गतम्। इडभावपक्षे तु न नश्+थ इति स्थिते नुमागमः स्यादित्याह—

२५१७। मस्जिनशोर्झलि ॥७।१।६०॥

दो—। नुम् स्यात्। ननंष्ठ। नेशिव—नेश्व। नेशिम-नेश्म। नशिता—नंष्टा। नशिष्यति—नङ्क्ष्यति। नश्येत्। नश्यात्। अनशत्। प्रणश्यति।

The aug. नुम् is attached to मस्ज and नश् where a letter of the झल् प्रत्याहार follows. Thus न नश् थल्—न नमुश् थ—ननन्श् थ—ननंश् थ—(अनुस्वार by 'नश्चापदान्तस्य झलि)—ननंष्थ by 'व्रश्च—' (294)—ननंष्ठ by ष्टुना ष्टुः (113). नेशिव—with इट and एत्व and अभ्यासलोप by 'अत एकहल्—' (2260) which comes in at the absence of नुम्। नेश्व—Here व is not a झल् hence neither षत्व nor नुम् appears—which gives occasion to एत्व and अभ्यासलोप। Similarly नेशिम—नेश्म। नशिता—नंष्टा with इट् in one hand and without इट् and नुम् in the other। नशिष्यति—नङ्क्ष्यति—In the latter case नश् स्यति—न नुमश् स्यति—न न्श् स्यति—नं ष् स्यति (by अनुस्वार and षत्व)—नंक्स्यति—by षढोः कः सि (295)—नङ्क्ष्यति by 'अनुस्वारस्य ययि—' and इणकोः etc.

नश्येत्—विधिलिङ् by 'अतो येयः (2212)। अनशत्—लुङ् (अङ्)। प्रणश्यति—णत्व by उपसर्गादसमासेऽपि णोपदेशस्य—

मित—। मस्जिनशोरिति। 'इदितो नुम् धातोः' (७।१।५८) इत्यतो नुमित्यनुवर्त्तते। अतोऽपेक्षितं पूरयन्नाह—नुम् स्यादिति। 'मस्जेर्नशेश्च नुमागमः स्यात् झलि परे' इति सूत्रार्थः। तदेवम् इडभावपक्षे झलादौ नुमि कृते (मिदचोऽन्त्यात्परः) नश्चापदान्तस्येत्यनुस्वारे च जाते व्रश्चादिना शस्य षः, ष्टुत्वेन ठः। नेशिथ—नेंष्ठ इति। रधादिभ्यश्चेति इट् विकल्पात् पूर्व्वत्र इटि सति झलभावे नुमागमो न। तदभावाच्च अत एकहल्मध्य—' (2260) इत्येत्त्वाभ्यासलोपौ। उभयत्रापि इडभावे वकारस्य अनत्वेन झल्प्रत्याहारान्तर्गतत्वाभावात् नुमभावे एत्त्वाभ्यासलोपौ। एवं नेशिम—नेश्म इति। नशिता—नंष्टा स्पष्टम्। नशिष्यति—नङ्क्ष्यति इति। उभयत्र नुमि कृते तस्य अनुस्वारे च शस्य व्रश्चादिना (294) षः। तस्य कः। एवं अनुस्वारस्य ययीति अनुस्वारस्य परसवर्णो ङः। ककारात् परत्वेन इण्कोरिति षत्वं, ततो रूपम्। नश्येत्—अतो येय (२२१२)) इतीयादेशे—आद्गुणः इति गुणः। अनशत् इति—पुषादित्वादङ्। प्रणश्यति इति—'उपसर्गादसमासेऽपि णोपदेशस्य—' इति नशेर्णोपदेशत्वात् उपसर्गस्थान्निमित्तात् णत्वम्।

२५१८। नशेः षान्तस्य ॥८।४।३६॥

दो—। णत्वं न स्यात्। प्रनंष्टा। अन्तग्रहणं भूतपूर्व्वप्रतिपत्त्यर्थम्। प्रनङ्क्ष्यति—नशिष्यति। तृप ११८५ प्रीणने। प्रीणनम् तृप्तिस्तर्पणं च। 'नाग्निस्तृप्यति काष्ठानाम्', 'पितृन् अतार्प्सीत्' इति भट्टिः। इत्युभयत्र दर्शनात्। ततर्पिथ—ततर्प्थ—तत्रप्थ। तर्पिता—तर्प्ता—त्रप्ता। 'कृषमृशतृपदृपां—' (वार्त्तिकम्) इति सिज्वा। अतर्पीत्—अतार्प्सीत्—अत्राप्सीत्—

अतृपत्। दृप १९९६ हर्षमोहनयोः। मोहनं गर्व्वः। दृप्यतीत्यादि।

'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता'।

द्रुह ११९७ जिघांसायाम। 'वा द्रुहमुह—' (३२७) इति वा घः। पक्षे ढः। दुद्रोहिथ—दुद्रोग्ध—दुद्रोढ। द्रोहिता—द्रोग्धा—द्रोढा। द्रोहिष्यति—ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत्। मुह ११९८ वैचित्त्ये। वैचित्त्यमविवेकः। मुह्यति। मुमोहिथ—मुमोग्ध—मुमोढ। मोहिता—मोग्धा—मोढा। मोहिष्यति—मोक्ष्यति। अमुहत्। ष्णुह ११९९ उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णोहिथ—सुष्णोग्ध-सुष्णोढ। सुष्णुहिव-सुष्णुह्व। स्नोहिता—स्नोग्धा-स्नोढा। स्नोहिष्यति—स्नोक्ष्यति। अस्नुहत्। ष्णिह १२०० प्रीतौ। स्निह्यति। सिष्णेह। इत्। रधादयः समाप्ताः॥ पुषादयस्तु आगणान्तादिति सिद्धान्तः। शमु १२०१ उपशमे।

The षत्व ( due to a cause lying in a prefix or उपसर्ग ) is not enjoined for the न of नश् ending in a cerebral ष। Thus प्रनंष्टा—without ण, for the श् of नश is here changed into ष् by 'व्रश्च—' (294). Here may arise a question in respect of the absence of णत्व ( cerebral ) in प्रनङ्क्ष्यति where the cerebral ष is replaced by क् (by षढोः कः सि—295) which (क्) thus forbids the application of the rule ( नशेः षान्तस्य ), upon प्रनङ्क्ष्यति। In reply to this question Bhattoji remarks—अन्तग्रहणम् etc. The word अन्त

has been taken in the rule in order to include the cerebral ष् that occurred formerly. Thus the prohibition of षत्व applies when the root नश् ends in ष् at present and also when it ended in ष् a moment before.

[N. B.—The expression अन्तग्रहणम् etc. is but the exact reflection of भाष्य—which see in the 'मिल—' below.] Thus प्रनङ्क्ष्यति gets the prohibition of षत्व inspite of the क् having replaced the ष्। तृप् प्रीणने—here प्रीणन' means to be satisfied and to satisfy e. g. नाग्निः etc—'The fire is not satisfied with fuel' also पितॄन् etc 'Pleased or satisfied the manes' in Bhatti. Here in one case we see तृप्त्यर्थ and in the other तर्पणार्थ of the root तृप्। ततर्पिथ etc by इट् विकल्प and लघूपधगुण—we have ततर्पिथ—ततर्प्थ and by अम्विकल्प। cp. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् —( 2402 ) we have ततप्रथ by इको यणचि (47). Want of अम् gives the same form ततर्प्थ with गुण। Similarly तर्पिता etc. सिच comes in optionally after तृप् by the Vartika 'स्पृशमृशकृषतृपदृपां च्लेः सिच् वा वाच्यः' under 'न दृशः' ( 2407 ) giving अतर्पीत् with इट् by 'रुधादिभ्यश्च ( 2515 ) where the existence of इट् bars the वृद्धि of 'वदव्रज—' ( 2267 ) by 'नेटि' (2268) and thus the लघूपधगुण ( 2189 ) applies—सिच् eliding by 'इट ईटि' ( 2266 ). अतार्प्सीत्—अत्राप्सीत् both are without इट्। In the former case वृद्धि of 'वदव्रज—' appears, as there is no इट् following ( for इट् is optional ) and for the same reason सिच् does not drop, for 'इट ईटि' does not apply. In the latter case also the process is the same except the annexation of अम् by 'अनुदात्तस्य—' ( 2402 ) and

इको यणचि (47). And finally सिच् being optional अङ् takes the place of च्लि giving अतृपत्—no इट् because अङ् is not वलादि and no guna for it ( अङ् ) is ङित्। दृप् means to cheer and to charm. Here charming ( मोहन ) means pride.

रधादित्वात् etc—'तृप् and दृप are वेट् i.e. get इट् optionally due to their inclusion in the रधादि class (see रधादिभ्यः—2515) and yet they are read here under the अनुदात्त or अनिट् roots with a view to enjoining अम् (by 'अनुदात्तस्य—' 2402) after them.'

द्रुह् to wish to injure or kill. In झल् the ह of द्रुह् becomes घ optionally by 'वा द्रुहमुहष्णुहष्णिहाम्' (327). Thus in the alternative case ह is replaced by to 'हो ढः' (324). Hence we have दुद्रोहिथ etc.—इट् is optional by 'रधादिभ्यश्च' (2515). थल् is पित् hence गुण by 'पुगन्त—' (2189). दुद्रोग्ध—दुद्रोढ without इट् two forms owing the consequnece of घत्वविकल्प। The former is with it दुद्रोह् थ—दुद्रोघ् थ ( ध by 'झषस्तथोर्धोऽधः 2280 )—दुद्रोग् ध by 'झलां जश्—' ( 57 ). and the latter is with ढ—दुद्रोढ् ढ—दुद्रोढ् ध—दुद्रोढ् by ष्टुना—( 123 )—दुद्रोढ by 'ढो ढे लोपः' गुण in both the cases is as before. Similarly द्रोहिता etc. द्रोहिष्यति with इट् and गुणं ; ध्रोक्ष्यति—द्रोह् स्यति ( with गुण but without इट् ) द्रोढ्स्यति ( हो ढः )—ध्रोढ्स्यति ( 'एकाचो बशोभष्—' 325 )—ध्रोक्स्यति ( षढोः कः सि —295 )—ध्रोक्ष्यति—इणकोः—आदेशप्रत्यययोः ( 211-12 ). The form ध्रोक्ष्यति may also be obtained if we adopt the घत्व process of 'वा द्रुह—' above. Thus द्रोह्स्यति—द्रोघ् स्यति—ध्रोघ् स्यति—ध्रोक् स्यति by खरि च (121). Therefore Bhattoji says ढत्वघत्वयोः etc. The form is the same in ढत्व and घत्व of (होढः) and (वाद्रुह—')

respectively. अद्रुहत्—with अङ् in लुङ्। मुह to fail to understand, to swoon etc. e.g. 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः' ( गीता—III ) and 'स गुरुवांस्तद्वचनं मुमोह' ( भट्टि—I ). मुमोहिथ etc. as दुद्रोहिथ etc, before. मोह्यति—the form is same in घत्व and ढत्वपक्ष. अमुहत्—अङ्। ष्णुह to vomit out—षोपदेश। सुष्णोह—षत्व by इण्कोः etc. सुष्णोहिथ etc as before. सुष्णुहिव etc by option of इट् owing to रधादित्व। स्नोग्धा—by घत्व and स्नोढा by ढत्व। ष्णिह—to endear, to fondle.—Like ष्णुह। इति i.e.—Here end the रधादि roots but not the पुषादि ones which extend to the end of the दिवादिगण —this being the conclusion ( arrived at in the treatises like Madhava's and others ). शमु to pacify :—

मित — । नशेरिति । 'रषाभ्यां नो णः समानपदे' (८।४।१) इत्यतो ण इति । 'न भाभूपूकमिगमिप्यायीवेपाम्' इत्यतो नेति चानुवर्त्तते । तेन अपेक्षितं पूरयन्नाह— णत्वं न स्यादिति । 'उपसर्गादनोत्परः' (८।४।२८) इत्यत उपसर्गात् इत्यपि इहानुवर्त्तनीयम् । उपसर्गात् इत्यस्य 'उपसर्गस्थात्' इत्येवमर्थः । तेनायं सूत्रार्थः, उपसर्गस्थान्निमित्तात् परस्य कृतषत्वस्य नशेर्णस्य णत्वं न स्यात् इति । प्रनंष्टा इति । अत्र प्रनश् ( नुम् ) ता इति स्थिते व्रश्चादिना (२९४) षत्वे रूपम् । षान्तस्य किम् ? प्रणश्यति—अत्र शकारान्तत्वात् णत्वं न । ननु षान्तस्य चेत् णत्वनिषेधस्तर्हि प्रनङ्क्ष्यति इत्यत्र णत्वं प्राप्नोति । तत्र षकारस्य 'षढोः कः सि' (२९५) इति ककारादेशेन बाधादित्याशङ्क्य परिहरति—अन्तग्रहणमिति । सूत्रे षान्तस्येति यत् अन्त—ग्रहणं कृतम् तत् भूतपूर्व्वस्य पूर्व्वं भूतस्य शकारस्थाने व्रश्चादिना जातस्य षस्य प्रतिपत्त्यर्थं ज्ञानार्थं प्राप्त्यर्थमिति यावत् । तेन प्रनश् स्यति इत्यस्य प्रनक्ष्यति ( षढोरित्यादिना कः ) इतीयं कान्तत्वे जातेऽपि पूर्व्वं षान्तम् आसीदिति कृत्वा णत्वनिषेधप्राप्तिरितिभावः । एतच्च भाष्ये तत्प्रदीपे च सुविशदम् । तथाच भाष्यम् :—

"नशेः षान्तस्य (८।४।३६) । नशेरग्रः ( वार्त्तिकम् ) । नशेरश इति वक्तव्यम् ।

इहापि यथा स्यात्। प्रनङ्क्ष्यति। परिनङ्क्ष्यति। तत् तर्हि वक्तव्यम्। न वक्तव्यम्। इह पुनर्नशेः ष इत्येषता सिद्धम्। सोऽयम् (पाणिनिः परास्मृते) एवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत् प्रयोजनं यान्तभूतपूर्व्वस्यापि यथा स्यात्॥'' इति। अत्र प्रदीपः—

''नशेः॥ प्रनङ्क्ष्यति इति। नशेः षत्वं षढोः कः सीति कत्वे कृते मस्जिनशोर्झलीति। अन्तग्रहणसामर्थ्याद् यत्र सम्प्रति षान्तो यश्च भूतपूर्व्वस्तस्य सर्व्वस्य णत्वनिषेधः''—इति। भाष्ये 'एवं सिद्धे सति यदन्तग्रहणं करोति' इत्यस्य विवरणम् अन्तग्रहणसामर्थ्यादित्यादि। अयं भावः—पाणिनिर्यदि 'नशेः षः' इत्येव असूत्रयिष्यत् तर्हि येन विधिस्तदन्तस्येति षान्तस्य इत्यर्थलाभात् प्रनंष्टा इत्यादि स्यात्—स्यादेव। तथापि (एवं सिद्धेऽपि) यदन्तग्रहणं क्रियते तत् षान्तभूतपूर्व्वस्यापि णत्व—निषेधप्रापणार्थम् इति। नशिष्यति इति। 'अवश्यं विनशिष्यन्ति सर्व्वे रावण राक्षसा' इति वाल्मीकीये। प्रीणनमिति—तृप्तिरिति धातोरकर्म्मकत्वद्योतनाय। तर्पणमिति तु सकर्म्मकत्वद्योतनाय। उभयत्राप्यर्थे प्रयोगं दर्शयति नाग्निस्तृप्यति, पितृनिति च। पूर्व्वत्राकर्म्मकत्वम्। शेषे षष्ठी। उत्तरत्र सकर्म्मकत्वम्। ततर्पिथ इत्यादि। 'रधादिभ्यश्च' (२५१५) इतीड्विकल्पादिट्पक्षे लघूपधगुणे रूपम्। इडभावे तु 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (२४०२) इत्यमविकल्पः। अमभावे गुणेन ततर्प्थ इति। अमि पुनरिको यणचीति (४७) यणि तत्रप्थ इति। एवं तर्पितेत्यादि। 'स्पृश-मृशकृषतृपदृपां च्लेः सिज् वा वाच्यः' इति 'न दृशः' (२४३७) इत्यत्र पठितम्। तत्र सिच्पक्षे रधादित्वेन इड्विकल्पात् अनुदात्तत्वेन ऋदुपधत्वेन च अम्विकल्पाच्च रूपत्रयम्। अतर्पीत्—अताप्सीत्—अत्राप्सीत् इति। आद्ये—अतृप् इट् सिच् ईट् त् इति स्थिते नेटीति (२२६८) हलन्तलक्षणाया वृद्धेर्निषेधे पुगन्तेति (२१८९) लघूपधगुण इट ईटि (२२६३) इति सिज्लोपश्च। द्वितीये—अतृप् सिच् ईट् त् इति स्थिते 'वदव्रज—' (२२६७) इति हलन्तलक्षणा वृद्धिः। इटः परत्वाभावात् सिज्लोपविरहः। तृतीये—अतृप् सिच् ईट् त् इति स्थिते अनुदात्तस्येति अमि अत्र अमृप् स् ईत् इति जाते यण्—अत्रप् (ऋ+अ) स् ईत्। ततो हलादि प्राग्वत्। सिज-

भावपक्षे तु पुषाद्यङ्—अतृपत् इति। ङित्त्वान्न गुणः। तृप् इति। दृप्यतिसृप्यतिवत्। ननु तृप्यतिदृप्यत्यो रधादित्वाद् वेट्कत्वे, अत्रानिटकारिकासु (पुषादिषु) पाठो व्यर्थ इत्याशङ्क्य समाधत्ते—

रधादित्वादिति। इमौ तृप्दृपौ। वेट्कौ विकल्पितेट्कौ, अमर्थम् अमागमलाभार्थम्। अनुदात्तता—अनुदात्तेषु पाठः इत्यर्थः। अमागमो यथा स्यादितिकृत्वा तृप्दृप्यतौ अनुदात्तेषु पठितौ इति भावः। अन्यत् स्पष्टः।

द्रुह जिघांसायामिति। द्रुह्+थल् इति स्थिते 'रधादिभ्यश्च' (२५१५) इति इड्विकल्पः। तत्र इट्पक्षे दुद्रोहिथ इति (द्वित्वम् अभ्यासकार्यं गुणश्च)। इडभावे तु धातोर्झल्परत्वेन हकारस्य घत्वढत्वविकल्प इत्याह—'वा द्रुहमुह—' (३२७) इत्यादि। पक्षे ढ इति—'हो ढः' (३२४) इत्यनेनेत्यर्थः। दुद्रोग्ध इति घत्वपक्षे रूपम्। तथाहि दुद्रोह् थ इति जाते घत्वे दुद्रोघ् थ इति भवति। ततो झषस्तथोरिति (२३००) दुद्रोघ् ध इति भाष्यां जश्—इति जशि तु दुद्रोग्ध इति। ढत्व—पक्षे तु दुद्रोढ इति रूपम्। तथाच—दुद्रोह् थ इति स्थिते ढत्वे—दुद्रोढ् थ इति ष्टुना ष्टुरिति थस्य ढः। ततो 'ढो ढे लोपः' इति प्रथमढस्य लोपे यथोक्तं रूपम्। एवं द्रोहिता इत्यत्र। ढत्वघत्वयोस्तुल्यं रूपमिति। ध्रोक्ष्यतीति परास्मृप्यते। तथाहि—लघूपधगुणादुत्तरं द्रोह् स्यति इति स्थिते ढत्वपक्षे द्रोढ् स्यति—ध्रोढ् स्यति ('एकाचो बशो भष्—' ३२६)—ध्रोक्स्यति ('षढोः कः—' ३९५)—ध्रोक्ष्यति ('इण्कोरादेश—' २११-१२) इति षत्वेन यथोक्तं रूपम्। घत्वपक्षे च द्रोघ् स्यति—ध्रोघ् स्यति—ध्रोक् स्यति (खरिचेति (१२१) चत्वेन घस्य कः)—ध्रोक् ष्यति इति प्रागवत्। लुङि पुषादाङि अद्रुहत् इति। अङो ङित्त्वान्न गुणः। वैचित्त्यमविवेक इति। मोह इति यावत्—'धीरस्तत्र न मुह्यति (गीता), स युयुत्सुर्वांसदवचनं मुमोह (भट्टिः) इत्यादावुदाहरणम्। मुमोहिथेत्यादि। अत्रापि ढत्वघत्वे प्रागवत्। ष्णुह उद्गिरणे इति। षोपदेश। उष्णिह इति अत्रैव निपातनादप्रत्य इति बहवः। सुष्णोह इति। इण्कोरिति षत्वम्। सुष्णोहिथेत्यादि प्राग्वत्। सुष्णुहिव इति। प्रत्ययस्य कित्त्वान्न गुणः। सुष्णुहे इति। इडभावादिति ज्ञेयम्। 'वा द्रुहमुह ष्णुह ष्णिहाम्' इति सर्वेषामेषां

गोऽकत्वात्—यथापूर्वं उदाहृते । 'हल्' इत्यस्यार्थमाह—रधादयः समाप्ता इति । रधादयश्च 'रधादिभ्यश्च' (२५१५) इत्यत्र परिगणिताः । पुषादयस्तु न समाप्ता इत्याह—पुषादयस्त्विति । सिद्धान्त इति—माधवादिभिस्तथैवाभ्युपगतत्वादिति भावः । शमु उपशमे इति । उदित् । उपशमो नाशः । 'ततः शान्ते पानीयवर्षे' इति हितोपदेशः । इन्द्रियनिग्रहार्थेऽप्ययं प्रयुज्यते—'शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः' इति कुमारे । 'शिष्टोभवेत्' कोपं त्यजेत्' इति यावत् । अस्योपधादीर्घविधायकं सूत्रमवतारयति—

२५१८ । शमामष्टानां दीर्घः श्यनि ॥७।३।७४ ॥

दी— । शमादीनामित्यर्थः । प्रशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । तमु १२०२ काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । दमु १२०३ उपशमे । उपशम इति ण्यन्तस्य । तेन सकर्मकोऽयम् । न तु शमिवदकर्मकः । अदमत् । श्रमु १२०४ तपसि खेदे च । श्राम्यति । अश्रमत् । भ्रमु १२०५ अनवस्थाने । 'वा भ्राश—' (२३२१) इति श्यन् वा । तत्र कृते शमामष्टानामिति (२५१८) दीर्घः । भ्राम्यति । लुङ् । अभ्रमत् । शेषं भ्वादिवत् । क्षमू १२०६ सहने । क्षाम्यति । चक्षमिथ-चक्षंथ । चक्षमिव-चक्षण्व । चक्षमिम—चक्षण्म । क्षमिता—क्षन्ता । अक्षमत् । भ्वादिस्तु षित् ।

'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा' ।

क्लमु १२०७ ग्लानौ । क्लाम्यति । क्लामति । शपीव श्यन्यपि 'ष्ठिवुक्लमु—' (२३२०) इत्येव दीर्घे सिद्धे शमादिपाठो

चिनुणार्थः। अङ्। अक्लमत्। मदी १२०८ हर्षे। माद्यति। अमदत्। शमादयोऽष्टौ गताः।

असु १२०९ क्षेपणे। अस्यति। आस। असिता।

The अच् or vowel of the eight roots of the शमादि class (शम्, तम्, दम्, श्रम्, भ्रम्, क्षम्, क्लम् and मद्) becomes long when the affix श्यन् follows. Thus प्रणिशाम्यति—[ णत्व by 'नेर्गदनद—' (२२८५)] etc. शेमतुः—by 'अत एकहल्—' (२२६०)। शेमिथ—by 'थलि च सेटि' (२२६१)। शमिता—इट् ता। अशमत्—अङ्। तमु to wish. दमु to pacify. उपशम इति वृद्ध्यभावस्य i.e. the word उपशम is derived with घञ् affixed to शम् after it has taken णिच् by 'हेतुमति च'—; absence of वृद्धि being due to 'मितां ह्रस्वः'। Here by it is known that दमु is transitvie and not intransitive like शमि उपशमे above. Hence दाम्यति etc mean शमयति etc. श्रमु to labour etc. भ्रमु to be restless, to walk etc. By 'वा भ्राश—' (२३२१) भ्रमु takes श्यन् optionally and when it takes श्यन् its अच् becomes दीर्घ by 'शमामष्टानां—' (this rule). Thus भ्राम्यति—भ्रमति etc. अङ् will come in लुङ्—अभ्रमत्। The rest is like भ्रम read in भ्वादि। क्षमू to endure. It is ऊदित् hence takes इट् optionally when वल् etc. follow by the rule 'स्वरतिसूति सूयति—' (2279) Thus चक्षम् इट्थ—चक्षमिथ and चक्षम् थ—चक्षंथ (मोऽनुस्वारः)। चक्षण्व by 'म्वोश्च' (२३०९) म turns into न which become cerebral owing to the ष in 'चक्ष—' similarly चक्षण्म। This root is षित् or not ष—eliding whereas क्षमूष् read in भ्वादि is षित् or ष—eliding. Hence—

'अषित् (not ष—eliding) क्षाम्यति i.e. क्षमू (दिवादि) gives क्षान्ति

( चम् + क्ति ) whereas षित् चमते i.e. the ष—eliding चमूष् ( भ्वादि ) gives चमा ( चम + अङ् by षिद्भिदादिभ्योऽङ् which bars क्तिन् on being षित् )। क्लमु to be tired. क्लाम्यति—दीर्घ by 'शमामष्टानाम्—' ( २५१९ ) and क्लामति दीर्घ by 'ष्ठिवुक्लमु—' ( 2320 ). The reading of क्लम् in the शमादि class is to attach the affix घिनुण् after it by 'शमित्यष्टाभ्यो घिनुण्' ( 3121 )—because without this rule 'शमामष्टानां दीर्घः श्यनि,' क्लम would have दीर्घ by 'ष्ठिवुक्लमु—' ( 2320 )—which directs दीर्घ to भ्वादि क्लम। मदी—to express glee. Here end the eight शमादि roots. असु to throw. आस—by 'अत आदेः' ( 2248 ). अस् will have the aug. थुक् (थ) when अङ् comes by the rule—

मित—। शमामिति। स्पष्टम्। शमादयश्च—संगृह्यन्ते—शमुस्तमुदमुश्चापि—श्रमुश्च भ्रमुरेव चमुः। क्लमुमदी तथेत्यष्टौ शमादय उदाहृताः॥ इति। मदीपर्यन्तं सर्वं एव उदितः। प्रणिशाम्यति इति। 'नेर्गदनद—' (२२१५) इति णत्वम्। उदित्वात् शमित्वा—शान्त्वा इत्यादि। शेमतुरिति—'अत एकहल—' (२२६०) इति एत्वाभ्यासलोपौ। शेमिथ इति। थलि सेटि एत्वादि। अशमत्—पुषाद्यङ्। एवमन्यत्रापि बोध्यम्। दमु उपशमे इति। उपशमशब्दस्य साधनप्रकारमाह—उपशम इति ण्यन्तस्य इति। धञि रूपमिति वाक्यशेषः। ण्यन्तस्येति हेतुमति णिजन्तस्येत्यर्थः। 'मितां ह्रस्वः—' (२५६१) इति णिचि ह्रस्वाभावः। ननु किमर्थं ण्यन्तस्येति क्लेशः स्वीकृतः। केवलस्यैव शमे रूपं भवतामम् इत्याशङ्क्य आह—तेन सकर्मकोऽयमित्यादि। तथाच दाम्यति इत्यस्य शमयति इत्यर्थः। भ्वादिवदिति—भ्वादौ पठितचमुवदित्यर्थः। चचमिथ—चचन्थ इत्यादि। चाम्यतेरुदित्वात् 'स्वरतिसूति—' ( २२७९ ) इतीड्विकल्पः। चचम—चचमस इति। म्वोश्च ( २३०९ ) इति मस्य नः। तस्य षात् परत्वेन णः। चमूचमूषोर्भेदप्रदर्शनार्थमाह—षयमषित् इति। दिवादिचमूरिति सम्बध्यते। अथ श्लोकार्थेन उभयमपि संगृह्णाति—

अषितः चाम्यतेः ( दिवादौपठितस्य चमू इत्यस्य ) चान्तिरिति षित्त्वाभावात् क्तिन्।

चमूषः चमतेः ( भौवादिकस्य चमूष इत्यस्य ) चमा इति। षित्वात्—'षिद्भिदादिभ्य—' इत्यङ्। टाप्। क्लमु ग्लानाविति। क्लाम्यति इति श्यनि 'ष्ठिवुक्लमु—' ( २३२० ) इत्यनेन दीर्घः। ननु तर्हि श्यनोऽपि शित्त्वात् 'ष्ठिवुक्लमु—' इत्येव दीर्घे सिद्धे अत्र शमामष्टानामित्यत्र क्लाम्यतेः पाठो निरर्थक इत्याशङ्क्य समाधत्ते—शमादि—पाठो घिनुणर्थ इति। 'शमित्यष्टाभ्यो घिनुण्' ( ३१२१ ) इत्यनेनेति भावः। शमी। क्लमी इत्यादि च रूपम्। नोदात्तोपदेशस्य—इति ( २७६२ ) वृद्ध्यभावः। शमादयोऽष्टौ गताः। असु क्षेपणे इति। आस इति। अत आदेरिति ( २२४८ ) अभ्यासदीर्घः। अथास्य लुङि—अङि थुगागमः स्यादित्याह—

२५२०। अस्यतेस्थुक् ॥७।४।१७॥

दी—। अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ति—' ( २४३८ ) इति वचनं तङर्थम्। तङ् तु 'उपसर्गादस्यत्यूह्योर्वा—' ( वार्त्तिक ) इति वक्ष्यते। पर्यास्थत। यसु १२१० प्रयत्ने।

The aug. थुक् (थ्) is added to अस्, when अङ् follows (in लुङ्)। Thus आस्थत्—थुक् is कित् hence the process is thus—आट् अस्थुक अङ् तिप् ( त )—आ अस् थ् अ त् etc. The root अस् is mentioned twice—once in the rule 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( 2438 ) and at another time under the पुषादि class which roots get the affix अङ् by 'पुषादि—' (2343). Hence there is no need of taking up अस् in the rule अस्यति etc.—because being पुषादि it (अस) gets अङ् enjoined for this class. But yet the term अस्यति in the rule अस्यति etc.' is not super-fluous for it ( अस्यति ) gets the अङ् enjoined by अस्यतिवक्ति etc, when it is आत्मनेपदी due to some prefixes such

as परि, नि, etc before it, by the Varttika 'उपसर्गादस्यत्यूह्योर्वा' under (वेत्ते विंभाषा'—2701). Thus Bhattoji says अस्य पुषादित्वात् etc. तङर्थम् i.e rule 'अस्यतिवक्ति—' is to enjoin अङ् for अस् when the same is आत्मनेपदी। And we shall speak of it (तङ्) under उपसर्गात्—etc'. Thus पर्यास्यत। यस् to make effort. उदित्।

मित—। अस्यतेरिति। अपेक्षितं पूरयन्नाह—अङि परे इति। 'अस्यतेस्थुक्' (७।४।१७) इत्यतस्मादनुवृत्तेरिति भावः। थुगिति कित्, उकार उच्चारणार्थः। कित्त्वादन्त्यावयवः। ननु अस् धातुः पुषादौ पठ्यते। पुषादिभ्यश्च 'पुषादि—' (2343) इत्यङ् विधीयते। तत् 'अस्यतिवक्ति—' (2538) इत्यनेन अङ्विधानार्थम् अस्यतेः पुनरुपादानं व्यर्थम् पूर्वेणैव तत्सिद्धेरित्याशङ्‌क्य पर्यवस्थापयति—अस्य पुषादित्वादिति। तङर्थमिति—आत्मनेपदार्थमित्यर्थः। कुतः पुनरस्यतेरात्मनेपदित्वमित्यत आह—तङ् तु—'उपसर्गादस्यत्यूह्योर्वा' इति। वार्त्तिकमिदम्—आत्मनेपद-प्रकरणे 'वेत्तेर्विभाषा' (२७०१) इत्यत्र द्रष्टव्यम्। ननु तथापि पुषाद्यङेवास्तु इति तु न वक्तव्यम्। 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (२३४३) इति परस्मैपदे एव पुषाद्यङो नियमादिति दिक्। तङि उदाहरति—पर्यास्यत इति। उपसर्गवशादस्यते-रात्मनेपदविकल्पात् 'रक्षांसि वेदीं परितो निरास्थत्' (भट्टि १म) इत्यादि साध्वेवेति। यसु प्रयत्ने इति—

२५२१। यसोऽनुपसर्गात् ॥३।१।७१॥

२५२२। संयसश्च ॥३।१।७२॥

टी— श्यन् वा स्यात्। यस्यति- यसति। संयस्यति-संयसति। 'अनुपसर्गात्' किम्? प्रयस्यति। जसु १५११मोक्षणे। जस्यति। तसु १२१२ उपक्षये। दसु १२१३ च। तस्यति। अतसत्। दस्यति। अदसत्। वसु १२१४ स्तम्भे वस्यति।

ववास। ववसतुः। 'न शसदद—' (२२६२) इति निषेधः। वशादिरयमिति मते तु, वेसतुः। वेसुः। व्युष १२१५ विभागे। अयं दाहे पठितः। अर्थभेदेन त्वङर्थं पुनः पठ्यते। अव्युषत्। ओष्ठ्यादिर्दन्त्यान्त्योऽयम् 'व्युसति' इत्यन्ये। अयकारः 'वुस' इत्यपरे। प्लुष १२१६ दाहे। अप्लुषत्। पूर्व्वेत्र पाठः सिजर्थं इत्याहुः। 'तद्भ्वादिपाठेन गतार्थ'मिति सुवचम्। विस १२१७ प्रेरणे। विस्यति। अविसत्। कुस १२१८ संश्लेषणे। अकुसत्। बुस १२१९ उत्सर्गे। मुस १२२० खण्डने। मसी—१२२१ परिणामे। परिणामो विकारः। 'समी' इत्येके। लुठ १२२२ विलोडने। उच १२२३ समवाये—। उच्यति। उवोच। 'ऊचतुः'। मा भवानुचत्। भृशु १२२४ भ्रंशु १२२५ अधःपतने। बभ्रंश। अभ्रशत्। 'अनिदिताम्—' (४१५) इति नलोपः। भ्रश्यति। अभ्रशत्। वृश १२२६ वरणे। वृश्यति। अवृशत्। कृश १२२७ तनूकरणे। कृश्यति। ञितृषा १२२८ पिपासायाम्। हृष १२२९ तुष्टौ। श्नन्तौ भौवादिकाद् विशेषः। रुष १२३० रिष १२३१ हिंसायाम्। 'तीषसह—' (२३४०) इति वेट्। रोषिता—रोष्टा। डिप १२३२ क्षेपे। कुप १२३३ क्रोधे। गुप १२३४ व्याकुलत्वे। युप १२३५ रुप १२३६ लुप ११३७ विमोहने। युप्यति। रुप्यति। लुप्यति। लोपिता। लुपादयः सेट्काः। अनिट्कारिकासु लिपिसाहचर्य्यात् तौदादिकस्यैव ग्रहणात्। लुभ १२३९ गार्ध्ये गार्ध्यमाकाङ्क्षा। 'तीषसह—' (२३४०) इति वेट्। लोभिता-

लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्-करणत्वाल्लोभतीत्यपीत्याहुः। क्षुभ १२४० सञ्चलने। क्षुभ्यति। णभ १२४१ तुभ १२४२ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात् पक्षे सिज् भवत्येव। इह पाठस्तु श्यन्नर्थः। क्लिदू १२४३ आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ—चिक्लेत्थ। चिक्लिदिव-चिक्लिद्व। चिक्लिदिम-चिक्लिद्म। क्लेदिता-क्लेत्ता। ञि मिदा १२४४ स्नेहने। 'मिदेर्गुणः। (२३४६) मेद्यति। अमिदत्। द्युतादिपाठादेव अमिदत् अमेदिष्टेति सिद्धे इह पाठः अमेदीदिति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। ञिष्विदा १२४५ स्नेहनमोचनयोः। ऋधु १२४६ वृद्धौ। आनर्ध। आर्धत्। गृधु १२४७ अभिकाङ्क्षायाम्। अगृधत्। वृत्। पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादि—समाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते सूयतीत्यादिसिद्धिरित्याहुः।

## इति तिङन्तदिवादिप्रकरणम्

2521 ( Rule No. )—श्यन् comes optionally after the root यस् ( यसु प्रयत्ने ) provided it is not preceded by any उपसर्ग—But :—

2522 ( Rule No.) —The विकरण श्यन् comes optionally after the root यस्—only when it is preceded by the उपसर्ग सम् and no other. Thus यस्यति etc in the former case and सं-यस्यति etc in the latter case ; why say 'अनुपसर्गात्'—'when preceded by no

उपसर्गे' ? Witness—प्रयस्यति only and not प्रयसति also. The meaning is that यस् takes श्यन् optionally when it is used singly and also when it is preceded by the उपसर्ग सम् but not so where any other उपसर्ग precedes the root. Thus when any उपसर्ग except सम् is prefixed, the root shall have नित्य श्यन्। Hence प्रयस्यति only and not प्रयसति also. जसु (जस्) to relieve. तसु—दसु to waste, to reduce etc. इति निषेधः i. e. the prohibition of एत्व and अभ्यासलोप। व्युष to separate or divide. This root is once read in this दिवादिगण before the पुषादि roots. Here it is read again to attach अङ् after it (in लुङ्) in a different sense i.e in the sense of division. Thus अव्युषत्—with अङ् but व्युष दाहे will give अव्योषीत् with सिच्; some say that it (व्युष्) begins with a labial and ends with a dental—'ब्युसति'; others, however, hold that it is bereft of यकार—'उष'। प्लुष to burn was read before (पुषादि) to attach सिच् after it—so say (our predecessors). But it is better to include it (प्लुष) in the भ्वादिगण so that it will then have neither श्यन् nor अङ्। उच to collect together. ऊचतुः—by सवर्ण दीर्घ। मा भवान् उचत्—here आडागम is barred by 'न माङ् योगे। भ्रंशु (भ्रंश्) to come down. अभ्रशत्—here the न of भ्रंश elides by the rule 'अनिदिताम् हल उपधाया क्ङिति' (415) for अङ् is ङित् which prohibits गुण also. ञितृषा (तृष्) to feel thirsty. ञि for क्त प्रत्यय in the present tense by 'ञित: क्त' (3044); आ for the prohibition of इट् in निष्ठा by 'आदितश्च' (3036) Thus—तृष्टः तृष्टवान् but तृषित is with इतच् (तृषा + इतच्)। तृष्यति etc. श्नम्ञो etc—i.e हृष् read in भ्वादि as regards this particular affixes, कुप् to be angry.

Thus क्षुभ्यति etc. Hence क्षुभ्यते as in 'कदाचित् क्षुभ्यते माता नोदरस्था-हरीतकी' (संचितसार) is wrong. It is evident in शब्देन्दुशेखर too that क्षुभ is सेट्। For क्षुप which is read under the अनिट् list is taken to be तुदादि on account of its being read with लिपि (which also is तुदादि)। क्षोब्धा—by लघूपधगुण the affix त becomes ध by 'झषस्तथो:—' (2279) and भ becomes ब by झलां जश्—(51). क्षुभ्येत्—विधिलिङ् (अतो येय:—अयेद)। भ्वादिरवृत्-कृतत्वात् etc—some hold that as the word 'वृत्' which signifies the end of the class or chapter to which it is joined has not been read in भ्वादि class so the root क्षुभ् though read in दिवादि, will give क्षोभति etc as well with शप and लघूपधगुण etc. i.e. will also have the भ्वादि conjugation. Roots क्षुभि, नभि and तुभि are also read in द्युतादि and क्र्यादि। Being included, therefore, in the द्युतादि class theywill have अङ् by पुषादिद्युतादि—' (2343) But in the alternative case they must have सिच् as well, as they are read in the क्र्यादि class. Here they are read to attach श्नन् after them. चिक्लिदिथ—चिक्लेथ—option of इट् because (क्लिद) is ऊदित् or ऊ—eliding hence 'स्वरतिसूति—' (2279) applies. The root ञिमिदा would have अङ् (by पुषादि—' (2343) as well, as सिच् in the तङ् पद (by द्युद्भ्यो लुङि (2345) on the ground of its being read in the द्युतादि class. so that here (in पुषादि) it is read again not to attach पुषाद्यङ् after it but to prohibit सिच् in the परस्मै—which (सिच्) would have been affixed to it, had it been read before or beyond पुषादि i.e. in दिवादि। Thus अमेदीत् will not be the alt. form (with सिच् in परस्मै), but अमिदत् only (with अङ्)। It results from all this, therefore, that the

पुषादि पाठ (reading of ञिमिदा in the पुषादि class) is essential. If so, then read it not under द्युतादि, but beyond the same (द्युतादि), under the आत्मनेपदी roots—in as much as it will have अङ् owing to its पुषादित्व giving अमिदत् and also सिच् giving अमेदिष्ट when आत्मनेपदी। केचित्तु etc.—By the word वृत् here some explain that it indicates the finish of the पुषादि class only and not of दिवादि class as well which (दिवादि) is inexhaustible like the भ्वादि class and thus the forms like चीयते, सम्यति etc are rightly formed.

Here ends the दिवादि class

मित—। यस इति। संयस इति च। यसः अनुपसर्गाद्वेति श्यन्विकल्प इति प्रथमसूत्रार्थः। सम्पूर्व्वाद्वेति यसः श्यन्विकल्पः इति द्वितीयसूत्रार्थः। अयं भावः—सोपसर्गाद् यसः नित्यमेव श्यन् यथा—प्रयस्यतीति न तु प्रयसतीत्यपि। अत आयातं यत् अनुपसर्गाद् यस श्यन्विकल्प इति। तदेवं यस्यति—यसतीति सिद्धम्। अत्र नियमः क्रियते—यदि कुतचित् सोपसर्गाद् यसः श्यन् विकल्प इष्यते तर्हि सम्पूर्व्वादेव यसः नान्यपूर्व्वादिति। अतः सिद्धं—संयस्यति—संयसतीति। अयमिति व्युष इति पराम्रष्टते। अर्थभेदेन स्थिति। विभागात्मकमर्थविशेषमादाय इह पुषादौ अस्यार्थ पठ्यते इत्यर्थः। तेन अव्योषीदिति भौवादिकस्य दाहार्थकस्यैवेति भावः। पूर्व्वत्रेति। पुषादिभ्यः प्रागित्यर्थः। तद्भ्वादिपाठेनेति। यदि सिचमासक्तुमाकाङ्क्षा विद्यते तर्ह्यसौ भ्वादावेव पठ्यताम् न त्वत्र पुषादेः प्राक् दिवादावित्यर्थः। तथाचैवं श्यन्नङौ भवत इत्याह सुवचमिति। वक्तुं युक्तमिति तदर्थः। मा भवानिति। आडागमप्रतिषेधः। अमिदितामिति। मंथ इति इदित् न भवति। अतोऽङि नलोपः। भौवादिकादिति। भ्वादौ पठितात्—इष्यतेरित्यर्थः। क्षिपिसाहचर्य्यादिति—क्षिपिनासह पठितत्वादित्यर्थः। तौदादिकस्यैव ग्रहणात्—तुदादौ पठितस्यैव लुपेरनिट्त्वनियमादिति भावः। भ्वादिरिति। भ्वादि आकृतिगणत्वात् तत्र 'वृत्' इति गणसमाप्तिसूचकः शब्दो

नोच्चारितः। अतएव तदनुच्चारणसामर्थ्यात् केचिल्लोभति इत्यपि साधुरित्याहुः कथयन्तीत्यर्थः। द्युतादित्वादिति। 'पुषादिद्युताद्य—' (२३५३) इत्यनेनेति भावः। क्रादित्वादिति। तत्र अङोऽभावात्। इह पाठस्तु स्वार्थ इति। न तु अङर्थं, तथाचेदं पुषादिभ्यः प्रागेवेति पठितुं युक्ता इत्यभिप्रायः। क्षिदू इति। ऊदित्वात्—'स्वरतिसूति—' (२२७९) इति वेट्। द्युतादि-पाठादेवेति—धातुरयं द्युतादौ च पठ्यते अत्र पुषादौ च। पूर्वत्र (द्युतादौ) च आत्मनेपदिषु पठ्यते तेन 'द्युद्भ्यो लुङि' (२३४५) इत्यनेन परस्मैपदस्यापि विकल्पेन प्राप्तेः 'पुषादिद्युताद्य—' (२३४२) इत्यङि अमिदत् इति भवति। तदभावे तु सिचि अमेदिष्ट इति। ननु यदि द्युतादि—पाठादेवाङ् सिद्धस्तर्हि इह पुषादौ पाठो व्यर्थः। नेत्याह—इह पाठः अमेदीत् इति माभूदिति। यदि स्वयंपुषादावपठित्वा ततः प्राग् दिवादौ पठ्येत तर्हि परस्मैपदेऽपि सिचि प्राप्ते अमेदीत् इत्यनिष्टं स्यात्। अतः परस्मैपदे सिज्वारणार्थमिह पाठः। नन्वेवं यदि पुषादौ पाठ ईप्सिततमः सप्रयोजनश्च—नितरां तर्हि द्युतादिभ्योऽन्यत्र च क्वचित् आत्मनेपदिधातुषु मेदतेः पाठो युक्तः। एवञ्च पुषादिपाठादङ् आत्मनेपदित्वात् सिद्ध भवत्येव इति मत्वा आह—द्युतादिभ्यो बहिरेवात्मनेपदिष्विति। द्युतादिपाठस्यानर्थकत्वादिति विभाव्यम्। केचित्त्विति—स्पष्टम्।

॥ इति मितभाषिण्यांतिङन्तदिवादि-प्रकरणम् ॥

अथ

# तिङन्तस्वादि-प्रकरणम्

दी—। षुञ् १२४८ अभिषवे। अभिषवः स्नपनं पीड़नं स्नानं सुरासन्धानं च। तत्र स्नाने अकर्म्मकः।

षुञ् i. e सु which is उभयपदी means to cause to bathe, to torture, to bathe and to distil wine. It is intransitive in the sense of bathing.

मित—। अथ श्नुविकरणान् स्वादीनारभमान आह—षुञ् अभिषवे इति। षोपदेशोऽयमनिट् च। ञित्वादुभयपदी। अभिषवपदस्यार्थमाह—अभिषवः स्नपनं —( स्नातेर्णिजन्तान्ल्युट् ) इत्यादि।

२५२३। स्वादिभ्यः श्नुः ॥३।१।७३॥

दी—। सुनोति। सुनुतः। 'हुश्नुवोः—' ( २३८३ ) इति यण्। सुन्वन्ति। सुन्वः—सुनुवः। सुन्वहे—सुनुवहे। सुषाव। सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्। 'स्तुसुधूञ्भ्यः—' ( २३८५ ) इतीट्। असावीत्। असोष्ट। अभिषुणोति। अभ्यषुणोत्। अभिसुषाव।

The विकरण or affix श्नु ( नु )—( of which श् only elides )—is attached after the roots सु etc. ( enlisted herein )—when in

the active voice the तिङ् affixes follow. Thus सु+श्नु+तिप्=सुनुति=सुनोति—गुण by 'सार्व—' (2168).

N. B.—Here सुनु and not सु alone is the अङ्ग or verbal basis. Hence नु is gunnated due to पित्त्व of तिप्। श्नु is ङित् or ङिद्वत् by 'सार्वधातुकमपित्' hence सु (which is an अङ्ग in the case of श्नु) is not gunnated owing to the prohibition 'क्ङिति च' (2242). सुनुतः—तस् is ङित् hence no guna. सुनु+अन्ति=सुन्व् अन्ति=सुन्वन्ति by 'हुश्नुवो—' (2387) which bars उवङ् enjoined by 'अचिश्नु—' (272). सुन्वः—सुनुवः here the उ of नु elides optionally by 'लोपश्चास्यान्यतरस्यां म्वोः' (2233). सुषाव—षत्व by इणकोः etc. (211). सुनु—सु+श्नु+हि (elision of हि by 'उतश्च प्रत्ययात्—' 2334). सुनवानि—गुण because आट् is पित्। सूयात्—आशीः hence श्नु is not attached—दीर्घ of उ by 'अकृत्—' (2298). असावीत्—वृद्धि by 'सिचि वृद्धिः' (2297). असोष्ट—the root is gunnated because सिच् is not कित् here. अभिषुणोति—षत्व by 'उपसर्गात्—' (2270) and णत्व due to षत्व। अभ्यषुणोत्—अभि—अट्+सु+लङ्त्—षत्व by 'प्राक् सितात्—' (2276). अभिसुषाव—षत्व by 'स्थादिष्वभ्यासेन—' (2277).

मित—' स्वादिभ्य इति। स्वादिभ्यः श्नु प्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके परे इति सूत्रार्थः। शपोऽपवादः। सु+श्नु+तिप् इति स्थिते 'सार्वधातुकमपित्' इति श्नु-प्रत्ययस्य अपित्त्वेन ङित्त्वात्'सु' इत्यस्य गुणाभावे सुनु+तिप इति जाते प्रत्ययस्य पित्त्वात् 'सार्वधातुकार्ध—' (२१६८) इति नु इत्यस्य गुणः। सुनुत इति—तसोङित्त्वान्न गुणः। सुनु अन्ति इति स्थिते 'अचि श्नु—' (२७२) इति उवङि प्राप्ते आह—हुश्नुवो इति। सुन्वः—सुनुव इति। सुनु+वस् इति स्थिते—'लोपश्चास्यान्यतरस्यां म्वोः' (२२३३) इति उकारलोपविकल्पः। सुषाव—इण्कोरित्यादिना षत्वम्। सुनु—'उतश्च प्रत्ययाद-संयोगपूर्वात्' (२२३४) इति हेर्लोपः। सुनवानि इति—आडुत्तमस्येति आटः

पित्वाद् गुण:। अवादेश:। सूयात्—आशिष—आर्द्धधातुकत्वेन श्नुप्रत्ययस्याभावात् 'अकृत्—' (२२९८) इति दीर्घ:। अनिट्कत्वात् सिच इडभावे आह—हस्वधूत्स्य इति। सिचि वृद्धिरिति (२२७०) वृद्धि:। असोष्ट इति—इक् समीपत्वेऽपि भत्वपरत्वा—भावात् अकित्वात् तङ्पत्ते गुण:। अभिषुणोति इति। 'उपसर्गात् सुनोति—' (२२७०) इति षत्वम्। तत्वणत्वम्। अभ्यषुणोदिति—अत्र अड्व्यवाये सत्यपि 'प्राक् सितात्—' (२२७६) इति षत्वम्। अभिसुषाव इति—'स्थादिष्वभ्यासेन चाभ्यासस्य' (२२७७) इति नियमादभ्यासादुत्तरस्य षत्वम्।

२५२४। सुनोते: स्यसनो: ॥ ८।३।११७ ॥

दी—। स्ये सनि च परे सुञ: षो न स्यात्। विसोष्यति। षिञ् १२४८ बन्धने। सिनोति। विसिनोति। सिषाय। सिष्ये। सेता। शिञ् १२५० निशाने। तालव्यादि:। शेता:। डुमिञ् १२५१ प्रक्षेपणे। 'मिनातिमिनोति—' (२५०८) इत्यात्वम्। ममौ। ममिथ—ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। चिञ् १२५२ चयने। प्रणिचिनोति।

The स of सुञ् does not turn cerebral (ष) when स्य and सन् follow (notwithstanding the precedence of उपसर्ग ). Thus विसोष्यति—ष्य is by 'इण्को: and आदेश—' (211-12). षिञ् or सि is उभयपदी means to bind. षोपदेश—thus सिनोति etc. विसिनोति—prohibition of षत्व by 'सात् पदाद्यो:' (2133) and the rule 'उपसर्गात् सुनोति—' (2270) does not apply for सिनोति is not included therein. सिषाय—सिष्ये—षत्व by इण्को: etc. डुमिञ्—ड्वित् hence मित्रम् (with क्त्रि and मम्)। ममौ—लिट् णल् becoming औ by 'आत औ—' after मि has become मा by

'मीनाति etc.' (2508). ममिथ—ममाथ by इड्विकल्प ; cp. भारद्वाजनियम। मिम्ये—लिट् त (एश्) आत्मने, which is ङित् as also कित् hence 'मीनाति—' etc. does not apply. मीयात्—आशीः—by 'अकृत्—' (2298). मासीष्ट—आशीः—लङ् पक्षे with यासुट्, सुट् ईट् and आत्वादेश of the root. अमासीत्—लुङ्—आत्व by मिनाति—etc. and सक् and इट् by 'यमरमनमातां स च' (2377). Elision of सिच् by इट ईटि (2266). अमास्त—In आत्मने, the rule 'यम रम—' does not apply. The root is अनिट् hence अट् मा स् त—अमास्त। चिञ् to pluck or compose. अनिट्। प्रणिचिनोति—णत्व by नेर्गदनद—' (2260).

मित—। सुनातेरिति। 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यधिकारसूत्रम्। 'न रपरसृपिसृजि—' (८।३।११०) इत्यतो नेति चानुवर्तते। तदाह। स्तो न स्यादिति। सुनोतिरिति षष्ठ्यन्तम्। स्यसनोरिति तु सप्तमीद्विवचनं तदाह—स्ये सनि चेत्यादि—। तत्र प्रकृतत्वात् स्ये उदाहरति। विसोष्यति इति। अत्र उपसर्गादिति (२२७०) न प्रवर्तते। तेन 'स्तौ' इत्यत्र षत्वं न। सनि तु अभिसुसूः। सन्नन्तादस्मात् क्विपि 'अतो लोप' इति लोपे रुत्वे कृते दीर्घः। सुसूषति इति तु नोदाहरणं 'स्तौतिण्योरेव षणि—' (२६२७) इति नियमेनैव तत्र षत्वाभावसिद्धेः। एतच्च काशिकायां स्पष्टम्। षिञ् बन्धने इति। षोपदेशोऽनिट् च।।अतएव सिनोति इत्यादि। धातोर्गुणाभावः सुनोतिवत्। विसिनोति इति। उपसर्गात् सुनोति—इति सूत्रे सिनोतेरग्रहणाद षत्वाभावः। तदभावाच्च णत्वाभावः। सिषाय—सिष्ये इति। इण्कोरिति षत्वम्। श्रिञ् इति षिञ्वत्। डुमिञ् इति। ड्वित्वात् क्त्रिमम् च—मित्रम्। मिनोति इत्यादि सार्वधातुक—विषये रूपम्। ममौ—इति। मि+णल् इति स्थिते णलः पित्त्वेन एज्विषयत्वात् 'मीनातिमिनोतिदीङां ल्यपि च'ेति (२५०८) आत्वे कृते द्वित्वे 'आत औ णल' इति औकारादेशे रूपम् थलि भारद्वाजनियमादिड्विकल्प' मनसिकृत्याह ममिथ—ममाथ इति। तत्र इट्पक्षे 'आतो लोप इटि च' (२३७२) इत्यालोपः। मिम्ये इति। एश् आदिश्त्वाभावात् कित्त्वेन एज्विषयत्वाभावाच्च मीनातिमिनोतीत्यस्याप्रवृत्तेरात्त्वाभावे

रूपम्। मासेति—एजविषयत्वादशित्त्वाच्च आत्त्वमित्यर्थः। मीयादिति—आशिषि परस्मैपदे 'किदाशिषि' इति कित्त्वादेज्विषयत्वाभावात् मीनातीत्यस्याप्राप्तेः 'अकृत्—' (२२९८) इति दीर्घे कृते रूपम्। मासीष्ट इति—आशिषि तङ्पक्षे रूपम्। एज्विषत्वादात्त्वम्। अमासीदिति। आत्त्वे कृते 'यमरमनमातां सक् च' (२३७७) इति सगागम इट् च। तत इट 'ईटि' (२२६६) इति सिज्लोपः। अमास्त इति—लुङि तङि रूपम्। यमरम—इत्यस्य परस्मैपदे एव प्रवृत्तेः सगिटौ न। धातोरनिट्कत्वादिकारस्याभा-भावश्च—अ मा सि च् त अमास्त इति। चिञ् चयने इति। चयनं रचनाविशेषः। अनिट्। 'नेर्गदनद—' (२२६०) इति णत्वं मत्वाह—प्रणिचिनोतीति। अथ अभ्यासादुत्तरस्य—चेर्विकल्पेन कुत्वं स्यादित्याह—

२५२५। विभाषा चेः ॥ ७।३।५८ ॥

दी—। अभ्यासात् परस्य चिञः कुत्वं वा स्यात् सनि लिटि च। प्रणिचिकाय—चिचाय। चिक्ये—चिच्ये। अचैषीत्। अचेष्ठ। स्तृञ् १२५२ आच्छादने। स्तृणोति। स्तृणुते। 'गुणोऽर्त्ति—' (२३८०) इति गुणः। स्तर्यात्।

कुत्व or क is the substitute for the च of चिञ्, following the reduplicate or अभ्यास, when सन् and लिट् (affixes) follow. Thus प्रणिचिकाय etc चिचाय—दीर्घ by 'अचो ञ्णिति' ( 254 ) and णत्व by 'नेर्ग-दनद—' (2260). चिक्ये—चिच्ये—एश् is कित् hence the prohibition of both गुण and वृद्धि ; यण् by 'एरनेकाचः—'(273). अचैषीत् by सिचि वृद्धिः —' (2297). अचेष्ट—आत्मने तङ् गुण by 'सार्वधातु—' ( 2168 ). स्तृ to cover etc. easy.

मित—। विभाषेति। 'चजोः कुः—' ( ७।३।५२ ) इत्यतः कुरित्यनुवर्त्तते। 'अभ्यासाच्च' ( ७।३।५५ ) इत्यतोऽभ्यासादिति। 'सन्लिटोर्जेः' (७।३।५७) इत्यतः सन्लिटोरिति। विभाषेति च विकल्पार्थकः। तदाह—अभ्यासात् परस्येत्यादि।

अणिषिचिकाय—चिचाय—इति। णत्वं प्रागवत्। 'अतो ञ्णिति' (२५४) इति वृद्धिः। चिक्ये—चिक्ये इति। एश: अपित्त्वेन कित्वाद् गुणवृद्ध्योरभावे 'एरनेकाच—' (२७२) इति यण्। अचैषीदित्ति—सिचि वृद्धिः—(२२९७) इति वृद्धिः। अनिटत्वेन—इटः परत्वाभावात्—सिज्लोपो न। अचेष्ट—'सार्व—' (२१६८) इति तङ्पक्षे लुङि गुणः। स्तृञ् आच्छादने इति। अनिट। सुगमा प्रक्रिया—। अथ स्तृधातोर्लिङ्सिचोरिड्विकल्पार्थमाह—

२५२६। ऋतश्च संयोगादेः ॥ ७।२।४३ ॥

टी—। ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात् तङि। स्तरिषीष्ट—स्तृषीष्ट। अस्तरिष्ट—अस्तृत। कृञ् १२५४ हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चक्रे। क्रियात। कृषीष्ट। अकार्षीत्। अकृत। वृञ् १२५५ वरणे।

In तङ् or आत्मनेपद, the augment इट् is optionally prefixed to the लिङ् affixes and the affix सिच्—both coming after the root which ends in a ऋ and begins with a संयोग or conjunct letter ( e.g. स्तृ—which begins with स्त् which is a conjunct letter (संयोग) and ends in ऋ )। Thus स्तृ+सीष्ट ( लिङ: सीयुट् and सुट् तिथो: )= स्तृ इट् सीष्ट=स्तर् इ सीष्ट—स्तरिषीष्ट (षत्व by इण्को: etc. ) ; alt. form—स्तृषीष्ट। Similarly स्तरिषीयास्ताम्—स्तृषीयास्ताम् etc. and in लुङ् अस्तरिष्ट—अस्तृत ( by 'ह्रस्वादङ्गात्' ) अस्तरिषाताम्—अस्तृताम् etc. कृञ् to injure or molest. चकर्थ—by 'क्रादिनियम'—(2298). क्रियात्—by 'रिङ्शयग्लिङ्क्षु' (2367). कृषीष्ट—want of गुण due to कित्त्व by 'उश्च' (2368). अकार्षीत् by सिचि वृद्धि and रपरत्व। अकृत—by सिज् लोप—cp. 'ह्रस्वादङ्गात्'(2369). वृञ् to choose, to pray etc.

मित—। ऋतर्थेति। 'इट् सनि वा' (७।२।४२) इत्यत 'इट्' इति अनुवर्त्तते। 'लिङ् सिचोरात्मनेपदेषु' (७।२।४२) इति च सर्व्वमप्यनुवर्त्तते। तेन विधिस्तदन्तस्येति न्याय इत्यनेन तदन्तलाभस्तदाह—ऋदन्तात् संयोगादेरित्यादि। स्तरिषीष्टेत्यादि—इट्पक्षे गुणो विशेषः। एवम् लुङि अस्तरिष्ट इत्यत्र। अस्तृत इति तु 'ह्रस्वादङ्गादिति (२२६९) सिज्लोपाद् बोध्यम्। कृञ् हिंसायामिति। चकर्थ इति। 'कृसृभृवृ—' (२२९२) इति नियमात् थलि इण्निषेधः। क्रियात् 'रिङ् शयक्—' (२३६८) इति रिङादेशः। कृषीष्ट इति। 'उश्च' (२३६८) इति किच्वान्न गुणः। अकार्षीत्—सिचि वृद्धिः। रपरत्वम्। अकृत इति—'ह्रस्वादङ्गात्' (२२६९) इति सिज्लोपः। वृङ् वरणे इति—। अथ 'कृसृभृव—' इति इण्निषेधे प्राप्ते तदविध्यर्थमाह—

२५२७। बभूथाततन्थजगृभ्मववर्थेति निगमे ॥७।२।६४॥

दी—। एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट। ववरिथ। ववृव। ववृवहे। वरिता—वरीता।

These words are formed without इट् in vedas in an irregular way. [ बभूथ—भू + थल् which in usage gives—बभूविथ।

आततन्थ—आ + तन् + थल्　　…　　—आतेनिथ।
जगृभ्म—ग्रह + लिट् म ( 1st. pl. )　　…　　—जगृहिम।
ववर्थ—वृ + थल्　　…　　—ववरिथ। ]

वरिता—वरीता—option of दीर्घ by 'वृतो वा' ( २३९१ )।

मित—। बभूथेति। एषामिति—बभूथ, आततन्थ, जगृभ्म, ववर्थ इत्येतेषां शब्दानां वेदे इडभावरूपंनिपातनमिष्यते इत्यर्थः। अतएव भाषायां भवत्येवेत्याह—तेनेति। बभूवेत्यादीनां भाषायां तु बभूविथ, आतेनिथ, जगृहिम इत्यादि क्रमेण रूपम्। 'त्वं हि होता प्रथमो बभूथ'। 'येनान्तरिक्षमुर्वाततन्थ'। 'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्'। 'ववर्थ त्वं हि ज्योतिषाम्' इति नैगमान्य दाहरणानि। ववृवेति क्रादि—

नियमादिड्भाव:। वरिता—वरितेति—'वृतो वा' (२२९१) इतीटो दीर्घविकल्प:। सार्वधातुके तु वृणोति—वृणुते इत्यादि रूपम्। अथास्य धातोरात्मनेपदपक्षे—लिङि सिचि इड् विकल्प: स्यादिति दर्शयितुमाह—

२५२८। लिङ्सिचोरात्मनेपदेषु ॥७।२।४२॥

दी—। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि।

In the आत्मनेपद conjugation the aug. इट् comes optionally before the affixes of लिङ् (आशी:) and before सिच्—both (लिङ् and सिच्) coming after the root वृङ or वृ आत्मने, वृञ् or वृ उभयपदी and such roots as end in long ॠ। But this इट् will not have the lengthening (दीर्घ) directed by 'वृतो वा' (२२९१) due to the following prohibitory rule—

मित—। लिङ्सिचोरिति। लिङि सिचि चेति तदर्थ:। 'इट् सनि वा' (७।२।४१) इत्यत 'इड्वा' इत्यनुवर्तते। 'वृतोवा' (७।२।३८) इत्यतो वृत इति च। तदाह—वृङ्वृञ्भ्यामृदन्ताच्चेत्यादि। सूत्रे आत्मनेपदेष्विति वैचित्र्यार्थ:। एकवचनेनैवेष्टसिद्धेस्तदाह—तङीति। अथ वृतो वेति इटो दीर्घविकल्पे प्राप्ते आह—

२५२९। न लिङि ॥७।२।३९॥

दी—। वृतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट—वृषीष्ट। अवारीत्। अवरिष्ट—अवरीष्ट—अवृत। धुञ् १२५६ कम्पने, धुनोति। धुनुते। अधौषीत्। अधोष्यत्। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। 'स्वरतिसूति—'(२२७९) इति वेट्। दुधविथ-दुधोथ। किति लिटि तु 'श्र्युक:—' (२३८१) इति निषेधं

बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। 'स्तुसुधूञ्भ्यः—' (२३८५) इति नित्यमिट्। अधावीत्। अधविष्ट—अधोष्ट।

अथ परस्मैपदिनः। टुदु १२५७ उपतापे। दुनोति। श्वि १२५८ गतौ वृद्धौ च।

The aug. इट् is not lengthened, when coming before the लिङ् affixes of the roots इङ् and ग्रह् and also ऋकारान्त roots. Thus वरिषीष्ट etc. अवारीत्—by 'सिचि वृद्धिः—'। Here the इट् is नित्य। अवारिष्टाम् etc. ह्रस्व for the rule 'वृतो वा' (२२९१) does not apply due to the prohibition 'सिचि च परस्मैपदेषु' (२२९२—७।२।४०)। अवरिष्ट etc.—The option of इट् is by लिङ्सिचोः—' and the option of lengthening (दीर्घ) of the इट् is by 'वृतो वा' (२२९१)। अवृत is formed after the elision of सिच् by 'ह्रस्वादङ्गात्' (२२९९)। धुञ् (धु) also read as धूञ् (धू) to shake. अधौषीत्—by 'सिचि वृद्धिः—(२२९१)। दुधथ—by गुण and भवादिशः। In कित् लिट् viz in 'व' and 'म' the root will have इट् always by the क्रादिनियम which bars the prohibition enjoined by 'श्र्युकः—' (२३८१)। अधावीत्—this is the लुङ् sing of धूञ् (दीर्घ) which gets नित्य इट् by 'स्तुसुधूञ्भ्यः—' (२३८५)। अधविष्ट—अधोष्ट—लुङ् (तङ्पक्षे) option of इट् by 'स्वरतिसूतिसूयतिधूञूदितो वा' (२२७९)।

Now we take up the परस्मैपद roots upto राध साध संसिद्धौ under 'राधो—' (२५२२)। टुदु—or दु to give affliction. दु for अथ च—दवथुः। श्वि to go and to increase—

मित—। न खिङोति। 'वृतो वा' (७।२।३८) इत्यतो वृत इत्यनुवर्तते। खिङोति च षष्ठ्यर्थे सप्तमी। तदाह—वृतो खिङ इति। 'आर्धधातुकस्येट्—'

( ७।२।३५ ) इत्यत इडित्यनुवर्त्तते । अत आह—इट इति । वरिषीष्ट इति—गुणे कृते रपरत्वमिति भावः । अवारीत् इति—'सिचि वृद्धिः—' ( २२९७ ) । इह नित्यमिट् लिङ्सिचोरित्यस्य तङ्भावविषयत्वान्न इड्विकल्पः । अवारिष्टाम् इत्यादिषु 'सिचि च परस्मैपदेषु' ( २२९२ ) इति निषेधात् 'वृतो वा' ( २२९१ ) इति दीर्घविकल्पो न । अवरिष्ट इत्यादि । लिङ्सिचोरिति इड्विकल्पः । 'वृतो वेति' दीर्घविकल्पश्च । अवृत इति—इडभावपक्षे इदम् । 'ह्रस्वादङ्गात्' ( २३६९ ) इति सिज्लोपः । धुञ् कम्पने इति । अनिट् । अतएव सिचि वृद्धौ—अधौषीदिति । दीर्घान्तस्तु ( धूञ् इति पठित इत्यर्थः ) 'स्वरतिसूतिसूयतिधूञूदितो वा' ( २२७९ ) इत्यनेन इड्विकल्पं लभते इत्याह । दुधविथ—दुधोथ इति । एवम् दीर्घान्तस्य अधावीत् । अधविष्ट—अधोष्ट इत्यादि स्पष्टं मूले । अधविष्ट इत्यादि लिङ्सिचोरित्यनेनेति ज्ञेयम् ।

अथ परस्मैपदिन इति । राध साध संसिद्धावित्यत्र इत्यर्थः । टुदु उपतापे इति उपतापो पीडनम् । द्विगुणादभ्युच—'दवथुदव' इत्यसरः । हि गतौ वृद्धौ चेति । उपसर्गादस्य णत्वं स्यादित्याह—

## २५२० । हिनुमीना ॥८।४।१५॥

### दी—। उपसर्गस्थान्निमित्तात् परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति ।

Cerebral comes in case of the न of हिनु and मीना coming after a condition (of णत्व) lying in an उपसर्ग । हिनु = हि + श्नु ( स्वादि ) and मीना = मी + श्ना ( क्र्यादि ) । प्रहिणोति—also प्रमीणाति । हि coming after the अभ्यास is changed into घि by—

मित—। हिनुमीनेति । अनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । तस्य सौत्रो लुक् । अतएवाह—एतयोरिति । 'रषाभ्यां नो णः' ( ८।४।१ ) इत्यतो नो ण इति । 'उपसर्गादसमासेऽपि णोपदेशस्य' ( ८।४।१४ ) इत्यत उपसर्गादिति चानुवर्त्तते । तदाह—

उपसर्गस्थादित्यादि। हिनुमीनेति श्नु ग्रहणम्। प्रहिणोति। प्रमीणाति।
कुत्वार्थमाह—

२५३१। हेरचङि ॥७।३।५६॥

दी—। अभ्यासात् परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। पृ ११५८ प्रीतौ। पृणोति। पपार। स्पृ १२६० प्रीतिपालनयोः। 'प्रीतिचलनयो'रित्यन्ये। 'चलनं जीवनम्' इति स्वामी। स्पृणोति। पस्पार। 'स्मृ' इत्येके। स्मृणोति। पृस्मोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। आप्लृ १२६१ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्वादङ्। आपत्। शक्लृ १२६२ शक्तौ। अशकत्। राध १२६३ साध १२६४ संसिद्धौ। राध्नोति।

कुत्व i.e. कवर्गीय घ ('स्थानेऽन्तरतमः') is ordered in place of the ह of हिनोति or हि coming after the reduplicate or अभ्यास; but not so when चङ् follows. Thus हिहि णल—जि घि अ—जि घी अ—जिघाय् अ—जिघाय—जि by 'कुहोश्चुः' (२२४५)। [Why say अचङि—witness अजीहयत् and not अजीघयत्—हि णिच् लुङ् तिप्—in चङ्]। स्वामी takes चलन or movement to mean जीवन or life. पस्पार—by 'शर्पूर्वाः खयः' (२२५९) and 'अचो ञ्णिति' (२५४)। It is stated that all the three roots पृ, स्पृ and स्मृ are of vedic application. आप्नुतः—no गुण, because तस् is ङित्। आप्नुवन्ति—here (आप्नु + अन्ति) यण् by 'हुश्नुवोः—' (२३८१) does not apply for the उ of नु is संयोगपूर्व (प् + उ); but उवङ् comes in by 'अचि श्नु—' (२७२)। आप्नुवः—here आप्नुः is not an alt. form for उ, being संयोगपूर्व, will not be dropped by 'लोपश्चास्या-

तरस्याम् स्वोः' (२३३३)। आप्नुहि—here हि does not disappear by—'उतश्च प्रत्ययात्—' (२३३४) for the same reason as stated above. लृदित्वादङ् i.e. by 'पुषादिद्युतादय्लृदितः—' (२३४३)। राध to accomplish—

मित—। ईरिति—। 'अभ्यासाच्च' (७।३।५५) इत्यतोऽभ्यासादित्यनुवर्तते। 'चजोः कु—' (७।३।५२) इत्यतः कुरिति च। तदाह—अभ्यासात् परस्येत्यादि अचङीति पर्युदासादाह—न तु चङीति। जिघाय इति—हिङ् णल् इति स्थिते अभ्यासादुत्तरस्य कुत्वेन घः आन्तरतम्यात्। ततो इद्धायादेशौ। चङि तु—अजीहयत्। (यद्यपि हित्वाभ्यामकार्य्यादि स्यादिति अर्थव्यम्)। जलनं जीवनमिति। जलनवती (सक्रियस्य) जीवितदर्शनादिति तदर्थः। पृषोत्यादयस्तत्र इति। मत् इत्येतमपि गृहीतेति श्रेयम्। आप्लृ व्याप्ताविति। लृदित्। अनिट् च। आप्नुत इति—तसि ङित्त्वान्न गुणः। आप्नुवन्तीति। आप्नु + अन्ति इति स्थिते उकारस्य संयोगपूर्व्वकत्वेन (प्न् + उ) अनेकाचोऽपि 'हुश्नुवो'रिति (२३८७) यण् न। किन्तु 'अचिश्नु—' (२७२) इत्युवङेवेति भावः। एवमाप्नुव इत्यत्र 'लोपश्चास्यान्यतरस्यां म्वोः' (२३३३) इति उकारलोपविकल्पोऽपि नास्ति। किञ्च आप्नुहीत्यत्रापि संयोगपूर्व्वकत्वादेव 'उतश्च प्रत्ययात्—' (२३३४) इति हेर्लोपो नेति श्रेयम्। लृदित्वादिति—पुषादिद्युतादि (२३४३) इत्यनेनेत्यर्थः। राध साध संसिद्धाविति। राध्नोतीति। अथ हिंसार्थकस्य राधतेर्लिटि—एत्वाभ्यासलोपौ स्त इत्याह—

२५३२। राधो हिंसायाम् ॥६।४।१२३॥

दी—। एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असाद्धाम्।

अथ द्वावनुदात्तेतौ। अशू १२६५ व्याप्तौ सङ्घाते च। अश्नुते।

The root राध—meaning to injure, offend etc will have एत्व and अभ्यासलोप when a कित् लिट् or a सेट् ( with इट् ) थल् ( see अत एकहल्—2260 ) follows Thus अपरेधतुः and रेधुः ( कित् लिट् ). and also रेधिथ (सेट् थल् ) । राद्धा—राध्+ता—राध् धा by 'झषस्तथोर्धः—' (2280). अरात्सीत्—by वृद्धि 'वदव्रज—' (2267). ध is changed into त by 'खरि च' ( 121 ); and सिच् does not elide for, it is not preceded by इट् as the root is अनिट् । अराद्धाम्—see राद्धा ( तस्=ताम् ) ।

Now we take up two अनुदात्तेत् or आत्मनेपदी roots, viz अशू ( अश् ) and ष्टिघ ( स्तिघ् ) । अश्नुते—The root will have the aug. नुट् in लिट् by :—

मित—। राध इति। 'राधोहिंसायां' ... 'घुमोरेद्धावभ्यासलोपश्च' (६।४।११९) इत्यतो एत्वा-भ्यासलोपाविति। 'गमहनजनखनघसां—' (६।४।९८) इत्यतः क्ङितीति। 'अत एकहल्—' (६।४।१२०) इत्यतो लिटीति। 'थलि च सेटि' (६।४।१२१) इति च सर्व्वमनुवर्त्तते। तत फलितमाह—एत्वाभ्यासलोपौ स्त इत्यादि। हिंसायामिति योजनीयं राध इति च। किति लिटि अपरेधतुः रेधुरिति। थलि तु—रेधिथ इति। राद्धा इति—राध+ता इति स्थिते 'झषस्तथोर्धो—' (२२८०) इति तस्य धः। अरात्सीत्—'वदव्रज—' (२२६७) इति हलन्तलक्षणा वृद्धिः। 'खरि च—' (१२१) इति धस्य तः। इटः परत्वाभावात् सिज्लोपो न। अराद्धाम् इति—तसस्ताम्। तस्य धः प्राग्वत्।

अथ द्वाविति। अशूष्टिघाविल्यर्थः। अनुदात्तेताविति आत्मनेपदिनाविति बोध्यम्। अथाभ्यासात् परस्य अश्नोतेर्नुडागमः स्यादिति दर्शयति—

२५२३। अश्नोतेश्च ॥७।४।७२॥

टी—। दीर्घादभ्यासावर्णात् * परस्य नुट् स्यात्।

---

* 'अभ्यासादवर्णात्' इति बालमनोरमायां पाठः। 'अभ्यासावर्णात्' इति तत्त्वबोधिनीसम्मतपाठस्तु साधीयानिति स एव गृहीतः।

आनशे। अशिता—अष्टा। अशिष्यते—अक्ष्यते। अश्नुवीत। अक्षीष्ट—अशिषीष्ट। आशिष्ट—आष्ट। आक्षाताम्। ष्टिघ १२६६ आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता।

The aug. नुट् is prefixed to the verbal base (अङ्ग) अश following the अवर्ण of the अभ्यास, after the same (अवर्ण) has been lengthened (by the rule 'अत आदेः'—2248). Thus अश्+त (लिट्) =अश् अश् ए=अ अश् ए=आ नुट् अश् ए=आन् अशे=आनशे। अशिता—अष्टा—option of इट् by 'स्वरति—' (2279) for अशू is ऊदित्। In अष्टा षत्व comes in by 'व्रश्च—' (294) and टत्व by ष्टुना ष्टुः (113). Similarly by इड्विकल्प—अशिष्यते—अक्ष्यते (अश्+स्यते (when without इट्)—अष्स्यते ('व्रश्च—')—अक्स्यते (षढोः कः—(295) and इण्कोरादेशप्रत्यययोः—211-12). अश्नुवीत—by श्नु (अचि श्नु—' 272). अक्षीष्ट—अशिषीष्ट—आशीर्लिङ्। आशिष्ट—आष्ट—लुङ्। By इड्विकल्प आष्ट elision of सिच् by 'झलो झलि; षत्व etc as before. आक्षाताम्—आट् अश् सिच् आताम्—आ अश् स् आताम्—आष् साताम्—आक्षाताम्—आक्षाताम्। ष्टिघ to incense. षोपदेश—स्तिघ्नुते etc.—easy.

मित—। अश्नोतेर्येति। 'अशेरिति वक्तव्ये अश्नोतिव्याप्त्यर्थं श्नुनिर्देशः' इति नागेशः। 'अत लोपोऽभ्यासस्य' (७।४।५८) इत्यतोऽभ्यासस्येत्यनुवर्तते। 'अत आदेः' (७।४।७०) इत्यतोऽत इति च। तदाह—अभ्यासावर्णादिति—अभ्यासस्य अवर्णादिति च तदर्थः। 'तस्मान्नुड् द्विहलः' (७।४।७१) इत्यतस्तस्मादिति नुडिति चानुवर्तते। तेन (तस्मादित्यनेन) च अत आदेरिति कृतदीर्घं आकारः परामृश्यते। तदाह—दीर्घादिति। अथवा 'दीर्घ इणः किति' (७।४।६९) इत्यत्र दीर्घग्रहणात् दीर्घीभूतात् दीर्घादिति वार्थो लभ्यते इति विभाव्यम्। आनशे इति। आकारात् परस्य अशेर्नुडागमः। टित्त्वादाद्यवयवः। अशिता—अष्टा इति। अशू इति ऊदित्—

पाठात्— 'स्वरति—' (२२७९) इति इड् विकल्पः। उभयत्र व्रश्चादिना (२९४); अश् + स्ते इति स्थिते व्रश्चादिना षत्वे 'षढोः कः—' (२९५) इति षस्य कः। सतेश्च इण्कोरित्यादिना (२१२-१२) षः। अश्नुवीत इति—'अचि श्नु—' (२७२) इत्युवङ्। अशिषीष्ट—अक्षीष्ट—आशिषि रूपम् इत्यादि प्राग्वत्। आशिष्ट— आष्ट इति—लुङि त—प्रत्यये रूपे। उभयत्र आट् अश् सिच् त—आ अश् स् त इति स्थिते 'झलो झलि' (२२८१) इति सलोपः। षत्वष्टुत्वे। आक्षाताम्—प्राग्वत् षत्वकुत्वषत्वानि। ष्टिघ आस्कन्दने इति। षोपदेशत्वात् सकारे जाते टुत्व-निवृत्ते- सकारः। स्तिघ्नुते इत्यादि। तिष्टिघे—इण्कोरादेशप्रत्यययोः (211-12) इति सस्य षः। स्तेघिता इति—लघूपधगुणः।

टी—। अथ आगणान्तात् परस्मैपदिनः। तिक १२६७ तिग १२६८ गतौ च। चादास्कन्दने। तिक्नोति। तिग्नोति। षघ १२६९ हिंसायाम्। सघ्नोति। ञिधृषा १२७० प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता। दम्भु १२७१ दम्भने। दम्भनं दम्भः। दभ्नोति। ददम्भ। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयते इत्युक्तम्। 'अनिदिताम्—' (४१५) इति नलोपः। आभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ' (वार्त्तिक)। देभतुः। ददम्भतुः। इदं कित्त्वं पिदपिद्—विषयकमिति सुधाकरादयः। तन्मते तिप्—सिप्—मिप्सु। देभ। देभिथ। 'देभ' इति रूपान्तरं बोध्यम्। अपिद्विषयकमिति न्यासकारादिमते तु—ददम्भ। ददम्भिथ। ददम्भेत्येव। दभ्यात्। ऋधु १२७२ वृद्धौ। 'तृप प्रीणने' इत्येके। क्षुभ्नादित्वात् णत्वं न। तृप्नोति। 'छन्दसि' (गणसूत्र)। 'आ गणान्तादधि-

कारोऽयम् । अक्ष १२७३ व्याप्तौ । अक्ष्णोति । दघ १२७४ घातने पालने च । दघ्नोति । चमु १२७५ भक्षणे । चम्नोति । रि १२७६ क्षि १२७७ चिरि १२७८ जिरि १२७९ दाश १२८० दृ १२८१ हिंसायाम् । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' । 'ऋक्षि' इत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति ॥ वृत् ।

॥ इति तिङन्तस्वादिप्रकरणम् ॥

We now deal with the स्वादि परस्मैपदी roots up to the end of the class. From the च (at the end) we infer that तिक् तिग &c. mean to incense or povoke also ( आस्कन्दन ) । जिधृषा ( धृष् ) to look spirited, to challenge etc. धृष्ट and not धृषित due to आ at the end by 'आदितश्च' (3036) and the elision of क्त gives वर्तमाने क्त by 'ञीतः क्तः' (3088). From this root we have प्रगल्भधृक् etc. (प्रगल्भ—धृष्+क्विन् ). दम्भु to make a parade, to be proud etc. It has been stated in another grammar that the लिट् of श्रन्थि,ग्रन्थि,दम्भि and स्वञ्जि will be regarded as कित् in an optional way. To this we have recourse here also ( though the above rule श्रन्थि·ग्रन्थि—etc is non—Paninian). Thus in ददम्भ + अतुस्, because अतुस् is कित् [ N. B. The rule 'असंयोगाल्लिट् कित्' ( 2242—1. 2. 5 ) cannot be resorted to here for दम्भ ends in a संयोग or conjunct letter. Hence it is that Bhattoji seeks out a different grammar], so the न in दनभ् is dropped by 'अनिदिताम्—' (415). But the rule 'अनिदिताम्—' (6. 4. 24) falls under the असिद्धवत्सूत्र (6. 4. 22) hence the नलोप being असिद्ध ( non-existant ) due to its आभीयत्व, we can neither have एत्व nor have the अभ्यासलोप by 'अत एकहल्—' (2260)—6. 4.120) due to the कित्त्व of the affix अतुस् ( in the above-mentioned way).

This difficulty is solved by the 'varttika—दम्भेश्च—' etc. 'It has to be stated that दम्भ also will have एत्त्व and अभ्यासलोप (even though the नलोप is regarded as असिद्ध )' । Thus देभुः also ददम्भुः ( for अतुस् is optionally कित् here ). This कित्त्व of लिट् by the above rule or statemant 'श्रन्थि ग्रन्थि—' is taken by सुधाकर and others to extend to पित् लिट् as well as to अपित् लिट्; so that according to their opinion एत्त्व and अभ्यासलोप will also be effected in cases of तिप, सिप् and मिप्—thus देभ—ददम्भ and देभिथ as—ददम्भिथ । Here देभ etc. should be regarded as alternatives of ददम्भ etc. But Nyasakara and others (including me i.e. Bhattoji himself) hold that this कित्त्व of लिट् covers अपित् affixes only and not the पित् ones viz तिप्, सिप् and मिप्। Thus ददम्भ ( णल् ), ददम्भिथ ( थल् ) and ददम्भ ( णल् उत्तम ) are the only forms. दभ्यात्—आशीर्लिङ् which being कित् ( किदाशिषि ) the न of दम्भि elides by 'अनिदिताम्—' ( ४१५ ) ।

'छन्दसि'—It is a gana सूत्र and means that the roots hence to the end of the chapter are of pure vedic origin. The root चि is intended by some to be used in secular language also—न तद् यशः etc. The in fullverse is—

शस्त्रं च रक्ष्यं यदशक्यरक्ष्यं न तद् यशः शस्त्रभृतां क्षिणोति

( रघु—II-–40 )

Some hold that रि and चि are not two separate roots but both form a single one ऋचि (and not रिचि) with vowel ऋ at the outset. वृत् i.e. here end all the roots of the स्वादि class.

मिल—। गतौ चेति चकारदोत्यमाह—चादिति। जिधृषा इति। धृष् इति धातुः। ञित्करणं वर्त्तमाने क्तार्थम्। 'धौतः क्तः' ( ३०८८ )=धृष्टः। आदित्-करणमिण्निषेधार्थम्—'आदितश्च' ( ३०३६ ) इति। अस्मादेव ग्रूलेन घृष्णोति इति क्निप्रत्यये ग्रूलश्चक् इति तत्त्वबोधिनी। दम्भनं दम्भ इति। लोकवचनाय

विहितकर्मानुष्ठानमित्यर्थः। अयीति—इकाध्ययीयत इति। 'असंयोगाल्लिट् कित्' इति (२२४२) पाणिनिसूत्रस्य असंयोगपरलिड्विषयत्वाद् दम्भेः संयोगपरत्वात् कित्त्वाप्राप्तेर्व्याकरणान्तराश्रयणमिति ज्ञेयम्। तस्येति नलोपस्य। श्नाभीयत्वेनेति—अनिदिताम्—(६।४।२४) इत्यस्य असिद्धवत्सूत्राधिकारस्थितत्वेन (६।४।२२) इत्यर्थः। दम्भेर्इत्यादि वार्तिकम्। भाष्ये 'अत एकहल्—' (२२६०—६।४।१२०) इत्यत्र पठितम्। कित्त्वस्य वैकल्पिकत्वादाह—देभतुः—ददम्भतुरिति। ननु कित्करणान्नलोपे तस्य आसिद्धौ च यदि एत्वाभ्यासलोपौ न प्राप्नुतस्तर्हि व्याकरणान्तराश्रयणं त्यज्यतामिति चेत् न। तथा सति ददम्भतुरित्येकमेव पदम् कित्त्वाभावेन 'अत एकहल—' इत्येत्त्वाभ्यासलोपस्याप्रवृत्तेः। इदं कित्त्वमिति। पिदपिद्विषयकमिति। अतएव तिपि (णलि) देभ इति, सिपि (थलि) देभिथ इति, मिपि च (णलि) देभ इति कित्त्वात् पाक्षिकरूपान्तराणि। तदेन्मतं न दीक्षितसम्मतम्। गौरवात्, अपित एव कित्करणस्येष्टत्वात्। न्यासकारादिविरोधाच्चेति दर्शयति। अपिद्विषकमिति। अतएवात्र मतभेदेन—ददम्भ—देभ। ददम्भिथ—देभिथ। ददम्भ—देभेति पिद्विषयेऽपि रूपद्वयमिति ज्ञेयम्। दम्भ्यात् इति। आशिषि कित्त्वात् 'अनिदिता'मिति नलोपः।

छन्दसीति। गणसूत्रमिदम्। तस्यार्थमाह—आगणान्तादिति। अयमिति। 'चि' इति परामृश्यते।" न तदयश इति। रघुवंशीयद्वितीयसर्गस्थचत्वारिंशत्तमश्लोक—शेषार्धोऽयम्। सम्यक् तु 'स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान् दर्शित—शिष्यभक्तिः। शस्त्रेण रक्ष्यं यदशक्यरक्ष्यं न तद् यशः शस्त्रभृतां क्षिणोति। इति। तत्र तदित्यस्य यदित्यनेन परामर्शः। क्षिणोतीति हिनस्तीत्यर्थः। यत् रक्ष्यं (वस्तु इति मल्लिनाथः) शस्त्रेण अशक्यरक्ष्यं तत् शस्त्रभृतां यशः न क्षिणोतीत्यन्वयः शेषाङ्कस्य। 'अशक्यार्थप्रतिविधानं न दोषाये'ति भावः। ऋचि इति। नेदं रिचि इति धातुद्वयं किन्तु ऋकारादिः 'चि'इत्यन्न एकएवेति तदर्थः। इदिति। स्वादयः संगृहीता परिगणिता इत्यर्थः।

॥ इति मितभाषिण्यां स्वादिप्रकरणम् ॥

अथ

# तिङन्ततुदादिप्रकरणम्

दी—तुद १२८२ व्यथने। इतः षट् स्वरितेतः।

इतः i. e. from तुद to give pain, we take up the six स्वरितेत् (उभयपदी) roots ending in क्षिप विक्षेपणे।

मित—। अथ श—विकरणान् तुदादीन् निरूपयन्नाह—इत इति। तुदेत्यारभ्य 'क्षिप विक्षेपणे' इत्यन्ता इत्यर्थः।

२५२४। तुदादिभ्यः शः ॥३।१।७७॥

दी—। तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्। अतुत्त। णुद १२८३ प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता। दिश १२८४ अतिसर्जने। अतिसर्जनं दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत। भ्रस्ज १२८५ पाके। 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति। भृज्जते।

The affix or विकरण श (अ) is attached to the roots of the तुदादि class in the active voice. This also overrules शप् like श्नम् etc. श being ङित् is not पित् hence by 'सार्वधातु-

ङनपित्' it is ङिद्वत् or अगुणी ; thus तुदति—तुदते etc. तुतोद—लिट्, परस्मै—णल् is पित् hence गुण by 'पुगन्त—(2289). तुतोदिथ—Here इट् is नित्य due to भारद्वाजनियम। तुतुदे—कित् लिट्, hence no guna. अतौत्सीत्—वृद्धि by 'वदव्रज—' (2267). The root is अनिट्, hence सिच् does not elide, for 'इट ईटि' (2266) does not apply. अतुत्त—आत्मने. लुङ्। Here सिच् elides by 'झलादझात् (2309), and affix त is ङित् hence no guna. णुद to push on, to urge etc. It is णोपदेश hence न in place of ण by 'णो नः'। मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् (पूर्वमेघ); conjugation exactly like that of तुद दिश् to affer, give etc. अनिट्। दिशति etc. 'दिदेश कौत्साय समस्तमेव' (रघु—V). देष्टा लघूपधगुणः। दिक्षीष्ट—दिश्+सीष्ट (सीयुट्+सुट्+त—आशीः)—दिष्+सीष्ट by 'व्रश्च—' (294)—दिक्षीष्ट by 'षढोः कः सि' (295) and 'इण्कोः आदेश—' (211-12). अदिक्षत्—लुङ् तिप् here क्स, replaces च्लि by 'शल इगुपधादनिटः क्सः' (2336-3. 1. 45). No guna because क्स is कित्। Similarly अदिक्षत। भ्रस्ज to roast, fry. भ्रस्ज् becomes भृस्ज् by 'ग्रहिज्या—' (2412). स् becomes श् by 'स्तोः श्चुना श्चुः'; (III) and the श्, again, becomes ज् by झलां जश्—(२१)। Thus भृस्ज् श+तिप्—भृस्ज् अति—भृश्ज् अति—भृज्ज् अति—भृज्जति।

मित—। तुदादिभ्य इति। तुदादिभ्यो धातुभ्यः शप्रत्ययः स्यात् सार्वधातुके परे इति सूत्रार्थः। शपोऽपवादः। सार्वधातुकमपिदिति शप्रत्ययस्य अपित्त्वेन ङिद्वत्त्वान्न गुणः। श इत्यस्य अकारमात्रं तिष्ठति। तुदति इत्यादि। स्पष्टम् तुतोद—तुतुदे इति। णलः पित्त्वात् पूर्वस्य लघूपधगुणः (२१८९) परस्य तु एशः कित्त्वान्न गुण इति विशेषः। तुतोदिथ इति। भारद्वाजनियमान्नित्यमिडिति भावः। अतौत्सीत् इति—वदव्रजेति (२२६७) हलन्तलक्षणा वृद्धिः। इटः परत्वाभावादिट ईटीति (२२६६) इति सिज्लोपो न; अतुत्त इति। झलादझादिति (२३६९)

सिज्लोपः। तप्रत्ययस्य—क्ङित्त्वान्न गुणः। णुद प्रेरणे इति। णोपदेशत्वात्णो न इति नः। अनिट्। तुदादिवद्रूपम्। दिश अतिसर्ज्जने (दाने) इति। दिशतीत्यादि। दानार्थकत्वं यथा 'दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम्' इति (रघु—५म—३०श)। उपसर्गवशात् अर्थान्तरे वृत्तिः। तद् यथा—'उपदिशतु मामाचार्य्यः'। मत् कर्त्तव्यं निर्द्धारयत्वित्यर्थः। 'उपदिशति हि कामिनीनां यौवनमद एव ललितानि' (काव्यप्रकाशः)। तत्र आविष्करोतीत्यर्थः। दिक्षीष्ट इति। आशिषि रूपम्। दिश्, सीयुट्, सुट्, त इति स्थिते, 'व्रश्च—' (२९४) इति षत्वे दिष् सीष्ट इति जाते 'षढोः कः—' (२९५) इति षस्य कः। ततः परसकारस्य—इण्कोरित्यादिना षः। अदिक्षत् इति। दिश्+च्लि+तिप् इति स्थिते अडागमे 'शल इगुपधात्—' (२३३६) इति च्लेः क्सः—अदिश् क्स त्—अदिष् स त्—अदिक्षत्—अदिक्षत्—पूर्व्ववत् षत्वकत्वषत्वानि। एवं लङि—अदिशत इति। भ्रस्ज पाके इति प्रत्ययस्य क्ङित्त्वात् सम्प्रसारणम्। स्पष्टं सूत्रे। अथार्द्धधातुकेऽस्य रोपधयो रमागमविकल्पः स्यादित्याह—

२५३५। भ्रस्जो रोपधयो रमन्यतरस्याम् ॥६।४।४७॥

दी—। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्द्देशाद्रोपधयोर्निवृत्तिः। बभर्ज्ज। बभर्ज्जतुः। बभर्ज्जिथ—बभर्ष्ठ। बभर्ज्ज। रमभावे—बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जिथ। 'स्कोः—' (३८०) इति सलोपः। 'व्रश्च—' (२९४) इति षः। बभ्रष्ठ। बभ्रज्ज। भ्रष्टा—भर्ष्टा। भ्रक्ष्यति—भर्क्ष्यति। 'क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्व्वविप्रतिषेधेन' (वार्त्तिक)। भृज्ज्यात् भृज्ज्यास्ताम्। भर्क्षीष्ट—भ्रक्षीष्ट। अभार्क्षीत्—अभ्राक्षीत्। अभर्ष्ट—अभ्रष्ट। क्षिप १२८६ प्रेरणे। क्षिपति—क्षिपते। क्षेप्ता। अक्षैप्सीत्।

भ्रक्षित। क्रष १२८७ विलेखने। क्रषति। क्रषते। क्रष्टा—कर्ष्टा। क्रष्यात्। क्रक्षीष्ट। 'स्पृशमृश—' (वार्त्तिक) इति सिज्वा। पक्षे क्सः। सिचि अम्वा। अक्राक्षीत्—अकार्क्षीत्—अक्रक्षत्। तङि 'लिङ्सिचौ—' (२३००) इति कित्त्वादम्न। अक्रष्ट। अक्रक्षाताम्। अक्रक्षत। अक्रक्षत (क्सपक्षे त—प्रत्यये इदम्; पूर्व्वन्तु सिच्पक्षे झिप्रत्यये इति विशेषः)। अक्रक्षाताम्। अक्रक्षन्त। ऋषी १२८७ गतौ। परस्मैपदी। ऋषति। आनर्ष। जुषी १२८८ प्रीतिसेवनयोः। आत्मनेपदिनश्चत्वारः। जुषते। ओविजी १२८८ भयचलनयोः। प्रायेणायमुत्पूर्व्वः। उद्विजते।

The augment रम् is optionally ordered in the places of the रेफ and the penultimate of भ्रस्ज् when any आर्द्धधातुक (affix) follows. अकार in रम् is for facility in pronunciation and being मित् or म्—eliding, रम् is placed after the final vowel of भ्रस्ज् (by 'मिदचोऽन्त्यात् परः'.)। As the स्थानषष्ठी (viz this takes or is placed in the place of that—'इदमस्य स्थाने प्रयुज्यते इत्येवंरूपा स्थानयोगा षष्ठीत्यर्थः') has been pointed out (by the sutrakara) in रोपधयोः (viz रोपधयोः स्थाने), so the र and the उपधा will disappear and thus make room for the aug, रम् (or र्) ❀ Thus भ्रस्ज्+णल् (or भ् र् अ स्

❀ The argument is this :—Panini makes रम् मित्, hence it will have a seat after अन्त्यादचः or after the final vowel. But if it does so then र of भ and the सकार remains unelided. How, then, to form बभर्ज्ज ? The answer is this :— Panini has

ज्+णल्)=भर्ज्+अ (for with रम्—भ्र्अ स्ज्+णल्=भ्र्अ रम् स् ज्+णल्=भ् अर्ज=भर्ज—cp—रोपधयोः—etc. of दीक्षित)। Then by duplication as before भर्ज् भर्ज् अ—बभर्ज। And the alt. form is बभ्रज्ज—भ्रस्ज्+णल्—भ्रस्ज् भ्रस्ज अ—भभ्रस्ज् अ by हलादिः शेषः—भभ्रस्ज by 'अभ्यासेचर्च'—बभ्रश्ज by श्चुत्वः—(III)—बभ्रज्ज by 'झलां जश् झशि' (51)

In अतुस्—बभर्जतुः in the रम्पक्ष and बभ्रज्जतुः in the रमभावपक्ष by द्वित्व etc. as before. Here एत्त्व and अभ्यासलोप do not come in for अतुस् is not कित् as भ्रस्ज् is संयोगपर (has a conjunct letter at the end). Thus 'असंयोगात्—' (2242) does not apply and consequently no एत्त्व or अभ्यासलोपः। Similarly बभर्जुः—बभ्रज्जुः। In थल् बभर्ज्थ—बभर्ष्ट; बभर्ज्+थ—बभर्ष्थ by 'व्रश्च—' (294)—बभर्ष्ठ (by ष्टुना—113) with the option of इट् due to the भारद्वाजनियम। Cp Rule No. 2296. This is in the रम्पक्ष। And in the रमभावपक्ष बभ्रज्जिथ—बभ्रष्ठ। The procedure

---

made रम् both an aug. and a substitute आगम & आदेश (आदेश). Being thus allowed to exercise the force of both, रम्, being मित् (like other मित् augs.) will sit after 'अ' and before स of भ्रस्ज् and being an आदेश will dismiss the र् and स् of भ्रस्ज्। All this is known from the term 'रोपधयोः in the rule; for had रम् been an aug. only—then Panini could have enunciated 'भ्रस्जो रमन्यतरस्याम्' instead of 'भ्रस्जो रोपधयोः—etc. Thus भ्रस्ज् is now equalled to भर्ज् or भर्ज with the elision of र् and स् of the same (भ्रस्ज which contains भ् र् अ स् ज). See also तत्त्व. बो on the point.

of the latter form is obvious in the text (मूले) and the former is easy. These are in परस्मैपद। But in the आत्मनेपद बभर्जे—बभ्रज्जे etc with रम् and without रम् in turn. In लुट ता भ्रष्टा (without रम्)—भर्ष्टा (with रम्) etc, by 'व्रश्च—and छ्वोः—' In लृट्स्यति and स्यते—भ्रक्ष्यति—भर्क्ष्यति and भ्रक्ष्यते भर्क्ष्यति। The procedure is षत्व of ज by 'व्रश्च—' (294) then कत्व of ष by 'षढोः कः—' (295) and then षत्व of स्यति, स्यते by इण्कोः etc. In आशीर्लिङ् (परस्मै—) the form stands भ्रस्ज्+यासुट् तिप् where if रम्, due to the posteriority of the rule—' (6.4.47.) to the rule 'ग्रहिज्या' (6 1.16) which enjoins सम्प्रसारण of भ्रस्ज् comes first, then the form will figure as भर्ज्यात्। But the correct form is भृज्ज्यात्। Then how are we to proceed here. The question is solved by the Varttikakara. Hence Bhattoji lays down the Varttika—'क्ङिति रमागमम्—etc' i.e. 'सम्प्रसारण will bar the aug. रम् by dint of पूर्व्वविप्रतिषेध when a कित् affix follows'. पूर्व्वविप्रतिषेध is the quite reverse of what is meant by परविप्रतिषेध or 'विप्रतिषेधे परं कार्य्यम्'। Thus रम् being barred by सम्प्र. due to the कित्त्व of यासुट् the form now is भ्रस्ज् यात्—भृस्ज् यात्—भृश्ज् यात् by 'स्तोः श्चुना—' (III)—भृज्ज् यात् by 'झलां जश्—'=भृज्ज्यात्। भर्क्षीष्ट—भ्रक्षीष्ट—In आशीः आत्मने. with सीयुट्, सुट् or सीष्ट—भर्ज्+सीष्ट (with रम्) and भ्रस्ज्+सीष्ट (without रम्). Proceed with षत्व, कत्व and षत्व as before. In परस्मै. लुङ्—अभार्क्षीत् (with रम् and सिच् and वृद्धि by 'वदव्रज—' (2267); there is no इट् before सिच्, hence the same does not elide; षत्व, कत्व and षत्व as before). अभ्राक्षीत् (without रम् but सिच् etc, comes as above). In आत्मने. लुङ्—अभर्ष्ट—with रम्, thus

अभर्ज् सिच् त—अभर्ष् स् by 'व्रश्च—'—अभर्ष ० त by 'झलो झलि' (2281)—अभर्ष्ट by ष्टुत्व and अभ्रष्ट without रम् thus अभ्रस्ज् सिच् त—अभ्रस्ज ० त—अभ्र ० ज् त by 'स्कोः—(380) अभ्रष्ट etc. क्षिप् to throw. अक्षैप्सीत् by 'वदव्रज etc'. अक्षिप्त—by 'झलादझल्' (2369). कृष् to till, to plough. कृषति etc. no guna for श is अपित्। क्रष्टा by the aug. अम् cp 'अनुदात्तस्य—' (2402) and कर्ष्टा by गुण and लपरत्व when अम् is wanting. कृष्यात्—कृक्षीष्ट these are कित् hence no अम् which comes in due to अकित् affixes. No guna due to कित्त्व। अक्राक्षीत् (with सिच्, अम् and वृद्धि)—अकार्क्षीत् (with सिच् and वृद्धि but without अम्), अकृक्षत् (with क्स by 'शल—' (2336) no guna for क्स is कित्). The reason is clear in the text. अकृष्ट by सिच्लोप cp.—'झलाद—' (2369). Also see text. अकृक्षत—अकृष सिच् अत by आत्मनेपदेष्वनतः (2258) then कत्व and षत्व as before. The second अकृक्षत = अकृष् क्स त—अकृष् स् त etc as before. This is sing. whereas the former is सिच् plural. अकृक्षाताम्—one by सिच् and आताम् and the next is by क्स and आताम् where the अ of क्स is dropped by 'क्सस्याचि' (2337) otherwise it would give अकृक्षेयाताम् by 'आतो ङितः' (2235). अकृक्षन्त because 'आत्मनेपदेष्वनतः' (2258) does not apply here. ऋषी to go. आनर्ष by 'अत आदेः' and 'तस्मान्नुड् द्विहलः'। ओविजी (विज्) to fear and to move. It is generally preceded by the उपसर्ग उद्। उद्विजते for श is ङिद्वत्—

मित—। भ्रस्ज इति। भ्रस्जः+रोपधयोः+रम्+अन्यतरस्याम् इतिच्छेदः। भ्रस्ज इति षष्ठ्यन्तं, तदाह—भ्रस्जेरिति। रोपधयोरिति—रश्च उपधा चेति द्वन्द्वः। तयोरिति षष्ठी। इयं च स्थानषष्ठी—तदाह—रेफस्य उपधायाश्च स्थाने इति।

रोपधयोरित्यत्र रकाराद्कार उच्चारणार्थः। न तु अकारसहितो रकार इति भ्रमि-तव्यम्; उपधा चात्र सकार एव। तेन भ्रस्ज (भ् र् अ स् ज्) इत्यस्य रेफ-सकारयोर्लोपे भ् अ ज् इति तिष्ठति। ततो रम्। अयं च मित्त्वादागमस्तथा 'रोपधयो रम्' इत्युक्तत्वादादेशोऽपि। रमि रेफादकार उच्चारणार्थः। मिदचोऽ-न्त्यात्पर इति परिभाषयोपतिष्ठते। अन्त्यः अच् चात्र अकारः। तेन तस्मात् परो रम् (रेफः) विधीयते। अतो भ् अज् इति भ्अर्ज्—भर्ज् इति भवति। अन्यतरस्यामित्युक्तत्वात् पक्षे यथापूर्वं 'भ्रस्ज्' इति तिष्ठति। ननु किमयं रमागमः सार्वत्रिकः। नेत्याह—आर्द्धधातुके इति। 'आर्द्धधातुके' (६।४।४६) इत्यधि-कारात्। तेन सार्वधातुकविषये रमागमो नेति फलितम्। ननु रमो मित्त्वात् 'मिदचोऽन्त्यात् परः' इति अन्त्यादचोऽकारात् पराऽस्त्वस्तु, रकारसकारयोर्निवृत्तिस्तु कथमित्याशङ्का परिहरति—स्थानषष्ठीनिर्देशादिति। तस्य स्थाने भवति इत्युक्तत्वादिति तदर्थः। अयं भावः—स्थानविशेषलाभाय मित्त्वस्य करणात् रोप-धयोः (रकारसकारयोः) स्थाने रम् भवति। यत्र स्थानिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते, स एव तत्स्थाने भवति। यथा 'इको यणचि' इत्यादौ यणादिः। प्रकृते (भ्रस्ज् इत्यत्र) तु रमो निर्दिष्टस्थानिकत्वात् रोपधयोः स्थाने न भवति। एवं चास्य आदेशागमत्वे भवतो यथा मस्जः प्रत्ययागमत्वे इति। अन्ये त्वेतादृग्व्याख्यानमयुक्तमिति मत्वा 'मनः क्ङिति (लोपश्च)' इत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः रम् तु आगम एवेत्याहुः। अपरे तु 'भ्रस्जो रमन्यतरस्याम्' इत्येव सूत्रमस्तु।' इति तत्त्वबोधिन्यां ४०८ पृष्ठे विस्तर इति विरम्यते।' अत्र रम आदेशागमत्वं एव विवक्षितं। कुत इति चेदुच्यते। यदि ह्ययमादेशो न स्यात्तर्हि 'रोपधयो'रिति स्थानषष्ठीनिर्देशो निरर्थकः। केवलागमत्वे 'भ्रस्जो रमन्यतरस्याम्' इत्यस्यैव सुवचत्वात्। यदि चागमोऽयं न स्यात्तर्हि 'भ्रस्जो रोपधयो रोऽन्यतरस्यामित्यं बोध्यताम्। नार्थो मित्करणेन। अतः सिद्धं यत् रमय-मागमश्चादेशश्चेति। एवं चागमत्वादकारात्परः प्रयुज्यते। आदेशत्वाच्च रोपधयो-र्निवृत्तिः—रेफसकारौ न प्रयुज्येते इत्यर्थः। अत्र भाष्यम्—'अन्तं रम् रेफस्य स्थाने

कश्चान्न भवति । 'मिदचोऽन्त्यात्पर' इत्यनेनाचामन्त्यात् परः क्रियते । रेफस्य तर्हि ( रेफग्रहणमुपलक्षणार्थम् । उपधायाश्चेत्यपि बोद्धव्यमिति कैयटे स्पष्टम् । ) उवर्ण कश्चान्न भवति । षष्ठ्युच्चारणसामर्थ्यात्' (इति रोपधयोरिति स्थान-षष्ठ्या तयोरवयवषष्ठ्ये-ऽपयोगः प्रतिपाद्यते । रोपधयोः प्रसङ्गे रम् प्रयुज्यते रोपधे न प्रयुज्यते इत्यर्थः इति प्रदीपः ) ।एवमार्धधातुके भर्ज् भृस्ज् इति पक्षद्वयम् । भर्ज्पक्षे णलि द्वित्वादिना बभर्ज इति । अतुसि बभर्जतुरिति । अत्र संयोगात् परत्वेन 'असंयोगाल्लिट् कित्' (२२४२) इत्यतुसः कित्त्वाभावाद्द्वित्वाभ्यासलोपयोरप्रवृत्तिः । उसि बभर्जुरिति । अथ थलि भारद्वाजनियमादिड्विकल्प इत्याह—बभर्जिथ—बभर्ष्ठ इति । पूर्वत्र सुगमा प्रक्रिया । उत्तरत्र तु बभर्ज् थ इति स्थिते—व्रश्चेति (२९४) षः । ष्टुना ष्टुरिति (२१२) थस्य ठः । एतानि रम्पक्षे परस्मैपदे । आत्मनेपदे तु बभर्जे । बभर्जाते इत्यादि । अथ रमभावपक्षमाह—रमभावे इति । बभ्रज्ज इति । द्वित्वहलादिशेषाभ्यासजश्त्वेषु कृतेषु बभ्रस्ज् णल् इति स्थिते 'स्तोः श्चुना—'(१११) इति सस्य शः । तस्य जश्त्वेन जः । ततो रूपम् । भारद्वाजनियमादिट्पक्षे बभ्रज्जिथ इति प्राग्वत् । इडभावे तु बभ्रस्ज् थ इति स्थिते स्वयमेव प्रक्रियां दर्शयति । —स्कोरित्यादिना । अत्र पक्षे आत्मनेपदे तु—बभ्रज्जे । बभ्रज्जाते इत्यादि । तदयमत्र परस्मैपदात्मनेपदयोः संग्रहः—

### भ्रस्ज (लिट्)

**भर्ज् (रम्पक्ष)** — परस्मैपदे

प्रः—बभर्ज । बभर्जतुः । बभर्जुः

मः—बभर्जिथ—बभर्ष्ठ । बभर्जथुः । बभर्ज

उः—बभर्ज । बभर्जिव । बभर्जिम

बभर्जे । बभर्जाते । बभर्जिरे इत्यादि आत्मनेपदे ।

**भ्रस्ज् (रमभावपक्ष)** — परस्मैपदे

बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जुः ।

बभ्रज्जिथ—बभ्रष्ठ । बभ्रज्जथुः । बभ्रज्ज

बभ्रज्ज । बभ्रज्जिव । बभ्रज्जिम ।

बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे इत्यादि आत्मनेपदे ।

लुटि तासि रमभावे भ्रष्टा ( भ्रस्ज् ता—भ्र०ज्ता स्कोरिति सलोपः।—भ्रष्टा व्रश्चेति षः। ष्टुत्वम्) इति। रमि तु भर्ष्टा (भर्ज् ता। षत्वम्) इति। लृटि स्यति रमभावे—भ्रक्ष्यति (भ्रस्ज्+स्यति—भ्र०ज्+स्यति—भृष्—स्यति—भ्रक्+ष्यति 'षढोः कः' इति कः। षत्वम्)। रमि तु—भर्क्ष्यति ( भर्ज्+स्यति—भर्ष्स्यति—भर्क्ष्यति ) इति। एवं लङ्पचे। नन्वाशिषि यासुटः किच्वेऽपि भ्रस्ज्+यात् ( यासुट्+तिप्=यात् ) इति स्थिते 'ग्रहिज्येति ( २४१२—६।१।१६ ) सम्प्रसारणं न प्राप्नोति, भ्रस्जे रमादेशस्य परत्वेन—'भ्रस्जो रोपधयो रम्—'(६।४।४७)—तस्य(सम्प्रसारणस्य ) विप्रतिषेधे परमिति न्यायेन बाधितत्वात्। 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति न्यायात् तस्य पुनरुत्थानासम्भवाच्च। न च 'पुनःप्रसङ्गविज्ञानात् सिद्धमिति बाधितस्यापि सम्प्रसारणस्य पुनःप्रसक्तिर्भवेदिति वाच्यम्। तथा सत्यपि ( सम्प्रसारणे सत्यपीत्यर्थः ) 'भर्ज्यात्' इति स्यादिति शब्देन्दुशेखरे स्थितम्। एतत्तु चिन्त्यमेव 'अाद् गुणे'त्यस्याप्राप्तेरिति सुधीभिर्विभावनीयम्। पुनः प्रसङ्गेनैव यथोक्तरूपसिद्धेर्यत्नम्। तदेतदसामञ्जस्यवारणाय वार्त्तिकमुपन्यस्यति—क्ङिति रमागमं बाधित्वेति। पूर्व्वविप्रतिषेधेन इति। विप्रतिषेधे परं कार्य्यमिति यदुक्तं तदत्र न भवति। किन्तु विप्रतिषेधे पूर्व्वं कार्य्यमित्येवात्र न्याय्यमिति तदर्थः। अतएव रमभावात् सम्प्रसारणेन भृस्ज् यात् इति भवति। ततो भृज्ज्यात् इति श्चुत्वजश्त्वे प्राग्वत्। पूर्व्वविप्रतिषेधपचस्तु न भाष्यसंमतः। भाष्यकारैः 'विप्रतिषेधे परमि'त्यत्र परशब्दः इष्ट वाची। यदिष्टं तत्कर्त्तव्यमित्युक्तत्वात्। तदुक्तमत्र सूत्रे ( भ्रस्जो रोपधयोरित्यत्र ) भाष्ये—'सम्प्रसारणं भवति पूर्व्वविप्रतिषेधेन। स तर्हि पूर्व्वविप्रतिषेधो वक्तव्यः। न वक्तव्यः। रसोर्व्वचनात् सिद्धम्। रसोर्वा स्ह भवतीति वक्ष्यामि…………। सर्व्वथा वयं पूर्व्वविप्रतिषेधान्न मुच्यामहे। सूत्रं च भिद्यते। यथा न्यासमेवास्तु। ननु चोक्तं भृस्जादेशात् ( रमागमात् ) सम्प्रसारणं पूर्व्वविप्रतिषेधेन ( वार्त्तिक ) इति। इदमिह सम्प्रधार्य्यम्। भ्रस्जादेशः क्रियतां सम्प्रसारणमिति। किमत्र कर्त्तव्यम्। परत्वात् भ्रस्जादेशः। नित्यत्वात् सम्प्रसारणम्। कृतेऽपि भ्रस्जादेशे प्राप्नोत्यकृतेऽपि' इति। एवं पूर्व्वविप्रतिषेधं प्रत्याख्याय—नित्यत्वात्

सम्प्रसारणमित्युक्तमिति दिक्। अर्श्चीत् इति। वदव्रजेति वृद्धिः। अचित इति। झलादक्लात् इति सिज्लोपः। क्रष्टा—कर्ष्टा इति। 'अनुदात्तस्य चर्दु—'(२६०२) इत्यम्-विकल्पः। तासप्रत्ययस्याकित्त्वात्। कितित तु अमागमो नेत्याह—कृष्यात्—कृषीष्ट इति। उत्तरत्र (सीयुट्पक्षे) षत्वकत्वषत्वानि। कृषेः परस्मैपदे लुङि रूपत्रयम्। तत्र सिच्—पक्षे अम् विकल्पात् अक्राक्षीत्—(अम्)—अकार्क्षीत् इति रूपद्वयम्। हलन्तलक्षणा वृद्धिः। सिजभावे शल इगुपधादिति क्सः। अकृक्षदिति। आत्मनेपदपक्षे तु—सिचि—अकृष्ट (अकृष् सिच त—अकृष० त झलादक्लादिति सिज्लोपः) अकृक्षाताम् (कत्वषत्वे) अकृक्षत (आत्मनेपदेष्वनतः (२२५८) इति झस्य 'अत्' इत्यादेशः। कत्वषत्वे) इत्यादि। क्से तु अकृक्षत—अकृक्षाताम् (क्सस्याचीति अल्लोपः) अकृक्षन्त अत्र क्स इत्यस्य अकारान्तत्वात् आत्मनेपदेष्वनत इति न प्रवर्तते किन्तु 'झोऽन्त' इत्येव) इत्यादि। अनिट् इति। 'अत: आदेः', 'तस्मान्नुड् द्विहलः' इति अभ्यासदीर्घः नुडागमश्च। प्रायेणायमिति। तथा प्रयोगदर्शनादिति भावः।

२५३६। विज इट् ॥१।२।२॥

टी—। विजेः पर इडादिः प्रत्ययो ङिद्वत्। उद्विजिता। उद्विजिष्यते। ओलजी १२८१ ओलस्जी १२८२ व्रीडायाम्। लजते। लेजे। लज्जते। ललज्जे।

An affix, with the aug. इट् prefixed to it and coming after the root विज्, is treated as ङित्। Thus उद्विजिता (उद्—विज—इता (इट्ता) where लघूपधगुण (2189) does not apply because ता is here ङित्। Similarly उद्विजिष्यते। लज्जते—लस्ज्+अ+ते—लश्ज्+अ ते by 'स्तोः—'—लज्जते by 'झलां जश्—' (श्च) (51)

मित—। विज इति। गाङ्कुटादिभ्योऽञ्णिन्ङित् (१।२।१) इत्यतो ङिदित्यनुवर्तते। 'यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इत्युक्तत्वादिडित्यनेनाव

इडादिर्वक्ष्यते। तदाह इडादिप्रत्ययो ङिद्वदिति। विज इति पञ्चम्यन्तमित्याह—विजेः पर इति। उद्विजिता इति। ङित्त्वान्न गुणः। लज्जते इति। षु लज्जायाम्। भागवत्।

दी—। अथ परस्मैपदिनः। ओव्रश्चू १२९३ छेदने। 'ग्रहिज्या—' (२४१२) वृश्चति। वव्रश्चतुः। वव्रश्चिथ—वव्रष्ठ। 'लिट्यभ्यासस्य—' (२४०८) इति सम्प्रसारणम्। रेफस्य ऋकारः। 'उरत्' (२२४४)। तस्य च 'अचः परस्मिन्—' (५०) इति स्थानिवद्भावात् 'न सम्प्रसारणे—' (३६२) इति वस्योत्वं न॥ व्रश्चिता—व्रष्टा। व्रश्चिष्यति—व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्—अव्राक्षीत्। व्यच १२९४ व्याजीकरणे। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्—अव्यचीत्। 'व्यचेः कुटादित्वमनसि' (वार्त्तिक) इति तु नेह प्रवर्त्तते। 'अनसि' इति पर्युदासेन कृन्मात्रविषयत्वात्। उछि १२९५ उञ्छे। उञ्छति। उछी १२९६ विवासे। उच्छति। ऋच्छ १२९७ गतीन्द्रियप्रलयमूर्त्तिभावेषु। 'ऋच्छत्यॄताम्' (२३८३) इति गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता। मिच्छ १२९८ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। जर्ज १२९९ चर्च १३०० झर्झ १३०१ परिभाषणभर्त्सनयोः। त्वच १३०२ संवरणे। तत्वाच। ऋच १३०३ स्तुतौ। आनर्च। उब्ज १३०४ आर्जवे। उज्झ १३०५ उत्सर्गे। लुभ १३०६ विमोहने। विमोहन—

माकुलीकरणम्। लुभति। लोभिता—लोब्धा। लोभिष्यति। रिफ १३०७ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। 'रिह' इत्येके। 'शिशुं न विप्रा मतिभी रिहन्ति'। तृप १३०८ तृम्फ १३०९ तृप्तौ। आद्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः। द्वावपि द्वियान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। 'स्पृशमृश—' (वार्त्तिक) इति सिज्विकल्पः पौषादिकस्यैव। अङ्पवादत्वात्। तेनात्र नित्यं सिच्। अतर्पीत्। तृम्फति। शस्य ङित्त्वात् 'अनिदिताम्—' (४१५) इति नलोपे 'शे तृम्फादीनां नुम् वाच्यः' (वार्त्तिक)। आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। तृम्फन्ति। ततृम्फ। तृफ्यात्। तुप १३१० तुम्प १३११ तुफ १३१२ तुम्फ १३१३ हिंसायाम् तुपति। तुम्पति। तुफति। तुम्फति। दृप १३१४ दृम्फ १३१५ उत्क्लेशे। प्रथमः प्रथमान्तः। द्वितीयो द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके। दृपति। दृफति। दृम्फति। ऋफ १३१६ ऋम्फ १३१७ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फाञ्चकार। गुफ १३१८ गुम्फ १३१९ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। उभ १३२० उम्भ १३२१ पूरणे। उभति। उवोभ। उम्भति। उम्भाञ्चकार। शुभ १३२२ शुम्भ १३२३ शोभार्थे। शुभति। शुम्भति। दृभी १३२४ ग्रन्थे। दृभति। चृती १३२५ हिंसाग्रन्थनयोः *। चर्त्तिता। 'सेऽसिचि—'

---

* चृती हिंसाग्रन्थनयोरिति तत्त्वबोधिन्यां पाठः।

(२५०६) इति वेट्। चर्त्स्यति—चत्स्र्यति। अचर्तीत्। विध १३२७ विधाने। विधति। वेधिता। जुड १३२७ गतौ। तवर्गपञ्चमान्त इत्येके। जुनति। 'मरुतो जुनन्ति'। मृड १३२८ सुखने। मृडति। मर्डिता। पृड १३१९ च। पृण १३२० प्रीणने। पृणति। पपर्ण। वृण १३२१ च। वृणति। मृण १३२२ हिंसायाम्। तुण १३२३ कौटिल्ये। तुतोण। पुण १३२४ कर्मणि शुभे। पुणति। मुण १३२५ प्रतिज्ञाने। कुण १३२६ शब्दोपकरणयोः। शुन १३२७ गतौ। द्रुण १३२८ हिंसागतिकौटिल्येषु। घुण १३४० भ्रमणे। षुर १३४१ ऐश्वर्य्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्य्यात्। कुर १३४२ शब्दे। कुरति। कूर्य्यात्। अत्र 'न भकुर्छुराम्' (१६२८) इति निषेधो न। करोतेरेव तत्र ग्रहणादित्याहुः। खुर १३४३ छेदने। मुर १३४४ संवेष्टने। क्षुर १३४५ विलेखने। घुर १३४६ भीमार्थशब्दयोः। पुर १३४७ अग्रगमने। वृह १३४८ उद्यमने। दन्त्योष्ठ्यादिः। पवर्गादिरित्यन्ये। तृहू १३४९ स्तृहू १३५० तृंहू १३५१ हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता—तर्ढा। स्तर्हिता—स्तर्ढा। अतर्हीत्—अताङ्क्षीत्। अताढीम्। इषु १३५२ इच्छायाम्। 'इषुगमि—' (२४००) इति छः। इच्छति। एषिता—एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष १३५३ स्पर्धायाम्। मिषति। मेषिता। किल १३५४ श्वैत्यक्रीडनयोः। तिल १३५५ स्नेहे। चिल १३५६ वसने। चल १३५७

विलसने। इल १३५८ स्वप्नक्षेपनयोः। विल १३५९ संवरणे। दन्त्यग्राष्ठ्यादिः। बिल १३६० भेदने। ओष्ठ्यादिः। णिल १३६१ गहने। हिल १३६२ भावकरणे। शिल १३६३ षिल १३६४ उञ्छे। मिल १३६५ श्लेषणे। लिख १३६६ अक्षरविन्यासे। लिलेख। कुट १३६७ कौटिल्ये। 'गाङ्कुटादिभ्यः—' (२४६१) इति ङित्त्वम्। चुकुटिथ। अञ्णित इति किम्। चुकोट। कुटिता। पुट १३६८ संश्लेषणे। कुच १३६९ सङ्कोचने। गुज १३७० शब्दे। गुड १३७१ रक्षायाम्। डिप १३७२ क्षेपे। छुर १३७३ छेदने। 'न भकुर्छुराम्' (१६२९) इति न दीर्घः। छुर्यात्। स्फुट १३७३ विकसने। स्फुटति। पुस्फोट। मुट १३७५ आक्षेपमर्दनयोः। त्रुट १३७६ छेदने। 'वा भ्राश—' (२३२१) इति श्यन् वा। त्रुट्यति—त्रुटति। तुत्रोट। त्रुटिता। तुट १३७७ कलहकर्मणि। तुटति। तुतोट। तुटिता। चुट १३७८ छुट १३७९ छेदने। जुट १३८० बन्धने। कड १३८१ मदे। लुट १३८२ संश्लेषणे। कृड १३८३ घनत्वे। घनत्वं सान्द्रता। चकर्ड। कृडिता। कुड १३८४ बाल्ये। पुड १३८५ उत्सर्गे। घुट १३८६ प्रतिघाते। तुड १३८७ तोडने। तोडनं भेदः। थुड १३८८ स्थुड १३८९ संवरणे। थुडति। तुथोड। तुस्थोड। 'खुड' 'छुड' इत्येके। स्फुर १३९० स्फुल १३९१ सञ्चलने। 'स्फुर स्फुरणे', 'स्फुल सञ्चलने' इत्येके।

Now are taken up the परस्मैपद roots. ओव्रश्च (व्रश्च्) to cut

down, ओ for ब in निश्वा (cp.'ओदितश्च)' and ऊ for इट् विकल्प (cp'स्वरति-सूति—' (2279). व्रश्च्+श+तिप्—the विकरण श is ङित् hence 'ग्रहिज्या—' (2412) applies. In लिट् णल् etc. the procedure is thus—व्रश्च्+णल्—व्रश्च् व्रश्च् णल्—व्रश्च् व्रश्च् अ—Here the अभ्यास gets सम्प्र. by 'लिट्यभ्यासस्य—' (2408)—वऋश्च् व्रश्च् अ by 'उरत्' (2244) and 'उरण् रपरः' (70)—व० व्रश्च by 'हलादिः शेषः' (2179). The second व्रश्च् does not get सम्प्र., for 'ग्रहिज्या—' (2412) does not apply as णल् is पित् and not ङित् or कित्। [N. B.—There were two cases of सम्प्र. in व्र (व् र् अ) of the अभ्यास व्रश्च्—viz the सम्प्र. of व and र्। Now of these which is to get सम्प्र. first by the rule लिट्यभ्यासस्य—? The answer is that the latter (र्) is to get सम्प्र. first. How to know that? Because Panini reads 'न सम्प्रसारणे सम्प्रसारणम्' (363) which forbids the सम्प्र. of the former (व्)। Therefore र् only will get सम्प्र. and will change into ऋ by 'इग्यणः सम्प्रसारणम्'and finally into अर, by 'उरत्'and उरण्रपर। As this अ (of अर्) is treated as ऋ itself by स्थानिवद्भाव: by the rule 'अचः परस्मिन्—' (50), So therule 'न सम्प्रसारणे—' appears again and prohibits the सम्प्र. of the former व् (which had the occasion of सम्प्र.after the सम्प्र. ऋ had been changed into अर्)। Thus व् does not give place to उ due to सम्प्र.। This is what Bhattoji seeks to explain by लिट्यभ्यासस्य ...इति वस्य उत्त्वं न']। This process applies in the case of वव्रश्चतुः also, अतुस् is not कित्, because it follows a संयोग or conjunct letter (य); hence 'ग्रहिज्या—' does not apply. In वव्रश्चिथ—वव्रष्ठ, the option of इट् is by भारद्वाजनियम। वव्रष्ठ—वव्रश्च् थ (without इट्) for श्च is the result of सन्धि (व्रस्+च=व्रश्च) व ० च थ—स is dropped

by 'स्कोः—' ( 380 )—व्रश्‌ थ ष replaces श by 'व्रश्च—' ( 294 )—व्रष्‌ ठ by 'ष्टुना ष्टुः ( 113 ). व्रश्चिता—व्रष्टा—इड्विकल्प due to ऊदित्त्व । व्रष्टा like व्रष्ट above. Similarly व्रश्चिष्यति—व्रक्ष्यति due to ऊदित्त्व । In व्रक्ष्यति the process is as in व्रष्ट । That here excepting ष is changed into क by 'षढोः कः सि' ( 295 ). वृश्च्यात्—आशीः यासुट् is कित् hence सम्प्र—by 'ग्रहिज्या—' । अव्रश्चीत्—अव्राक्षीत्—Option of इट् due to ऊदित्त्व । In the case of इट् ( i. e. in अव्रश्चीत् ) the वृद्धि, due by 'वदव्रज—' (2267) is prohibited by 'नेटि' (2268). Here सिच् is dropped by 'इट ईटि' (2266). In the latter ( अव्राक्षीत् ), there being no इट्, वृद्धि by 'वदव्रज—' takes effect and सिच् not being preceded by इट्, does not elide. Thus अव्रश्‌ सिच्‌ ईट्‌ त्—अव्राश्‌ स्‌ ईत्—अव्रास्च्‌ स्‌ ईत्—अव्रा० ष्‌ स्‌ ईत्—अव्राष्‌ (by 'व्रश्च—') स्‌ ईत्—अव्राक्‌ स्‌ ईत्—by 'षढोः कः—'—अव्राक्षीत्—अव्राक्षीत्—षत्व of स्‌ ( सिच् ) by इण्कोः' 'आदेश—' (211—12). व्यच to disguise. विचति—by 'ग्रहिज्या—' ( 2412 ). विव्याच—by लिट्यभ्यासस्य—and 'अत उपधायाः'—(2282). Prohibition of सम्प्र. of व ( in वि ) as before. विविचतुः—here अतुस् is कित् by 'असंयोगात्—' (2242), hence सम्प्र by 'ग्रहि—' । विच्यात्—आशीः—यासुट् कित् by ( किदाशिषि ) । अव्याचीत्—अव्यचीत् by वृद्धिविकल्प—cp 'अतो हलादेः—' ( 2284 ).

'व्यचेः कुटादित्वमनसि' ( वार्तिक ) । 'The root व्यच् व्याजीकरणे is treated as one of कुटादि class except when it is followed by the affix अस् । This affix अस् is कृत् and not लिङ् । Therefore व्यच् will get सम्प्र. only when अस्—भिन्न कृत् affixes follow due to its कुटादित्व—which class get सम्प्र. due to ङित्त्व by 'गाङ्कुटादिभ्यः—' ( 1. 2. 1). Thus the Varttika (व्यचेः etc) does not apply here ; for here, the

विङ् affixes only are dealt with. Hence व्यचिता, व्यचिष्यति etc. does not get सम्प्र— । [ अनसि means not in अस् प्रत्यय । Thus it is पर्युदासविधि and governs कृत् affixes only ]. In ऋच्छ+णल्—ऋच्छ् ऋच्छ् अ, the अभ्यास is gunnated by 'उरत्' (2244) and the अङ्ग (second ऋच्छ) by 'ऋच्छत्यृताम्' (2383). The form now stands अर्च्छ् अर्च्छ् अ । The अभ्यास 'अ' is then lengthened by 'अत आदेः (2248) आर्च्छ् अर्च्छ् अ । Then comes aug. नुट् directed by 'तस्मान्नुड् द्विहलः' (2288). Though आर्च्छ् constitutes more than two हल्s or consonants (द्विहल् न भवतीत्यर्थः), yet it will have नुट् for Panini has taken the term द्विहल् (constituting two हल्s) in a general way (उपलक्षणार्थम्) and not in a restricted sense. Thus by नुट् we get आनुट् र्च्छ् अर्च्छ् अ—आनर्च्छ (र्च्छ् is dropped by 'हलादिः शेषः') । ऋच्छ does not take the affix आम् due to its exclusion from 'इजादेश्च गुरुमतोऽनृच्छः' । ऋच्छिता—no guna for 'ऋच्छत्यृताम्' concerns लिट् only. लुभ् to charm to i.e. render perplexed. लोभिता—लोब्धा—option of इट् by 'तीषसहलुभरिषरुषः' (2340). भिन्नं न etc. The particle न means इव (like) and रिहन्ति means हिंसन्ति । The option of सिच् (in तृप्) due to the varttika 'स्पृशमृश—' applies to the पुषादि तृप् only—and not to this तुदादि तृप् ; for the former gets अङ् by 'पुषादि—' (2343) and सिच् by the varttika in the alt. case whereas the latter (तुदादि तृप्) gets सिच् नित्य or always and not optionally ; thus अतर्पीत् no वृद्धि by 'नेटि' (2268) elision of सिच् by इट ईटि (2266). The root कुर् to make sound will have its vowel lengthened (दीर्घ) in लिङ् (कूर्यात्), as the prohibition 'न भकुर्छुराम्' (1629) concerns the root कृ only

—( which gives कुर्यात् and not कूर्यात् )। तृहू ( तृह् ) to injure is ऊदित्। Hence तर्हिता—तर्ढा etc. by the option of इड्विकल्प by 'स्वरति सूति—( 2279 ). 'तर्ढा' (तृह्+ता=तर्ह्ता=तर्ढ्ता by 'हो ढः'=तर्ढ्धा by 'झषस्तथो:—' (2281)—तर्ढ्ढा by ष्टुना ष्टुः—तर्ढा by ढो ढे लोपः ) अतर्हीत्—अतार्क्षीत्—These are the लुङ् forms of तृंहू—which is ऊदित् and hence gets the option of इट्. अतर्हीत (with इट्) । no वृद्धि by 'नेटि' (2268) and no गुण as तृंह् is गुरूपध and not लघूपध। Elision of सिच् by इट ईटि (2266). अतार्हीत्—अतार्ह् सिच् ईट् त् वृद्धि by 'वदव्रज—' ( 2267)—अताड्ंस्ईत् by अनुस्वारस्य ययि परसवर्णः, and 'ढोढः' अताड्क्स्ईत् by 'षढोः कः—' अताड्क्ष्ईत् by इणकोः etc. अतांक्षीत्। एषिता—एष्टा by इड्विकल्प and गुण। ऐषीत्—by 'आटश्च' and सिज्लोप। इष्यात्—for यासुट् is कित् ( किदाशिषि )। लिख to arrange letters ( to write ). लिखितुम् etc. are incorrect and should be लेखितुम् etc. because लिख is not कुटादि ( see Nagesha ). कुट् etc. Here begins the कुटादि class. The rest is easy.

मित—। अथ परस्मैपदिन इति। कुटाद्यन्ता इत्यर्थः। ओव्रश्चू छेदने इति। ओदित्करणमोदितश्चेति निष्ठानत्वार्थम्। तक्णः। ऊदित्करणं स्वरतिसूतीति (२२७०) इड्विकल्पार्थम्। व्रश्चिता—व्रष्टा इति वक्ष्यति। व्रश्च् इत्यस्य सार्वधातुके लङ्लोटादौ सम्प्रसारणं स्यादित्याह—वृश्चितीति। असंयोगस्यापितित्वेन ङित्त्वादिति बोध्यम्। तत्त्वबोधिनीकारास्तु 'परमपि लघूपधस्य' बाधित्वा नित्यत्वात् न इत्येके। अकृत-सूत्रपरिभाषया गुणो न प्रवर्तेत इत्यन्ये' इति तुदादिधातुव्याख्यासुखि व्याचचक्षिरे। वव्रश्च इति—व्रश्च+णल् इति स्थिते द्वित्वे व्रश्च व्रश्च अ इति। ततो लिट्यभ्यासस्येति अभ्यासस्य सम्प्रसारणे कृते ऋकारस्य (रस्थाने ऋकार इग्यणः सम्प्रसारणमित्यनुसारात्) 'उरत्' (२२४४) इति 'अत्त्वम्' तस्य ( ऋकारस्य ) 'उरण् रपरः' (७० ) इति रपरत्वम्। ततश्च वर्श्च् व्रश्च् इति भवति। ननु 'लिट्यभ्यासस्य—' इत्यनेन

'व्रश्'इत्यस्य रेफरकारयोर्द्वयोरेव सम्प्रसारणावकाशः। ननु कुतः परवर्तिनो रेफस्य सम्प्रसारणं न पुनः पूर्वस्य वकारस्य? उच्यते। 'न सम्प्रसारणे सम्प्रसारणम्' (३६२) इति हि पाणिनेः सम्प्रसारणनियामकं सूत्रम्। यदि पूर्वस्य प्राक् सम्प्रसारणं क्रियते तदा न सम्प्रेति सूत्रं निर्विषयं स्यादतोऽवगम्यते यत् परस्यैव सम्प्रसारणं न पूर्वस्य। बाढमेवम्। किन्तु सम्प्रसारणादूर्ध्वं यदा सम्प्रसारणाचरस्य ऋकारस्य स्थाने उरदित्यादिना 'अर्' इति भवति तदा परतः सम्प्रसारणाभावात् 'लिट्यभ्यासस्य'—इति वकारस्यापि सम्प्रसारणं स्यात्, 'न सम्प्रसारणे—' इति निषेधस्याप्रवृत्तेरिति चेत्? मैवम्। 'अचः परस्मिन् पूर्वविधौ' (५०) इति स्थानिवद्भावेन अकारेऽपि सम्प्रसारणाचरवद् (ऋकारवद्) व्यवहारादिति ब्रूमः। एवं प्रकृते हलादिःशेषेण वव्रश्च इति भवति। वव्रश्चतुरिति—अभ्यासकार्यं प्रागवत्। अत्रस्य तु, अतुसः अपित्वेऽपि 'असंयोगाल्लिट् कित्' इति संयोगात् परत्वेन कित्वाभावात् ग्रहिज्येत्यप्रवृत्तेर्न संप्रसारणम्। थलि भारद्वाजनियमादिड्विकल्पमस्याह—वव्रश्चिथ—वव्रष्ठ इति। उभयत्रापि अभ्यासकार्यं प्रागवत्। उत्तरत्र त्वयं विशेषः—वव्रश्च थ (इडभावे) इति स्थिते धातुपाठोक्तपाठानुसारात् वव्रस्च्थ इति सकारस्य श्रवणं भवति। एतत्तु नापूर्वम्। तथाचोक्तम् :—

'नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः॥ इति।

ततः सकारस्य संयोगाद्यत्वात्—स्कोरिति (३८०) लोपः। एवं वव्रच् थ इति व्रश्चेति चस्य षः। ष्टुनेति थस्य ठः। लिटाभ्यासस्येति—अत्र यद् वक्तव्यं तद् वव्रश्चेत्यत्र उक्तम्। व्रक्ष्यति इति। व्रश्च+स्यति (इडभावे) इति स्थिते पूर्ववत् स्कोरिति सलोपे चस्य षत्वे तस्य षढोरिति कत्वे स्यस्य षत्वे च रूपम्। वृश्च्यात् इति—आशिषि यासुटः कित्वात् ग्रहिज्येति (२४१२) सम्प्रसारणम्। अव्रश्चीत्—अव्राक्षीत् इति। ऊदित्वाद् वेट्। तत्र इट्पक्षे नेटीति (२२६८) हलन्तलक्षणाया (वदव्रज—' (२२६७) इत्यस्याः) वृद्धेरप्राप्तौ—इट ईटीति (२२६६) सिज्लोपे च अव्रश्चीदिति। न च सिज्लोपस्यासिद्धत्वादीकादेशो दुरुपपाद इति वाच्यम्। 'सिज्

लोप एकादेशे सिद्धो वाच्य' इति वार्त्तिकात्तस्य सूपपादत्वादिति ध्येयम्। इडभाव-पक्षे तु अव्रश्च् स् ईट् त् इति स्थिते शकारस्य धातुपाठेऽनिर्दिश्यमानत्वात् सकारत्वेन पूर्ववत् 'स्कोः—' (३८०) इति सलोपे, वदव्रजेति हलन्तलक्षणायां वृद्धौ कृतायाम् अव्राच् स् ईत् इति जाते व्रश्चेति चस्य षः। तस्य षढोरिति कः। पर-सकारस्य इणकोरिति षः। अव्राक्षीदिति। व्यच व्याजीकरणे इति। व्याजीकरणं छद्मकरणम्। विचति इति—ग्रहिज्येति सम्प्रसारणम्। विव्याच इति—लिटीत्य-भ्यासस्य सम्प्रसारणम्। 'न सम्प्र—' इति वस्योत्वं न। अत उपधायाः (२२८२) इत्यस्य उपधावृद्धिः। विविचतुरिति—अभ्यासकार्यं प्राग्वत्। अङ्गस्य तु 'असंयोगाल्लिट् कित्' (२२४२) इत्यतुसः कित्त्वाद् ग्रहिज्येति सम्प्र०। इहापि 'न सम्प्र—' इति वस्योत्वाभावो द्रष्टव्यः। विच्यात् इति—आशिषि यासुटः कित्त्वात् (किदाशिषि) ग्रहिज्येति सम्प्रसारणम्। अव्याचीत्—अव्यचीत् इति। 'अतो हलादे-र्लघोः' (२२८४) इति वृद्धिविकल्पः। सिज्लोपः पूर्ववत्। ननु व्यच् धातोः कुटादित्वस्वीकारात् 'गाङ्कुटादिभ्यः—(१।२।१) इति ङित्त्वात् सम्प्रसारणे प्राप्ते व्यचिता। व्यचिष्यति इति कथमित्याशङ्क्याह—'व्यचेः कुटादित्वमनसी'ति। वार्त्तिकमिदम्। व्यचेर्व्यच् धातोः कुटादित्वम् कुटाद्यन्तर्भूतत्वम् स्यात् अस्—भिन्ने कृत्प्रत्यये परत' इति वार्त्तिकार्थः। ननु कुतो ज्ञायते यत् कुटादित्वं कृद्विषये इति न तु लिङ्—विषये इति आह—अनसि इति। असुप्रत्ययो हि कृत्स्वेव दृश्यते। तेन 'अनसि' इति पर्युदासेन अस्भिन्नः कृदेव लभ्यते न लिङ्। 'अब्राह्मण' आनीयतामित्युक्ते हि ब्राह्मणेतरः कश्चित् पुरुष एवानीयते, न तु सिंहो वा व्याघ्रो वा। भिन्नजातिकत्वात्। एवमत्रापि। ननु 'तस्मान्नुड् द्विहलः' (२२८८) इत्युक्तत्वात् 'आनर्छ' इत्यत्र कथं नुट्। ऋच्छ् ऋच्छ् अत् इति स्थिते ऋच्छत्यृतामिति गुणे अत आदेरित्यभ्यासदीर्घे च आर्च्छ् अर्च्छ् अ इति जाते 'आर्च्छ्' इत्यभ्यासस्य अनेकहल्त्वात् इत्यत आह—द्विहल्ग्रहणस्येति। उप-लक्षणत्वादिति सामान्येन निर्देशादित्यर्थः। न तु द्विहल एव भवतीति नियमोऽस्तीति भावः। आनर्छतुरिति—अतुसः कित्त्वाभावात्। ऋच्छिता इति। ऋच्छत्यृताम्

(२३८६) इत्यस्य लिङ्मात्रविषयकत्वात्। लोभिता—लोब्धा इति। 'तीषसह—' (२३४०) इतीड्विकल्पः। 'निश' नेति। वेदमन्त्रोऽयम्। न—शब्द इवार्थे। विप्रा ब्राह्मणा शिशुमिव मतिभिः ('ढ्लोपे पूर्वस्य दीर्घोऽणः' (१७४) इति दीर्घः) रिहन्ति हिंसन्ति गुणीकुर्वन्ति चेत्यर्थः। अश्नानिति वाक्यशेषः। पौषादिकस्यैवेति। पुषादौ पठितस्यैवेत्यर्थः। अकृपवादत्वादिति। स्पृशमृशेति वार्त्तिकं हि पुषाद्यङ एव अपवादो न तु सिचः। अतोऽत्र हलन्तेति नित्यं सिच्। अतर्पीदिति। नेटीति निषेधाद्धलन्तलक्षणवृद्धेर भावः। शस्य ङित्त्वादिति—तुदादिभ्यः श इति शविकरणस्येत्यर्थः। 'शे तृम्फादीनामि'ति वार्त्तिकमिदम्। 'शप्रत्यये परे नुमागमो भवतीत्यर्थः। तृम्फादीनामित्यत्र आदिपदस्यार्थ-माह—आदिशब्दः प्रकारे इति। तेन ये धातवः अत्र तृम्फादीषु नकारानुषक्ता नकारेणानुप्रविष्टा ते धातवः तृम्फादयः विज्ञेयाः। नकारानुषक्ताश्च गुम्फ, तुम्फ, दृम्फेत्यादयः। तृफ्यादिति। किदाशिषीति कित्त्वात् 'अनिदिताम्' इति नलोपः। एवं तुफ्यात्। गुफ्यात्। दृफ्यादित्यादयः। ऋम्फाद्यकारेति। इजादित्वात् गुरुमत्त्वा-च्चाम्। एवमन्यत्र। अचर्तीदिति। नेटीति वृद्धिनिषेधः। सूर्यादिति। धात्वादे-रिति सः। हलि चेति (३५४) दीर्घः। करोतेरेवेति—कृधातोरेवेत्यर्थः। अत्र व्याख्यानादेव 'कुर' इत्यस्याग्रहणं कृधातोश्च ग्रहणम्। अतएव कुर्यादिति सिद्धमिति मनोरमायां स्पष्टम्। तृहू इति ऊदित्। तर्हिता—तर्ढा इति। इड्विकल्पः। उभयत्रैव लघूपधगुणः। उत्तरत्र 'हो ढ' इति हस्य ढः। तप्रत्ययस्य झषस्तथोरिति 'ध' आदेशः। तस्य ष्टुनेति ढादेशः। 'ढो ढे लोपः' इति लोपः। एवमन्यत्र। अतृंहीत्—अताङ्क्षीत् इति। 'तृंहू' इत्यस्य ऊदित्त्वात् सिचि इड्विकल्पः। पूर्ववत् नेटीति वृद्धिनिषेधः। उत्तरत्र वदव्रजेति वृद्धौ अतांह् सिच् ईत् इति स्थिते ढोढः, षढोः कः—इण्को—, अनुस्वारस्य ययीति क्रमेण—ढत्वकत्वषत्वानि, परसवर्णेन ङकारश्चेति अताङ्क्षीदिति लभ्यते। अताढामिति। तसस्तामादेशे वृद्धिढत्वष्टुत्वादि प्राग्वत्। एषिता—एष्टा इति। 'इषु' इति उदित्वादिड्विकल्पस्तासि। इष्यादिति। आशिषि कित्त्वाद् गुणाभावे रूपम्। ऐषीदिति। आटश्चेति वृद्धिः। इटः परत्वात् सिज्लोपः। लिख अक्षरविन्यासे इति। लिखितुमित्यादि प्रामादिकमेव लेखितुमित्यस्यैव न्याय्य-

स्यात्। सदीजस्तु लिखनैः कुटादावनन्तर्भाव इति नागेशादयः। स्फुर सञ्चलने स्फुरणे वा। उभयमप्यर्थं—'चारु पुष्णोर चारु' इत्युदाहरणम्। 'मे मतिः स्फुरति कापि वधे सह विशेषतः (पञ्चतन्त्रम्)। अथास्य उपसर्गवशात् षत्वविकल्पः स्यादित्याह—

२५३७। स्फुरतिस्फुलत्योर्निर्निविभ्यः ।८।३।७६॥ *

एभ्यो—। षत्वं वा स्यात्। निष्फुरति। निःस्फुरति। 'स्फर' इत्यकारोपधं केचित् पठन्ति। पस्फार। स्फुड १३८२ चुड १३८३ व्रुड* १३८४ संवरणे। क्रुड १३८५ भृड १३८६ निमज्जने' इत्येके। गुरी १३८७ उद्यमने। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। णू १३८८ स्तवने। दीर्घान्तः। 'परिणूतगुणोदयः'। इतश्चत्वारः परस्मैपदिनः। नुवति। अनुवीत्। धू १३८९ विधूनने। धुवति। गु १४०० पुरीषोत्सर्गे। जुगुविथ-जुगुथ। गुता। गुष्यति। अगुषीत्। 'ह्रस्वादङ्गात्' (२३६८)। अगुताम्। अगुषुः। ध्रु १४०१ गतिस्थैर्ययोः। 'ध्रुव' इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रुविता। ध्रुविष्यति। ध्रुव्यात्। अध्रुवीत्। अध्रुविष्टाम्। कुङ् १४०२ शब्दे। 'दीर्घान्त' इति कैयटादयः। कुविता। अकुविष्ट। 'ह्रस्वान्त' इति न्यासकारः। कुता। अकुत। वृत्। कुटादयो वृत्ताः।

---

* ब्रुड इति बालमनोरमायाम्। तत्प्रमादविलसितम्। हुड इत्यस्यैव भ्रुड इति पाठभेदौचित्यादिति ध्येयम्।

पृङ् १४०३ व्यायामे। प्रायेण व्याङ्पूर्व्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। मृङ् १४०४ प्राणत्यागे।

The स of the roots स्फुर and स्फुल optionally becomes cerebral (ष), when the उपसर्गs निर्, नि and वि precede the roots. Thus निष्फुरति etc. No guna due to ङित्त्व of श। णू to praise is read with the ऊ cp.—परिणूत etc. 'one having praiseworthy merit's; नुवति by 'णो नः' and 'अचि श्नु—'(272) which directs उवङ्। अनुवीत्— by इट्, elision of सिच् and the advent of उवङ्। धू to shake. It has been is read in स्वादि also. Remember the verse—

'धूनोति चम्पकवनानि धुनोत्यशोकं
चूतं धुनाति धुवति स्फुटितातिमुक्तम्।
वायुर्विधूनयति चम्पकपुष्परेणून्
यत् कानने धवति चन्दनमञ्जरीश्च॥'

in कविरहस्य by Vopadeva.

The root is thus भ्वादि (धवति), स्वादि (धू—धुनोति), तुदादि (धुवति), क्र्यादि (धुनाति) and चुरादि (धूनयति). गु to eject excretion. जुगुविथ—जुगुथ by option of इट् (भारद्वाजनियम). The former is with उवङ्. गुता no इट् no उवङ्। अगुवीत्—no इट्, no उवङ् and no सिज्लोप। अगुषु: by 'सिजुंस्'. दुध्रुविथ etc. with इट् and उवङ् as before. कुविता etc इट् and उवङ् because the दीर्घपाठ (कू) of कैयट and others is सेट्, कुता etc want of इट् and उवङ् due to अनिट्क of the ह्रस्वपाठ (कु) which is read by न्यासकार। इत् i.e. here end the roots of कुटादि class.

पृङ् ( पृ ) to exercise i. e. to be heavily engaged e.g. व्यापृतोऽस्मि नितरामिदानीम् etc. It is generally preceded by the उपसर्गs वि and आङ्. Thus व्याप्रियते etc. with रिङ् by the rule 'रिङ् शयग्लिङ्क्षु' (2367), in place of ऋ and इयङ् by 'अचि श्नु—' (272). व्यापृरिङ् इयङ् अ (श) ते—व्याप्रियते. व्यापप्रे लिट् no श and no रिङ्—पृपृ ए—पृपृ ए—परपृ ए by उरत् (2244) and उरण् रपरः (70)—पप्रे by इको यणचि (47) Then add व्या to it. Similarly व्यापृतात व्यापरिष्यते—with इट् and स्यते. इट् comes in by 'ऋद्धनोः स्ये' (2366). गुणः। व्यापृत—पृङ् त। Elision of सिच् by 'ह्रस्वादङ्गात्' (2369). मृङ् to give up life—

मित—। स्नु स्तौति। 'अपदान्तस्य मूर्धन्य' इत्यधिकृतम्। 'सिवादीनां वा' —इत्यतो वेति चानुवर्त्तते। तच्छेषं पूरयन्नाह—षत्वं वा स्यादिति। 'परिणूतगुणोदय' इति। परिणूतः स्तुतः प्रशंसाभागित्यर्थः। नुवति इति। 'अचि श्नु—' (२७२) इत्युवङ्। अनुवीत्। उवङ् इट्। सिज्लोपः।एवं धुवतीत्यादि। जुगुविथ—जुगुथ इति। भारद्वाजनियमादिड्विकल्पः। इट्पक्षे उवङ्। गुता इति। अनिट्कत्वादुवङभावः। एवं सिचि अगुषीदित्यत्र। दुध्रुविथ इत्यादि स्पष्टम्। कुविलेत्यादि दीर्घपक्षे सेट्कत्वादिति। कुता इति। ह्रस्वपक्षे त्वनिट्कत्वमिति विशेषः। कुटादयो गताः।

रिङिति। 'रिङ् शयग्लिङ्क्षु' (2367)। इयङिति—'अचिश्नु—' (२७२) इति। व्यापरिष्यते। 'ऋद्धनोः स्ये' (२३६६) इति इट्। व्यापृत इति। ह्रस्वादङ्गादिति सिज्लोपः। मृङ् प्राणत्यागे इति।

२५३८। म्रियतेर्लुङ्लिङोश्च ॥१।३।६१॥

दी—। लुङ्लिङोः श्रितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र

ङित्त्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। मम्रिव। मृषीष्ट। मरिष्यति। मृषीष्ट। अमृत।

अथ परस्मैपदिनः सप्त। रि १४०५ पि १४०६ गतौ। लघूपधगुणादन्तरङ्गत्वादियङ्। रियति। पियति। रेता। पेता। धि १४०७ धारणे—। क्षि १४०८ निवासगत्योः। षू १४०९ प्रेरणे। सुवति। सविता। कॄ १४१० विक्षेपे। किरति। किरतः। चकार। चकरतुः। करिता—करीता। कीर्यात्। अकारीत्।

The तङ् affixes are attached to the root मृ when लुङ्, लिङ् and शित् (श-eliding affixes) follow i. e. मृ is आत्मनेपदी in लट्, लोट्, लङ्, विधिलिङ् लुङ् and आशीर्लिङ् and nowhere else. The root reads ङ-eliding (मृङ्). This ङ् is to regulate its pitch in the Vedas and hence does not indicate its आत्मनेपदित्व by 'अनुदात्तङित आत्मनेपदम्'; ममार—लिट् परस्मै. णल्—सम् अ—ममर् मार् अ by 'उरत्' (2244) उरण् रपरः (70) and 'अचो ञ्णिति' (254) ममार् अ by 'हलादि—' ममार. ममर्थ—see 'ऋतो भारद्वाजस्य' (2296). मम्रिव by क्रादिनियम (2292); मरिष्यति by ऋद्धनोः स्ये (2366). मृषीष्ट—आशीः कित्। अमृत—लुङ् कित् by 'लिङ्सिचौ—' (2300) and सिज्लोप by 'ह्रस्वादङ्गात्—' (2369).

अथ etc. रियति पियति—Here इयङ् comes being अन्तरङ्ग in comparison with लघूपधगुण (2189). सुवति by धात्वादेः षः सः and उवङ् (272). कॄ to scatter. It is सेट्. किरति by 'ऋत इद्धातोः' (2390) and 'उरण् रपरः (70)। चकार by 'उरत्', '—रपरः' ऋच्छत्यृताम् (2383) and 'अत उपधायाः' (2282). चकरतुः all the above

rules apply except 'अत उपधायाः' (2284). करिता—करीता by 'वृतो वा' (2391). कीर्यात्—आशी. by 'हलि च' (354). अकारीत् by 'सिचि वृद्धिः—' (2297)

म्रिङ्—। म्रियतेरिति। 'अनुदात्तङित:—' (१।३।१२) इत्यत आत्मनेपदमिति वर्तते। 'शदेः शितः' (१।३।६०) इत्यतः शित इति च। तदाह—लुङ्—लिङोः शितश्चेत्यादि। प्रकृतिभूतादिति। उपसर्गयोगव्यावृत्त्यर्थमिदं विशेषणम्। तेनोपसर्गे सत्यसत्यपि तङिति भावः। नान्यत्रेति—नियमार्थमिदम्। तथा च लट्, लोट्, लङ्, विधिलिङ् आशीर्लिङ्, लुङित्येतेष्वेव म्रियतेरात्मनेपदं न तु लिडादिष्विति फलितम्। ननु 'मृङ् प्राणत्यागे' इतिङकारानुबन्धकरणादेव 'अनुदात्तङित—'इत्यात्मनेपदे प्राप्ते एतन्नियमवानयमनुबन्धो व्यर्थ इत्याशङ्का आह—ङित्त्वं स्वरार्थमिति। तथाच 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनेन ङितः परस्य लादेशसार्वधातुकस्य अनुदात्तत्वे कृते मा हि मृते'त्यत्र धातुरुदात्तः। ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यादिति भावः। म्रियते। 'रिङ् शयक्लिङ्क्षु' (२३६७) इति रिङ्। 'अचि श्नु—' (२७२) इतीयङ्। शः। ममारेति। अभ्यासस्य—'उरत्' (२२४४) इत्युारदत्वम्।' 'उरण् रपरः' (७०) इति रपरत्वम् हलादिः शेषः। अङ्गस्य 'अचो ञ्णिति' (२५४) इति वृद्धिः। अतुसुसोश्च मम्रतुः। मम्रुरिति यणेव 'असंयोगादिति' कित्वाद् गुणाप्रवृत्तिः। ममर्थ इति—'ऋतन्त ईडन् नित्यानिट्' इति थलि इडभावः। मम्रिव इति—क्रादिनियमादिट्। मर्तासीति तासि रूपम्—यहा मध्यमपुरुषोऽत्र द्रष्टव्यः। अभिव्यक्तं 'मर्ता' इत्येव। परस्मैपदित्वदर्शनाय तासावुदाहरणम्। मरिष्यति इति—'ऋद्धनोः स्ये' (२३६६) इति इडिति भावः। मृषीष्ट—आशिषि कित्वान्न गुणः। अमृत इति—लुङि सिचि रूपम्। 'लिङ्सिचौ'—इति कित्वन्न गुणो नापि वृद्धिः। 'ह्रस्वादङ्गात्' (२३६८) इति सिज्लोपः। अपृक्ताभावादीडभावः।

अधीति। रि श—रि अ इति स्थिते लघूपधगुणं स्यादित्याशङ्का आह—लघूपधगुणादिति। लघूपधगुणो हि प्रकृतिप्रत्ययौ विकरणञ्चापेक्षते। तेना'

बहुपेक्षः। इयङ् तु प्रकृतिप्रत्ययमात्रमेव। तेनायमल्पापेक्षः। अतः 'असिद्धं बहिरङ्गमन्तरङ्गे' इतीयङ्। सुवति। उवङ्। सविता। इङ्गुणौ। कॄ विक्षेपे इति। दीर्घान्तोऽयं सेट् च। किरतीति। ऋत इद्धातोः (२३९०) इति इत्। रपरत्वम्। चकार इति। 'उरत्,' 'उरण् रपरः' (७०) अचकल्पताम् (२३८३). 'अत उपधायाः' (२२८२) इत्येषां यथापूर्वं प्रयोगः। चतुर्षु तु शेषवर्जं सर्वं प्रयोक्तव्यमिति विशेषः। एवमुक्ति। करिता—करीता इति। 'वॄतो वा' (२२९१) इतीटो दीर्घविकल्पः। कीर्यादिति। 'हलि च' (२५४) इति दीर्घः। अकारीत् इति। सिचि वृद्धिः। इटः परत्वात् सिज्लोपः। 'वसूनि तोयं घनवद् व्यकारीत्' इति भट्टिः। अथ किरतेः सुडागममभिप्रेत्याह—

## २५३८। किरतौ लवने ॥६।१।१४०॥

टी—। उपात् किरतेः सुडागमः स्याच्छेदेऽर्थे। उपस्किरति। 'अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्' (वार्त्तिक)। उपास्किरत्। उपचस्कार।

The aug. सुट् is prefixed to the root कॄ, preceded by the उपसर्ग उप, in the sense of mowing. Thus उपस्किरति। सुट् is टित्। Hence by 'आद्यन्तौ टकितौ' it will be the first letter of कॄ। 'It must be said that सुट् will come before the क (of कॄ), even when the aug. अट् or the अभ्यास (च) is interposed between the उपसर्ग and कॄ' (Varttika)। Thus उपास्किरत् (उप (अट्) कॄ अ तिप्—उप अ सुट् किरत्) उपचस्कार (उप (च) कार—उप-च सुट् कार)।

मित—। किरताविति। 'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु' (६।१।१३९) इत्यत उपादिति पञ्चम्यन्तमनुवर्तते। 'सुट् कात् पूर्वः (६।१।१३५) इत्यतः सुडितिः। किरताविति च षष्ठ्यर्थे सप्तमी। तदाह—उपात् किरतेरिति। लवनमिति छेदार्थकस्य

न्धातो र्लुटि रूपम् । तदाह किरेऽर्थे इति । 'अडभ्यासव्यवायेऽपी'त्यादि वार्त्तिकम् । 'सुट् कात् पूर्व्वः' इति सूत्रात् परं पठितम् । सूत्रेणाप्राप्तौ वचनम् । उपात्किरदित्यादि स्पष्टम् । लवनभिन्नार्थे तु सुट् न । उपकिरति विक्षिपतीत्यर्थः ।

**२५४० । हिंसायां प्रतेश्च ॥६।१।१४१॥**

**दी— । उपात् प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ १४११ । निगरणे ।**

सुट् comes before किरति, coming after the उपसर्गs उप as also प्रति, in the sense of doing harm. Thus उपस्किरति । Here also the Varttika 'अडभ्यासव्यवायेऽपि—' applies; cp. 'उरोविदारं प्रति-चस्करे नखैः' ( शिशुपालवधम् ) । प्रतिचस्करे is in the passive voice where गुण comes in by 'ऋच्छत्यॄताम्' (2383). गॄ to swallow:—

मित— । हिंसायामिति । पूर्व्ववदनुवृत्तिः । चकारादुपादित्यस्य समुच्चयः । तदाह—प्रतेश्च अत्रापि 'अडभ्यासव्यवायेऽपि—' इति वार्त्तिकस्योपयोगः । तेन 'उरोविदारं प्रतिचस्करे नखैः' ( माघः ) इत्यादि सङ्गच्छते । 'प्रतिचस्करे' इति कर्म्मणि लिट् । ऋच्छत्यॄतामिति गुणः । गॄ निगरणे इति । दीर्घान्तोऽयमनिट् च ।—

**२५४१ । अचि विभाषा ॥८।२।२१ ॥**

**दी— । गिरते रेफस्य लत्वं वा स्यादजादौ । गिरति । गिलति । जगार—जगाल । जगरिथ—जगलिथ । दृङ् १४१२ आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्त्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् । धृङ् १४१३ अवस्थाने । ध्रियते ।**

The रेफ (र) of गिरति ( गॄ ) optionally becomes ल, when any

affix, having a vowel (अच्) at the outset follows. Thus गिरति गिलति etc. दृङ् to love, to fondle. आद्रियते with रिङ् and इयङ् as before. आद्रियेते by 'धातो ङ्रितः' (2235). आदद्रे no गुण due to कित् by 'असंयोगाल्लिट् कित्' (2242). आदरिष्यते—by 'ऋद्धनोः— (2366). आदृषीष्ट—(आशीः) by 'उश्च' (2368). आदृत (लुङ्)—by ह्रस्वादङ्गात्—' (2369). धृङ् (धृ) to remain, to keep at etc. cp. 'ध्रियते भूपतिः पिता' (महाभारतम्)।

गित—। गिरतेरिति। 'ग्रो यङि' (८।२।२०) इत्यतो 'ग्रः' इति गृ' इत्यस्य षष्ठ्यन्तमनुवर्त्तते। 'कृपो रो लः' (८।२।१८) इत्यतो रो ल' इति च। तदाह—गिरतेरित्यादि। अजादाविति। 'धातोः कार्य्यमुच्यमानं' तत् प्रत्यये भवति इति परिभाषया प्रत्ययो लभ्यते। स च अचेत्यनेन विशेष्यते। तदादिविधिः। गिरति—गिलति इत्यादि। 'ऋत इद्धातोः', रपरत्वम्। किरतिवद्रूपाणि। आद्रियेते इति। रिङ्। इयङ्। 'धातो ङ्रितः' (२२३५) इतीयादेशः। 'तथाद्रियन्ते न बुधाः सुधामपि' (नैषधम्)। आदद्रे इति। कित्त्वान्न गुणः। आदरिष्यते इति। ऋद्धनोरिति इट्। आदृषीष्ट इति। उश्चेति कित्त्वान्न गुणः। आदृत इति—ह्रस्वादङ्गादिति सिचो लोपः। धृङ् अवस्थाने इति—दृङ्वद्रूपाणि।

दो—। अथ परस्मैपदिनः षोड़श। प्रच्छ १४१४ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छिथ—पप्रष्ठ। पृच्छ्यात्। प्रक्ष्यति। अप्राक्षीत्। तृत्। किरादयो वृत्ताः॥ सृज १४१५ विसर्गे। 'विभाषा सृजिदृशोः' (२४०४)। ससर्जिथ—सस्रष्ठ। स्रष्टा। स्रक्ष्यति 'सृजिदृशोर्झल्यमकिति' (२४०५) इत्यमागमः। सृज्येत्। सृज्यात्। अस्राक्षीत्। टुमस्जो १४१६ शुद्धौ। मज्जति। ममज्ज। 'मस्जिनशोर्झलि'

( २५१७ ) इति नुम्। 'मस्जेरन्त्यात् पूर्वो नुम्वाच्यः' (वार्त्तिक)। संयोगादिलोपः। ममङ्कथ—ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो १४१७ भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत्। अरौक्ताम्। भुजो १४१८ कौटिल्ये। रुजिवत्। छुप १४१९ स्पर्शे। छोप्ता। अच्छौप्सीत्। रुश १४२० रिश १४२१ हिंसायाम्। तालव्यान्तौ। रोष्टा। रोक्ष्यति। रेष्टा। रेक्ष्यति। लिश १४२२ गतौ। अलिक्षत्। स्पृश १४२३ संस्पर्शने। स्प्रष्टा—स्पर्ष्टा। स्प्रक्ष्यति—स्पर्क्ष्यति। अस्प्राक्षीत्—अस्पार्क्षीत्—अस्पृक्षत्। विच्छ १४२४ गतौ। 'गुपूधूप—' (२३०२) इत्यायः। आर्द्धधातुके वा। विच्छायति। विच्छायाञ्चकार—विविच्छ। विश १४२५ प्रवेशने। विशति। वेष्टा। मृश १४२६ आमर्शने। आमर्शनं स्पर्शः। अम्राक्षीत्—अमार्क्षीत्—अमृक्षत्। णुद १४२७ प्रेरणे। कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः। षद्लृ १४२८ विशरणगत्यवसादनेषु। 'सीदति' इत्यादि भौवादिकवत्। इह पाठो नुम्विकल्पार्थः। सीदती—सीदन्ती। ज्वलादौ पाठस्तु णार्थः। सादः। स्वरार्थश्च। शबनुदात्तः। शस्तूदात्तः। शद्लृ १४२९ शातने। स्वरार्थं एव पुनः पाठः। शता तु नास्ति। 'शदेः शितः' (२०६२) इत्यात्मनेपदोक्तेः।

अथ षट् स्वरितेतः। मिल १४३० सङ्गमे। 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः। मिलति—मिलते। मिमेल—मिमिले। मुचॢ—१४३१ मोचने।

Now come sixteen परस्मैपदी roots. प्रच्छ to intend to know. पृच्छति by 'ग्रहिज्या—' (2412) due to ङित्त्व of श। पप्रच्छतुः and not पपृच्छतुः with सम्प्र—because अतुस् is not कित् here due to its following च्छ which is a संयोग letter. पप्रच्छिथ—पप्रष्ठ by भारद्वाजनियम (2296). पप्रच्छ् थ—पप्रश् थ by 'व्रश्च—' (294)—पप्रष्ठ by 'ष्टुना ष्टुः' (113). Similarly प्रष्टा। In प्रक्ष्यति, this ष is changed into क by षढोः कः (395). अप्राक्षीत्—वृद्धि by 'वदव्रज—' (2267) because the root is अनिट्. The rest is as above. वृत्—i, e. Here end the किरादि roots. सृज to let go, create सृजति etc. ससर्जिथ—सस्रष्ठ by option of इट् cp. विभाषा सृजिदृशोः'। In the case of सस्रष्ठ, there comes अम् by 'सृजिदृशोः—' (2405) for थल is पित् and hence अकित्। Thus सृज्+थल—ससृज् थ—सस्र ज् थ (अम्)—सस्रष् थ ('व्रश्च—'). In the case of इट् the root is gunnated. स्रष्टा by अम्, षत्व and ष्टुत्व। स्रक्ष्यति—अम्, षत्व, कत्व and षत्व। सृजेत् by 'अतो येयः' (2212). सृज्यात्—by किदाशिषि। अस्राक्षीत्—by 'वदव्रज—' (2267) and अम् etc. मज्जति—by 'स्तोः श्चुना श्चुः' (111) which gives श in place of स; then ज in place of श by 'झलां जश्—' (51). 'किं तव परमाणुर्वै यत्र मज्जति मन्दरः' (श्रीधरस्वामी in भागवत)। ममज्जिथ—ममङ्क्थ—option of इट् by भारद्वाज नियम। In the latter case the process is thus—ममस्ज् थ—ममज् थ due to the elision of स् by 'स्कोः—' 380)—मम नुम ज् थ by 'मस्जिनशोर्झलि' (2517), and the Varrtika'मस्जेरन्त्यात् पूर्वो नुम्— ममन्ग्थ by 'चोः कुः'(378)—ममङ्क् थ by 'नश्चापदान्तस्य—'(123), 'अनुस्वारस्य ययि—' (124) and 'खरि च' (121). Similarly मङ्क्ता मङ्क्ष्यति or मङ्क्ष्यति here षत्व comes by इण्कोः'(211 अमाङ्क्षीत्—लुङ्; the process is the same except वृद्धि by 'वदव्रज—' which applies because the root is अनिट्। रोक्ता—by चोः कुः'(378)

and 'खरि च' (121). रोक्ष्यति—apply the above two rules and 'इण्कोः—(211). Similarly अरौक्षीत् with वृद्धि (वदव्रज—' 2267) in addition to above रोष्टा—by 'व्रश्च—'(294) and ष्टुना (113). रोक्ष्यति by षढोः-'(295). अरुक्षत्—by 'शल इगुपधात्—' ( 2336 ).No guna due to कित्। स्प्रष्टा—स्पर्ष्टा—the former is by अम् ; cp 'अनुदात्तस्य चर्दु—' ( 2402 ) and 'व्रश्च—' ( 294 ) etc. The latter is by लघूपधगुण and व्रश्च etc. Similarly स्प्रक्ष्यति—स्पर्क्ष्यति with 'षढोः—' ( 295 ) in addition. अस्प्राक्षीत्—अस्पार्क्षीत्—अस्पृक्षत्। All these three forms are due to सिज् विकल्प by the vartika स्पृशमृशकृषतृपदृपां च्लेः सिज् वा वाच्यः' under the rule 'न दृशः' (2407 ). Thus when there is सिच् the form stands as अस्प्राक्षीत् and अस्पार्क्षीत्. with अम् in the former case due to 'अनुदात्तस्य—' ( 2402 ) and गुण in the latter case ( because अम् is optional ). And when सिच् is wanting, then क्स comes in by 'शल इगुपधात्—' ( 2336 ) and gives अस्पृक्षत् without गुण or वृद्धि for क्स is कित्। In the former two cases, apply the rules उरण् रपरः ( 70 ) ( —in case of अम् ), 'वदव्रज—' ( 2267 ) 'व्रश्च—' ( 294 ) 'षढोः कः—' ( 295 ) and इण्कोः ( 211—12 ). In the third case ( क्स ) all the rules apply save and except उरण् रपरः and 'वदव्रज—'। मृश् to touch, consult (परामृशति) etc. अम्राक्षीत्—अमार्क्षीत्—अमृक्षत् see above. णुद (णोपदेश) to urge or send. It has been again read here with a view to make it परस्मैपदी even when the fruit of the action accrues to the agent. षद्लृ or सद is conjugated as सीदति etc, like that read in भ्वादि। Here it is read to make the augment नुम् optional thus सीदती—सीदन्ती ( सद+शप्+ङी १मा with नुम् by the rule 'आच्छीनद्योर्नुम्' ( 446 ). And the fact that षद्लृ or सद has been read

under the ज्वलादि class in भ्वादि is to attach the affix ण after it by the rule 'ज्वलिति कसन्तेभ्यो णः' (2902). Hence सादः ( सद् + ण ). The object of reading it here is again to regulate स्वर or pitch. Because शप् is अनुदात्त whereas श is उदात्त। शद्लृ or शद् ( शीयते etc,) is again read here for regulating स्वर। Because the root cannot have the affix शतृ ( शता is 1st. case-ending sing. ) after it as it is आत्मनेपदी ( and not परस्मैपदी ) by the rule 'शदेः शितः' (2362). Thus it cannot be argued that it is here read again for the augment नुम् which is enjoined to a root only when the affix शतृ follows and not शानच्। Now we take up the six स्वरितेत् or उभयपदी roots. मिल to assemble together. This root has been read as 'मिल सश्लेषणे ( to embrace ) in this तुदादि class. Here it is again read so as to make it आत्मनेपदी when the fruition rests on the agent. ( And the former मिल संश्लेषणे is परस्मैपदी even when the result of the action goes to the doer ). मिलति etc, easy. मुच्लृ or मुच् to leave or let go—

मिल— । अयीति । प्रच्छ ज्ञीप्सायामिति । ज्ञातुमिच्छायामित्यर्थः । अप्रत्यये 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणं मत्वाह—पृच्छतीति । पप्रच्छतुरिति । अत्र संयोगात् परत्वेन 'असंयोगाल्लिट् कित्' (२२४२) इत्यप्रसक्तेः कित्त्वाभावान्न सम्प्रसारणम् पप्रच्छिथ—पप्रष्ठ इति । भारद्वाजनियमादिड्विकल्पः । पूर्ववत्-रूपं स्पष्टम् । तत्र तु पप्रच्छ् थल् इति स्थिते 'व्रश्च—' (२९४) इति च्छस्य षः । ततः ष्टुनेति (११३) थस्य ठः । एवं प्रष्टा । प्रक्ष्यतीत्यादि । उत्तरत्र 'षढोः कः सि' (२९५) इण्कोरादेशप्रत्यययोः' (२११—१२) इति षत्वम् । अप्राक्षीदिति—अत्रापि प्राग्वत् प्रक्रिया । इडभावादौ टोऽभ्यासाभावे वदव्रजेति हलन्तलक्षणाद्वृद्धिरधिकेति विशेषः । एवमप्राक्षि-त्यादि । किरादयो हता इति—गता इत्यर्थः । ससर्जिद—ससष्ठ इति । इट्पक्षे

लघूपधगुणः। अनिट्पक्षे तु ससृज् थ इति स्थिते थलः पित्त्वेनाकित्त्वात् सृजिदृशोरिति अमागमः। उरण् रपरः (७०) इति रपरत्वम्। मिचोऽन्त्यात्परः इति यणः। सस्रज् थ इति जाते व्रश्चेति (२९४) षः। थस्य च ष्टुत्वेन ठः। एवं स्रष्टेति स्रक्ष्यतीत्यत्र तु 'षढोः कः—' (२९५), 'इण्कोः' (२११) इति कत्वषत्वे विशेष—सृजेदिति: 'अतो येयः (२२१२)।' 'आद्गुणः' (६९)। सृज्यादिति—किदाशिषीति गुणविरहः। असाक्षीदिति। अद्राक्षीदितिवत्। टुमस्जो शुद्धौ इति। मस्ज श ति इति स्थिते सस्य स्तोः श्चुनेति (१११) शः। तस्य 'झलां जश्—' (५१) इति जश्त्वेन जः। मज्जतीति। अत्र सकारस्य उपधात्वाभावात् 'अत उपधायाः' (२२८२) इत्यस्याप्रवृत्तेर्वृद्धिर्नापि लघूपधगुणः। ममज्जिथ—ममङ्क्थ इति—भारद्वाजनियमादिड्विकल्पः। उभयत्र ममस्ज् थ इति स्थिते मस्जिनशोरिति नुमि कृते तस्य च 'मस्जेरन्त्यात् पूर्वो नुम्वाच्य' इति जकारात् प्रागवस्थाने ममस्नुम्ज् थ इति जाते स्कोरिति (३८०) सलोपे 'नश्चापदान्तस्य—' इति नस्यानुस्वारे जस्य चोः कुरिति कुत्वेन गकारे, अनुस्वारस्य ययीति परसवर्णो ङः। तस्य खरि चेति चर्त्वेन कः। बालमनोरमायां तु 'यद्यपि सकारात् परस्य नुमि मस्यपि इष्टं सिध्यति तथापि अन्त्यात् पूर्वो नुमित्यस्य मग्न इत्यादौ नलोपः फलम्, अन्यथा उपधात्वाभावान्नलोपो न स्यादिति भावः' इत्युक्तम्। तच्चिन्त्यम्। तथा सति अत्र वार्त्तिकावतारणस्य फलाभावेन तद्वैयर्थ्यापत्तेः। किञ्चात्रापि एतद्वार्त्तिकाभावे स्तोः श्चुनेति श्चुत्वमेव स्यान्न तु स्कोरिति सलोपः। नुमि प्राग् विहिते तु न तादृगवकाश इति विभावनीयमिति दिक्। संयोगादिलोप इति। स्कोरिति सलोप इत्यर्थः। मङ्क्ष्यति इति। पूर्वसूत्राणि सर्वाण्येव प्रयोज्यानि। ततः इण्कोरिति सस्य षत्वम्। अमाङ्क्षीदिति पूर्ववत् प्रक्रिया। वदव्रजेति वृद्धिविशेषः। रोक्ता (रुज्+ता) इति। गुणः। जस्य गः, तस्य कः। रोक्ष्यति इति। अत्र सः षत्वमधिकम्। अरौक्षीदिति वृद्धिविशेषः। कुत्वचर्त्वषत्वानि प्राग्वत्। रोष्टेति। शस्य व्रश्चेति (२९४) षः। तस्य ष्टुत्वेन टः। रोक्ष्यति इति। षस्य 'षढोः कः—' (२९५) कः। षत्वम्। एवं रेष्टा—रेक्ष्यति। अलिक्षदिति। 'शल इगुपधात्—' (२३३६) इति क्सः। तस्य कित्त्वात्

क्ङिति चेति निषेधान्न गुणः। स्पृष्टा—स्प्रष्टा इति। 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (२४०२) इत्यम्विकल्पाद् रूपत्रयम्। तत्र अम्पक्षे पूर्वम्। अमभावे गुणेन परम्। अमपक्षे उरण्णिति रपरत्वम्। एवम् स्प्रक्ष्यति—स्पर्क्ष्यति। इति प्रागवत् षढोरिति षस्य कः, दन्कोरिति सस्य षत्व विशेषः। अस्प्राक्षीत्—अस्पार्क्षीत्—अस्पृक्षदिति। 'स्पृशमृशकृषतृपदृपां च्लेः सिच् वा वाच्य' इति वार्तिकात् (इदं 'न दृशः' (२४०७) इत्यत्र पठितम्) अत्र सिज्विकल्पः। सिजभावपक्षे क्सः। सिच्पक्षे पुनः रूपद्वयम्। 'अनुदात्तस्य चर्दुपधस्य— (२४०३) इत्यम्-विकल्पात्। तेन एकत्र (अस्प्राक्षीदित्यत्र) सिजमौ (रपरत्वम्)। अपरत्र (अस्पार्क्षीदित्यत्र) सिज्मात्रम्। उभयत्रैव—हलन्तलक्षणा वृद्धिः, षत्वकत्वषत्वानि च समानि। क्स—पक्षे तु अस्पृक्षत् इति। क्सस्य कित्त्वाद् गुणवृद्ध्योरभावो विशेषः। एवममाक्षीत्—अमार्क्षीत्—अमृक्षदिति। णुद प्रेरणे इति। अयं णुदेरव्यवहितपरमेव उभय-पदित्वेन पठितः। ननु तर्ह्यत्र पाठः किमर्थमित्यत आह—कर्त्रभिप्रायेऽपि फले इति—कर्त्रगेऽपि फले इति तदर्थः। परस्मैपदार्थः इति। षद्लृ इति। भौवादिक-वत्—भ्वादौ पठितवदित्यर्थः। लुम्विकल्पार्थं इति। 'आच्छीनद्योर्नुम्' (४४५) इत्यनेनेति भावः। ज्वलादौ—पाठस्तु इति। णार्थः—'ज्वलितिकसन्तेभ्यो णः' इति णप्रत्ययार्थः। उदाहरति—साद इति। सरतीत्यर्थः इति। इह पुनः पाठ इति भाव। अतएव शप्शविकरणयोर्भेदं दर्शयति। शवनुदात्त इत्यादिना। शता तिति। शतृशब्दस्य प्रथमैकवचने शतेति—माता पितेतिवत्। शदधातोः शद्—मत्वयो न युज्यते इत्यर्थः। तत्र हेतुः शदेरित्यादि। यतीति। स्वरितेत उभयपदिनः। तदर्थः—आत्मनेपदार्थः। मुच्लृ—मोचने इति—

## २५४२। शे मुचादीनाम् ॥७।१।५९॥

शे—। नुम् स्यात्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। लुप्लृ १४३२ छेदने। लुम्पति। लुम्पते। अलुपत्। अलुप्त। विदॢ १४३३ लाभे।

विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूत्यादिमते सेट्कोऽयम्। वेदिता। भाष्यादिमतेऽनिट्कः। वेत्ता। परिवेत्ता। परिवेंजने। जीवदु परित्यज्य दारानग्नीं श्च लब्धवानित्यर्थः (?)। तनुत्वचौ। लिप १४३४ उपदेहे। उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। 'लिपिसिचि—' (२४२८) इत्यङ्। तङि तु वा। अलिपत्। अलिपत—अलिप्त। षिच १४३५ क्षरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत—असिक्त। अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषेच।

अथ त्रयः परस्मैपदिनः। कृती १४३६ छेदने। कृन्तति। चकर्त। कर्तिता। कर्तिष्यति—कर्त्स्यति। अकर्तीत्। खिद १४३७ परिघाते। खिन्दति। चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। पिश १४३८ अवयवे—पिंशति। पेशिता। अयं दीपनायामपि। 'त्वष्टा रूपाणि पिंशतु'। वृत्। मुचादयस्तुदादयश्च।

इति तिङन्ततुदादिप्रकरणम्।

The augment नुम् is directed to the eight roots of the मुचादि class viz—मुच्, लुप्, विद, लिप्, सिच्, कृत, खिद and पिश्—when the विकरण श follows. Thus मुञ्चति—मुञ्चते etc. मुचीष्ट ( आशीर्लिङ् )। Here लिङ् is कित् by 'लिङ्सिचौ—' ( २३०० ), hence no guna. च is changed into क by चोः कुः' ( ३७८ ) and षत्व of सीष्ट is by 'इण्कोः' (२११ )। अमुचत्—अङ् due to the elision of लृ by 'पुषादि—' (२३२४)। अमुक्त—सिच् ( आत्मनेपदी ) here सिच् elides by झलादझल्' ( २३६९ )।

Similarly अलुपत्—अलुप्त etc. In परिवेत्ता—परि means वर्जन or leaving aside. ज्यं ष्ठं परित्यज्य etc. The meaning is clear but its source and context are obscure. तनृतर्चौ i. e. the form may be obtained with तन् or तृच्। लङ्कि तु वा i.e. अङ् comes optionally, when the root is आत्मनेपद by the rule 'आत्मनेपदेष्वन्यतरस्याम्' (2419) Thus अलिपत with अङ् and अलिप्त with सिच् which elides by 'ह्रस्वात्—'। अभिषिञ्चति—by 'उपसर्गात् सुनोति—' (2270). अभ्यषिञ्चत् by 'प्राक् सितादड्व्यवायेऽपि' (2276). अभिषिषेच—by 'स्थादिष्वभ्यासेन चाभ्यासस्य' (2277).

अत्र etc.—कृती (कृत्) ईदित् or ई-eliding to prohibit इट् in निष्ठा; cp 'श्वीदितो निष्ठायाम्' (3039). चकर्थ by भारद्वाजनियम—'ऋतोभारद्वाजस्य' (2296). कर्त्स्यति—'कर्त्स्यति due to option of इट् by 'सेऽसिचि कृतचृत—' (2506). अकर्तीत् by 'नेटि' (2268), 'पुगन्त—' (2189) and 'इट ईटि' (2266). पिंशि (पिश्) to pound. This also means to make manifest. Here end both the मुचादि and the तुदादि class of roots.

मित—। श्री इति। अपेक्षितं पूरयन्नाह—नुम् स्यादिति। 'इदितो नुम् धातो' रित्यतस्तदनुवृत्तेरिति भाव:। मुचादयस्त्वष्टौ, यथा—मुच्, लुप्, विद, लिप्, सिच्, कृत्, खिद, पिश्चेति। मुच्यादिति। किदाशिषीति यासुटः कित्त्वान्न गुण:। मुचीष्ट इति। 'लिङ्सिचावात्मनेपदेषु' (२३००) इति कित्त्वान्न गुण:। चो:कुरिति (३७८) चस्य क:। इण्कोरिति (२११) ष:। अमुचत्—अमुक्त इति। लृदित्वात् 'पुषादि—' (२३३६) इत्यङि अमुचत् इति। ङित्त्वान्न गुण:। अन्यत्र 'लिङ्सिचाविति कित्त्वेन गुणाभाव:। ह्रस्वादङ्गादिति (२२८६) सिज्लोपश्च। एवमलिपत—अलिप्तेत्यादि। विवेद—विविदे इति। णल: पित्त्वात् पूर्ववल्लघूपध गुण:। उत्तरत्र तु एश: कित्त्वान्न गुण:। परिवेत्तेति। अत्र परेरर्थमाह—परिवर्जने इति। ज्येष्ठं परित्य-

ज्र्येति—अस्य मूलप्रकरणे मृग्यं। नीरवा अत्र नागेशादयः। इन्द्रत्वाविति। एतयोरेकतरेण परिविवेषेति सिद्धमित्यर्थः। लिम्पतीति 'लिम्पतीव तमोऽङ्गानि' (बाल-चरितम्, मृच्छकटिकम्) अत्र तु धातोराच्छादने वृत्तिः। लुङि तु वेति। अङिति परा-मृश्यते। 'आत्मनेपदेष्वन्यतरस्याम्' (२४१८) इत्यङ्विकल्पकं सूत्रम्। अलिपतेति अङि। अलिप्तेति सिचि प्रागवत्। अभिषिञ्चति इति। 'उपसर्गादिति—' (२२७०) षत्वम्। अभ्यषिञ्चदिति। 'प्राक् सितात्—' (२२७६) इति षत्वम्। अभिषिषेचेति। स्थादिष्वभ्यासेनेति (२२७६) षः।

कृतेति। कृतीति ईदित्वान्निष्ठायाम् 'श्वीदितो—' (३०३९) इतीडभावः। कर्तिष्यति— कर्त्स्यति इति, 'सेऽसिचि—' (२५०६) इतीड्विकल्पः। दीपनायां प्रकाशने इत्यर्थः।

॥ इति मितभाषिण्यां तुदादि-प्रकरणम् ॥

अथ

# तिङन्तरुधादि-प्रकरणम्



टी—। रुधिर् १४३८ आवरणे। नव स्वरितेत इरितश्च।

२५४३। रुधादिभ्यः श्नम् ॥३।१।७८॥

टी—। शपोऽपवादः। मित्त्वादन्त्यादचः परः। नित्यत्वाद् गुणं बाधते। रुणद्धि। 'श्नसोरल्लोपः' (२४६८)। नत्वस्यासिद्धत्वादनुस्वारः परसवर्णः। तस्यासिद्धत्वाण्णत्वं न। 'न पदान्त—' (५१) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्। रुन्धः। रुन्धन्ति। रुन्धे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु। रुन्धात्। रुन्धि। रुणधानि। रुणधै। अरुणत्। अरुन्धाम्। अरुणत्—अरुणः। अरुणधम्। अरुधत्—अरौत्सीत्। अरुद्ध। भिदिर् १४४० विदारणे। भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। अभिनत्—अभिन्ताम्। अभिनदम्। अभिन्त। अभिदत्—अभैत्सीत्। अभित्त। छिदिर् १४४१ द्वैधीकरणे—। अच्छिदत्—अच्छैत्सीत्। अच्छित्त। रिचिर् १४४२ विरेचने। रिणक्ति। रिङ्क्ते। रिरेच। रिरिचे। रेक्ता। अरिणक्। अरिचत्—अरैक्षीत्। अरिक्त। विचिर् १४४३

पृथग्भावे। विनक्ति। विङ्क्ते। क्षुदिर् १४४४ सम्पेषणे। क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्—अक्षौत्सीत। अक्षुन्त। युजिर् १४४५ योगे। योक्ता। उच्छृदिर् १४४६ दीप्तिदेवनयोः। छृणत्ति। छृन्ते। चच्छर्द। 'सेऽसिचि—'(२५०६) इति वेट्। चच्छृदिषे—चच्छृत्से। छर्दिता। छर्दिष्यति—छर्त्स्यति। अच्छृदत्—अच्छर्दीत्। अच्छर्दिष्ट। उतृदिर् १४४७ हिंसानादरयोः। तृणत्तीत्यादि।:छृणत्तिवत्। कृती १४४८ वेष्टने। परस्मैपदी। कृणत्ति। आर्द्धधातुके तौदादिकवत्। ञिइन्धी १४४९ दीप्तौ॥ त्रय आत्मनेपदिनः।

The विकरण श्नम् (न) is affixed to the roots of the रुधादि class. This overrules शप्। Being मित् or म्—eliding, श्नम् willhave its position after the final अच् or vowel ( and श् will elide due to प्रत्ययत्व of श्नम् ). Thus न only remains ). श्नम् being a नित्य विधि or persistent injunction, bars गुण directed by 'पुगन्तलघूपधस्य च' ( 2189 ). Thus without गुण we have रुध् + श्नम् + तिप् = रुनध् ति = रुणध् धि—णत्व by 'अट्कुप्वाङ्—' ( 8. 4. 2. ) and ध by 'झषस्तथोर्धोऽधः' ( २२८० ) = रुणद्धि by 'झलां जश्—' ( ५१ )। In रुनध् तस्—तस् is ङित् ( by 'सार्व्वधातुकमपित्' ) hence by 'श्नसोः—' ( २४६९ ) the अ of न is dropped and we have रुन्ध् तस् with णत्व। But as this णत्व is instructed in the असिद्ध chapter ( पूर्व्वत्रासिद्धम्—८।२।१ ), so it is असिद्ध or non-existent. Thus in fact the dental न stands unchanged—which fact turns न into अनुस्वार by 'नश्चापदान्तस्य—' ( १२३—८।३।२४ ) which ( अनुस्वार ) again turns into न itself due to ध following, by the rule 'अनुस्वारस्य ययि—' ( १२४—८।४।५८ )। But this final न

(obtained by परसवर्ण ) will again be changed into cerebral ( ष ) due to 'षट्कुप्वाङ्— ( ८।४।२ ) because this final न is असिद्ध । Here a question arises—the elision of अ ( अल्लोप ), effected by 'श्नसोः—' is स्थानिवत् by 'अचः परस्मिन्—' ( ५० ) । If so, then ण along with अ can neither change into न nor into अनुस्वार ( for the consonant न् only does so and not when the same is in conjunction with a vowel such as अ etc ). To answer this the rule 'न पदान्त—' ( ५१ ) is cited here. And thus by this rule अल्लोप is not स्थानिवत् with reference to अनुस्वार and परसवर्ण। Now रुन्ध् तस्=रुन्ध् धस् by 'झषः—' ( २२८० )=रुन्ध ० स्—the second ध is dropped by 'संयोगान्तस्य लोपः' ( ५४ )=रुन्धः । Similarly रुन्धन्ति, रुन्धे । रोद्धा by लघूपधगुण for there is no श्नम् ( रुध+ता—रोध धा =रोद्धा ; रोत्स्यति—गुणः and चर्त्व by 'खरि च ( १२१ ) । रुणद्धु—रुन्धात् ( तु and तातङ् ) । रुन्धि ( हुझल्भ्यो हेर्धिः and 'संयोगान्तस्य लोपः' and also अल्लोप of अ due to अपित्व (ङित्त्व) of हि by 'सार्वधातुकमपित्' ) । रुणधानि—रुणधै—आनिप् and ऐप् are पित् hence no elision of अ or अनुस्वार etc. अरुणत्—( अट् रनध् तिप् लङ् )—अरुणधत्—अरुणध्० by हल्ङ्याब्भ्यः—' (252)—अरुणत्—द by 'वाऽवसाने' । अरुन्धाम्—तस्=ताम्= धाम् । अल्लोप of न for तस् is ङित् ; अरुणत्—अरुणः (लङ् सिप्) by 'दश्च' (2468). अरुणधम्—मिप्=अम् । अरुधत्—अरौत्सीत्—The first is with अङ् by 'इरितो वा' (2269) and the second is with सिच् ( because अङ् is optional) in which case वृद्धि comes in by 'वदव्रज—' (2267). अरुद्ध ( आत्मने—सिच )—Here सिच् elides by 'झलो झलि' (2281). भिदिर् to pierce. भिनत्ति etc.—Easy. अभिनत्—अभिनः by 'दश्च' (2468). छिदिर्—(छिद्) to split into two. रिचिर् (रिच्) to evacuate.

रिणक्ति—च is changed into क by '(चोः कुः'—378). रिङ्क्ते—here णत्व being असिद्ध, न is changed into अनुस्वार ; ङ due to क following by 'अनुस्वारस्य ययि—' (124). रिरेच—णल् is पित् hence the root is gunnated. रिरिचे—here एश् is कित् hence no guna. अरिणक् by 'वाऽवसाने'। अरिचत्—अरैक्षीत्—अरिक्त—by अङ् (इरितो वा)—सिच् (सिप्)—सिच् (त)। See ante. विचिर to separate. Like रिच्। क्षुदिर (क्षुद) to grind. उच्छृदिर (छृद) to shine and to play at dice. उ for इड्विकल्प कृत्वा—कृदित्वा in क्त्वाच्, by 'उदितो वा'। इर् for अङ्। छर्दिष्यति—छर्त्स्यति by 'सेऽसिचि—' (2506). तृणी to surround. Clear in the text. ञिइन्धी (इन्ध्) to shine. Comp—'श्वीत: क्तः' (8044) 'श्वीदितो निष्ठायाम्' (3039)—इद्ध:।

मित—।अथ रुधादीन् निरूपयन्नाह—रुधिरावरणे इति। नित्यत्वादिति। कृता-कृतप्रसङ्गित्वेन श्नमिति पुगन्तलघूपधगु ' बाधते। न च श्नम: मकारलोपित्वेन 'सार्व्वधातुकमपिदि'ति ङित्त्वाद् गुणनिषेधसिद्धे इदं व्यर्थमिति वाच्यम्। श्नम: पूर्व्वस्य इगन्ताङ्गत्वाभावात् तादृशनिषेधस्याप्रवृत्तेरिति तत्त्वबोधिन्यां स्पष्टम्। एवञ्च श्नमः प्रत्ययत्वमाद्दिशत्वर्थेति दृष्टव्यम्। रुणद्धीति। रु श्नम ध् ति—रुन्धृति—इति झषस्तथोरिति (२२८०) तस्य धः। जश्त्वम्। अट्कुप्वाङिति णत्वम्। रुन्ध इत्यत्र प्रक्रियामाह—श्नसोरल्लोप इति। णत्वस्यासिद्धत्वादिति। पूर्व्वत्रासिद्ध-मित्यसिद्धकाण्डान्तर्गतत्वादित्यर्थ:। तस्यासिद्धत्वादिति। परसवर्णतया प्राप्तो नकार: परास्यते। अयं भाव:—पूर्व्वत्रासिद्धमिति णत्वमसिद्धम्। तथा सति तत्त्वतो नकार एवात्र तिष्ठति। ततस्तस्य 'नश्चापदान्तस्य—' (१२२) इत्यनुस्वार:। तस्य 'अनु-स्वारस्य ययि—' (१२४) इति परवर्त्तिवर्णस्य धकारस्य (रुन्ध् तस्—रुंध् धस् ('झष:—') रुन्ध् धस्) समोऽनुनासिको नकार एव भवति। तस्यापि असिद्ध-काण्डान्तर्गतत्वेन (८।४।५८) असिद्धत्वात् णत्वं नेति। ननु नकारो यदा अज्भिर-संस्पृष्टं इल्मात्रं तदैव तस्यानुस्वारपरसवर्णत्वं वक्तुं न्याय्यमिह तु 'श्नसो—' रित्यल्लोपे कृतेऽपि 'अच: परस्मिन्—' इति स्थानिवद्भावेन नकारेण सह अकारसत्त्वात् कथं

तस्यानुस्वारपरसवर्णत्वमित्याशङ्का निराकरोति—न पदान्तेति। स्पष्टम्। एवं रुन् ध् थस् इति जाते द्वितीयधकारस्य संयोगान्तलोपेन रुन्ध इति। एवं रुन्धन्ति—रुन्धे इति। रोद्धेति। लघूपधगुणः। तथा भषस्तथोरिति धः। जश्त्वम्। रोत्स्यति इति। खरि चेति (१२१) चर्त्वम्। रुणद्धि। रुनध् हि इति स्थिते 'हुझल्भ्यः—' इति हेर्धिः। श्नसोरित्यल्लोपः। सेर्ह्यपिच्चेति हेरपित्त्वात् संयोगान्तलोपः (५४)। रुणधानि—रुणधै इति। पित्त्वादल्लोपो न। अरुणदिति। अरु न् ध् तिप् इति स्थिते 'हल्ङ्याब्भ्यः—' (२५२) इत्यपृक्तलोपः। धस्य 'वाऽवसाने' इति चर्त्व-विकल्पः। अरुणत्—अरुणः इति। हल्ङ्यादिलोपः। दश्चेति रुत्वविकल्पः। अरुन-धमिति। मिपोऽमादेशः। अरुधदिति—इरित्त्वात् 'इरितो वा' (२२६९) इत्यङि इदम्। अङभावे सिचि इडभावादिलक्षणयां वृद्धौ इटः परत्वाभावेन सिज्लोपा-भावाच्च अरौत्सीदिति। अरुद्ध इति। तङ्पक्षे इदम्। तप्रत्ययस्य ङित्त्वान्न गुणः। 'झलो झलि' (२२८९) इति सिज्लोपः। भिदिर (भिद) आवरणे इति। क्वचित् रूपाणि। 'भिनत्ति भीम' कविराजकुशमित्युदाहरणम्। रियक्ति इति चत्वं प्राग्वत्। अस्य 'चोः कुः' (३७८) इति कुत्वम्। एवं रिङ्क्ते इत्यत्र कुत्वादनन्तरं णत्वस्या-सिद्धत्वादनुस्वारः। परसवर्णो ङः। रिरेच इति। पित्त्वाल्लघूपधगुणः। रिरिचे इति। कित्त्वान्न गुणः। अरिचदित्यादि प्राग्वत्। उच्छृदिरिति। मनोरमायां तु उ छृदिर् इति तुग्विरहितः पाठोऽङ्गीकृतः। वस्तुतस्तु सतुक्कस्यैव पाठस्य साधीयस्त्वम्। तत्त्वबोधिन्य-प्येवम्। ऋकारयामिदुदित्करणम् विकल्पार्थमुदित्करणम्। 'उदितो वे' ति—छृदित्वा—छृत्वा। इरित्करणम् अङर्थम्। चच्छर्दिथ—चच्छृत्से इति। उभयत्रैव 'छे च' (१४६) इति तुगागमे 'च्छ्' इति भवति। उत्तरत्र खरि चेति (१२१) चर्त्वम्। छर्दिष्यति—छर्त्स्यति इति सेऽसिचीति इड्विकल्पः। अच्छर्दिष्ट इति। अत्र सिच इटः परत्वेन 'सिज्सिचो—' (२३००) इति कित्त्वाभावाद्धातोर्गुणः। षत्वष्टुत्वे। तौदादि कवदिति। तुदादौ पठितत्वात्तौदादिवदित्यर्थः। आर्धधातुके श्नम्नमाद्यभावेन रूपसाम्यादितिति भावः। जिइन्धी दीप्ताविति। 'ञितः क्तः' (३०८८) 'श्वीदितो निष्ठायाम्' (३०३८) इति इडनिषेधात्प्रयोगः इत्यादि सिद्धम्। अथास्य नलोपार्थमाह :—

२५४४। श्नान्नलोपः ॥६।४।२३॥

टी—। श्नमः परस्य नस्य लोपः स्यात्। 'श्नसोरल्लोपः' (२४६८)। इन्धे। इन्त्से। इन्धिता। इनधै। ऐन्ध। ऐन्धाः। खिद १४५० दैन्ये। खिन्ते। खेत्ता। विद १४५१ विचारणे। विन्ते वेत्ता।

अथ परस्मैपदिनः। शिषॢ १४५२ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। ष्टुत्वम्। 'झरो झरि—' (७१) इति वा डलोपः। अनुस्वारपरसवर्णौ। शिण्ढि—शिण्ड्ढि। शिनषानि। अशिनट्, लृदित्वादङ्। अशिषत्। पिषॢ १४५३ संचूर्णने। शिपिवत्। पिनष्टि। भञ्जो १४५४ आमर्दने। भनक्ति। बभञ्जिथ—बभङ्कथ। भङ्क्ता। भुज १४४५५ पालनाभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। तृह १४५६ हिंसि १४५७ हिंसायाम्।

A नकार, occurring after श्न, elides. Thus इन्ध् or इन् ध्+ते=इ श्नम् न् ध्+ते=इनम ध्+ते=इ न्ध्+ध् by 'श्नसो—' (2469)=इन्धे by'झषस्तथो:—' (2280). Similarly इन्त्से etc. Though ञिइन्धी not being इदित्, its नकार might be dropped due to ङित्त्व of ते (सार्व्वधातुकमपित्) etc. by 'अनिदिताम्—'(415), yet the rule 'श्नान्—' is laid down here to form भनक्ति etc. where तिप् being पित् and consequently 'अनिदिताम्—' not applying, the न after श्नम् would not have been dropped. See भञ्जो आमर्दने below.

अथ etc :—शिष्+ति—शिनष्ति by 'ष्टुना—'। शिंष्टः by 'श्नसोरल्लोपः' ( 2469 ) and 'नश्चापदान्तस्य—' ( 123 ). शिशेषिथ—इट् by क्रादिनियम and गुण due to पित्त्व of थल्। शेक्ष्यति—by 'षढोः—'( 295).शिन्ढि—शिण्ड्ढि शिष्+हि=शि नृष्हि by श्नम्=शिन्ष्धि by 'श्नसोः—' due to अपित्त्व or ङित्त्व of हि, cp 'सेर्ह्यपिच्च' and 'हु झल्भ्यो—' ( 2425)=शिन् ड् धि by 'झलांजश्—'. ( 52—जश्त्व )=शिन्ड्ढि by 'ष्टुना' ( 113—ष्टुत्व )=शिन्० ढि by 'झरो—' (७१ ) वा डलोप )=शिंढि by 'नश्चापदान्तस्य— '(१२३—अनुस्वार )=शिण्ढि by 'अनुस्वारस्य ययि—' ( 124 परसवर्ण ) also शिण्ड्ढि due to the optional elision of ड ( वा डलोप )। अशिनट्—लङ् त्—here त् elides by 'हल्ङ्याब्भ्यः—' ( 252 ) and ष् changes into ट (or ड्) by 'वाऽवसाने' (206). शिनषाणि—here अ of श्न does not elide because आट् of आनिप् is पित् and not ङित्। No guna by 'आडुत्तमस्य' due to पित्त्वof आनिप् because श्न is ङित्। अशिषत्—no guna because अङ् is ङित्। पिष्लृ or पिष् to grind is conjugated like शिष्। भञ्जो or भञ्ज् to break down. भनक्ति here ज् is changed into च् by 'खरि च' ( 121 ) and that to क् by 'चोः कुः' ( 378 ). भङ्क्तः by 'श्नसोः—' 'नश्चा—', अनुस्वारस्य—' 'खरि च' and 'चोः कुः। In भनक्ति etc. the नकार of the root itself is dropped by the rule 'श्नान्नलोपः' ( 2544 ). बभञ्जिथ—बभङ्क्थ—option of इट् by 'अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्' under 'ऋतो—' ( 2296 ). In the latter case the process is thus :—द्वित्वं, हलादिशेष, अभ्यासजश्त्व, चर्त्वं ( खरि च ), कुत्व ( चोः कुः ), अनुस्वार ( नश्चा—' 123 ), परसवर्ण ( 'अनुस्वारस्य—' 124). Similarly भङ्क्ता, भङ्क्ष्यति etc. भुज to protect and to eat (अभ्यवहार) भुनक्ति etc. in the sense of protection, but in the sense of eating the forms will be भुङ्क्ते ( आत्मनेपद by—'भुजोऽनवने' ) etc. In भुनक्ति,

etc. the rule 'श्नान्न—' does not apply for the root has no नकार। अभुनक् by 'वाऽवसाने' ( 206 ) हृह् and हिन्स् to molest or injure!

भित—। श्नादिति। श्नात्+नलोप इतिच्छेदः। श्नादिति श्नम एकदेशस्य पञ्चम्यन्तम्। तदाह—श्नमः परस्येत्यादि। नलोप इत्येकं पदम्। तदाह—नस्य लोप इति। श्नसोरल्लोप इति। इन्ध् ते इति स्थिते श्नमि=इ श्नम् न्ध् ते इति जाते 'श्नान्न—' इति धातुनकारलोपे इ न०ध् ते इति सम्पद्यमाने अनेन श्नमः अ-लोपः—इन्धते तप्रत्ययस्यापित्त्वेन ङित्त्वादित्यर्थः। 'झषस्तथोः—' ( 2280 ) इति तस्य धः इन् ध् धे इति। पूर्व्वधस्य 'झलां जश्—' ( 52 ) इति जश्त्वेन दः। ततो रूपम्। अनुस्वारपरसवर्णाभ्यां विशेषाधानाभावेन तौ नोपन्यस्तौ। * ननु तप्रत्ययस्य ङित्त्वात् 'अनिदिताम्—' (४१५) इत्येव धातुनकारलोपे सिद्धे 'श्नान्नलोप' इत्येतत्स्वोपन्यासोऽत्र परास्त इति चेत्? न। भनक्ति भनक्ति इनधै इत्यादौ उपरिष्टाद् वक्ष्यत्वेन इहैवोपन्यस्तमिति विभाव्यम्। इनधै इति लोडुत्तमैकवचने रूपम्। इ नन् ध् ऐ ( आट् इट्=आ ए=ऐ आटश्चेति वृद्धिः) इति स्थिते अनेन धातुनकारलोपे इन ध् ऐ इति जाते श्नसोरिति अनिदितामिति च ( ४१५ ) न प्राप्नोति आडुत्तमस्येति पित्त्वेन ङित्त्वाभावात्। अतोऽल्लोपाभावेन इनधै इति। ऐन्ध—(लङ्त) —ऐन्धाः (लङ् थास्)—उभयत्रैव झषस्तथोरिति धः। आडजादीनामित्याट्। 'आटश्चेति वृद्धिः। श्नादिति नलोपः। 'संयोगान्तस्य लोपः' ( ५४ ) इति द्वितीयधकारस्य लोपः।

अथ परस्मैपदिन इति। शिंष्ट इति। तसो ङित्त्वात् श्नमो नस्य श्नसोरित्यल्लोपोत्तरं नश्चापदान्तस्येत्यनुस्वारः। वर्गीयवर्णपरत्वाभावान्न परसवर्णः। ष्टुना ष्टुरिति तस्य ष्टुत्वम्। शिशेषिथ इति। अजन्तत्वाभावादकारवत्त्वाभावाच्च क्रादिनियमान्नित्यमिट्। शेक्ष्यति इति। लघूपधगुणः। 'षढोः कः—' ( २९५ ) इति कत्वम्।

---

* तत्त्वबोधिन्यां तु 'इन्धे। इन्तसे' इत्यत्र 'श्नमो नकारस्यानुस्वार-परसवर्णौ; अनिदितामिति नलोपस्तु न भवति। अल्लोपस्य असिद्धवदत्राभादित्यसिद्धत्वात् स्थानिवत्त्वाद् 'युक्तमिति।

इण्कोरिति षत्वम्। ढ्धिरिति। शिनष् हि इति स्थिते हुझल्भ्यो हेर्धिरिति शिनष् धि इति जाते सेर्ह्यपिच्चेति स्थानिवद्भावेन हेरपित्त्वेन ङित्त्वात् 'श्नसोरल्लोपः' इति शिन्ष् धि इति स्थिते अनन्तरकर्तव्यमाह—जश्त्वम्। ष्टुत्वमिति। वस्तुतस्त्वत्र ष्टुत्वस्यैव प्रागुपन्यासो युक्तः। अन्यथा 'झलां जश्—' ( ८।४।५३ ) इति जश्त्वस्यासिद्धत्वेन ष्टुना ष्टु ( ८।१:४१ ) रिति ष्टुत्वस्याप्रवृत्तेः। अतएव नागेशः—'अत्र प्रक्रियादर्शनमात्रे तात्पर्यं न तु क्रमे' इत्याचचक्षे। एवञ्च ष्टुत्वेन धस्य ढत्वे शिनष् ढि इति स्थिते जश्त्वेन—शिनड् ढि इति ततो 'झरो झरि सवर्णे' ( ७१—८।४।६५ ) इति डलोपविकल्पः अनुस्वारपरसवर्णौ इति। नश्चेत्यनुस्वारः। अनुस्वारस्य ययीति परसवर्णो मूर्द्धन्यनकारः। एवं डलोपपक्षे शिण्ढि इति। डलोपाभावे तु शिण्ड्ढि इति। अत्र सानुस्वार एव पाठो युक्तः। 'झलां जश् झशि' (८।४।५३) इत्यस्य 'झरो झरि सवर्णे' ( ८।४।६५ ) इत्यस्य च 'अनुस्वारस्य ययि परसवर्णः' ( ८।४।५८ ) इत्यत्र भाष्य-संमतसूत्रपाठमाश्रित्य असिद्धत्वात्। तथाच नागेशः—'शिंड्ढि इति। सानुस्वार एव पाठः। अनुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रसक्तावपि 'दीर्घादाचार्याणाम्' (८।४।५२ ) इत्युत्तरम्, 'अनुस्वारस्य ययि—' ( ८।४।५६—भाष्यक्रमः—), 'वा पदान्तस्य' ( ८।४।५४—भा क ) 'तोर्लि' ( ८।४।५७—भा क ) 'उदः स्थास्तम्भोः—' :( ८।४।५६—भा क ), 'झयो हो—' (८।४।५७—भा क ), 'शश्छोऽटि' (८।४।५८—भा क ) इति षट्सूत्री पाठोत्तरं 'झलां जश् झशि' (८।४।५९ भा, क), 'अभ्यासे चर्च' ( ८।४।६०—भा क ) 'खरि च' (८।४।६१—भा क), 'वाऽवसाने' ( ८।४।६२—भा क ), 'अणोऽप्रगृह्यस्य—' ( ८।४।६३—भा, क ) इति * पञ्चसूत्रीपाठ इति भाष्यसंमताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या झरो झरीत्यस्य झलां जशित्यस्य चासिद्धत्वेन स्वयः परत्वाभावात् परसवर्णाप्राप्तेरित्यन्यत्र विस्तर' इति। शिनष्षि इति। श्नमो ङित्त्वान्न लघूपध-

---

* तत्त्वबोधिनीस्थाथा अष्टाध्यायीसूत्रपाठमुद्रा अधस्तात् क्रमानुसारी भाष्यानुसारी च पाठक्रमो दर्शित इत्यनुसन्धेयम्।

गुणः । आटः पित्वात् श्नसोरित्यस्याप्राप्तेरल्लोपाभावश्च । अशिनट् इति । लङि रूपम् । अशि नष् त् इति स्थिते हल्ङ्याब्भ्य इत्यपृक्तलोपः । अस्य 'वाऽवसाने' इति चर्त्वविकल्पः । अशिषदिति अङि ङित्वान्न गुणः । भञ्जो आमर्दने इति । ओदित्करणं निष्ठानत्वार्थम् भग्नः । भनक्ति इति । एतदाद्यर्थं 'श्नान्नलोपः' (२७४४) इत्यावश्यकमित्युक्तम् । अत्र तिपः पित्त्वेन ङित्त्वाभावात् 'अनिदिताम्—' (४१५) इत्यस्याप्रवृत्तेः । तदेवं भ श्नम् न्ज् ति इति स्थिते धातुनकारलोपे भन०ज् ति इति जाते खरि चेति भन च् ति इति । ततः 'चोः कुः' (३७८) इति कुत्वम् भनक् ति इति । बभञ्जिथ बभङ्क्थ इति भारद्वाजनियमादिड्विकल्पः । उत्तरत्र कुत्वे कृतेऽनुस्वारपरसवर्णौ । भुज पालना—भ्यवहारयोरिति । अभ्यवहारो भोजनम् । अत्रार्थेऽयमात्मनेपदी । 'भुजोऽनवने' इति वक्ष्यमाणसूत्रात् । भोक्ष्यति इति । लघूपधगुणः । पूर्ववत् कुत्वम् । इण्कोरिति षत्वम् । अभुनक् इति । हल्ङ्याब्भ्य इत्यपृक्तलोपः । वाऽवसाने इति चर्त्वविकल्पः । चोः कुरिति कुत्वम् । तृह हिंसायामिति—

२५४५ । तृणह इम् ॥७।३।९२॥

टी—। तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । उन्दी १४५८ क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दांचकार । औनत् । औन्ताम् । औन्दन् । औनः—औनत् । औनदम् । अञ्जू १४५९ व्यक्ति * मर्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्जिथ—आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् ।

After the operation of श्नम् has been effected on तृह्, the

---

* म्रक्षण इत्यपि पाठः । म्रक्षणं स्निग्धतेति तत्त्वबोधिनी ।

aug. इम् ( इ ) is attached to the same तृह् ( or rather तृणह् along with श्नम् ), when any हलादि पित् affix follows. Thus तृह् + तिप् = तृ श्नम् ह् ति = तृणह् ति = तृण इ ( म् ) ह् ति = तृणेह् ति by 'आद्गुणः' ( 69 ) = तृणेढ् धि by 'होढः' ( 324 ) and 'झषस्तथोः—' ( 2280 ) = तृणेढ् ढि by 'ष्टुना—' ( 113 ) = तृणे ० ढि by 'ढो ढे लोपः' (2335). तृण्ढः—तस् is not पित् hence no इम्। ततर्ह—लिट्—लघूपधगुणः। अतृणेट्—लङ्—तिप् इम्, elision of त्, then ढत्व and चर्त्वविकल्प by 'वाऽवसाने'। हिनस्ति etc.—easy. See मित। श्रीनत्ति—the न of the root elides by 'श्नान्न—' (2544). द becomes त् by 'खरि—' (121). उन्दाञ्चकार—by 'इजादेश्च—(2237 ). औनत्—वृद्धि by 'आटश्च' ( 269). अपृक्तलोप etc. as in other cases. औनः—औनत् by 'दश्च' (2468). अञ्जू ( अञ्ज् ) to make clear etc. अनक्ति—the elision of न by 'श्नान्न—' (2544 ). आनञ्ज by 'अत आदेः' (2248) and 'तस्मान्नुड् द्विहलः' (2288 ). आनञ्जिथ—आनङ्क्थ by इड्विकल्प due to the elision of ऊ ( अञ्जू ). In the latter case अनुस्वार and परसवर्ण etc. as before. अङ्ग्धि—अ श्नम् न्ज् हि—अन ० ज् धि by 'श्नान्न—' and 'हुझल्भ्यो हेर्धिः ( 2425 ) = अ न् ग् धि by 'श्नसोः—' (2169 ) due to ङित्त्व of हि = अन्ग् धि—अंग्धि—अङ्ग्धि by 'चोः कुः', 'नश्चापदान्तस्य—' (123 ) and 'अनुस्वारस्य ययि—' ( 124 ) respectively. अनजानि—by 'श्नान्न—' here 'श्नसोः—' does not apply for आट् is पित्। आनक्—लङ् तिप् by 'हल्ङ्याब्भ्यः' —(252), 'वाऽवसाने' and 'चोः कुः' (378).

मित—। तृणह इति। तृह इम् इति वक्तव्ये 'तृणह' इति श्नमा निर्देशो विशेषविहितेन इमा श्नमो बाधो मा भूदित्येतदर्थम्। येन नाप्राप्ति—न्यायात्। न च तौदादिकस्य 'तृह' इत्यस्य पृथक्करणार्थम् एवं कृतमिति वाच्यम्।

तत्र हलादेः पितः सार्वधातुकस्य श्न-विकरणेन व्यवधानात्। अतो व्याचष्टे—तृहः श्नमि कृते इति। हलादौ पितीति 'नाभ्यस्तस्याचि पिति—' इत्यतः पितीति, 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीति चानुवर्तते इति भावः। तृणेढीति। श्नमि कृते, अल्लोपे तृणह् ति इति स्थिते इम्, आद्गुणः—तृणेह् ति। ततो 'हो ढः' (३२४) इति हस्य ढः। 'झषः—' (२२८०) इति तस्य धः। तस्य ष्टुत्वेन ढः। एवं तृणेढ् ढि इति स्थिते 'ढो ढे लोपः' (२३३५) इति ढलोपः। तसः पित्त्वाभावान्नेम्। अन्यत् प्राग्वत्। ततर्ह इति। लिटि लघूपधगुणः। अतृणेट् इति। लङि। श्नमिमौ। हल्ङ्याब्भ्यो हल्लोपः। ढत्वचर्त्वे। हिनस्ति इति। हिसेरिदित्त्वान्नुम्। तस्य श्नमि कृते 'श्नान्नलोपः' इति लोपे तिपः पित्त्वात् श्नसोरित्यप्राप्तेरल्लोपाभावः। जिहिंस इति। इदित्त्वान्नुम्। न तु श्नम्। लिट आर्धधातुकत्वात्। नश्चेत्यनुस्वारः। जिहिंसतुरित्यादौ तु अनिदितामिति (४१५) नलोपो न भवति हिसेरिदित्त्वात्। उनत्ति इति—श्नान्नलोप इति धातुनकार लोपः। उन्दाञ्चकार इति—इजादेश्चेत्याम्। औनदिति—श्नमि कृते धातु—नकारलोपः। अजादित्वादाट्। आटश्चेति वृद्धिः। प्राग्वदपृक्तलोपः। औनः—औनदिति। दश्चेति (२४६८) रुत्वविकल्पः। अनक्ति इति। श्नान्नलोपः। अन्यत् प्राग्वत्। अङ्क्त इति। नलोपः। श्नसोरित्यल्लोपः। अनुस्वारपरसवर्णौ। चर्त्वं कुत्वे। आनञ्जेति। अत आदेरित्यभ्यासदीर्घः। तस्मादिति (२२८८) नुट्। आनञ्जिथ—आनङ्क्थ इति। धातोरूदित्वात् 'स्वरति—' (२२७९) इति इड्विकल्पः। एवम् अङ्क्ता—अञ्जिता इति। अङ्ग्धि इति। श्नान्नलोपः। हेर्धिः। तस्य अपित्वेन ङित्त्वात् श्नसोरित्यल्लोपः। धातुजकारस्य चोः कुरिति कुत्वेन गः। नस्यानुस्वारपरसवर्णौ। अनजानि—आटः पित्त्वात् श्नसोरित्यल्लोपो न। अन्यत् प्राग्वत्। आनगिति। श्नम्। नलोपः। अपृक्तलोपः। पित्त्वादल्लोपविरहः। चोरिति कुत्वम्। तस्य 'वाऽवसाने' इति चर्त्वविकल्पः। धातोरूदित्वात् सिच्यपि इड्विकल्पं प्राप्ते नित्यविधिमाह—

२५४६ । अञ्जेः सिचि ॥७।२।७१॥

दी—। अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्। तञ्चू १४६० सङ्कोचने। तङ्क्ता—तञ्चिता। ओविजी १४६१ भयचलनयोः। विनक्ति। विङ्क्तः। 'विज इट्' (२५३६) इति ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत्। वृजी १४६२ वर्जने। वृणक्ति। वर्जिता। पृची १४६३ सम्पर्के। पृणक्ति। पपर्च।

इति तिङन्तरुधादिप्रकरणम्।

इट् is compulsory before सिच् coming after अञ्ज—आञ्जीत्—अनुस्वार etc. as before. विविजिथ—no guna due to ङित्त्व। The rest is easy.

Here ends the रुधादि class.

मित—। अञ्जेरिति। इकार्यर्णिव्यथतीनामित्यत इडित्यनुवर्तते। 'विभाषा गमहन—' इत्यस्माद् विभाषेति तु नानुवर्तते। तदाह—नित्यमिडिति। आञ्जीदिति इट ईटीति सिज्लोपः। आडनुस्वारपरसवर्णाः। सिचि किम्—अङ्क्ता—अञ्जिता। विनक्ति इत्यादि प्राग्वत्। विविजिथेति। विज इडिति ङित्त्वात् न गुणः। अन्यत् स्वयं साधनीयम्।

॥ इति मितभाषिण्यां तिङन्तरुधादिप्रकरणम् ॥

अथ

# तिङन्ततनादिप्रकरणम्

टी—। अथ सप्त स्वरितेतः। तनु १४६४ विस्तारे। 'तनादिकृञ्भ्य उः' (२४६६)। तनोति। तन्वः—तनुवः। तनुते। ततान। तेने। तनु। अतनोत्—अतानोत्।

Now we conjugate the seven स्वरितेत् or उभयपदी roots. तनु (तन्) to spread. The affix or विकरण उ comes in by the rule 'तनादिकृञ्भ्य उः' (२४६६)। Thus तनोति—गुण of उ due to पित्त्व of तिप् by the saying 'उप्रत्ययस्य पित्सु गुणः'—Bhattoji under 'धिन्विकृण्व्योर च' (२३३२)। तन्वः—तनुवः by 'लोपश्चास्यान्यतरस्याम्—' (२३३३)। तनुते—ते or ति is ङिद्वत् hence no guna. ततान—लिट् णल् वृद्धि by 'अत उपधायाः' (२२८२)—पितुर्मुदं तेन ततान सोऽर्भकः' (रघु)। तेने—लिट् एश् in place of त by 'तञ्झयोरेशिरेच्'। No guna due to किस्त्व by 'असंयोगात् —' (२२४२)। एत्व and अभ्यासलोप by 'अत एकहल्—' (२२६०)—'तेने ब्रह्म हृदा य आदिकवये' (भागवत)। तनु—लोट् हि—हि is अपित् hence no guna. हि elides by 'उतश्च प्रत्ययादसंयोगपूर्वात्' (२३३४)। अतनोत्—अतानोत् option of वृद्धि by 'अतो हलादेर्लघोः' (२२८४)।

मित—। अथ उविकरणान् तनादिधातून् निरूपयिष्यन्नाह—अथ सप्तेति। तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु एते सप्त उदित उभयपदिन इत्यर्थः। उदित्करणात् 'उदितो वा' (३३२८) इति क्त्वाप्रत्यये इड्विकल्पेन—तनित्वा—तत्वा

इत्यादि सिध्यति । तनादिगुणमुपन्यस्यति—तनादिभ्यश्च इति । तनोतीति—'उप्रत्ययस्य पित्सु गुणः' इत्युक्तत्वात् ( सिज्विकरणयोरेव—२२२२ इत्यत्र द्रष्टव्यम्) गुणः । तन्वः—तनुव इति । 'लोपश्चास्यान्यतरस्यां म्वोः' ( २२२१ ) इत्युकारलोपविकल्पः । तनुते इति—क्ङित्त्वान्न गुणः । ततानेति—'अत उपधायाः' ( २२८२ ) इति वृद्धिः । तेने इति । 'अत एकहल्मध्ये—' ( २२६० ) इत्येत्वाभ्यासलोपौ । तनु—उतश्च प्रत्ययादिति ( २३२४ ) हेर्लोपः । अतनीत्—अतानीदिति । अतो हलादेरिति ( २२८४ ) वृद्धिविकल्पः सिचि ।

२५४७ । तनादिभ्यस्तथासोः ॥२।४।७९॥

दो— । तनादेः सिचो वा लुक् स्यात्तथासोः । थासा साहचर्य्यादेकवचनतशब्दो गृह्यते । तेनेह न । यूयमतनिष्ट— । 'अनुदात्तोपदेश—' ( २४२८ ) इत्यनुनासिकलोपः । तङि । अतत—अतनिष्ट । अतथाः—अतनिष्ठाः । षणु १४६५ दाने । सनोति । सनुते 'ये विभाषा' ( २३१८ ) । सायात्—सन्यात् । 'जनसन—' ( २५०४ ) इत्यात्त्वम् । असात असनिष्ट । असाथाः—असनिष्ठाः । क्षणु १४६६ हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्त—' ( २२९९ ) इति न वृद्धिः । अक्षणीत् । अक्षत—अक्षणिष्ट । अक्षथाः—अक्षणिष्ठाः । क्षिणु १४६७ च । उप्रत्ययनिमित्तो लघूपधगुणः । 'संज्ञापूर्व्वको विधिरनित्यः' (परि—९४)इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति—क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित—अक्षेणिष्ट । ऋणु १४६८ गतौ । ऋणोति—अर्णोति । अर्णुतः । अर्णुवन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् ।

आर्त्त—आर्णिष्ट। आर्थाः—आर्णिष्ठाः। तृणु १४६९ अदने। तृणोति—तर्णोति। तृणुते—तर्णुते। घृणु १४७० दीप्तौ। जघर्ण। जघ्रुणे।

अथ द्वावनुदात्तेतौ। वनु १४७१ याचने। वनुते। ववने। चान्द्रमते परस्मैपदी। वनोति। ववान। मनु १४७२ अवबोधने। मनुते। मेने। डुकृञ् २४७३ करणे। करोति। 'अत उत् सार्व्वधातुके' (२४६७) कुरुतः। यण्, 'न भकुर्छुराम्' (१६२८) इति न दीर्घः। कुर्व्वन्ति।

सिच् coming after तनादि roots elides optionally, when त and थास् follow. Due to its connection with थास्, by त we mean the singular word or affix त (of त आताम्, झ) and not the substitute त of the plural affix थ (in सिप्, थस्, थ—परस्मैपदी)। Hence here there is no elision of सिच् when त, the substitute of थ follows, Thus यूयम् etc—'you spread.' Here the इड्विकल्प is by the rule 'स्तौ ह्वलादेः—'(२२८४).The word 'यूयम्' has been used to differentiate अतनिष्ट (second per. pl. परस्मै.) from अतनिष्ट (Third per. sing. आत्मने)। थ of परस्मै. is replaced by त by the rule 'तस्थस्थमिपां तांतंताम:'। अतत—by सिच्लोप and अनुनासिकलोप। अतनिष्ट—optional form. It is with सिच् and here अनुनासिक or न does not elide for in this case त is not झलादि कित् due to the precedence of इट्।Hence 'अनुदात्तोपदेश—' (२४२८) does not apply here. अतथाः—अतनिष्ठाः—by सिज्लोप and अनुनासिकलोप in one case and by सिच्, इट् and ष्टुत्व in the other. Similarly असात—असनिष्ट and असाथाः—असनिष्ठाः

etc. चिणु च i.e. the root चिण् also is used in the sense of हिंसा। The short penultimate 'इ' of चिण् will be gunnated due to the affix उ ( following ) and thus the forms will be चेणोति etc. But Attreya and others hold that there will be no guna (due to the following of उ ) by the परिभाषा—'संज्ञापूर्वक—etc—'An injunction laid down with a संज्ञा-word or technical term (within) is not compulsory.' Here the word गुण is a संज्ञावचन by 'अदेङ् गुणः' (1.1.2). Hence the परिभाषा applies and consequently there is no guna and thus the alt. form is चिणोति। Others, however, vote for गुण and the forms, therefore, are चेणोति चिणोति etc.

[ Nagesha says that as the above परिभाषा is not found in the भाष्य so it is wise to conjugate as चेणोति etc. and चिणोति etc. are to be taken as the conjugations of 'चि—हिंसायाम्' read in स्वादि ]. ऋणोति—अर्णोति the latter is by लघूपधगुण. अर्णुतः—गुण of the root due to the affix उ which however is not gunnated due to ङित्त्व of तस् following. अर्णुवन्ति—by उवङ् —'अचि श्नु—' ( 272 ). आनर्ण—लिट् by 'अत आदेः' ( 2248 ) and 'तस्मान्नुड् द्विहलः' (2288 ). आनृणे—no guna due to कित्त्व by 'असंयोगात्—' (2242). अर्णोत्—लुङ् आट् elision of सिच् by 'इट ईटि' (2266 ). आर्णे—आर्णिष्ट due to optional elision of सिच् ( 2547 ) and the elision of अनुनासिक by 'अनुदात्तोपदेश—' (2428) in the former case. तृणु etc. easy.

अथ द्वौ etc. i.e. वनु and मनु—which with the former seven constitute the तनादि roots ( nine only ). मनु to think or understand cp 'वहु मनुते ननु ते तनुसङ्गतपवनचलितमपि रेणुम्' (जयदेव).

मेने—by (2260). डुकृञ् करणे—This root is stated apart from तनादि group to indicate the existence of the परि—'गणकार्य्यमनित्यम्' डु for 'ड्वितः क्त्रिः'—'कृत्रिमम्'. करोति—गुण of कृ by 'सार्व्वधातुकार्द्धधातुकयोः' due to the affix उ। which is सार्व्वधातुक though not पित् (2168). Next रपरत्व by 'उरण्—' (70). उ itself is gunnated due to तिप्. कुरुतः—कर् is here changed into कुर् by 'अत उत्—' (2467). तस् is ङित् hence no guna of उ. कुर्वन्ति—कृ+उ+अन्ति=कर् उ अन्ति=कुर् उ अन्ति by 'अत उत्—' above कुरुअन्ति कुर्व् अन्ति—यण् by 'हुश्नुवोः—' (2387) =कुर्व्वन्ति no दीर्घ by 'उपधायां च' (2265) due to the fact of its being barred by the rule 'न भकुर्छुराम्' (1629).

मित—। तनादिभ्य इति। 'गातिस्थाघुपाभूभ्यः सिचः—' इत्यतः सिच इति, 'विभाषा घ्राधेट्—' इत्यतो विभाषेति, 'ण्यक्षत्रियार्ष—' इत्यतो लुगिति चानुवर्त्तते। तदाह—सिचो वा लुक् स्यादिति। तथासोरिति द्वन्द्वात्—सप्तमीद्विवचनम्। एकवचन—तशब्दे थासि च परत इत्यर्थः। 'तस्-थस्थमिपां तां-तं-तामः' इत्यत्र विहितस्य आदेशस्य—तशब्दस्य न ग्रहणम्। किन्तु तङ् प्रत्ययस्य एकवचनस्यैव थास् प्रत्ययो समभिव्याहारादित्याह—थासा साहचर्य्यादिति। अतएवोदाहरति—यूयमतनिष्ट इति। मध्यमबहुवचनप्रतिपत्त्यर्थम् यूयमित्यस्य उपादानम्। प्रकृतोदाहरणे—अतत—अतनिष्ट इत्यादौ सिज्लोपपक्षे—इडभावेन तप्रत्ययस्य झलादि ङित्त्वात् अनुनासिकस्य नकारस्य—लोपविधायकं सूत्रमुपन्यस्यति—अनुदात्तोपदेश इति। एवम् अतथाः—अतनिष्ठाः इति। इण्कोरादेशप्रत्यययोरिति षत्वात् ष्टुनेति ष्टुत्वम्। एवमन्यत्र असात—असनिष्ट, असाथाः—असनिष्ठाः इत्यादावपि यथायथं प्रक्रिया बोध्या। क्षिणु इति। अयमपि हिंसार्थक इत्यर्थः। ननु उप्रत्ययस्य अपित्त्वेऽपि ङित्त्वाभावात् सार्व्वधातुकत्वाच्च क्षिणोतिर्लघूपधगुणः स्यादित्यत आह—उप्रत्ययनिमित्त इति। तेन क्षेणोतीत्यादिरूपम्। ननु 'गुणशब्दः' संज्ञावचनम्। अदेङ् गुण इति सूत्रात्। तेन गुणशब्दसुर्थ्यो ये

विधय आरब्धास्ते अनित्या एव। तथा च परिभाषा 'संज्ञापूर्वको विधिरनित्य' इति। न चेयं निर्मूलेति वाच्यम्। तथा च 'ओरोदिति' सूत्रयितव्ये यद् 'ओर्गुणः' (८४—६।४।१४६) इति पाणिनिना सूत्रितं तेनैतज्ज्ञाप्यते यदस्यास्तत् मूलमिति। एतच्च 'ओर्गुण' इति सूत्रे दीक्षितकृतौ स्पष्टम्। किञ्चास्या अनित्यत्वादेव 'स्वायम्भुव' इत्यादि सिद्धम् इति चेत्? न। भाष्ये एतस्याः परिभाषायाः क्वाप्यनुल्लेखात्। स्वायम्भुवमित्यादि तु असाध्वेवेति 'ओर्गुण' इत्यत्र शब्देन्दुशेखरे प्रतिपादित-मित्यलम्। 'धिणोति' इत्यादि तु सौवादिकस्य धिधातोरिति द्रष्टव्यमित्याहुः। ननु तर्हि 'धिणोति' इत्यादावत्र कथमिति चेत्। कैयटहरदत्ताद्यनुरोधेनेति विभाव्यम्। एवं कृणोति—कर्णोति इत्यादावपि मतान्तरमाश्रित्योक्तम्। ऋणो-तीत्यादौ उप्रत्ययनिमि' 'सार्वधातु—' (२१६८) इति इगन्ताङ्गस्य गुणः। पश्चात् तिपमाश्रित्य—उप्रत्ययस्यापीति भावः। ऋणुत इति। तसः ङित्त्वादुप्रत्ययस्य गुणाभावः। ऋण्वन्ति—'अचिश्नु—(२७२) इत्युवङ्। आनर्ण—लिट् णल्। पुगन्तेति लघूपधगुणः। अत आदेरिति दीर्घः। तस्मान्नुड्द्विहल इति नुट्। आनृणे—कित्त्वाद् गुणाभावः। आर्णीत्—लुङ्। आट्। वृद्धिः। इट ईटीति सिज्-लोपः। आर्त—आर्णिष्ट इति। तङ्पक्षे प्रकृतसूत्रेण पूर्ववत् सिज्लोपः। 'अनु-दात्तोपदेश—' (२४२८) इत्यनुनासिकलोपश्च। उभयत्र सिजिटौ। एवमार्थाः—आर्णिष्ठा इत्यत्र। अन्यत् स्पष्टम्।

अथ द्वाविति। वनुमनू इत्यर्थः। मन्वन्तास्तनोत्यादय इति ज्ञेयम्। तनादि—पाठादेव कृञ्ग्रहणे सिद्धे 'तनादिकृञ्भ्य उ'रित्यत्र कृञ्ग्रहणम् गणकार्यस्य अनित्यत्वे लिङ्गम्। अतएव 'न विश्वसेदविश्वस्ते' इत्यादि सिद्धमित्याहुः। डुकृञ् करणे इति। ञित्करणमुभयपदित्वार्थम्। ड्वित्करणं क्त्रिप्रत्ययार्थम्। 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्'—कृत्रिमम्। करोतीति। कृ+उ+तिप् इति स्थिते उप्रत्ययनिमित्तं धातोः 'सार्व—' (२१६८) इति गुणः। 'उरण् रपरः' (७०) इति रपरत्वम्। एवं करु तिप् इति स्थिते तिपमाश्रित्य उप्रत्ययस्यापि गुण इति। कुरुत इति। कृ+उ+तस् इति स्थिते पूर्वदर्शितप्रकारेण करु तस् इति जाते 'अत उत्—'

( २२६७ ) इयि वकारादकारस्य उत्त्वम्। उदिति तपरकरणात् तस्य न पुनर्गुणः। एवं कुरु तस् इति सम्पद्यमाने तसो ङित्त्वेन गुणाभावे कुरुतः इति। कुर्व्वन्ति इति। कुरु अन्ति इति स्थिते 'अचि श्नु' इत्युवङि प्राप्ते आह—यणिति। 'इणश्नुवोः—' ( ३८७ ) इत्यनेनेति भावः। किञ्च कुर्वः इत्यत्र 'उपधायां चे'ति (२२९५) दीर्घे प्राप्ते आह—'न भकुर्छुरामि'ति ( १६२९ )। यद्यपि—' 'कुर्' इत्येव कश्चिद् धातुस्तुदादौ पठितस्तथापि कुरित्यनेन करोतेरेव ग्रहणं व्याख्यानादिति ध्येयम्। 'लोपश्चास्यान्यतरस्याम्' (२२३३) इति वस्मसोरुकारलोपविकल्पे प्राप्ते आह—

## २५४८। नित्यं करोतेः ॥६।४।१०८॥

**टी—। करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमयोः परयोः। कुर्वः। कुर्मः। चकर्थ। चकृव। कर्त्ता। करिष्यति।**

The affix उ following the root कृ is ever dropped when the affixes वस् and मस् follow. Thus कुर्वः and कुर्मः no दीर्घ by 'न भकुर्छुराम्' ( 1629 ). चकर्थ—in थल् want of इट् by क्रादिनियम ('कृसृभृ—' 2293) and also भारद्वाजनियम ('ऋतो—' 2296). Apply the rules 'उरत्' ( 2244), 'उरण्—' (70) 'ओः कृ (2245) etc. चकृव—by क्रादिनियम no guna due to कित्त्व।

मित—। नित्यमिति। 'उतश्च प्रत्ययात्—' ( ६।४।१०६ ) इत्यश्चाद् विभक्तिविपरिणामेन उप्रत्ययस्येति लभ्यते। तदाह—प्रत्ययोकारस्येति। 'लोपश्चास्यान्यतरस्यां म्वोः' ( ६।४।१०७ ) इत्यतो लोप इति म्वोरिति चानुवर्त्तते। तदाह—नित्यं लोप इत्यादि। कुर्व इति। न भकुर्छुरामिति दीर्घाभावः। चकर्थ—इति। क्रादिनियमाद् भारद्वाजनियमाच्च थल इडभावः। चकृव इति। क्रादिनियमादिडभावः। कित्वादगुणत्वम् 'उरत्' (२२४४ ), 'उरण्—' (७०) इत्यादीनि प्रयोज्यानि।

२५४६। ये च ॥६।४।१०९॥

टी—। कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्य्यात्। आशिषि क्रियात्। कृषीष्ट। 'तनादिभ्यः=' (२५४७) इति लुकोऽभावे 'ह्रस्वादङ्गात्' (२३६९) इति सिचो लोपः। अकृत। अकृथाः।

( The affix ) उ after कृञ् elides when any affix beginning with a य follows. Thus कुर्य्यात्. क्रियात्—by 'रिङ् शयक्लिङ्क्षु' ( 2357 ). कृषीष्ट—No guna due to कित् of लिङ् by 'उश्च' (2368). अकार्षीत्—by 'सिचि वृद्धिः—' ( 2297) etc. When सिच् does not elide by 'तनादिभ्यः—' ( 2547 )' then by 'ह्रस्वादङ्गात्' ( 2369 ) we have अकृत and अकृथाः ( due to want of गुण of कृ by 'उश्च'—2368 ). And when सिच् elides by 'तनादिभ्यः—' then also we have अकृत and अकृथाः ( due to want of गुण by 'न लुमताङ्गस्य'—263 ).

मित—। ये चेति। नित्यं करोतेरित्यतः करोतेरिति, 'लोपश्चास्यान्य—' इत्यतो लोप इति चानुवर्त्तते। ये इत्यनेन च आर्धिसप्रत्ययो विशेष्यते। तेन तदादिविधिः—विशेषणत्वात्। अत आह—कृञ उलोपः स्यादित्यादि। कुर्य्यादिति प्राग्वत्। क्रियादिति—'रिङ् शयक्लिङ्क्षु' (२३७०) इति रिङि रूपम्। कृषीष्ट इति—उश्चेति (२३६८) कित्त्वाद् गुणाभावः। अकार्षीदिति —सिचि वृद्धिरित्यादिना। 'तनादिभ्यस्तथासोः (२५४७) इति सिचो लुकि अलुकि च रूपं तुल्यमित्याह—तनादिभ्य इति। ननु ह्रस्वादङ्गादिति यदा सिज्लोपो विधीयते तदा प्रत्ययलक्षणेन धातोर्गुणः स्यादिति चेत्। न। उश्चेति (२३६८) सिचः कित्त्वादिति विभावनीयम्। लुकपक्षे तु न लुमतेति निषेधः।

२५५०। संपरिभ्यां करोतौ भूषणे ॥६।१।१३७॥

२५५१। समवाये च ॥६।१।१३८॥

टी—। सम्परिपूर्व्वस्य करोतेः सुट् स्याद् भूषणे सङ्घाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। संपूर्व्वस्य क्वचिदभूषणेऽपि सुट्। 'संस्कृतं भक्षाः' (१३१७) इति ज्ञापकात्। 'परिनिविभ्यः—' (२२७५) इति षः। परिष्करोति। 'सिवादीनां वा—' (२३५८)। पर्य्यष्कार्षीत्—पर्य्यस्कार्षीत्।

(Both the rules taken together mean that) the augment सुट् is prefixed to कृ preceded by सम् and परि in the sense of embellishment (भूषण) and assemblage (सङ्घात). Thus संस्करोति etc. easy. The word संस्कृत made use of by Panini in the rule 'संस्कृतं भक्षाः' (1217) indicates that सुट् under some occasion, comes before कृ even in the sense other than embelishment. N. B.—The rest is clear in the text.

मित—। सम्परिभ्यामिति समवाये चेति। करोताविति षष्ठ्यर्थे सप्तमी। सम्परिभ्यामित्यस्य विशेषणं तदाह—सम्परिपूर्व्वस्येत्यादि। स्पष्टम्। सङ्घातः सङ्घीभवनमेकत्रीभवनमित्यर्थः। अन्यत् स्पष्टं मूले।

२५५२। उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च ॥६।१।१३९॥

टी—। उपात् कृञः सुट् स्यादेष्वर्थेषु। चात् प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्यस्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या।

अलङ्कृतेत्यर्थः। उपस्कृताः ब्राह्मणाः। समुदिता इत्यर्थः। एधो दकस्योपस्कुरुते ; गुणाधानं करोतीत्यर्थः। उपस्कृतं भुङ्क्ते ; विकृतमित्यर्थः। उपस्कृतं ब्रूते। वाक्याध्याहारेण ब्रूते इत्यर्थः।

The root कृ, coming after उप, takes सुट् in these senses viz—प्रतियत्न, वैकृत and वाक्याध्याहार। From the particle च (in the rule) it (कृ) takes सुट् also in the senses said before i. e. in the senses of embelishment and assemblage. प्रतियत्न means to better, improve or purify. Thus एधो दकस्य etc—The fuel is bettering or improving the condition of the water (दकस्य). वैकृत is formed by स्वार्थे अण् after विकृत meaning विकार—bad condition or putrition etc. Thus उपस्कृतं भुङ्क्ते—'eats a food which is badly off.' वाक्याध्याहार—means to fill up the intended place or part left out. Thus—उपस्कृतं ब्रूते—speaks with a sentence filling up the intention (of the speaker). उपस्कृता कन्या and उपस्कृता ब्राह्मणाः serve as examples in the sense of भूषण and समवाय।

मित—। उपादिति। 'सुट् कात्पूर्व्व' इत्यतः सुडित्यनुवर्त्तते। सूत्रस्थचकारार्थमाह—चात् प्रागुक्तयोरिति। भूषणसमवाययोरित्यर्थः। अतएवोदाहरति उपस्कृता कन्येति उपस्कृता ब्राह्मणा इति च। अन्यत्सुगमम्।

२५५३। सुट् कात् पूर्व्वः ॥६।१।३५॥

दी—। 'अडभ्यासव्यवायेऽपी'त्युक्तम्। सञ्चस्कार। 'कात्पूर्व्व' इत्यादि भाष्ये प्रत्याख्यातम्। तथा हि 'पूर्व्वं धातुरुपसर्गेण' युज्यते। अन्तरङ्गत्वात्। सुट् ततो द्वित्वम्।

एवं च 'ऋतश्च संयोगादेर्गुणः' (२३७८)—सञ्चस्करतुः । 'कस्ट–श्रु—' (२२८३) इति सूत्रे 'अतो भारद्वाजस्य' (२२८६) इति सूत्रे च 'कृञोऽसुट इति वक्तव्यम्' (वार्त्तिक)। तेन ससुट्कात् परस्येट् सञ्चस्करिथ। सञ्चस्करिव। 'गुणोऽर्त्ति—' (२३८०) इति सूत्रे 'नित्य' छन्दसि' (३५८७) इति सूत्रात् 'नित्यम्' इत्यनुवर्त्तते। 'नित्यं यः संयोगादिस्तस्य' इत्यर्थात् सुटि गुणो न। संस्क्रियात्। 'ऋतश्च संयोगादेः' (२५४६) इति लिङ्सिचोर्नेट् 'एकाच उपदेशे—' (२२७६) इति सूत्रात् 'उपदेशे' इत्यनुवर्त्त्य 'उपदेशे यः संयोगादिः' इति व्याख्यानात्। संस्कृषीष्ट। समस्कृत समस्कृषाताम्।

इति तिङन्ततनादिप्रकरम्म्।

N. B.—The rule is defective and to mend this defect Bhattoji adds the Varttika 'अड्भ्यासव्यवायेऽपि' to it. Thus the full import of the rule along with the Varttika is :—

The augment सुट् is prefixed before क, coming after the उपसर्गs (सम् and परि) even when the same (क) is interposed by the augment अट् and the अभ्यास (च)। Thus सञ्चस्कार। [This explanation is offered in honour of the authority of Panini and Ka tyayana. But as the rule contains an exaggeration (कात्-पूर्व) and as the varttika proves a failure so they are refuted by the भाष्यकार। The expression 'कात्पूर्व' is redundant on the ground that सुट् being टित् or ट्-eliding, would unquestionably, by 'आद्यन्तौ टकितौ', be placed before क। If you argue that the term

would be serviceable when अट् or अभ्यास is interposed between सम् and क (of क्र), we say no—because सुट् being a prefix (उपसर्ग ?) will take effect first by the dictum 'पूर्व्वं धातुरुपसर्गेण युज्यते' and as such it then becomes an अन्तरङ्ग विधि and 'अभ्यास' and 'अट्' become बहिरङ्ग. Then by the परिभाषा 'असिद्धं बहिरङ्गमन्तरङ्गे', we have the operation of सुट् prior to that of द्वित्व। Thus सम्—क्र+णल्=सम्—स्कृ+णल् (सुट्)=सम् स्कृ स्कृ अ (द्वित्व)। Then by the rules 'उरत्' (2244), 'उरण् रपरः' (70), 'शर्पूर्व्वाः खयः' (2259) 'ऋतश्च संयोगादेर्गुणः' (2379) and 'अत उपधायाः' (2282) respectively, we have सञ्चस्कार [ Similarly in समस्करोत्—समस्कार्षीत् etc. in the case of अट् in लङ्, लुङ् etc ]. Similarly सञ्चस्करतुः—without 'अत उपधायाः' (2282) above. Under the इट्—prohibiting rules 'कृसभृव—' (2293) and 'ऋतो भारद्वाजस्य (2296), there runs the varttika 'क्रादीनामसुट इति वक्तव्यम्'—'It has to be stated that the augment इट् is prohibited to the roots कृ, सृ, भृ, वृ etc and ऋदन्त ones—only when they are not prefixed with the augment सुट्। Thus, by the question, it appears that they will have the augment इट् when they are prefixed with सुट्। Hence सञ्चस्करिथ, सञ्चस्करिव are explained. The term 'नित्यम्' occuring in the rule 'नित्यं छन्दसि' (3587—7. 4. 8) is carried down to the rule 'गुणोऽर्त्तिसंयोगाद्योः' (2380—7. 4. 29). Thus the rule 'गुणोऽर्त्ति—' now means—'नित्यं यः संयोगादिः तस्य 'that which begins always with a conjunct letter at the outset' can not have guna etc. This being the meaning—[N. B. This explanation of Bhattoji is according to Kaiyata under this rule 'सुट् कात्पूर्व्वः। But Nagesha differs

from the same on the ground that the term नित्य occuring in 'नित्यं छन्दसि' is too remote to be carried down to the rule 'गुणोऽर्ति—'], we have no guna in the case of 'संस्क्रियात्' ( आशीः )—because क्रृ is not 'नित्यं संयोगादि'—beginning ever with a conjunct letter'—but it is so ( संयोगादि ) only for the time-being. In the cases of लिङ् and लुङ् forms संस्कृषीष्ट etc. and समस्कृत ( लुङ् ) etc ( आत्मने आशीः and लुङ् ), the option of इट् directed by ऋतश्च संयोगादेः ( 2526 ) does not apply on the score of the explanation [ of Kaiyata—this also is obvious in सुट् कात्पूर्व्वः—but Nagesh rejects this too ] 'उपदेशे यः संयोगादिः'—or what begins with a conjunct letter at the time of enunciation ( of Panini )'—whereby ( by which explanation ) the term उपदेशे' is carried on to the rule 'ऋतश्च संयोगादेः' ( 2526—7. 2. 43 ) from the rule 'एकाच उपदेशेऽनुदात्तात्' ( 2246—7. 2. 10 ). In समस्कृषाताम्—समस्कृषत etc,—the षत्व is due to 'इण्कोः' and आदेश—' (211—12).

Here ends the तनादि—class of roots.

मित—। सुट् कात् पूर्व्व इति। अर्थः स्पष्टः। तेनात्रोक्तं वार्त्तिकमुपन्यस्यति—अडभ्यासव्यवायेऽपीति। भाष्ये तैतद् विभज्य पठितम् 'अड्व्यवाये उपसंख्यानम्' इति 'अभ्यासव्यवाये' चेति। अयमिदानीं सूत्रार्थः—'अड्व्यवाये अभ्यासव्यवायेऽपि च सम्परिपूर्व्वात् करोतेः कात् पूर्व्वमेव सुट् स्या'दिति। समस्करोत् समस्कार्षीत्, सञ्चस्कार, सञ्चस्करतुरित्याद्युदाहरणम्। कात् पूर्व्व इत्यादीति। अत्र 'आदि' पदेन वार्त्तिकं परामृश्यते। 'अडभ्यासव्यवायेऽपि' एतदपि न कर्त्तव्यमिति' भाष्य-वचनात्। प्रत्याख्यातमिति निराकृतं व्यक्तमिति यावत्। ननु तर्हि अडभ्यासकार्य्ययोः प्रकृतिप्रत्ययमात्रापेक्षत्वेन अन्तरङ्गत्वात् सुटश्च 'सम्परिभ्याम्' इति पदद्वयापेक्षत्वेन बहिरङ्गत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अडभ्यासकार्य्ययोः

प्रागुपस्थितौ सञ्चस्कारेत्यादि कथं साधनीयमित्याशङ्क्य समाधत्ते—तथोक्तमिति। पूर्वं धातुरुपसर्गेण युज्यत इति। पश्चात् साधनेनेति शेषः। सुट् चात्र उपसर्गः। प्रागुपन्यस्तत्वात्। ततश्चायं प्रागेव प्रयोक्तव्यः। यच्च प्राक् प्रयुज्यते तदन्तरङ्गम्। एवं तत्रायातं यत् सुडन्तरङ्गमिति। एतदेवाह * अन्तरङ्गत्वात् सुडिति। ततो द्वित्वमिति। तथा च सम्+कृ णल् इति स्थिते पूर्वं सुट्—सम्-सुट् कृ णल्—सम्-स्कृ णल्—ततो द्वित्वेन—सम्-स्कृ स्कृ णल् इति भवति। एवंविधव्याख्यानस्य फलं दर्शयति एवं चेति। ऋतश्चेत्यङ्गगुणेन, उरत् (२२४३), 'उरण्—'(७०) इत्यभ्यासगुणेन रपरत्वेन च सम्-स्कर् स्कर् णल् इति स्थिते—शर्पूर्वाः खयः (२२५९) 'कुहोश्चुः' (२२४४) इत्यभ्यासकार्येण—सम् चस्कर् णल् इति जाते 'अत उपधायाः' (२२८२) इति वृद्धौ—सञ्चस्कार् अ—सञ्चस्कार इति। एवम् सञ्चस्करतुरिति। अत्र वृद्ध्यभावो विशेषः। सुटः प्रागुपस्थित्यभावे तु ऋतश्चेत्यस्याप्रवृत्त्या 'असंयोगाल्लिट् कित्' (२२४२) इति कित्त्वादतुसादौ गुणो न स्यादिति विभावनीयम्। ननु सम्-स्कृ+

---

* एतच्च भाष्ये "युक्तमिह द्रष्टव्यम् किमन्तरङ्गं किं बहिरङ्गमिति। धातूपसर्गयोः कार्यं यदन्तरङ्गम्। कुत एतत्। पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति। नैतत् सारम्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि। अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्। सत्यमेवमेतत्। यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य 'आस्यते गुरुणे'त्यकर्मकः। 'उपास्यते गुरु'रिति केन सकर्मकः स्यात्। एवं च कृत्वा सुट् सर्व्वतोऽन्तरङ्गतरको भवति। कात् पूर्वग्रहणं चापि शक्यमकर्तुम्।" इत्यादिना निर्णीतमिति दिक्। अत्र भाष्ये 'कात्पूर्वग्रह' चापि' इति चकारादिदम् अडभ्यासव्यवायप्रत्याख्यानार्थमिति ज्ञापितम्। सुटष्टित्वादाद्यवयवत्वेन (आद्यन्तौ टकितौ) कात् पूर्व इति अनुक्तेऽपि टित्त्वादादावेव स्यादिति 'कात् पूर्वं'—ग्रहणं प्रत्याख्यातम्।

यल् इति सम्—स्कृ—य इति च स्थिते पूर्वत्र 'ऋतो भारद्वाजस्य' (२२९६) इति भारद्वाजनियमात्, उत्तरत्र च 'कृ सृ भृ वृ—' (२२९२) इति क्रादिनियमाच्च इण्निषेधः प्राप्नोति। इष्यते च इट् यथा स्यात्। अन्यथा समस्करिय—समस्करिव इत्याद्यसिद्धिप्रसङ्गादित्यत आह— 'ऋतोऽसुट् इति वक्तव्यम्' इति। वार्त्तिकमिदम्। एवं चासुड्विषये एव इण्निषेधनियमात् सुड्विषये इड् भवत्येवेति फलितम्। ततश्च समस्करिथेत्याद्यभिमतरूपसिद्धिः। थिलादयः प्राग्वत्। अथ 'स्कृ' इत्यस्य संयोगादित्वेन 'गुणोऽर्त्ति—' (२३८०—७।४।२९) इति प्राप्नोति। तथा च 'रिङ् शयग्लिङ्क्षु' (२३५७)—७।४।२८) इत्यस्य बाधः। तथा सति गुणेन 'स स्क्रयात्' इति स्यात् न तु रिङा अभिमतं संस्क्रियात्' इति। एवं प्राप्ते आह—'गुणोऽर्त्ति—' इत्यादिना। नित्यं छन्दसीत्यस्य अष्टाध्यायीस्था संख्या—(७।४।८)—इति। 'गुण—' इत्यस्य तु (७।४।२९)—इति। ततो व्याचष्टे—नित्यं यः संयोगादिरिति। कैयटवचनमिदम्। एवञ्च 'स्कृ' इत्यस्य सुट्संसर्गादेव संयोगादित्वम्। अतः कादाचित्कोऽयं संयोगो न नित्यः। अथ तङ्पक्षे लिङि सिचि च इडागमं वारयितुमाह— ऋतश्चेति। उपदेशे इत्यनुवर्त्त्य इति। 'ऋतश्च संयोगादे'रिति सूत्रे इत्यर्थः। ततश्च—'उपदेशे यः संयोगादि'रित्यादार्थो भवति। एतदपि कैयटवचनम्। तदेतद् वाक्यद्वयमपि 'सुट् कात् पूर्व्वं' इति सूत्रे कैयटे स्थितम् इति तत्रैव द्रष्टव्यम्। नागेशस्तु इदं 'चिन्त्यम्—तस्यातिदूरत्वादित्यादिना कैयटदीक्षितमतं प्रत्याचचक्षे इति शब्देन्दुशेखरे विस्तर इति दिक्। एवं प्रकृते कृधातोः संयोगादित्वेनोपदेशाभावात् इडभाव इति भावः। ततश्च संस्कृषीष्ट। संमस्कृत इत्यादि सिद्धम् इति।

इति मितभाषिण्यां तनादिप्रकरणम्।

अथ

# तिङन्तक्र्यादिप्रकरणम्

दी—। डुक्रीञ् १४७४ द्रव्यविनिमये।

२५५४। क्र्यादिभ्यः श्ना ।३।१।८१॥

दी—। क्रीणाति। 'ई हल्यघोः' (२४८७)। क्रीणीतः। ईत्वात् पूर्वं झेरन्तादेशः। परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं झस्य अद्भावः 'श्नाभ्यस्तयोः—' (२४८२) इत्याल्लोपः। क्रीणन्ति। क्रीणीते। चिक्राय। चिक्रियतुः। चिक्रयिथ—चिक्रेथ। चिक्रियिव। चिक्रियिषे। क्रेता। क्रेष्यति। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। प्रीञ् १४७५ तर्पणे कान्तौ च। कान्तिः कामना। प्रीणाति। प्रीणीते। श्रीञ् १४७६ पाके मीञ् १४७७ हिंसायाम्। 'हिनुमीना' (२५३०)। प्रमीणाति। प्रमीणीतः। 'मीनाति- मिनोति—' (२५०८) इत्येज्विषये आत्वम्। ममौ। मिम्यतुः। ममिथ—ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। षिञ् १४७८ बन्धने। सिनाति। सिनीते। सिषाय। सिष्ये। सेता। स्कुञ् १४७९ आप्रवणे।

The विकरण or affix श्ना (ना) is affixed to the क्र्यादि class

of roots when a सार्वधातुक follows in the active voice. This prevails over श्रप्। Thus—क्रीणाति—णत्व comes in by 'रषाभ्यां नो णः—'। In क्री+ना+तस्, तस् being a हलादि अपित् or ङित् सार्वधातुक् the श्रा of 'ना' is changed into ई by 'ई हल्यघोः' (2497). Note that श्ना is अपित् hence क्री is not gunnated. In क्री ना झि, झि is changed into अन्ति prior to the ईत्व of 'ई हल्यघोः' (6. 4. 113) by the rule 'झोऽन्तः' (7.1.3) which is subsequent to the other ('ई हलि—') and also नित्य because अन्तादेश must take effect whether ईत्व does or does not come (cp कृताकृतप्रसङ्गि नित्यम्)। Moreover अन्तादेश is अन्तरङ्ग in as much as it awaits the root only (प्रकृतिमात्रापेक्षः) whereas ईत्व is बहिरङ्ग, for it waits for both the root and the affix (प्रकृतिप्रत्ययापेक्षः)। Thus क्री ना अन्ति where श्रा of ना eliding by 'श्नाभ्यस्तयोरातः' (2483), the form is क्रीणन्ति। Similarly in क्रीना झ (आत्मनेपदी), झ is first of all changed into 'अत्' by 'आत्मनेपदेष्वनतः' (७।१।८) and thus due to its परत्व, नित्यत्व and अन्तरङ्गत्व—'ई हल्यघोः' (६।४।११३) does not apply. Hence=क्रीणा अत which as above changes into क्रीण् अत=क्रीणते by 'टित आत्मनेपदानां—'। क्रीणीते by 'ई हल्यघोः' and क्रीणाति by आलोपः। चिक्राय by द्वित्व, ह्रस्व—हलादिशेष—वृद्धि (अचो ञ्णिति) etc. चिक्रियतुः—by इयङ् ('अचि श्नु—' २७१) and no guna or वृद्धि due to कित्व of अतुस् by 'असंयोगात्—' (२२४२)। चिक्रयिथ—चिक्रेथ option of इट् by भारद्वाजनियम and गुण due to पित्व of थल्। अक्रैषीत्—by 'सिचि वृद्धिः—' (२२९७)। अक्रेष्ट—गुण by 'सार्वधातुकार्ध—' (२१६८)। प्रीञ् to please and desire प्रीणाति etc. णत्व by 'हिनुमीना' (२५३०)। ममौ—first आत्व then द्वित्व then ह्रस्व of the अभ्यास and next औत्व of णल् by 'आत औ—' (२३७१)। मिम्यतुः—by

'एरनेकाच:—' ( ३७२ ) for क्तुम् being कित् is not एज्विषय or एज्निमित्त ( cause of ए, ओ, ऐ, औ i.e. of गुण or वृद्धि )। ममिथ—ममाथ—option of इट् by भारद्वाजनियम। In the इट्पक्ष, आ of the अङ्ग ( after duplication ) is dropped by the rule 'आतो लोप इटि च' ( २३७२ ) whereas in the इडभावपक्ष—there is no आलोप। मिम्ये—no आत्व for एश्—the substitute of त—is अपिच्छिट्। माता—मास्यति—by 'मीनाति—etc' above. मीयात्—विधिलिङ्। मासीष्ट—आशी:। अमासीत्—लुङ्; here the augments सक् and इट् come in by the rule 'यमरमनमातां सक् च' ( २३७७ ) after आत्व has taken effect. सिच् elides by 'इट ईटि' ( २२६६ )। अमास्त—लुङ् आत्मने—with सिच् but without इट् because the root is अनिट्। सिनाति—सत्व by' 'धात्वादे: ष: स:' 'सिषाय—षत्व by इण्को: ( २११ ) and 'आदेश—' ( २१२ ) because the primitive root was begun with ष। स्कुञ् to spring and to release ( आप्रवणसुतप्रवनमुद्धरणं च,' cp दीक्षित under 'स्कुञ्दि आप्रवणे—२२६१ )।

मित—। अथ श्नाविकरणान् क्र्यादीन् निरूपयिष्यन्नाह—डुक्रीञिति क्र्यादिभ्य इति। शपोऽपवाद:। कर्त्रर्थे सार्वधातुके परे श्नेत्यर्थ:। क्रीणाति इति। रषाभ्यामिति णत्वम्। क्रीणीत इति—तस:। हलादापित्त्वे न ईहल्यघोरितीत्वम्। ननु क्रीणा भि इति स्थिते अवाप्यनेनेत्वं स्यात्किंं हलादापित्त्वादित्याशङ्क्य आह—ईत्वात् पूर्वमिति। भेरन्तादेश इति—'झोऽन्त:' (७।१।३) इत्यनेन। परत्वादिति। 'ई हल्यघो:' ( ६।४।११३ ) इत्यपेक्षया इत्यर्थ:। नित्यत्वादिति—कृताकृतप्रसङ्गित्वादित्यर्थ:। अन्तादेशो हि कृतेऽपीत्वे प्राप्नोत्यकृतेऽपि, अतोऽयं नित्य:। अन्तरङ्गत्वाच्चेति। तथा च अन्तादेश: प्रत्ययमात्रमाश्रित्य प्रवर्तते। तेनायमल्पापेक्ष:। अतोऽयमन्तरङ्ग:। ईत्वन्तु प्रकृतिप्रत्ययावुभावपि अपेक्षते। तत्रापि प्रत्ययेन हलादित्वेनापित्वेन च भवितव्यमित्ययं बह्वपेक्ष:। अतो बहिरङ्ग:। ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वान्नास्य (ईत्वस्य) प्रवृत्ति:। न च पुन: प्रसङ्ग-

न्यायेन प्रवृत्तिर्भवेदिति वाच्यम्। श्नादेशे कृते प्रत्ययस्य हलादित्वाभावात्। एवं क्रीणा अन्ति इति स्थिते 'श्नाभ्यस्तयोरातः' (२४८३) इत्याल्लोपे क्रीण् अन्ति —क्रीणन्ति इति। अथात्मनेपदे क्री णा म इति स्थिते आह—एवं भ्रक्ष्यद्भाव इति। 'आत्मनेपदेष्वनतः' (२२५८—७।१।५) इत्यनेनेति भावः। तस्यापि परत्वान्नित्यत्वाद्न्तरङ्गत्वाच्चेति भावः। क्रीणीते इति—'ई हल्यघो'रितीत्वम्। 'टित—'इत्येत्वम्। चिक्राय इति। द्वित्वकुत्वहलादिशेषाः। 'अचो ञ्णिति' (२५४) इति वृद्धिः। चिक्रियतुरिति—अतुसः कित्त्वाद् वृद्ध्याद्यभावे 'अचि श्नु—' (२७१) इतीयङ्। चिक्रयिथ—चिक्रेथेति। भारद्वाजनियमादिड्विकल्पः। चिक्रियिव इति। क्रादिनियमादिट्। अक्रैषीत् इति। सिचिवृद्धिरिति वृद्धिः। इटः परत्वाभावात् सिज्लोपाभावः। अक्रेष्ट इति। 'सार्वधातुका—' (२१६८) इति तङ्पक्षे गुणः। प्रीञ्श्रीञौ क्रीञ्वत्। प्रिणीनेति। उपसर्गवशात्णत्वप्रदर्शनार्थमिदम्। एजविषये इति—गुणवृद्धिविषये इत्यर्थः। यत्रार्धधातुकप्रत्ययनिमित्तं धातोर्गुणेन वृद्ध्या वा एत्वौत्वादिर्भवेत् स्यात्तत्रेत्यर्थः। ममौ इति। णलः पित्त्वेनैजविषयत्वम्। अत आत्वम्। आत्वे कृते द्वित्वम्। ततो णलः 'आत औ—' (२३७१) इत्यौत्वम्। अभ्यासह्रस्वः। मिम्यतुरिति। अतुसः कित्त्वेन ('असंयोगाल्लिट् कित्'—२२४२) गुणाद्यभावेन एज्विषयत्वाभावान्नात्वम्; 'एरनेकाचः—' (२७२) इति यण्। क्रमः प्राग्वत्। ममिथ—ममाथेति। प्राग्वदिड्विकल्पः। तत्र इट्पक्षे 'आतो लोप इटि च' (२३७२) इत्याल्लोपः। इडभावपक्षे तु न तथेति भेदः। मिम्ये इति—मिम्यतुरित्यत्र यथा। माता—मास्यति—प्राग्वदात्वम्। मीयात्—मासीष्ट—आशीर्लिङ्; लोपिटः कित्त्वाभावादात्वम्। अमासीत् इति। मीनातीत्यात्वे कृते, 'यमरमनमातां सक् च' (२३७७) इति सक् सिच इडागमश्च। 'इट ईटि' (२२६६) इति सिज्लोपः। अमास्त इति। तङ्पक्षे लुङि रूपम्। धातोरनिट्कत्वेन इटः परत्वाभावान्न सिज्लोपो न। षिञ् बन्धने—सिनातीति। षोपदेशत्वात्सत्वम्। सिषाय इति। इण्कोरित्यादिना षत्वम्। 'अचः—' (२५४) इति वृद्धिः। अन्यत् प्राग्वत्। स्कुञ् आप्रवणे इति। आप्रवणमुत्-

प्रवनसुदरणं च इति 'झलि च सेटि' (२२६१) इति सूत्रे 'स्कुदि तु आप्रवणे' इत्यत्र स्वयमेवोक्तत्वात्।

अथ स्कुआदीनां पञ्चानां विकल्पेन श्नाप्रत्ययः श्नुप्रत्ययश्चास्तीति दर्शयन्नाह :—

२५५५। * स्तन्भु स्तुन्भु स्कन्भु स्कुन्भु स्कुञ्भ्यः श्नुश्च ॥३।१।८२॥

दो—। चात् श्ना। स्कुनोति। स्कुनुते। स्कुनाति। स्कुनीते। चुस्काव। चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। 'स्तन्भ्वादयश्चत्वारः सौत्राः'। 'सर्वे रोधनार्था' इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ। द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह। सर्वे परस्मैपदिनः। नलोपः। विष्टभ्नोति—विष्टभ्नाति। अवष्टभ्नोति—अवष्टभ्नाति। अवतष्टम्भ। 'जृस्तम्भु—' (२२९१) इत्यङ् वा। व्यष्टभत्—व्यष्टम्भीत्। स्तुभ्नोति—स्तुभ्नाति।

The विकरण श्नु and from the 'च'—the विकरण श्ना are added to the roots स्तन्भु, स्तुन्भु, स्कन्भु, स्कुन्भु and स्कुञ् in the active voice. Thus स्कुनोति (श्नु is अपित्) hence स्कु is not gunnated and तिप् is पित् hence उ of नु is gunnated by 'सार्वधातुकार्धधातुकयोः' (सत्ययस्य पितस्तु गुणः) and स्कुनाति (स्कु is not gunnated as above.) स्कुनुते—ते is ङित् hence नु is not gunnated. स्कुनीते—by 'ई हल्यघोः' (2497). [Being ञित् the root is उभयपदी hence a

* 'स्तम्भु स्तुम्भु स्कम्भु—इति मकारोपधपाठस्तु तत्त्वबोधिनीसम्मतः।

pair of forms in each case.] चुस्काव—by क्ति, 'शर्पूर्वाः खयः' (2159) and 'अचो ञ्णिति' (254) etc. चुस्कुवे—by उवङ् (अचि श्नु —271) due to the want of गुण and वृद्धि. अस्कौषीत्—अस्कोष्ट —These are the लुङ् forms with वृद्धि and गुण as in the preceding nstances. The four roots (स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु) are found in this very sutra only and not in the धातुपाठ also. Some assert that all these (four) roots mean to obstruct (रोधन) or impede. But Madhava holds that the first and the third (स्तन्भ् and स्कन्भ्) mean to block up or retard (स्तम्भ or रोधन), the second—to extract or draw out and the fourth (स्कुन्भ्) to ascertain or hold. And it is explained that स्कुञ् means the same thing as स्कुन्दि Root no. 9].

सर्वे परस्मैपदिनः—this is undoubtedly a reference to the first four roots for the term सर्वे cannot but extend to स्कुम्भ् only as the last स्कुञ् is read as ञित्। नलोपः i. e. by the rule 'अनिदितां हल—'(415) for श्ना is ङित् by the rule 'सार्वधातुकमपित्' (2234). विष्टभ्नोति—षत्व in connection with वि by 'स्तम्भेः' (2272). अवष्टभ्नोति etc—षत्व in connection with अव by 'अवाच्चालम्बनाविदूर्य्ययोः' (2273). अवतष्टम्भ—अव—स्तन्भ स्तन्भ् अ (लिट्=अव—तस्तन्भ् अ by 'शर्पूर्वाः खयः' (2259), 'नश्चापदान्तस्य—' (123) and 'अनुस्वारस्य ययि—' (124)=अवतष्टम्भ—षत्व by the rule 'स्थादिष्वभ्यासेन चाभ्यासस्य' (2277). व्यष्टभत्—cerebraly of स by 'प्राक् सितादड्व्यवायेऽपि' (2276). Similarly व्यष्टम्भीत् with elision of सिच् etc. स्तुभ्नोति—स्तुभ्नाति—conj. of स्तुन्भु which drops its न as before.

मित—। स्तनिष्यति। इन्नात् पञ्चमीबहुवचनम्। अर्थः स्पष्टः। श्नुर्येति चकारार्थमाह—चात् श्नेति। 'आदिभ्यः—' (३।१।८१) इत्यतस्तदनुवृत्तेः। 'स्तुनोति' इत्यादि 'अस्तोष्ट' इत्यन्तम् स्तुञिति प्रकृतस्य रूपप्रदर्शनम्। सार्व-धातुकमपिदिति ङित्त्वात् 'स्तु' इत्यस्य न गुणः। 'पित्सु गुणः' इत्युक्तत्वात् श्नुप्रत्ययस्य गुणः। तुस्ताव—च स्तुवे इति। 'उभयत्रैव स्वयमेवत्वं कृञोरिति च त्वच। पूर्वत्र 'अचो ञ्णिति' (२५४) इति वृद्धिः। उत्तरत्र तु गुणादाभावे 'अचि श्नु—' (२७१) इत्युवङ्। अन्यत् प्रागवत्। स्तोता इति। एतत्सूत्रे एव निबद्धत्वाद् धातुपाठे चादर्शनात्। तत्त्वबोधिन्यां 'स्तम्भादय—' इति मकारोपध-पाठः। अतएव 'नकारोपधा इत्यपि श्रेया' इति तत्त्वबोधिनी। रोधनार्था इति। बाधनार्था इत्यर्थः। तदेतदरुचिकरमित्याह—माधवस्त्विति। स्पष्टम्। सर्वे परस्मै-पदिन इति। अत्र सर्वपदेन प्रथमतत्पुरुषो ग्राह्यो न तु स्तुञ् इत्यपि। तस्य 'उभयपदित्वलिङ्गात् स्वयमपि व्याख्यातत्वाच्च। नलोप इति। 'अनिदिताम्—'(४१५) इत्यनेनेति श्रेयम्। तथा च विस्तम्भ् श्नु (श्ना) तिप् इति स्थिते श्नुप्रत्ययस्य श्नाप्रत्ययस्य चापित्त्वेन ङित्त्वादनिदितामित्यस्य प्रवृत्तिः। उपसर्गात् सुनोति—' (२२७०—८।३।६५) इत्युपक्रम्य 'स्तम्भेः' (२२७२—८।३।६७) इत्युक्तत्वात् षत्वम्। अवष्टभ्नोति—'अवाच्च—' (२२७३) इति षत्वम्। अवतष्टम्भ इति—'स्थादिष्वभ्यासेन—' (२२७७) इति षत्वम्। व्यष्टभदिति। प्राक्सिता-दिति षत्वम्। स्पष्टमन्यत्।

२५५६। वेः स्कभ्नातेर्नित्यम् ॥८।३।७७॥

कौ—। वेः परस्य स्कभ्नातेः सस्य षः स्यात्। विष्क-भ्नाति—विष्कभ्नोति।

Eng.—Easy. 'स्कभ्नातेः' has been taken in a general way so that the root gets षत्व in connection with श्नु also—विष्कभ्नोति।

मित— । व्याख्यातम् । स्कभ्नातेरिति । श्नाप्रत्ययान्तस्य ग्रहणात् श्नु प्रत्ययस्य षत्वं नेति न भ्रमितव्यमिति ध्वनयन्नाह—विष्कभ्नोति—विष्कभ्नातीति ।

२५५७ । हलः श्नः शानज्झौ ॥३।१।८३॥

दी— । हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे—स्तभ्नुहि—इत्यादि ॥ युञ् १४८० बन्धने । युनाति । युनीते । योता । क्नूञ् १४८१ शब्दे । क्नूनाति । क्नूनीते । क्नविता । द्रूञ् १४८२ हिंसायाम् । द्रूणाति । द्रूणीते । पूञ् १४८३ पवने ।

The विकरण श्ना, coming after a हल् i. e. a हलन्त root, is replaced by शानच् when ( the affix ) हि follows. [शानच् retains 'आन' only]. Thus स्तन्भ् + श्ना + हि = स्तभ् + शानच् + हि = स्तभ् आन + हि = स्तभान o there हि elides by 'अतो हेः' पक्षे i.e. when स्तन्भ् etc. take श्नु, the forms will be स्तभ्नुहि etc. without the elision of हि for in such cases 'उतश्च प्रत्ययात्—' (2334) does not apply. The rest are easy. पूञ् to purify :—

मित— । हल इति । हल इति पञ्चमी । तदाह—हलः परस्येति । तेन च हलन्तो धातुर्लभ्यम् । श्नः इत्यवयव—षष्ठी । श्ना इत्यस्यलुप्ताकारस्य रूपं तच्च वैचित्र्यार्थम् । शानच् + हौ इतिच्छेदः । 'शानजित्यस्य शचावितौ' 'आन' इत्यदन्तः शेषः । नन्वेवं श्नः शानचि चादिष्टे स्तभ् आन हि—स्तभान हि इति जाते 'अतो हेः' ( २२०२ ) इत्येवं हेर्लोपो न स्यात्, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति परिभाषोपस्थितेः । तथाहि हिप्रत्ययं निमित्तं कृत्वा श्नः शानजदेशः । पुनस्तमेव अदन्तं शानजादेशं निमित्तं कृत्वा हेर्लोपो विधीयते । तदेतदयुक्तम् । उपजीव्यविरोधस्यायौक्तिकत्वादिति चेत् ? सत्यम् । 'अतो हे'रिति वचनसामर्थ्यादत्र सन्निपातपरिभाषाया अप्रवृत्तेरिति

तत्त्वबोधिन्यां स्पष्टम्। एवं स्तुभान इत्यादावपि हेलोपि रूपम्। ननु श्नाप्रत्ययस्य शित्त्वात् 'स्थानिवदादेशोऽनल्विधौ' (५०) इति तदादेशस्यापि स्थानिवद्भावेन शित्त्वे सिद्धे शानचः शित्करणं व्यर्थमिति चेत्। न। एतेन हि ज्ञाप्यते 'क्वचिदनुबन्धकार्य्येऽपि अनल्विधाविति प्रतिषेध' इति। सुगममन्यत्। पूञ् पवने इति। पवनं शोधनम्—

२५५८। प्वादीनां ह्रस्वः ॥७।३।८०॥

दी—। शिति परे। पुनाति। पुनीते। पविता। लूञ् १४८४ छेदने। लुनाति। लुनीते। स्तॄञ् १४८५ आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। स्तरिता—स्तरीता। स्तृणीयात्। स्तृणीत। आशिषि स्तीर्य्यात्। 'लिङ्सिचोः—' (२५२८) इति वेट्। 'न लिङि' (२५२९)—इति वॄत इटो लिङि दीर्घो न स्यात्—स्तरिषीष्ट। 'उश्च' (२३६८) इति कित्त्वम्—स्तीर्षीष्ट। 'सिचि च परस्मैपदेषु' (२३८२) इति न दीर्घः। अस्तारीत्। अस्तारिष्टाम्। अस्तरिष्ट—अस्तरीष्ट—अस्तीर्ष्ट। कॄञ् १४८६ हिंसायाम्। कृणाति। कृणीते। चकार। चकरे। वॄञ् १४८७ वरणे। वृणाति। वृणीते। ववार। वव्रे। वरिता—वरीता। आशिषि—'उदोष्ठ्यपूर्व्वस्य' (२४८४) वूर्य्यात्। वरिषीष्ट—वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट—अवरीष्ट—अवूर्ष्ट। धूञ् १४८८ कम्पने। धुनाति। धुनीते। दुधविथ—दुधोथ। दुधुविव। धविता—धोता। 'स्तुसुधूञ्भ्यः—' (२३८५) इतीट्। अधावीत्। अधविष्ट—अधोष्ट।

The roots पू etc. (enumerated herein below) become ह्रस्व or short—उकारान्त when a शित् as श्ना follows. Thus पुनाति, लुनाति, स्तृणाति etc. पविता—the root is सेट्। तस्तार—by 'ऋच्छत्यृताम्' (2383), duplication, 'शर्पूर्वाः—(2259) and 'अत उपधायाः (2282). तस्तरुः—by ऋच्छत्यृताम् and duplication. स्तरिता—स्तरीता—option of दीर्घ by 'वृतो वा' (2391). स्तृणीयात्—स्तृणीत—विधिलिङ् forms with श्ना. स्तीर्यात्—आशीः—here स्तृ first becomes स्तिर् by 'ऋत इद्धातोः' (2390) and then becomes स्तीर् by 'हलि च' (354). स्तरिषीष्ट—स्तीर्षीष्ट—by the option of इट् by 'लिङ्सिचोः—' (2528). The former is with इट् and लिङ् here not being कित् the root gets guna. This इट् is not lengthened by 'वृतो वा' (2391) due to the prohibition expressed in 'न लिङि' (2529). The latter is without इट् and here लिङ् being कित् by 'उश्च' (2368) the root is not gunnated. Thus स्तृ+सीष्ट now becomes स्तिर् सीष्ट by ऋत इद्धातोः (2390) and then becomes स्तीर् षीष्ट by 'हलि च' (354). In the cases of अस्तारीत्, अस्तारिष्टाम् etc. the aug. इट् is not lengthened due to the prohibition 'सिचि च—' (2892)—अस्तार् (वृद्धि by 'सिचि वृद्धिः—' (2297) इट् सिच् ईट् त्=अस्तारीत् due to the elision of सिच् by 'इट ईटि' (2266). Similarly अस्तारिषुः, अस्तारिष्टः etc. अस्तरिष्ट—अस्तरीष्ट—अस्तीर्ष्ट—these three are the लुङ् sing. forms in the आत्मने—(अ स्तृ सिच् त)। The first two get the option of दीर्घ by 'वृतो वा' (2391) in connection with इट् which is optional by 'लिङ्सिचोः—' (2528) and the last form 'अस्तीर्ष्ट' where (अ स्तृ सिच् त) सिच् is कित् due to its झलादित्व (because this is the इडभावपक्ष) and तङ्परत्व—is explained by

'ऋत इद्धातोः' ( 2390 ) and 'हलि च' ( 354 )—in as much as here सिच् being कित् the root does not get गुण like the former two ( अस्तरिष्ट and अस्तरीष्ट )। वॄञ् to injure—easy. वृञ् to choose. वरिता—वरीता—option of दीर्घ of इट् by 'वॄतो वा' ( 2391 ). In आशीर्लिङ्—(वृ+यात्), by the rule 'उदोष्ठ्यपूर्वस्य' ( 2494—7. 1. 102 ) which overrules the former 'ऋत इद्धातोः' ( 2390—7. 1. 100 ), the root वॄ gets उत् instead of इत् and this उत् or उ becomes रपर by 'उरण्—' ( 70 )—Thus वुर् यात् which gives वूर्यात् by 'हलि च' ( 354 ). वरिषीष्ट—वूर्षीष्ट—option of इट् by लिङ्सिचो:—( 2528 ). In the इट्पक्ष गुण takes effect but there is no option of दीर्घ expressed in वॄतो वा' due to the prohibition 'न लिङि' ( 2529 ). In the इडभावपक्ष ( वूर्षीष्ट ), 'उश्च' ( 2368 ), 'उदोष्ठ्य—' ( 2494 ) 'उरण्—' (70) and 'हलि च' ( 354 ) apply as before. अवारीत्—अवारिष्टाम्—like अतारीत्—अतारिष्टाम्। अवरिष्ट etc, as अतरिष्ट etc, above. धू—to shake. दुधविथ—दुधोथ—option of इट् by 'स्वरतिसूति—' ( 2279 ). Similarly धविता—धोता। अधविष्ट—अधोष्ट—in लुङ् आत्मनेपद।

मित—। प्वादीनामिति। 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीत्यनुवर्तते। तेनापेक्षितं पूरयन्नाह—शिति परे इति। प्वादयः अत्रैव क्रमेण सन्निबद्धाः। पुनाति। लुनाति इत्यादि रूपम्। ज्ञॄ्णोऽपित्त्वान्न गुणः। तस्तार इति—'ऋच्छत्यॄताम्' ( 2383 ) इति गुणे कृते वृद्धिलम्। खयः शेषः। 'अत उपधायाः' ( 2282 ) इति वृद्धिः। तस्तरतुरिति। अत्र वृद्धिं विना पूर्ववत्। स्तरिता—स्तरीता इति। 'वॄतो वा' ( 2391 ) इति इटो दीर्घविकल्पः। स्तीर्यादिति। यासुटः कित्त्वाद् गुणाभावे 'ऋत इद्धातोः' ( 2490 ) इति इत्वम्। रपरत्वम्। उरण् रपरः—(70)। हलि चेति ( 354 ) दीर्घः। आशिषि—आत्मनेपदे आह—लिङ्सिचोरिति। वेट्त्वेऽपि

इट्पक्षे वृतो वेति दीर्घविकल्पो न। 'न लिङि' (2529) इति निषेधात्। तेन इट्पक्षे गुणेन—स्तरिषीष्टेत्येकमेव रूपम्। इडभावे तु स्तॄ (लिङ्) सीष्ट इति स्थिते 'उश्च' ति (२३६८) कित्वात् गुणाभावे प्रागुवदित्त्वरपरत्वदीर्घाः। अ स्तॄ इट् सिच् इट् त इति स्थिते वृतो वेति इटो दीर्घे प्राप्ते आह—सिचि चेति। आत्मनेपदे तु वृतो वेति दीर्घो भवत्येवेत्याह—अस्तरिष्ट—अस्तरीष्ट—अस्तीर्ष्ट इति। अत्र 'लिङ्सिचोः—' (२५२८) इतीड्विकल्पः। इडभावे कित्त्वेन गुणाभावात् इत्त्वरपरत्वेत्यादि अस्तीर्ष्ट इति। वरिता—वरीता—वृतो वेति प्राग्वत्। अवारीत्। अवारिष्टाम् इति। 'सिचि च—' (२३९२) इति दीर्घाभावः। अवरिष्ट—अवरीष्ट—अवूर्ष्ट इति। लिङ्सिचोरितीड्विकल्पादिट्पक्षे वृतो वेति दीर्घविकल्पः। इडभावे 'उश्च' (२३६०) इति कित्त्वाद् गुणाभावे 'उदोष्ठ्य—' इत्युत्त्वम्। उरण्रपरत्वम्। हलि चेति दीर्घश्च। दुधविथ—दुधोथ—'स्वरति—' (२२७९) इति इड्विकल्पः। दुधुविव—इति। क्रादिनियमादिट्। उवङ्। धविता—धोता इति प्राग्वत्। अधावीत्—स्पष्टं मूले। अधविष्ट—अधोष्ट इति। स्वरतीत्यादिनेड्विकल्पः।

दी—। अथ वध्नात्यन्ताः परस्मैपदिनः। शॄ १४८८ हिंसायाम्। 'शॄदॄप्रां ह्रस्वो वा' (२४८५) इति ह्रस्वपक्षे यण्। अन्यदा 'ऋच्छत्यृताम्' (२३८३) इति गुणः। शश्रतुः—शशरतुः। 'श्र्युकः किति' (२३८१) इति निषेधस्य क्रादिनियमेन बाधः। शशरिव—शश्रिव। शरिता—शरीता। शृणीहि। शीर्यात्। अशारिष्टाम्। पॄ १४८० पालनपूरणयोः। पप्रतुः—पपरतुः। आशिषि पूर्यात्। वॄ १४८१ वरणे। 'भरणे' इत्येके। भॄ १४८२ भर्त्सने। भरणेऽप्येके। मॄ १४८३ हिंसायाम्। मृणाति। ममार। दॄ १४८४ विदा-

रणे। ददरतुः—दद्रतुः। दद्रुः। जॄ १४९५ वयोहानौ'। 'झॄ' इत्येके। 'धॄ' इत्यन्ये। नॄ १४९६ नये। कॄ १४९७ हिंसायाम्। ॠ १४९८ गतौ। ॠणाति। अराञ्चकार। अरिता—अरीता। आर्णात्। आर्णीताम्। ईर्यात्। आरीत्। आरिष्टाम्। गॄ १४९९ शब्दे।

ज्या १५०० वयोहानौ। 'ग्रहिज्या—' (२४१२)।

अथ वध्रात्यन्ता etc. i. e. upto वन्ध 1509 वन्धने। शॄ to injure—शृणाति etc. in connection with श्ना। In शॄ+अतुस् once there will be यण् ('एरनेकाचोऽसंयोगपूर्वस्य'—272) when the root will become ह्रस्व by 'शॄ दॄ प्राम्—' (2465) and thus the form will be शृ शृ अतुस्—शश्र् अतुस्—शश्रतुः। And at another time i. e. when it is not ह्रस्व, it will have guna by 'ऋच्छत्यृताम्' (2383) giving शशरतुः। The क्रादिनियम expressed in 'कृ सृ भृ वृ—' (2993) bars the prohibition of इट्—expressed in 'श्र्युकः—' (2381). Thus शशरिथ with इट् and गुण in the दीर्घपक्ष and शश्रिथ with इट and यण् in the ह्रस्वपक्ष। शरिता—शरीता—by 'वॄतो वा' (2391). शीर्यात्—see स्तीर्यात् ante. अशारिष्टाम्—by 'सिचि च—' (2392). पप्रतुः—पपरतुः—by यण् and गुण respectively. पूर्यात्—by 'उदोष्ठ्यपूर्वस्य' (2494) उपरत्व and 'हलि च' (254) due to कित्त्व of यासुट्। अरिता—अरीता—by 'वॄतो वा' (2391)। आर्णात्—आर्णीताम्—लङ् sing+dual. The rest is as before. ज्या—to be infirm, is getting सम्प्रसारण by 'ग्रहिज्या—', and we look forward—

मित—। अथ वध्रात्यन्ता इति। 'वन्ध १५०९ बन्धने' इत्यन्ता इत्यर्थः। शॄ+अतुस् इति स्थिते ह्रस्वविकल्पात्—यण्गुणौ स्यातामित्याह—शॄ दॄ प्रामिति।

यणि—शश्रतुः ('एरनेकाचः—' २७२ इति यण्)। गुणे—शशरतुरिति। एवं पप्रतुः—पपरतुः। दद्रतुः—ददरतुरिति बोध्यम्। ननु शॄ+लिट् थ इति स्थिते 'श्र्युकः किति' (२३८१) इतीण्निषेधः स्यादित्यत आह—क्रादिनियमेन बाध इति। 'कृ सृ भृ वृ—' (२२९३) इत्यत्र प्रोक्तनियमेनेत्यर्थः। यण्गुणविकल्पात् रूपद्वयम्—शश्रिथ—शशरिथ इति। एवं पप्रिथ—पपरिथ इत्यादि। शरितेत्यादि—वॄतो वेति दीर्घविकल्पात् बोध्यम्। शृणीहि—इति। 'अतो हेः' (२२१२) इत्यस्य 'उतश्च—' (२३३४) इत्यस्य चाविषयात् हि—लोपाभावः। शीर्यात्—इति। इत्त्वरपरत्व-दीर्घाः प्राग्वत्। अशारिष्टामिति—सिचि च परस्मैपदेष्विति (२२९२) दीर्घो न। पूर्यात् इति—यासुटः कित्त्वात्—'उदोष्ठ्य—' (२४९४) इत्युत्त्वम्। रपरत्वम्। हलि चेति (३५४) दीर्घः। अपृणात्—अपृणीताम्—इति। लङि पृणातेः प्रथमैकद्विवचनयो रूपे। अन्यत् प्राग्वत्। अथ ज्या वयोहानौ इत्यस्य—ग्रहिज्येति सम्प्रसारणादूर्ध्वं दीर्घः स्यादित्याह—

२५५९। हलः ॥६।४।२॥

टी—। अङ्गावयवाद्धलः परं यत् सम्प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात्। इति दीर्घे कृते 'प्वादीनां ह्रस्वः' (२५५८)। जिनाति। जिज्यौ। जिज्यतुः। री १५०१ गति-रेषणयोः। रेषणं वृकशब्दः। ली १५०२ श्लेषणे। 'विभाषा लीयतेः' (२५०८) इत्येज्विषये आत्वं वा। ललौ—लिलाय। लाता—लेता। व्ली १५०३ वरणे। व्लिनाति। प्ली १५०४ गतौ। वृत्। ल्वादयो वृत्ताः। प्वादयोऽपीत्येके। व्री १६०५ वरणे। भ्री १६०६ भये। 'भरे' इत्येके। क्षीष १५०७ हिंसायाम्। एषां त्रयाणां ह्रस्वः। केषाञ्चिन्मते तु न। ज्ञा १५०८ अवबोधने। 'ज्ञाजनोर्जा' (२५११)।

जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । बन्ध १५०८ बन्धने । बध्नाति । बबन्धिथ—बबन्ध । बन्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । 'पूर्वत्रासिद्धम्' (१२) इति भष्भावात् पूर्वं 'झलो झलि' (२२८१) इति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः । वृङ् १५१० संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता—वरीता । अवरिष्ट—अवरीष्ट—अवृत । श्रन्थ १५११ विमोचनप्रतिहर्षयोः । इतः परस्मैपदिनः । श्रथ्नाति । 'श्रन्थि ग्रन्थि—' इत्यादिना । किच्चपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ इति हरदत्तादयः । श्रेथतुः । श्रेथुः । इदं किन्तु पितामपीति सुधाकरमते श्रेथिथ । अस्मिन्नपि पक्षे णलि शश्राथ । उत्तमे तु—शश्राथ—शश्रथेति माधवः । तत्र मूलं मृग्यम् । मन्थ १५१२ विलोडने । श्रन्थ १५१३ ग्रन्थ १५१४ सन्दर्भे । अर्थभेदाच्छ्रन्थेः पुनः पाठः । रूपं तूक्तम् । कुन्थ १५१५ संश्लेषणे । 'संक्लेशे' इत्येके । कुथ्नाति । चुकुन्थ । 'कुथ' इति दुर्गः । चुकोथ । मृद १५१६ क्षोदे । मृद्नाति । ममर्द । मृड १५१७ च । अयं सुखेऽपि । ष्टुत्वम् । मृड्णाति । गुधः १५१८ रोषे । गुध्नाति । कुष १५१९ निष्कर्षे । कुष्णाति । कोषिता ।

An अङ्ग ( verbal base ) which ends in a सम्प्रसारण, following a हल or consonant which is a part of the अङ्ग—becomes दीर्घ ।

In the case at hand ज्या by सम्प्र. becomes जि which is treated as an अङ्ग when any affix follows and in which 'इ' is taken as the सम्प्र. and 'ज्' the हल् is a part (अवयव) of the अङ्ग (जि) Thus जि turning to जी in connection with श्ना, the rule 'प्वादीनां ह्रस्वः' appears and consequently we get जिनाति etc. जिज्यौ—Here the अभ्यास gets सम्प्र. by 'लिट्यभ्यासस्य—' (2408) and णल् is changed into औ by 'आत औ णलः' (2371). जिज्यतुः—अतुस् being कित्, ज्या gets सम्प्र. by 'ग्रहिज्या—' (2412) prior to the duplication. Then by 'पुनः प्रसङ्गविज्ञान' 'जि' is duplicated. Then by यण् ('एरनेकाचः—' 272) we have जिज्यतुः। रेषण means the sound of a wolf. लिनाय—by 'अचोञ्णिति' (२५४). एषां त्रयाणाम्—i. e. ब्री, भ्री, क्षीष् become ह्रस्व by 'प्वादीनां—' according to those who explain that the word 'वृत्' above indicates the completion of लू (लूञ् छेदने) etc. and not of पू etc. 'केषाञ्चित्' refers to the antagonistic party. दीर्घनिर्देशसामर्थ्यात्—On the score of enjoining दीर्घ। The drift is:—The rule 'प्वादीनां—' cannot apply here in the case of 'जा' the substitute of ज्ञा; for had the ह्रस्वत्व (shortness) of 'जा' been the intention of Panini, he could have said 'ज्ञाजनोर्जः in view of 'ज्ञाजनोर्जा', Thus जानाति etc. Here end प्वादि roots. बन्ध—(to tie) etc. बध्नाति—न of बन्ध is dropped in connection with श्ना (which is ङित्) by 'अनिदिताम्—' (415)। बबन्धिथ—बबन्ध—by भारद्वाज नियम। The latter is thus बन्ध—थल्=बबन्ध थ=बबन्ध् ध by 'झषस्तथोः—' (2280)=बबन्ध by 'झरो झरि—' (71). In both the cases न of बन्ध does not elide for थल् is पित्। Similarly बन्धा। भन्त्स्यति—by 'एकाचो बशो भष्—' (326) and 'खरि च' (121).

बधान—by 'हलः श्नः—' ( 2557 ), 'अनिदिताम्—( 415 ) and 'अतो हेः' ( 2202 ). अभान्त्सीत्—सिच्, इट्, वृद्धि ( 'वदव्रज—' 2268 ) and 'एकाचः—' etc, above. In अबान्धाम्—(अबान्ध् सिच् तस्=अबान्स्—स् ताम्—सिच् ( स् ) disappears by 'झलो झलि' ( 2281 ) before the operation of भष् भाव ( एकाचो बशो भष्—' 326—8. 2. 37 ) which being असिद्ध by 'पूर्वत्रासिद्धम्' ( 12—8. 2. 1 ) would frustrate the सिज्लोप by 'झलो झलि'. भष्भाव i. e. the rule 'एकाचो बशो भष्—' will not take effect ( again ) in connection with the elided ( लुप्त ) स् which forms a सादिप्रत्यय along with ताम् or थाम्—though the elided स् indeed is treated as a प्रत्यय by the rule or परिभाषा—'प्रत्ययलोपे प्रत्ययलक्षणम्' ( 262 ). For सिज्लोप effected by 'झलो झलि' ( 2281—8. 2. 26 ) is ( by the above way ) असिद्ध or non-existant towards the प्रत्ययलक्षण or 'प्रत्ययलोपे प्रत्ययलक्षणम्' ( 1. 1. 62 ). Thus अबान्ध् ताम्—अबान्ध् धाम् by 'झषः —,' अबान्धाम् by 'झरो—' ( 71 ). अभान्त्सुः—वृद्धि etc. as in अभान्त्सीत् and झि is changed into जुस् by 'सिजभ्यस्त—' ( 2229 ). वव्रे—by 'इको यणचि—' ( 47 )—यण्। The root is different form वृञ् वरणे which gives ववार by 'ऋच्छत्यृताम्' ( 2383 ). ववृषे—षत्व by 'इण्कोः' etc. ववृढ्वे—by 'इणः षीध्व'—( 2241 ). वरिता—वरीता by 'वृतो वा' ( 2891 ). अवरिष्ट—अवरीष्ट—अवृत by 'लिङ्सिचोः—' ( 2528 ), 'वृतो वा',—गुणः and 'ऋतश्च संयोगादेः' ( 2368 )— : no guna due to कित्त्व by 'उश्च' ( 2368 ). ग्रन्थ् अतुस् really gives जग्रन्थतुः ; but हरदत्त and others hold that ग्रन्थ् will give also ग्रेथतुः—ग्रेथुः by एत्त्व and अभ्यासलोप due to कित्त्व of लिट् by the rule ( of another grammar ) viz—'श्रन्थि ग्रन्थि दम्भि स्वञ्जीनां लिटः कित्त्वं वा'—(In ग्रेथतुः etc. न of the root is dropped by 'अनिदिताम्—' ( 415 ) due to

this supposed कित्व). This कित्व, according to सुधाकर, takes effect even when a पित् लिट् (as णल् follows; thus श्रेथिथ। In this पक्ष i. e. when a पित् लिट् also is treated as कित्, in णल् (3rd sing.) the form will be शश्राथ by नलोप as before. Madhava asserts that in the 1st. per. sing (by णलुत्तमो वा) the forms will be शश्राथ—शश्रथ। But of this sort of explanation of हरदत्त, सुधाकर and माधव or of Madhava alone the source is to be investigated i. e. we (Bhattoji) cannot trace the origin of the श्रन्थि ग्रन्थि etc. Hence their assertion is not sanctioned by authority. मयं सुखेऽपि as in ऋग्वेद—'अग्ने मह मड्हा असि' 'Oh Agni you are great and therefore make us happy.' कुष to extract—

मित—। इल इति। अङ्गस्येति (६।४।१) अवयवषष्ठ्यन्तं पूर्व्वसूत्रम् । तथावर्त्तते। एवं 'हल' इति पञ्चम्यन्तस्य विशेषणम्। तदाह—अङ्गावयवाद्धल: परमिति। अन्यत् 'संप्रसारणस्य' (६।३।१३९) इत्यनुवृत्तिलभ्यस्य सम्प्रसारणस्य विशेषणम्। तदन्तविधिस्तदाह—यत् सम्प्रसारणं तदन्ताङ्गस्येति। 'ढ्रलोपे पूर्व्वस्य दीर्घोऽणः' (६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते। तदाह—दीर्घ इति। उदाहरणम्—जीनः। ननु तर्हि 'जिनाति' इति ह्रस्व: कथम्। तत्राह—इति दीर्घे कृते इत्यादि—जीभावे जाते प्रादान्तर्भावाद्धस्व इत्यर्थः। जिज्याविति। 'लिट्यभ्यासस्योभयेषा'मिति (२४०८) अभ्यासस्य सम्प्रसारणम्। 'आत औ—' (२३७१) इत्यौकार:। जिज्यतुरिति—ज्या + अतुस् इति स्थिते कित्वात् प्राक् 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। ततः पुन: प्रसक्तविज्ञानात् 'जि'—शब्दस्य द्वित्वम्। तत: 'एरनेकाच:—' (२७२) इति यणि रूपम्। एवं जिज्युरित्यादौ। अङ्गावयवात् किम्? निरुतम्। दुरुतम्। तदन्ताङ्गस्य किम्। विध्यति। सुत:। जिज्यायेति आर्द्धविकल्पात् 'अचो ञ्णिति' (२५४) इति वृद्धि:। केषाञ्चिन्मते तु नेति। ह्रस्वो नेत्यर्थः। येषां मते प्रगताविव्यस्मात् परं पठितत्वच्छन्दे न पादयोऽपि गता इति व्याख्यानं तेषामिति भाव:।

ननु प्वादीनां तन्त्रानुपरम 'ज्ञा अवबोधने' इत्यस्य 'ज्ञाजनोर्जा' इति दीर्घनिर्द्देशात् प्वादीनां ह्रस्व इति ह्रस्वः स्यात्। तत्राह—दीर्घनिर्द्देशसामर्थ्यादिति। प्वादित्वेऽपि आकारोच्चारणात् न ह्रस्व इति भावः। तथाहि—यदि ह्रस्वविधानमेव पाणिनेरभीष्टम्—भविष्यत्तदा 'ज्ञाजनोर्ज' इत्येवमेव अवक्ष्यत् न तु 'ज्ञाजनोर्जा' इति। अतो ज्ञायते दीर्घग्रहणं सप्रयोजनमिति। 'केचित्तु संज्ञापूर्व्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः'—तत्त्वबोधिनी। बध्नाति इति। अनिदितामिति (४१५) नलोपः। बबन्धिथ—बबन्ध इति। भारद्वाजनियमादिट् विकल्पः। तत्रत्व बबन्ध् थल् इति स्थिते 'झषस्तथो:—' (२२८०) इति थस्य धः। 'झरो झरि—' (७१) इति पूर्व्वधकारस्य वा लोपः। एवं बन्धा। बन्धारौ। भन्त्स्यति इति—लृटि रूपम्। 'एकाचो बशो भष्—' (३२६) इति बस्य भष्त्वेन भः। 'खरि च' (१२१) धस्य चर्त्वेन तः। बधानेति—'हलः श्नः—' (२५५७) इति शानच्। 'अतो हेः' (२२०२) इति हेर्लोपः। अभान्त्सीदिति—भष्भावादिः प्रागवत्। 'वदव्रज—' (२२६७) इति वृद्धिः। इटः परत्वाभावात् सिज्लोपाभावः। अबान्ध् सिच् तस् इति स्थिते वृद्धौ—अबान्ध् स् ताम् इति जाते प्रक्रियामाह—पूर्व्वत्रासिद्धमिति। पूर्व्वत्रासिद्धमिति (८।२।१) सूत्रानुसारात्—'एकाचो बशो भष्—' (८।२।३७) इति सूत्रस्य 'झलो झलि' (८।२।२६) इति सूत्रं प्रत्यसिद्धत्वात् भ भावात् पूर्व्वं पूर्व्वं च सिज्लोप इति भावः, 'त्रिपाद्यामपि पूर्व्वं प्रति परं शास्त्रमसिद्धम्' इत्युक्तत्वात्। नन्वेवं सिज्लोपे कृतेऽपि 'प्रत्ययलोपे प्रत्ययलक्षणम्' (२६२—१।१।६२) इति परिभाषासूत्रानुसारात्—प्रत्यय लक्षणेन सादि-प्रत्ययमाश्रित्य भष्भावः स्यादिति चेत् अत्राह—नेति। तत्र युक्तिं दर्शयति—प्रत्ययलक्षणं प्रतीति। सिज्लोपस्यासिद्धत्वादिति—पूर्व्वत्रासिद्धमित्यनुसारादेवेति विभावनीयम्। एवं सिज्लोपात्—अबान्ध् ताम् इति जाते तस्य धत्वं धस्य लोपश्च प्रागवत्। अभान्त्सुरिति। सिजभ्यस्तविदिभ्यश्चेति (२२२६) झेर्जुस्। अन्यत् प्रागवत्। वव्रे इति—दीर्घान्तत्वाभावात् 'ऋच्छत्यॄताम्' (२३८३) इत्यस्याप्रवृत्तेर्गुणाभावेन 'इको यणचि' (२०१) इति यण्। ववृढ्वे इति—'इणः षीध्वं लुङ्लिटाम् —' (२२४७) इति मूर्धन्यादेशः। वरिता—वरीतेति। वृतो वेति (२७९१) दीर्घः।

अवरिष्ट—अवरीष्ट—अस्तरीति । 'लिङ् सिचोः—' (२५२८) इतीड्विकल्पात्, 'वृतो वे'ति दीर्घविकल्पाच्च पूर्वत्रयम् । उत्तरत्र तु इडभावात् 'उश्च' (२३६८) इति कित्त्वम् । ततो गुणाभावः । ततश्च 'ह्रस्वादङ्गात्' (२३६९) इति सिज्लोपः । श्रथ्नाति इति । 'अनिदिताम्—' (४१५) इति श्रन्थेर्नलोपः । 'श्रन्थि ग्रन्थि—' इति । श्रन्थि ग्रन्थि दम्भि स्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरमिति प्रागुक्तम् । श्रेथतुः । श्रेथुरिति । कित्त्वादनिदितामिति नलोपः । श्रेथिथेति—थलः पित्त्वादिति भावः । अशिश्रथीति । सुधाकरमते इत्यर्थः । शश्राथ—शश्रथेति । णलुत्तमो वेति णित्त्वविकल्पात् । तत्र सूत्रं मृग्यमिति । 'श्रन्थि ग्रन्थि—' इत्यारभ्य 'इति माधवः' इत्यन्तं यदुक्तं तस्य मूलं नास्तीत्यर्थः । श्रन्थादेः संयुक्तहल्मध्यस्थत्वात् श्रन्थेरादेशादित्वाच्च सूत्रेण एत्त्वाभ्यास-लोपयोरप्राप्तेर्वार्त्तिकादर्शनाच्चेति भावः । एतच्च नागेशग्रन्थे स्पष्टम् । अन्यत् सुगमम् । कुष—निष्कर्षे इति ।—

२५६० । निरः कुषः ॥७।२।४६॥

टी—। निरः परात् कुषो वलादेरार्धधातुकस्येड् वा स्यात् । निष्कोषिता—निष्कोष्टा । निरकोषीत्—निरकुक्षत् । क्षुभ १५२० सञ्चलने । 'क्षुभ्नादिषु च' (७८२) । क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाण । णभ १५२१ तुभ १५२२ हिंसायाम् । नभ्नाति । तुभ्नाति । 'तोभते' 'नभते' इति शपि । 'नभ्यति' 'तुभ्यति' इति श्यनि । क्लिशू १५२३ विबाधने । 'श्नात्' (११२) इति शुत्वनिषेधः । क्लिश्नाति । क्लेशिता—क्लेष्टा । अक्लेशीत्—अक्लिक्षत् । अश १५२४ भोजने । अश्नाति । आश । उध्रस १५२५ उञ्छे । उकार इत् । ध्रस्नाति । उकारो धात्ववयव इत्येके । उध्रसाञ्चकार । इष १५२६ आभीक्ष्ण्ये । इष्णाति । 'तीषसह—' (२३४०) इत्यत्र सहिना साहचर्या-

दकार—विकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न तु इष्यतीष्णात्योरित्याहुः। एषिता। वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः। तथा च वार्त्तिकम्—'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' (वा ४४३५) इति। विष १५२७ विप्रयोगे। विष्णाति। वेष्टा। प्रुष * १५२८ प्लुष १५२९ स्नेहन—सेवनपूरणेषु। प्रुष्णाति। प्लुष्णाति। पुष १५३० पुष्टौ। पोषिता। मुष १५३१ स्तेये। मोषिता। खच १५३२ भूतप्रादुर्भावे भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। खच्ञाति। वान्तोऽयमित्येके।

The वलादि आर्द्धधातुक of the root कुष्, coming after the उपसर्ग निर्, optionally gets the aug. इट्. Thus निष्कोषिता etc. निरकुचत्—It is formed with क्स attached to कुष् by 'शल इगुपधात्—' (2336) when the वलादि आर्द्धधातुक after कुष् is wanting in the above way. 'षढोः कः—' (295) directs क in place of ष and 'ष्टुना—' (113) directs ष in place of स. No guna due to कित्त्व of क्स. । क्षुभ्नाति—णत्व is prohibited by 'क्षुभ्नादिषु च' (792—8. 4. 39). इति श्नपि i.e. in भ्वादि and इति श्यनि i.e. in दिवादि. In क्लिश्नाति, श does not become ष by ष्टुत्व due to the prohibition 'शात्' (112). क्लेशिता—क्लेष्टा etc. by option of इट् due to ऊदित्व by 'स्वरतिसूति—' (2279). क्लिश्, if not followed by any अच्, will become क्लिष् by 'व्रश्चभ्रस्जसृजमृज—' (294). अक्लिक्षत्—with क्स in the इडभावपक्ष by 'शल etc.' षत्व

* तत्त्वबोधिन्यां तु धातुरयं ऋकारोपधः ( पृष इति ) पठितः।

by 'व्रश्च', कत्व of ष by 'षढो:—'। आश—खिट् of अश् by 'अत आदेः (2248). Here 'तस्मान्नुट—' (2288) does not apply as अश् is not द्विहल् (containing two consonants). उध्रसाञ्चकार—on the assumption that उ is a part of the root which then gets आम् by 'इजादेश—'। आभीक्ष्ण्य implies frequence or excess. The rule 'तीषसह—' (2340) which directs the option of इट् contains इष् along with सह। Thus grammarians hold that इष् in 'तीषसह—' is तुदादि from the fact of its being mentioned with the विकरण श, (श) attached to it, along with सह, affixed with शप् and so the option of it concerns तुदादि इष् only and not दिवादि or क्र्यादि इष्। Thus here according to their opinion 'एषिता' is the only form in तास् and not एष्टा also. But in fact (according to Bhattoji) it is proper to enjoin इट् optionally to इष्णाति also i. e. to इष् read in क्र्यादि (here). For there runs the Varttika 'इषिलकारि—' 'option of इट् is prohibited from इष् to which श्नम् is affixed (i.e. to दिवादि इष) when the root is followed by त (तास्) etc. Thus it is clear that both तुदादि and क्र्यादि इष् gets the option of इट्। पोषिता—Here पुष gets इट् because पुष्य and not पुष् is read in the अनिट्कारिकाs (see 1st line of the sixth verse under 'आत्मनेपदेष्वनत:'—2258) मूल—प्रादुर्भाव means 'the appearance of what is past' or 'the occurrance after the appointed hour.'

मित—। निर इति। 'आर्द्धधातुकस्येट्—(७।२।३५) इति वर्त्तते। 'स्वरति—सूति—' (२२७९) इत्यतश्च वेत्यनुवर्त्तते। निर इति च पञ्चम्यन्तम्। तदाह—निर: पराद्वित्यादि। निरकुषदिति। इडभावेन अनिट्त्वमादाय—'शल इगुपधादनिट:—' (२३३६) इति क्स:। क्त्वान्नगुण:। लुभादिषु चेति। अतो चालं नेत्यर्थ:।

शपीति भ्वादौ। श्यनीति दिवादौ। णत्वनिषेध इति—नकारस्य णकारत्व-निषेधः इत्यर्थः। क्लिश् इति ऊदित्। अतएव 'स्वरतिसूति—' (२२७९) इति इड् विकल्पात् क्लेशिता—क्लेष्टा इत्यादि। 'व्रश्चभ्रस्ज—' ( २९४ ) इत्यारभ्य षत्वम्। ष्टुनेति ( ११२ ) ष्टुत्वम्। अनिट्त्वादिति—इडभावेन क्सः। पूर्ववत् षत्वे कृते षढोरिति ( २९५ ) षस्य कः। इणकोरादेशप्रत्यययोरिति (२११-१२ ) क्सस्य षः। क्ङिन्नात्र गुणः। आशेति। अत आदेरिति अभ्यासदीर्घः। द्विहल्त्वा-भावान्न नुडभावः। उध्मसाञ्चकारेति—मतान्तरेणेदम्। उकारस्यावयवत्वे गुरु-मत्त्वया आम्प्रत्ययः। 'तीषसह—' इत्यत्रेति। अयं भावः—शश्यपोर्विकरणयो-रकारमात्रं शिष्यते। इष इति धातुः सहधातुना सह निर्दिष्टः। स सहः च भ्वादि-शब्विकरणः। तेन अकारशेषत्वरूपविकरणशेषत्वसाम्यात् इष इति तुदादिरेवात्र न तु दिवादिर्नापि क्र्यादिस्तयोरकारशेषत्वाभावात्। अतएव शायते यत् 'तीष सह—' इति इड्विकल्पसूत्रेण तौदादिकस्यैव इषेरिड् विकल्पात इति न तु दैवादिकस्य नापि क्रैयादिकस्येति। अतएव क्र्यादावत्र 'एषिता' इत्येकमेव रूपम् न तु एष्टा इत्यपि इति प्राचीनवैयाकरणानां सिद्धान्तः। तमिमं परिभाव्य ( तिरस्कृत्य ) स्वमतं वितनोति—वस्तुतस्त्विति। इष्यातेरपीति— अत्र क्र्यादौ पठितस्य इषेरित्यर्थः। तत्र प्रमाण-माह—तथा च वार्त्तिकमिति—'श्नन्प्रत्ययात् इषेः तकारे प्रतिषेध' इति वार्त्ति-कान्वयः। अर्थस्तु—श्नन् प्रत्ययो यस्मात् (बहुव्रीहिः) तस्मात् (तादृशात्) इषेः इषधातोः —दिवादेरिषेरित्यर्थः तकारे—तप्रत्यये परे प्रतिषेधः इड्विकल्पः प्रतिषिध्यते इति। तेन तौदादिकस्य—क्रैयादिकस्य चेषेरिड्विकल्पः फलित इति भावः। खच्ञाति इति। शात्परत्वाभावात् नस्य श्चुत्वेन ञः। खान्तोऽयमिति। 'खच भूतप्रादुर्भावे'इत्यपि केचित् पठन्तीत्यर्थः। अतिक्रान्तोत्पत्तिरिति। 'दशममासादि-षूत्पत्स्यमानस्य एकादशमासादिषूत्पत्ति'रित्याहुः।

२५६१। च्छ्वोः शूडनुनासिके च ॥६।४।१९॥

टी—। सतुक्कस्य छस्य वस्य च क्रमात् 'श' 'ऊठ्'

एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच्। खौनीहि। हेठ १५२३ च। ह्टुत्वम्। हेठ्णाति। ग्रह १५२४ उपादाने। स्वरितेत्। 'ग्रहिज्या—' (२४१२)। गृह्णाति। गृह्णीते।

The substitutes 'श्' and 'ऊठ्' (ऊ) are ordered respectively in the place of च्छ, in conjunction with तुक्, i.e. in the place of 'च्छ' and of 'व' when an अनुनासिक (म, न etc), or क्वि (क्विप्, क्विन्) and a झलादि क्ङित् follow. Thus खव्+श्ना+तिप्=ख ऊ नाति (श्ना is ङित्)=खौनाति by 'एत्येधत्यूठ्सु' इति (72) वृद्धिः। चखाव— by 'अत उपधायाः' (2282). [Of च्छ, the instances are विश्न, प्रश्न etc.] The substitute ऊठ्, due to its subsequence, operates prior to शानच् ('हलः श्नः—' 2557—3. 1. 83). And thus it is no longer हलन्त (but अजन्त—'खऊ') and consequently शानच् loses its application. Thus खव्+श्ना+हि=खौनाहि—by ऊठ् and वृद्धि=खौनीहि by 'ई हल्यघोः' (2497) due to अपित्व or ङित्व of हि—'सार्वधातुकमपित्' (2208). हेठ च i.e. हेठ also means भूतप्रादुर्भाव। ष्टुत्वम् i.e. by ष्टुना— (113). ग्रह to take. स्वरितेत् i. e. उभयपदी—

मिता—। च्छ्वोरिति। 'च्छ्' 'व्' इत्यनयोर्द्वन्द्वात् षष्ठीद्विवचनम्। शूठिति। 'श्' 'ऊठ्' इत्यनयोः समाहारद्वन्द्वात् प्रथमान्तम्। सतुक्स्य छस्येति—चकार—सहितस्य छस्येत्यर्थः। सूत्रस्थचकारशाह्यमाह—क्वौ झलादौ च क्ङिति इति। 'अनुनासिकस्य' क्विझलोः—' (२६६६—६।४।१५) इत्यतस्तदनुवर्तनादिति भावः। विश्नः, प्रश्न इत्यादि च्छस्य उदाहरणम्। वस्य तु खव्+श्ना+तिप् इति स्थिते श्नः ङित्वाद् वस्य ऊठि कृते 'एत्येधत्यूठ्सु' (७२) इति वृद्धौ—खौनाती-

तुदाहरणम्। चखावेति—'अत—' (२२८२) इति वृद्धिः। शानचः परत्वादिति। ऊठ इति शेषः। 'च्छ्वोः शूट्—'(६।४।१९) इत्यूठः, 'हलः—शानच्—' (२५५७—३।१।८३) इति शानजपेक्षया परत्वात्तस्मिन् कृते श्नविषयस्य ऊकारान्तत्वेन हलन्तत्वविरहान्न शानच्। 'ई हल्यघोः (2897) इति ईरपित्त्वेन ङित्त्वादीत्वम्। ईठ चेति। अथमपि भूतप्रादुर्भावे इत्यर्थः। स्वरितेदिति—उभयपदीत्यर्थः। उपादानं ग्रहणम्।

२५६२। ग्रहोऽलिटि दीर्घः ॥७।२।३७॥

दी—। एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। लिटि तु जग्रहिथ। गृह्यात्। ग्रहीषीष्ट। 'ह्मयन्त—' (२२९९) इति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीषुः। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत।

## इति तिङन्तक्र्यादिप्रकरणम्

The 'sanctioned' (विहित) इट् coming after 'एकाच्' (monosyllabic) ग्रह is lengthened but not in लिट्. Thus ग्रहीता etc. But in लिट्—जग्रहिथ, जगृहिव etc without lengthening. [The adjective 'एकाच्' in दीक्षित is to exclude 'यङ्लुगन्त' ग्रह (which is अनेकाच्)—जाग्रहिता। And the adjective 'विहित' before 'इट्' is to exclude णिच्—thus ग्राहितम् etc]. गृह्यात्—सम्प्रसारण by 'ग्रहिज्या—' (2412). ग्रहीषीष्ट—there is दीर्घ by this rule (—अलिटि) and not by 'वृतो वा' (2361) which is barred by 'न लिङि' (2529). अग्रहीत् etc.—clear from the text. अग्रहीष्टाम् etc—दीर्घ of इट् by the rule.

Here ends the क्र्यादि class.,

मित—। ग्रह इति। 'एकाच उपदेशे—' (७।२।१०), 'आर्धधातुकस्येट्—' (७।२।३५) इत्येताभ्यां क्रमेण एकाच इति इडिति चानुवर्तते। 'विहितस्ये'ति इटो विशेषणं तत्त्वानुरोधाद्धरदत्तेन विहितम्। अलिटीति प्रसज्य प्रतिषेधस्तदाह—एकाचो ग्रहेरित्यादिना। ग्रहीतेत्याद्युदाहरणम्। एकाचः किम्। जरीगृहिता। जरीगृहिष्यति। यङ्लुगन्तस्य ग्रहेरनेकाच्त्वादप्राप्तिः। विहितस्येति किम्? ग्राहितम्। 'न चात्र णिलोपस्य स्थानिवद्भावाद् ग्रहेः परत्व' नेति वाच्यम्। दीर्घविधौ स्थानिवत्त्वनिषेधात्। त्रैपादिकदीर्घविधावेव स्थानिवत्त्वनिषेध इत्यभ्युपगमे तु विहितविशेषणं व्यर्थमित्याहु'रिति तत्त्वबोधिनी। 'प्रकृतस्येटो ग्रहणात् ग्राहिता ग्राहिष्यत, इत्यादौ चिण्वदिटो न दीर्घः' इति च तत्रैव। अलिटि किम्? जगृहिथ। जगृहिव। जगृहिम। ग्रहादिति, ग्रहिज्येति सम्प्रसारणम्। ग्रहीषीष्ट इति। 'वृत इत्यनुवृत्तेः न लिङि' इति दीर्घनिषेधो न प्रवर्तते इति तत्त्वबोधिनी। वस्तुतस्तु अलिटीत्येवात्र दीर्घ उचितः 'वृतो वा' (२२९१) इत्यनुवृत्तस्य 'न लिङि' इत्यनेन बाधौचित्यादित्यलमुपजीव्यविरोधेन। अग्रहीदिति। स्पष्टं मूले। अग्रहीष्टामिति—ग्रहोऽलिटि इति दीर्घः। एवमन्यत्र। हरदत्तानुरोधेनात्र एकाज् ग्रहणं कृतम्। तत्र दीर्घः सिध्यति। 'लावस्थायामिडि'ति पक्षे (तु) एकाचो विहितत्वाभावाद् दीर्घाप्राप्त्या—असङ्गतमिदं हरदत्तोक्तमिति शब्देन्दुशेखरकाराः।

॥ इति मितभाषिण्यां क्र्यादयः ॥

अथ

# तिङन्तचुरादि-प्रकरणम्



दी—। चुर १५३५ स्तेये।

(1) (2) (3) (4) (5) (6) (7)
२५६२। सत्याप पाश रूप वीणा तूल श्लोक सेना
(8) (9) (10) (11) (12)
लोम त्वच वर्म्म वर्ण चूर्ण चुरादिभ्यो णिच् ॥३।१।२५॥

दी—। एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे—' (ग. सू. २०२) इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। 'पुगन्त—' (२१८८) इति गुणः। 'सनाद्यन्ताः—' (२३०४) इति धातुत्वं। तिप्शबादि। गुणायादेशौ। चोरयति।

To these twelve words and to the roots of the चुरादि class is attached the affix णिच्। The words, beginning with सत्याप (सत्य + आपुक्) and ending in चूर्ण, are adopted here by way of elaborate expression; for (had they not been so mentioned), they could have णिच् by the गणसूत्र 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' in the sense of a root (see under 'ई च गणः'—2573 and 'मुसमिश्रश्लक्ष्ण—' 2677). But चुरादि roots will have णिच् in the sense

of 'it is for his own' ( स्वार्थे ), चुर is not अदन्त। On the other hand, it is रेफान्त—अ being attached only to facilitate pronunciation. Thus the उ of चुर् is the उपधा and as such gets guna by 'पुगन्तलघू-पधस्य च' ( 2189 ). The verbal base ( चोरि ) thus obtained by णिच् is treated as a root by the rule 'सनाद्यन्ताः—' ( 2304) and as such gets शप्, तिप्, गुण and अयादेश। Thus चोरि+शप्+तिप्—चोरे अ ति—चोरय्‌अति—( गुण by 'सार्व—' (2168) and अय by 'एचोऽयवायावः'—61.)—चोरयति। सत्यापयति, विपाशयति etc. See also the नामधातु chapter.

मित—। सत्यापेति। सत्याप ( सत्य+आपुक् ), पाश, रूप, वीणा, तूल, श्लोक, सेना, लोम, त्वच, वर्म, वर्ण, चूर्ण ( द्वादश ), चुरादयश्च इति वचनात् पञ्चमी बहुवचनम्। सत्यापादिचूर्णान्तेभ्यः द्वादशभ्यः प्रातिपदिकेभ्यश्चुरादिभ्यो धातुभ्यश्च णिच् प्रत्ययः स्यादिति सूत्रार्थः। तत्र सत्यापादिशब्दानां ग्रहणं स्पष्टार्थमित्याह—चूर्णान्तेभ्य इति। प्रातिपदिकादिति। गणसूत्रमिदम्। 'इच .नवः' ( २५७२ ) इत्यस्य अधस्तादुपन्यस्तं व्याख्यातञ्च स्वयमेव। सत्यम् आचष्टे करोति वा सत्यापयति पाशात् विमुञ्चति विपाशयति—रूपं पश्यति निरूपयति—इत्यद्युदाहरणानि, च 'मुण्ड-मिश्रश्लक्ष्ण—' ( २६७७ ) इत्यत्र स्पष्टमिति नाथाभिरत्रोपपाद्यन्ते। चुरादिभ्यश्चेति। अत्र तुशब्देन पक्षान्तरं सूचयति। सत्यापादिप्रातिपदिकेभ्यो धात्वर्थे चुरादिभ्यस्तु स्वार्थे इत्यर्थः। चुरादिषु—अकार उच्चारणार्थः। न त्वित्संज्ञकः। प्रयोजनाभावात्। एवमुकारस्य उपधात्वेन णिचि कृते 'पुगन्तलघूपधस्य च' ( २१८९ ) इति गुणः सिध्यति। एवं णिचा 'चोरि' इति लब्धे तस्य धातुसंज्ञार्थमाह—सनाद्यन्ता इति। तिप्शबादि—कर्त्तरि शप्। 'सार्व—' ( २१६८ ) इति गुणः। 'एचोऽयवायावः' ( ६१ ) इत्ययादेशश्च।

२५६४। णिचश्च ॥१।३।७४॥

टी—। णिजन्तादात्मनेपदं स्यात् कर्त्तृगामिनि क्रियाफले।

चोरयति। चोरयते। चोरयामास। चोरयिता। चोर्य्यात्। चोरयिषीष्ट। 'णिश्रि—' (२३१२) इति चङ्। 'णौ चङि—' (२३१४) इति ह्रस्वः। द्वित्वम्। 'हलादिः शेषः' (२१७९)। 'दीर्घो लघोः' (२३१८) इत्यभ्यासदीर्घः। अचूचुरत्। अचूचुरत। चिति १५३६ स्मृत्याम्। चिन्तयति। अचिचिन्तत्। 'चिन्त' इति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्। तेन 'चिन्त्यात्' 'चिन्त्यते' इत्यादौ नलोपो न। चिन्तति। चिन्तेत्। एतच्च ज्ञापकं सामान्यापेक्षमित्येके। 'अत एकहल्—' (२२६०) इत्यत्र वृत्तिकृता 'जगाण' 'जगणतु'-रित्युदाहृतत्वात्। विशेषापेक्षमित्यपरे। अतएव 'आधृषाद्वा' [ग सू. २०२] इत्यस्य न वैयर्थ्यम्। यत्रि १५३७ सङ्कोचे। यन्त्रयति। 'यन्त्र' इति पठितुं शक्यम्। यत्तु इदित्करणाद् यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्। एवं कुद्रितन्त्रिषु। स्फुडि १५३८ परिहासे। स्फुण्डयति। इदित्करणात् स्फुण्डति। 'स्फुटि' इति पाठान्तरम्। स्फुण्टयति। लक्ष १५३९ दर्शनाङ्कनयोः। कुद्रि १५४० अनृतभाषणे। कुन्द्रयति। लड १५४१ उपसेवायाम्। लाडयति। मिदि १५४२ स्नेहने। मिन्दयति—मिन्दति। ओ लडि १५४३ उत्क्षेपणे। ओलण्ड-लण्डयति—लण्डति। ओकार इदित्येके। उकारादिरयमित्यन्ये। उलण्डयति। जल १५४४ अपवारणे। 'लज' इत्येके। पीड १५४५ अवगाहने। पीडयति।

A णिजन्त root takes आत्मनेपद (affixes) when the fruit of the

action accrues to or benefits the agent. Thus चोरयते—etc. चोरयामास—by 'कास्प्रत्ययादाम्—' (2306). गुण and अयादेश as before. चोरयिता with इट् ता (लुट्)। चोर्यात्—आशीर्लिङ्। यासुट् is an अनिट् आर्धधातुक for it is excluded from the वल् प्रत्याहार; hence here णि elides by 'णेरनिटि' (2313). चोरयिषीष्ट—सीयुट् is सेट् hence, इट्, गुण and अयादेश follow. लोट्—चोरयतु। चोरयताम्। लङ्—अचोरयत्। अचोरयत। विधिलिङ्—चोरयेत्। चोरयेत। लृट्—चोरयिष्यति। चोरयिष्यते। लृङ्—अचोरयिष्यत्। अचोरयिष्यत। लुङ्—अचूचुरत्। अचूचुरत—by the rules 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्'etc, cited—in the text in भ्वादि part. चिति (चिन्त् with नुम्) to remember. चिन्तयति। अचिचिन्तत्—as before. The root चिति is made इदित् or the final-इ—eliding. This indicates that णिच् in the case of चिन्त् is optional else he (Panini) could have said 'चिन्त'। Thus in चिन्त्यात् (लिङ्), चिन्त्यते (यक् ते कर्मणि) etc. there is no elision of न (by 'अनिदिताम्—' (415) for the न of चिन्त is the result of इदित्—करण, hence the rule does not apply). This indication (ज्ञापक) viz the reading of 'चिति' in lieu of 'चिन्त' is held by old grammarians as extending to each and every root of the चुरादि class—on the ground that the वृत्तिकृत् (जयादित्य and वामन ?) illustrated जगाण and जगणतुः under 'अत एकहल्—' (2260) though the root गण is not included within घट। [This view is objectionable—as will be clear from the text. Hence Bhattoji says] others hold—that the above indication concerns the particular roots 'चिन्त' etc. only. Hence it is that the गणसूत्र 'आ धृषाद् वा' or 'Roots upto 'धृष' take णिच् optionally' is not frustrated..

[ This is a moot point, see मित—below. ] यत्रि to contract. We can ( or Panini could have ) read as 'यन्त्र' in place of यत्रि। For as the न in 'यन्त्र' is not the penultimate of the root so it would not have been dropped by 'अनिदिताम्—' ( 415 ) in fear whereof Panini has appointed 'यत्रि' in place of 'यन्त्र'। Thus the इदित्करण fails here. And the assertion of Madhava that इदित्करण leads to यन्त्रति etc. is objectionable ( on the same ground as expressed above viz Panini's इदित्करण is hollow and not sound ). Thus कुद्रि, तत्रि and मत्रि also should be read as कुन्द्र, तन्त्र and मन्त्र for the same reason. कुद्रि to speak untruth. लड to fondle as लाडयति पुत्रम् also लडयति जिह्वाम् ( under भ्वादि ) also लालयति due to the similarity of ड and ल। श्री लडि to throw up, Some say that 'ड' here is to be dropped ( for reason see मित— ). जल to prevent is also read as लज। पीड़ to obstruct.—

मित—। णिचश्चेति। येन विधिस्तदन्तस्येत्यत आह—णिजन्तादिति—'अनुदात्तङित आत्मनेपदम्' ( १।३।१२ ) इत्यत आत्मनेपदमित्यनुवर्तते। 'स्वरितञित कर्त्रभिप्राये क्रियाफले' ( १।३।७२ ) इत्यतः 'कर्त्रभिप्राये क्रियाफले' इति च। तदाह—आत्मनेपदमित्यादि। चोरयामासेति। प्रत्ययान्तत्वादाम्—'कास्प्रत्ययात्—' (२३०६) इति। चोर्यादिति—आशिषि लिङि रूपम्। यासुटः वलप्रत्याहारान्तर्भावेन अनिडार्द्धधातुकत्वात् 'णेरनिटि' ( २३१३ ) इति णिलोपः। चोरयिषीष्टेति। सीयुटः सेडार्द्धधातुकत्वम्, इड्गुणायादेशाः। लुङि प्रक्रियाम् दर्शयति—'णिश्रि—' ( २३१२ ) इत्यादिना। अचिचिन्तदिति। अत्र संयोगपरत्वेन गुरुमत्त्वया अभ्यास-दीर्घाभावः। 'चिन्त' इति पठितव्ये इति—यदि 'चिति' स्मृत्यामित्येवमपठित्वा 'चिन्त' इत्यपठिष्यत्तथापि णिच्‌व्यवहितत्वेन अनिदितामित्यस्याप्रवृत्तेर्नलोपानिष्टत्वा 'चिन्त्यात्'

चिन्त्यते' इत्यादि सिद्ध्येव। न च 'णेरनिटि' इति णिलोपे सति नलोपो दुर्वार इति वाच्यम्। 'प्रत्ययलोपे प्रत्ययलक्षण' मिति अत्र णिचः सत्त्वाश्रीकारात् तन्न भवति। तदेवं सिद्धेऽपि य'चिति' इतीदित्करोति तेन ज्ञायते णिचो नित्यत्वेऽपि इह चितिधातौ तस्य वैकल्पिकत्वमिति भावः, अन्यथा इदित्करणं व्यर्थं स्यात्। पाक्षिकत्वमेवोदाहरति—चिन्तति। चिन्तेदित्यादि। नागेशस्तु भाष्यविरुद्धमेतदिति मत्वा नेदं ज्ञापकमनुमन्यते इति'—शेखरे' स्पष्टम्। एतच्च ज्ञापकमिति—वृत्तिकृत्सम्मत्या इदम्। सामान्यापेक्षमिति—सर्वचुरादिधातुविषयकमिति भावः। वृत्तिकृत्सम्मतिमेवाह—जगाण, जगणतुरित्यादाहृतत्वादिति। चुरादिणिचो नित्यत्वे हि गणयामासेत्यादेव स्यादिति भावः। तदेतदरुचिकरमित्याह—विशेषापेक्षमिति। चितिमात्रापेक्षमिति इति बालमनोरमा। असंयोगोपधेकारान्तरूप-विशेषापेक्षमिति तु तत्त्वम्। तेन चिति, तुजि इत्यादेरिकारोपधधातोर्णिज्—विकल्पः सिध्यति। तत्र सूत्रद्वयवचनमेव मानमित्याह—अत एवेति। चुरादीनां सर्वेषामेव णिज्विकल्प इति न, किन्तु नित्य एव णिच्। अन्यथा 'आ धृषाद्वा' इत्यत्र वावचनम् निरर्थकम् स्यात्। तस्माज् ज्ञापकमिदं विशेषापेक्षमित्येव न्याय्य इति भावः। 'न च पूर्वोक्तपक्षस्य शिथिलत्वे जगाण, जगणतुरिति वृत्तिप्रयोगः कथं संगच्छतामिति वाच्यम्। स्वादेराकृतिगणत्वात् तत्तत्धातोस्तद्रूपसिद्धे'रिति तत्त्वबोधिनी। 'यन्त्र' इति पठितुं शक्यमिति। अयं भावः—यस्य धातोर्नकारोपधत्वं भवति तस्यैव 'अनिदिताम्—' (४१५) इति नलोपो मा भूदिति कृत्वा इदित् पाठः सार्थकः। चिति, मिदि इति यथा। यस्य तु धातोर्नकारस्य उपधात्वं न सम्भवति तस्यापि इदित्पाठो व्यर्थ एव। नोपधात्वाभावादेव 'अनिदिताम्' इत्यस्याप्रवृत्तेः। ततश्च यति—तति-मन्त्रादयः 'यन्त्र-तन्त्र-मन्त्र' इत्येव पाठ्याः। एवञ्च माधवोक्तमपि परास्तमित्याह—तच्चिन्त्यमिति। उक्तरीत्या नस्योपधात्वाभावेन नलोपाप्रसक्त्या इदित्करणस्य वैयर्थ्यादिति भावः। एवं कुद्रीति। इदित्करणं व्यर्थमिति शेषः। उपसेवायामिति। 'स्नेहपूर्वक सेवोपसेवा' इति तत्त्वबोधिनी। लाडयतीति। डलयोरेकत्वात्लालयतीत्यपि। औकार इदिति। वृद्धिनिषेधार्थमिदम्। पीड अवगाहने इति। अवगाहनं पीडनं बाधनमित्यर्थः।

२५६५। भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥७।४।३॥

दी—। एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ। अपीपिडित्—अपिपीडत्। नट १५४६ अवस्कन्दने। अवस्कन्दनं नाट्यम्। श्रथ १५४७ प्रयत्ने। 'प्रस्थाने' इत्येके। बध १५४८ संयमने। बाधयति। 'बन्ध' इति चान्द्रः। पॄ १५४९ पूरणे। पारयति। दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम्। तद्धि सेट्कत्वाय। एवञ्च पृणातिपिपर्तिभ्यां 'परिता' इत्यादि सिद्धावपि—पारयति परति परत इत्यादिसिद्धिः फलम्। ऊर्ज १५५० बलप्राणनयोः। पक्ष १५५१ परिग्रहे। वर्ण १५५२ चूर्ण १५५३ प्रेरणे। 'वर्ण वर्णने' इत्येके। प्रथ १५६४ प्रख्याने। प्राथयति। 'नान्ये मितोऽहेतौ' इति वक्ष्य—माणत्वान्नास्य मित्त्वम्।

The penultimate of these roots (seven only ) is short ( ह्रस्व ), when the affix णि, followed by चङ्, follows. Thus अपीपिडत् in the ह्रस्वपक्ष: here the अभ्यास becomes दीर्घ, by 'दीर्घो लघोः' ( 2318 ) and अपिपीडत् in the दीर्घपक्ष। अभ्यास ह्रस्व by the rule 'ह्रस्वः' ( 2180 ) Similarly अबिभ्रजत्—अबभ्राजत् ; अबीभसत्—अबभासत् ; अबीभषत्—अबभाषत् etc. In अबिभ्रजत्, बि being संयोगपर ( भ्र ), is not ह्रस्व and so 'दीर्घो लघोः' does not apply. इत्त्व by सन्यतः (२३१७). संयमन means to bindor hinder. दीर्घोच्चारणम् etc.—The pronunciation of दीर्घ i.e. the utterance of double ऋ in पॄ indicates alternation of णिच्. Because दीर्घ ॠ makes the root सेट् cp. the अनिट् कारिका No 1. 'ऊदॄदन्तैः—' etc. under Rule No. 2258. Thus परिता—परीता ( by 'वॄतो वा'—2391 ).

are formed. Though परिता—परीता can also be formed in the the case of पृणाति ( पृ क्र्यादि ) and पिपर्ति ( पृ—जुहोत्यादि ) yet to have पारयति—as also परति i. e. the option of णिच् in पृ, is the result of the दीर्घोच्चारण, otherwise दीर्घोच्चारण has no utility. ह्रस्वोच्चारण in 'पृ' also giving पारयति । '[Nagesha asserts that as the दीर्घोच्चारण is dubious so this suggestion of Bhattoji fails like the above—'इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्' in the case of चिति ]. ऊर्ज to strengthen or enliven. The root प्रथ gives प्राथयति and not प्रथयति by the गणसूत्र 'नान्ये मितोऽहेतौ' to be stated under (2570).

मित—। भ्राजभासेति। एषां सप्तानां द्वन्द्वात् षष्ठीबहुवचनम्। 'णौ चङ्युपधाया ह्रस्वः' (७।४।१) इति सूत्रमनुवर्तते। तदाह—एषामुपधाया—ह्रस्व इत्यादि। अपीपिडत्—अपिपीडदिति। ह्रस्वत्वम् अङ्गस्यैव न त्वभ्यासस्य। आद्यपक्षे 'चङि' इति ह्रस्वस्य धातोर्द्वित्वे सन्वदिति सन्वद्भावात् 'सन्यतः' इति इत्त्वे दीर्घो लघोरिति अभ्यासस्य दीर्घः। द्वितीयपक्षे दीर्घस्य धातो द्वित्वे सन्वत्त्वाभावेन 'दीर्घः—' इत्यस्याप्रवृत्तेः 'ह्रस्वः' इत्यभ्यासह्रस्वः। पूर्वपक्षे अभ्यासस्य दीर्घः धातोर्ह्रस्वः। उत्तरपक्षे अभ्यासस्य ह्रस्वः धातोर्दीर्घ इति विशेषः। दीर्घोच्चारणमिति। पॄ इत्यत्र दीर्घस्य ऋकारस्य ग्रहणं णिज्विकल्पं लिङ्गयति ज्ञापयतीत्यर्थः। तत्र युक्तिमाह—तद्धीति—हि यतः तत् दीर्घोच्चारणम् सेट्कत्वाय—सेट्कस्य भावः तस्मै। धातुरयं सेट्को यथा भवेदिति कृत्वायं दीर्घकारान्तः पठितः। 'ऊदृत:—' इत्यनिट्कारिकासु—ह्रस्वकारान्तस्यैव इण्निषेधात्। नन्वेवं दीर्घोच्चारणं किं 'वृतो वा' (२३०१) इति परिता—परीता इति दीर्घविकल्पार्थम्? तच्च क्र्यादिजुहोत्यादौ पठितयोः पृणात्योरपि लभ्यते इति चेत्। सत्यम्। परिता—परीतेत्यनयोः क्र्यादिजुहोत्यादिभ्यां सिद्धावपि—णिज विकल्पज्ञापनमेवात्र फलमित्याह—एवञ्चेत्यादिना। नागेशस्तु—दीर्घोच्चारणस्य सन्दिग्धत्वादिदमपि ज्ञापकफलं चिन्त्यमित्याह। बल—प्राणनयोरिति—बलाधानसजीवकरणयोरित्यर्थः। ऊर्जयति—और्जिजत्—प्राथयति

इति। 'अचो ञ्णिति' इति णिचि परे वृद्धिः। 'नान्ये मितोऽहेतौ' इति वक्ष्यमाणत्वादिति। गणसूत्रमिदम् 'घटादयः षितः' इत्यस्याधस्तादनुगन्तव्यम्। मित्त्वमिति ह्रस्वत्वमित्यर्थः। 'मितां ह्रस्वः' ( 2568 ) इति सूत्रात्।

## २५६६। अत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशाम् ॥७।४।९५॥

**टी—। एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ। इत्त्वापवादः। अपप्रथत्। पृथ १५५५ प्रक्षेपे। पर्थयति।**

अकार is the final substitute for the अभ्यास of these roots (स्मृ, दॄ etc.—seven only ) when णि, followed by चङ्, follows. This bars इत्त्व directed by 'सन्यतः' ( 2317 ). Thus अपप्रथत्। पृथ to throw into :—

मित—। अत्स्मृ इति। 'सन्वल्लघुनि चङ्परे—' ( ७।४।९ ) इत्यतश्चङ्परे इति। 'णौ चङ्युपधायाः—' ( ७।४।१ ) इत्यतो णाविति। 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) इत्यतोऽभ्यासस्येति चानुवर्तते। तदाह—एषामभ्यासस्येत्यादि। एषामिति स्मृदॄप्रभृतीनां सप्तानाम्। अदिति तपरकरणात् अकारमात्रस्य ग्राहकम्। 'अलोऽन्त्यस्य' इत्युपतिष्ठते। तदाह—अकारोऽन्तादेशः स्यादिति। इत्त्वापवाद इति—'सन्यतः' इत्यस्यापवाद इत्यर्थः। अपप्रथदिति। 'णिश्रि—' इति चङ्। 'चङि' इति द्वित्वम्। हलादिशेषः अत्त्वं च। एवमसस्मरत्। अददरत्। अतत्वरदित्यादि। पृथ प्रक्षेप इति। लघूपधगुणेन—पर्थयति।

## २५६७। उर्ऋत् ॥७।४।७॥

**टी—। उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ। इररारामपवादः। अपीपृथत्—अपपर्थत्। 'पथ' इत्येके। पाथयति। षम्ब १५५६ सम्बन्धने। सम्बयति। अससम्बत्। शम्ब १५५७ च। अशशम्बत्। 'साम्ब' इत्येके। भक्ष १५५८**

अदने। कुट्ट १५५९ छेदनभर्त्सनयोः। 'पूरणे' इत्येके। कुट्टयति। पुट्ट १५६० चुट्ट १५६१ अल्पीभावे। अट्ट १५६२ षट्ट १५६३ अनादरे। अट्टयति। अयं दोपधः। ष्टुत्वस्यासिद्धत्वात् 'नन्द्राः—' ( २४४६ ) इति निषेधः। आट्टिटत्। लुण्ठ १५६४ स्तेये। लुण्ठयति। 'लुण्ठति' इति 'लुण्ठि स्तेये' इति भौवादिकस्य। शठ १५६५ श्वठ १५६६ असंस्कारगत्योः। 'श्वठि' इत्येके। तुजि १५६७ पिजि १५६८ हिंसाबलादाननिकेतनेषु। तुञ्जयति। पिञ्जयति। इदित्करणात् तुञ्जति पिञ्जति। 'तुज' 'पिज' इति केचित्। 'लजि' 'लुजि' इत्येके। पिस १५६९ गतौ। पेसयति। 'पेसति' इति तु शपि गतम्। षान्त्व १५७० सामप्रयोगे। श्वल्क १५७१ वल्क १५७२ परिभाषणे। ष्णिह १५७३ स्नेहने। 'स्मिट' इत्येके। स्मिट १५७४ अनादरे। अषोपदेशत्वान्न षः। असिस्मिटत्। 'स्मिङ्' अनादरे इत्येके। ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्। स्माययते। श्लिष १५७५ श्लेषणे। पथि १५७६ गतौ। पन्थयति—पन्थति। पिच्छ १५७७ कुट्टने। छदि १५७८ संवरणे। छन्दयति—छन्दति। श्रण १५७९ दाने। प्रायेणायं विपूर्वः। विश्राणयति। तड १५८० आघाते। ताडयति। खड १५८१ खडि १५८२ कडि १५८३ भेदने। खाडयति। खण्डयति। कण्डयति कुडि १४८५रक्षणे। गुठि १५८५ वेष्टने। 'रक्षणे' इत्येके। 'कुठि' इत्यन्ये। अवकुण्ठयति—अवकुण्ठति। 'गुधि' इत्यपरे। खुडि १५८६ खण्डने। वटि १३८७ विभाजने। 'वडि' इत्येके। मडि

१५८८ भूषायां हर्षे च। भडि १५८९ कल्याणे। छर्द १५९० वमने। पुस्त १५९२ बुस्त १५९१ आदरानादरयोः। चुद १५९३ सञ्चोदने। नक्क १५९४ धक्क १५९५ नाशने। णोपदेशलक्षणे 'पर्युदस्तोऽयम्। प्रनक्कयति। चक्क १५९६ चुक्क १५९७ व्यथने। क्षल १५९८ शौचकर्म्मणि। तल १५९९ प्रतिष्ठायाम्। तुल १६०० उन्माने। तोलयति। अतूतुलत्। कथं 'तुलयति तुलना' इत्यादि। 'अतुलोपमाभ्याम्—' (६३०) इति निपातनादादन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच्। दुल १६०१ उत्क्षेपे। पुल १६०२ महत्त्वे। चुल १६०३ समुच्छ्राये। मूल १६०४ रोहणे। कल १६०५ विल १६०६ क्षेपे। बिल १६०७ भेदने। तिल १६०८ स्नेहने। चल १६०९ भृतौ। पाल १६१० रक्षणे। लूष १६११ हिंसायाम्। शुल्ब १६१२ माने। शूर्प १६१३ च। चुट १६१४ छेदने। मुट १६४१ संचूर्णने। पडि १६१६ पसि १६१७ नाशने। पण्डयति—पण्डति। पंसयति—पंसति। व्रज १६१८ मार्गसंस्कारगत्योः शुल्क १६१९ अतिस्पर्शने। चपि १६२० गत्याम्। चम्पयति—चम्पति। क्षपि १६२१ क्षान्त्याम्। क्षम्पयति—क्षम्पति। छजि १६२२ कृच्छ्रजीवने। श्वर्त्त १६२३ गत्याम्। श्वभ्र १६२४ च। ज्ञप १६२५ मिच्च अयं ज्ञाने ज्ञापने च वर्त्तते।

A short ऋ occurring in the room of the penultimate is replaced by (another) short ऋ when णिच्, followed by चङ्,

follows (such roots as पृथ etc). This overrules इक्, अक् (i. e गुण) and आर् (i. e. वृद्धि). [ इक् is directed by the rule 'उपधायाश्च, (2571) e. g. कीर्तयति, अचिकीर्तत् etc. अर or गुण is directed by 'पुगन्त—' (2189) e. g. पर्थयति, अपपर्थत् etc. आर् or वृद्धि is directed by 'मृजेर्वृद्धिः' (2473) e. g. अममार्जत् (see under—णिश्रिद्रुस्रुभ्यः— 2589). These (इक्, अक् and आर्) being barred we should have respectively अचीकृतत्, अपीपृथत् and अमीमृजत् as alternatives. The procedure in अपीपृथत् is thus—पृथ्+णिच्+तिप्=अट् पृथ् णिच् चङ् त्=अ पृथ पृथ ० चङ् त (The root is अनिट् hence णिच् elides by णेरनिटि—2313)=अपपृथ् अत् by 'उरत्' (2244) 'उरण्—(70) and 'उरत्' (2567)=अप पृथत् by 'हलादिः शेषः'=अपीपृथत् by 'सन्वल्लघुनि—' (2216) 'सन्यतः' (2317) and दीर्घो लघोः' (2318). And in the case of अपपर्थत् the process is the same except गुण of the root itself. सन्वद्भाव इत्व and दीर्घ all these functions do not apply due to दीर्घपरत्व of the अभ्यास (cp 'तस्य योऽभ्यासो लघुपरः' under 'सन्वत्—' 2316). अड्ड to disregard. This root has a डकार in the room of its उपधा (अड्+ड) and not a टकार (अट्+ड). ष्टुत्व etc.—Now in लुङ्, two rules (at first) come to take effect viz—'ष्टुना ष्टुः' (113—8. 4. 41) and 'अजादेर्द्वितीयस्य' (2176—6. 1.2); of these the former (8, 4, 41) fails due to its असिद्धत्व by 'पूर्वत्रा-सिद्धम्' (8. 2. 1) with reference to the latter (6. 1. 2). The latter again is superseded by 'न न्द्राः—' (2446). Thus ट gets द्वित्व and not द. Thus अदड्+णिच्+तिप्=आट् आदटि+चङ् तिप्= आ आदटि टि अत्=आ आदटि टत् by णिलोप=आड्टित् by ष्टुत्व (113). But had it been taken टोपध, the form would have been

आटिट्टत् due to the duplication of 'ट' which (form) is not sanctioned by usage. इदित्करणात् etc.—This इदित्करण like that in the case of चिति indicates पाक्षिकत्व of णिच्। Hence तुञ्जति etc. are alternative forms. षान्त्व to adopt peaceful measures—सान्त्वयति etc. by 'धात्वादेः षः सः.' असिष्मिटत्—by 'णौ च—(2315) घेरनिटि—(2313) 'षत्वे' (2315). No सन्वद्भाव for the अभ्यास is दीर्घपर (स्मि) and not लघुपर. ङित्त्वस्यावयवे etc. ङित्त्व being of no avail towards the अवयव (of स्मायि—स्मिङ्+णिच्), तङ् or आत्मनेपद is directed to the णिजन्त form स्मायि। The idea is this:—स्मिङ् is read with the indicatory ङ् and also णिच् is to be added to it. Then what is the need of ङ्? It can not by 'अनुदात्तङित:—' direct आत्मने. to स्मिङ्. for it will cease to be ङित् after णिच् has been added to it. Moreover, there runs the rule 'णिचश्च' (2564) meaning 'णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले'. Thus each and every णिजन्त root will have तङ् optionally. Hence Bhattoji comments that ङित्त्व or ङ-लोपित्व is व्यर्थ or needless in स्मिङ् and as such i.e. being व्यर्थ or अचरितार्थ suggests that the root (with णिच् added to it) will have तङ् or आत्मनेपद affixes alone and not the परस्मै. affixes also. Thus स्माययते (स्मि+णिच्=स्मायि by अचो ञ्णिति; स्मायि+शप् ते=स्माये+अते by 'सार्व—(2168)=स्माययते by अयादेश). पन्थयति—पन्थति like चिन्तयति—चिन्तति। प्रायेणायम् etc.—Hence अमर has 'विश्राणनं वितरणम्' etc. अवकुण्ठति like चिन्तति. धोपदेश etc.—Here अयम् refers to नक्ष. cp. the line of भाष्य—'अनेड्नाटिनक्ष—' etc. Hence प्रनक्षयति etc.

will not have णिच्. तोलयति—by 'पुगन्त—' ( 2189 ). अतूतुलत्—by 'सन्वत्—' ( 2316 ) and 'दीर्घो लघोः' ( 2318 ). कथं तुलयति तुलना —etc. Strictly speaking these forms should have been तोलयति तोलना etc. by 'पुगन्त—'. Hence Bhattoji explains them otherwise; there is the word 'तुला'—an आकारान्त primitive word or प्रातिपदिक irregularly formed, cp the rule 'तुल्यार्थैर-तुलोपमाभ्यां—' (630). Thus तुलयति is formed by 'प्रातिपदिकाद्धा-त्वर्थे बहुलमिष्ठवच्च' ( गणसूत्र under 'धू च गणः'—2573 ). and तुलना by the affix युच्। चम्पयति—चम्पति like चिन्तयति—चिन्तति. नुम्, अनुस्वार and परसवर्ण। The root ज्ञप् is मित् and means to learn and to inform.

मित—। उरिति। 'ऋ' इत्यस्य षष्ठ्येकवचनम्। स्थानषष्ठी। तदाह— उपधाया ऋवर्णस्य स्थाने इति। वृत्तौ 'उपधाया' 'वा', 'चङ्परे णौ' इति च 'णौ चङ्युपधायाः—' इत्यतः 'जिघ्रतेर्वा' इत्यतश्चानुवृत्तम्। इरारामपवाद इति। इर्, अर्, आर्, एषां द्वन्द्वान्तानां षष्ठीबहुवचनम्। अचिकीर्तदित्यादौ 'उप-धायाश्च' (२५७१) इतीर्प्राप्तः। प्रकृते तु लघूपधगुणेन रपरत्वे च अपपर्थ-दित्यर् प्राप्तः। अमीमृजदित्यत्र च 'मृजेर्वृद्धि'रित्यार् प्राप्तः। अनेन तु एते सर्वे-ऽपोद्यन्ते इति भावः। अपीपृथदिति। अभ्यासस्य 'उरत्' (२२४४) इत्यदादेशः। 'उरण्—' (७०) इति रपरत्वम्। ततः पृ इत्यङ्गस्य ( उत्तरखण्डस्य ) लघु-त्वादभ्यासस्य लघुपरत्वम्। ततश्च— 'सन्वत्—' (२३१६), 'सन्यतः' (२३१७) 'दीर्घो लघोः' (२३१८) इत्येषां प्रवृत्त्या रूपसिद्धिः। 'णेरनिटि' (२३१२) इति तु चङि कृते प्रयोज्यं ततो द्वित्वादि। ऋदुपधस्य पाक्षिकत्वाद् रूपान्तर-माह—अपपर्थदिति। द्विर्वचनेऽचीति निषेधात् गुणात् प्राग् द्वित्वम्। उरदत्व— रपरत्वहलादिशेषाः प्राग्वत्। णिचमाश्रित्य ऋकारस्य गुणः। रपरत्वम्। 'पर्थ' इत्यस्य दीर्घत्वेन अभ्यासस्य लघुपरकत्वाभावात् सन्वद्भावत्वादिविरहः। असमञ्च-

दिति। लघुपरकत्वाभावात् सन्भावादिर्न। अयं दीपश्च इति। अयमिति अट्ट (अट्ट+ट इति च्छेदः)। ष्टुत्वस्यासिद्धत्वादिति—अतएव 'ष्टुना—' (११२) इति न प्रवर्त्तते। दकारस्य 'न न्द्राः—' इति निषेधात् न द्वित्वमपि। अतः परिशेषादस्य 'टि'भागस्यैव द्वित्वम्। एवम् 'आददि टस्' इति जाते ष्टुत्व चर्त्वाभ्याम् आड्डिटदिति। 'अयं दीपश्च' इत्याद्यनुक्तौ तु आटिट्टदित्यनिष्ट' रूपं स्यात्। इदित्करणात् नुम्बति इति। चितिवदव द्रष्टव्यम्। एवमन्यत्रैवंविधस्थले। अचिच्चिटदिति—लघुपरकत्वाभावान्न सन्वत्त्वदीर्घौ। 'ङित्त्वसा'वयवे इति—चिङ् इति ङिद्भवति। चिच्प्रत्ययश्चास्माद् भवति। यदायं णिजन्तो भवति तदा 'च्चायि' इत्येवं रूपं सम्पद्यते। तत्र रूपम् 'णिचश्च' (२५६४) इत्यनुसारात् कर्त्रभिप्राये क्रियाफले आत्मनेपद-संज्ञां लभते एव। एवञ्च ङित्करणं व्यर्थम्। केवलस्य धातोः प्रयोगाभावात्। अत आह— ङित्त्वस्य (ङकारस्य) अवयवे (चिङ्रूपे) अचरितार्थत्वात् (व्यर्थत्वात्) णिजन्तात् (णिप्रत्ययान्तात्) तङ् आत्मनेपदम्) इत्यर्थः। एवञ्च ङकारोऽयं व्यर्थः सन् तङो नित्यत्वे लिङ्गम्। अतएवाह—चाययते इत्येव। न तु चाययति इत्यपि। न च ङिदयं णिचो वैकल्पिकत्वे लिङ्गमित्यस्त्विति वाच्यम् 'चिवक्कादावुक्तन्यायस्य क्लृप्तत्वात् शास्त्र-बाधस्य अन्याय्यत्वाच्च णिचो वैकल्पिकत्वं नोक्तमि'ति नागेशः। चाययते इति। णिचि 'अचो ञ्णिति' (२५४) इति वृद्धौ चायि इति जाते 'सार्वधातुकार्ध—' (२१६८) इति गुणः। अयादेशश्च। प्रायेणायं विपूर्व्व इति—'विश्राणनं वितरणम्' इत्यमरादौ दर्शनादिति भावः। पर्य्युदासोऽयमिति—'नक्क' णोपदेशो नोक्त इति भावः। तथा च भाष्यवचनम् 'णोपदेशास्त्वनर्द्द नाटि—' (२२८६—णोनः) इति। तोलयति इति। लघूपधगुणेन रूपम्। अतूतुलत् इति। लघुपरत्वाद-चूचुरदितिवत् सन्वत्त्वदीर्घौ। तुलयति तुलनेत्यादौ गुणादर्शनात् पृच्छति—कथमिति। समाधत्ते—अतुलोपमाभ्यामिति। अत्र तुलाशब्दोऽव्युत्पन्नः स्वीकृतः। तस्मात् 'प्राति-पदिकाद्धात्वर्थे बहुलमिष्टवच्च' (ग-सू—२५७३) इति णिचि तुलयति इति लभ्यते। तुलनेति तु 'ण्यासश्रन्थो युच्' इति युच्। तत्रापि लभ्यम्। छपमिवेति।

मित्संज्ञकमित्यर्थः। अत्र धातुपाठे अर्थयोगादर्शनात् स्वयं व्याचष्टे—अर्थं ज्ञाने ज्ञापने चेति। 'चान्मारणादावपीत्यर्थ' इति नागेशः। संज्ञपयति पशुम्। अथ मित्करणफलमाह—

२५६८। मितां ह्रस्वः॥ ६।४।९२॥

दो—। मितामुपधाया ह्रस्वः स्याणौ परे। ज्ञपयति। यम १६२६ च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनम्। न तु भोजना* नापि वेष्टना। यमयति चन्द्रम्। परिवेष्टत इत्यर्थः। चह १६२७ परिकल्कणे।‡ चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वात्-दीर्घसन्वद्भावौ न। अचचहत्। 'चप' इत्येके। चपयति। रह १६२८ त्यागे इत्येके। अरीरहत्। कथादेस्तु अररहत्। बल १६२९ प्राणने। बलयति। चिञ् १६२८ चयने।

The penult—or उपधा of roots, classified as मित्, become ह्रस्व (short) when णि follows. Thus ज्ञपयति. [for ज्ञापयति see 'मारणतोषणनिशामनेषु (or निशानेषु) ज्ञा' (८११) under 'व्यथो लिटि' (2358)].

The root यम also is मित् in the sense of परिवेषण or encircling. This परिवेषण does neither mean भोजना (eating) nor वेष्टना (lengthening or engaging). Thus यमयति चन्द्रम्। The idea is this;—In घटादि, there runs the गणसूत्र 'यमोऽपरिवेषणे' (193) where 'परिवेषण' is derived with ल्युट् (अनट्) in हेतुमण्णिच्,

---

* भोजनं...वेष्टनमित्यपि पाठः।

‡ परिकल्पने इत्यपि पाठः।

And this 'परिवेषण' means 'भोजना' and 'वेष्टना' whereas the word 'परिवेषण' occurring in 'शम च परिवेषणे' ( here in चुरादि ) is formed with ल्युट् attached to परि—विष् ( without णिच् ). Thus वेष्टना also like भोजना being the sense of परिवेषण, the root शम would have been मित् due to its अमन्तत्व ( ending in 'अम्' ) by the गणसूत्र 'जनीजृष् क्नसुरञ्जोऽमन्ताश्च' ( 188 ). But there runs the counteracting or अपवाद गणसूत्र 'न कम्यमिचमाम्' ( 191 ) the 'न' or prohibition of which extends to 'शमोऽपरिवेषणे' ( 193 ). Thus मित्त्व is prohibited there in the sense of वेष्टना। Hence Bhottoji says—'परिवेषण-मिह वेष्टनम्।' 'न तु भोजना नापि वेष्टना' so that शम can have मित्त्व in the sense of वेष्टन or circumfusion (consult Nagesha and also 'मित' below). चह to deceive is also मित् hence—चहयति etc. with उपधाह्रस्व. अचीचहत्—by 'णिश्रि—', 'चङि', 'णौ चङ्युपधायाः—', 'णेरनिटि', 'सन्वत्—', 'सन्यतः' and दीर्घः—' ( 2318 ). The root चह is to be read under कथ etc. which are अदन्त or end in अ. And of कथ etc. this 'अ' will elide by 'अतो लोपः' ( 2308 ). Thus the root (चह) will become अग्लोपी। Hence it will fall beyond the jurisdiction of सन्वत्त्व and consequently of दीर्घ cp 'सन्वल्लघुनि चङ् परेऽनग्लोपे' ( 2316 ) etc. Thus चह read under कथादि will have 'अचचहत्' with चङ्। अचीरहत्—अररहत् like अचीचहत्—अचचहत्। चिञ् to pluck.

मित—। मितामिति। 'ऊदुपधाया गोहः' ( ६।४।८९ ) इत्यत उपधाया इति। 'दोषो णौ' ( ६।४।९० ) इत्यतो णाविति चानुवर्तते। तदाह—मिता-मित्यादि। ज्ञपधातुमारभ्य चिञ् ( १६३० ) चयने इत्यन्तं मित्संज्ञा। तेनाह—चान्मिदिति। परिवेषणमिह वेष्टनमिति। इह परिपूर्व्वाद् विषेः केवलादेव ल्युडित्यर्थः।

'यमोऽपरिवेषणे' ( १९३ ) इति। घटाद्यन्तर्गणसूत्रे तु परिवेषणे इति परिपूर्व्वात् विषेर्णिजन्तादेव ल्युडिति भावः। पूर्व्वत्र णिजभावो वेष्टनमर्थः। उत्तरत्र तु हेतुमण्णिच भोजना वेष्टना (व्याप्तिः—'परिवेषस्तु परिधि'रित्यमरात्) चार्थः। एतदेव ज्ञापयितुमाह—नतु भोजना नापि वेष्टनेति। भोजनेति भुजेर्ण्यन्तात् वेष्टनेति च विषेर्ण्यन्तात् 'ण्यासश्रन्थो युच्' ( ३२८४ ) इति युच्। ततष्टाप्। कुत्रचित् पुस्तके 'भोजनं वेष्टनमि'ति पाठान्तरम्। तदसत्। हेतुमण्णिजन्तत्वं ज्ञापयितुमेव दीक्षितेन भोजनेत्याद्युक्तत्वात्। नागेशतत्त्वबोधिनीसम्मतपाठविरुद्धत्वाच्चेति दिक्। ननु 'यम च परिवेषणे' इत्यत्रापि हेतुमण्णिजेवास्तु को दोष इति चेत्। ना—'नान्ये मितोऽहेतौ' ( गणसूत्र १९८ ) इत्युक्तत्वादत्र अहेतौ ( स्वार्थे ) एव णिज्-नियमादिति ध्येयम्। नन्वेवं मास्तु हेतुमण्णिजन्तत्वम् भोजनाद्यर्थस्तु भविष्यति इति चेत्। तदपि न। कुत इति उच्यते। यद्यपि विनिगमनाविरहादत्र अर्थत्रयविशिष्टस्य ( भोजना—वेष्टना—वेष्टनरूपमर्थत्रयम् ) परिविषे कोऽप्यर्थः शक्यो वक्तुं तथापि व्याख्यानात् 'यमोऽपरिवेषणे' ( १९३ ) इति घटादौ भोजनावेष्टने अर्थौ, अत्र ( 'यम च परिवेषणे' ) तु वेष्टनमेवार्थ इति नागेशवचनस्वरसः। नन्वेवं व्याख्याने किं मानमिति चेत्। शृणु। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' ( १९८ गणसूत्र ) इति यमेरमन्तत्वेनैव पूर्व्वत्र मित्त्वसिद्धेः 'न कम्यमिचमा'मिति ( १९१ ) निषेधप्रकरणस्थ 'यमोऽपरिवेषणे' इति परिवेषणाभिप्रायेँ मित्त्वनिषेधके घटाद्यन्तर्गणसूत्रे भोजनावद् वेष्टनापि गृह्यते विनिगमनाविरहादिति भावः। घटादिपठितवचने वेष्टनन्तु न परिवेषण-शब्देन गृह्यते तस्य हेतुमत्त्वाभावेन प्रवृत्तेः फलाभावादिति भावः। केचित्त्वत्र 'सूत्रेऽर्थत्रयग्रहणेऽपि बाधकाभावः विनिगमनाविरहाच्च सर्व्वग्रहणम्' इत्याद्यस्तुरिति शब्देन्दुशेखरे स्पष्टम्। शेखरकारैरुक्तं तदेव तत्त्वबोधिनीकारादिभिर्व्याख्यातम्। तथाच तत्त्वबोधिनी—'अयं भावः। घटादौ 'यमोऽपरिवेषणे' इति पठितम्। तत्र परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम्। हेतुमण्ण्यन्तस्य—हि भोजना वेष्टना चार्थः। तथा च परिवेषण इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि—तयोरर्थयोरमन्तत्वादेव मित्त्वसिद्धे'रित्यादि। 'यमोऽपरिवेषणे' इति 'यम च परिवेषणे' इति चैवंविधं

प्रतीयमानंसामञ्जस्यविरहं विलोक्यैव स्वामिना 'परिवेषणे एव यमिर्मिदित्युक्तमिति घटादौ द्रष्टव्यमित्यास्तां तावत्। प्रकृते वेष्टनरूपार्थे मित्त्वं दर्शयति। अमयति चन्द्रमिति। वेष्टत इत्यर्थः। चकयति। 'णिश्रि—' इति चङ्। णेरिति णिलोपः 'चङि' इति द्वित्वम्। 'सन्वत्—'इति सन्वद्भावः। 'सन्यतः' इति इत्वम्। 'दीर्घो लघोः' रिति दीर्घः। कथादाविति। 'ई च गणः' (२५७४) इत्यस्मात् प्राक् 'कथादन्ता' इत्युपक्रम्य 'कथ १८५२ वाक्यप्रबन्धे' इत्यादिना कथादयो विन्यस्ताः। तत्र 'चह १८६७ परिकल्कने' इत्यस्ति। अतः तस्यापि अदन्तत्वम्। ततश्च 'अतो लोपः' (२३०८) इत्यल्लोपादयम् अग्लोपी भवति। एवञ्च 'सन्वल्लघुनि चङ्परे अनग्लोपे' (२३१२) इति न प्रवर्त्तते। सन्वद्भावाभावाच्च नेत्वं नापि दीर्घ इति भावः। अतएव तत्र अचचहदिति रूपम्। एवमरीरहत्। अररहदिति। चिञ् चयने इति। एतदन्तं मित्त्वमिति स्वयमेवानुपदं वक्ष्यति। अथास्य णौ आत्त्वविकल्पः स्यादित्याह—

२५६९। चिस्फुरोर्णौ ॥६।१।५४॥

टी—। आत्त्वं वा स्यात्।

Roots चि and स्फुर् optionally end in आ when णि (णिच्) follows.

मित—। चिस्फुरोरिति। चिस्फुरोः+णौ इति छेदः। 'आदेचः—' (६।१।४५) इत्यत आदिति, 'विभाषा लीयतेः', (६।१।५१) इत्यतो विभाषेति चानुवर्त्तते। तदाह शेषं पूरयित्वा—आत्त्वं वा स्यादिति। चयतेः स्फुरतेश्चेति शेषः। अथात्त्वभूतयोः पुगागमार्थमाह—

२५७०। अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ॥७।३।३६॥

टी—। एषां पुक् स्यात्णौ। चपयति—चययति। जित्करणसामर्थ्यादस्य—णिज्विकल्पः। चयते। प्रणिचयति—प्रनिचयति। 'नान्ये मितोऽहेतौ' (ग. सू. १९८)। अहेतौ

स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाम-मन्तत्वप्रयुक्तं मित्त्वं न। घट्ट १६३१ चलने। मुस्त १६३२ सङ्घाते। खट्ट १६३३ संवरणे। षट्ट १६३४ स्फिट्ट १६३५ चुबि १६३६ हिंसायाम्। पुल १६३७ सङ्घाते। 'पूण' इत्येके। 'पुण' इत्यन्ये। पुंस १६३८ अभिवर्द्धने। टकि १६३९ बन्धने। टङ्कयति—टङ्कति। धूस १६४० कान्तिकरणे। धूसयति। दन्त्यान्तः। 'मूर्धन्यान्त' इत्येके। 'तालव्यान्त' इत्यपरे। कीट १६४१ वर्णे। चूर्ण १६४२ सङ्कोचने। पूज १६४३पूजायाम्। अर्क १६४४स्तवने 'तपने' इत्येके। शुठ १६४५ आलस्ये। शुठि १६४६ शोषणे। शुण्ठयति—शुण्ठति। जुड १६४७ प्रेरणे। गज १६४८ मार्ज १६४९ शब्दार्थौ। गाजयति। मार्जयति। मर्च १६५० च। मर्चयति। घृ १६५१ प्रस्र-वणे। 'स्रावणे' इत्येके। पचि १६५२ विस्तारवचने। पञ्च-यति। 'पञ्चति' इति व्यक्तार्थस्य अपि गतम्। तिज १६५३ निशाने। तेजयति। कृत १६५४ संशब्दने।

These roots viz—अर्ति ( ऋ ), ह्री, व्ली, री क्नूयी, क्ष्मायी and such ones as end in आत् ( आ ) take the aug. पुक् after them, when the affix णि ( णिच् ) follows. Thus चि+णिच्+शप्+तिप्=चा ( 2569 ) इ अति=चापुक् इ अति=चप् इ अति by 'मितां ह्रस्वः' (2568)=चपि अति=चपे अति by 'सार्व—' ( 2168 )=चपय् अति by 'एचोऽय्—'=चपयति। And when आत् is wanting, the process=चि णिच् अति ( शप्+तिप् )=चै इ अति by 'अचो ञ्णिति'

( 254 )=चाय् इ अति by आयादेश=चय् इ अति by 'मितां—' =चयि अति=चये अति by 'सार्व—'=चयय् अति=चययति। जित्करण-सामर्थ्यात् etc.—The root चिञ् is जित् or ञ—eliding. And the fact of the elision of ञ, at the end of a root, indicates that the root is उभयपदी by 'स्वरितञितः—'। But this जित्करण is redundant here, for the affix णिच् itself would make it उभयपदी by 'णिचश्च' ( 2564 ). Panini also is fully aware of this fact. Hence this redundance enables us to suggest that the affix णिच् is here optional. Thus चपयति—चपयते—चययति—चययते ( with णिच् ) and चयति—चयते ( without णिच् )। प्रणिचयति etc.—option of णत्व by 'शेषे विभाषा—' ( 2232 ). नान्ये etc.—This is a गणसूत्र meaning—'In the matter of घटादि or स्वार्थे णिच्, no roots other than ज्ञप् etc. (ज्ञप्, यम्, चह्, चल् and चिञ्) are termed as मित्। [In this connection it is importaut to note that हेतुमण्णिच् is optional (also conditional) cp गच्छति—गमयति, खादति—खादयति। This is what makes a root causative ( णिजन्त )। But स्वार्थे णिच् is obligatory ( नित्य ) cp. चोरयति, ज्ञपयति, रचयति etc. i. e. चुर्, ज्ञप्, रच etc. will cease to be made use of without taking णिच् after them. ] Because ज्ञपादि roots alone are considered as मित्, so शम्, दम्, कम् etc here will not be treated as मित् even though they are अमन्त or end in 'अम्' and thus has no chance of मित् by 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' ( 188 ). But चह् etc. will give चहयति etc. because 'अत उपधायाः' ( 2248 ) does not apply as 'अ' is here संयोगपर ( ह ) and thus long and not short. टङ्कयति—टङ्कति etc. like चिन्तयति—चिन्तति etc. पचि i.e. पञ्च् to express exhaustively or ebborately. It is generally

used with प्र thus प्रपचयति। 'पचते' etc, have been shown in भ्वादि under परिव्यक्तीकरणे। तिज to sharpen, तेजयति by लघूपधगुण। कृत to make a clear sound—

मित—। अर्त्तीति। अर्त्ति (ऋ), ह्री, व्ली, री, क्नुयी, क्ष्मायी, आत् इत्येषां सप्तानां द्वन्द्वात् षष्ठीबहुवचनम्। पुक्+णौ इतिच्छेदः। अर्थः स्पष्टः। 'परत्वादन्तरङ्गत्वाच्च आदौ पुक् पश्चाद्द गुणः' इति तत्त्वबोधिनी। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। क्नोपयति (यलोप एव) क्ष्मापयति (इत्यत्रापि)। आतां— स्थापयति, दापयति इत्यादि। प्रकृते चिस्फुरोरिति आत्त्वे कृते चा णिच् शप् तिप् इति स्थिते पुकि चाप् इ अति जाते 'मितान्—' इत्युपधाह्रस्वे चप् इ अति—चपि अति 'सार्व्व—' इति गुणः। 'एचोऽय्—' इत्ययादेशः। चपयति। आत्त्वाभावपक्षे तु— चि णिच् शप् तिप् इति स्थिते 'अचो ञ्णिति' (२५४) इति वृद्धौ आयादेशे च चाय् इ अति इति जाते पूर्व्ववद्ध्रस्वगुणायादेशाः। चययति। ञित्करणसामर्थ्या- दिति—चिञ् इति ञित् क्रियते। तच्च व्यर्थम्। णिचश्चेत्यनेनैव उभयपदित्वसिद्धेः। तदिदं व्यर्थं सत्ज्ञापयति यत् चयतेः णिज्-विकल्प इति। इदमेव हि ञित्त्वस्य सामर्थ्यम्। अतएव चपयति—ते—चययति-ते। चयति—चयते इत्यादीनि रूपाणि। 'शेषे विभाषा—' (२३३२) इति णत्व—विकल्पं दर्शयन्नाह—प्रणि- चयतीत्यादि। नान्ये मित इति—गणसूत्रमिदम् चुराद्यन्तर्गतम्। सूत्रेऽहेतौ इत्यस्यार्थमाह—अहेतौ—स्वार्थे णिचि इति। हेतुमति चेति सूत्रे हेतुशब्देन णिज्— विवक्षितः। न हेतुरहेतुः। णिच् च द्विविधः। हेतुमान् स्वार्थश्च। अतएवा- हेतावित्यनेन स्वार्थणिजाक्षिप्यते। ज्ञपादिभ्य इति। मुख्यमते पञ्च ज्ञपादयः। मतान्तरे तु सप्त इति तत्त्वबोधिनी। तच्चिन्त्यम्। भ्वादौ घटाद्यन्तर्गणसूत्रव्याख्यानावसरे ('तासि च कॢपः' (२३५२) इत्यस्याधस्तात्) अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ता- श्चुरादयो मितो नेत्यर्थः' इति दीक्षितग्रन्थविरोधात्। ज्ञपादिपञ्चकेत्यादेश्च 'ज्ञप- धातोस्तदुत्तरेभ्यश्च पञ्चभ्य इत्येवं षड्भ्योऽन्ये ये चुरादय' इति व्याख्यानादिति विभावनीयम्। एवञ्च षडेव मित इति फलितम्। नान्य इति नियमात् फलितमाह—

तेन श्रमादीनामिति। श्रम आलोचने इति धातुः। आदिपदेन कमचमयमादीनां ग्रहणम्। अमन्तत्वप्रयुक्तमिति—'जनीजॄष्—' (१८८) इति सूत्रप्राप्तस्य अमन्तत्वस्य 'न कम्यमिचमाम्' (१९१) इति प्रतिषेधात्। अर्थविशेषे तु मित्वं स्यादेव। शमयति (अवधे) शमयति (परिवेषणे) इत्याद्येवमन्यत्। घट्ट इति। एषां संयोगपरकत्वात् उपधादीर्घो न ('अचो ञ्णिति' इत्यनेन)। घट्टयति। 'पूर्ण' इत्येके। पुण इत्यन्ये इति। इदृशेषु पाठशुद्धिं निर्णेतुमशक्या। अतएव क्षीरस्वामिनोक्तम्

—'पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः।

न विद्मः किं जहीमोऽत्र किमुपादद्महे वयम्॥ इति।

पुल—पूर्णादिषु पाठो भ्रंशः। यजधातोर्मार्गसंस्कारोऽर्थं उत संस्कार एवेत्यर्थे भ्रंशः। आगमभ्रंशात् शास्त्रभ्रंशात्।' इति तत्त्वबोधिनी। गुण्ठयति इति। चिन्तयति—चिन्तति इतिणिच्विकल्पः। अपि गतमिति भ्वादि—प्रकरणे प्रोक्तमित्यर्थः—निशाने इति। निशानं तीक्ष्णीकरणम्। तेजयति—'पुगन्त—'(२१८९) इति गुणः। कृत संशब्दने इतिः—

२५७१। उपधायाश्च ॥७।१।१०१॥

दी—। धातोरुपधाभूतस्य ॠत इत्स्यात्। रपरत्वम्। 'उपधायाश्च' (२२६५) इति दीर्घः। कीर्तयति। 'उर्ऋत्' (२५६७)—अचीकृतत्—अचिकीर्त्तत्। वर्ध १६५५ छेदनपूरणयोः। कुबि १६५६ आच्छादने। कुम्बयति। 'कुभि' इत्येके। लुबि १६५७ तुबि १६५८ अर्दने। 'अर्दने' इत्येके। ह्लप १६५९ व्यक्तायां वाचि। 'क्लप' इत्येके। चुटि १६६० छेदने। इल १६६१ प्रेरणे। एलयति। ऐलिलत्। म्रच्छ १६६२ म्लेच्छने। म्लेच्छ १६६३ अव्यक्तायां वाचि। ब्रूस १६६४ बर्ह १६६५ हिंसायाम्। केचिदिह 'गर्ज गर्द शब्दे गर्ध

अभिकाङ्क्षायाम्' इति पठन्ति। शुठ १६६६ पुर्व निकोतने। जसि १६६७ रक्षणे। 'मोक्षणे' इति केचित्। जंसयति—जंसति। ईड़ १६६८ स्तुतौ। जसु १६६६ हिंसायाम्। पिड़ि १६७० सङ्घाते। रुष १६७१ रोषे। 'रुट' इत्येके। डिप १६७२ क्षेपे। ष्टुप १६७३ समुच्छ्राये॥

A दीर्घ ॠ which is the penult. or उपधा of a root is replaced by इत् or इ। This इ is followed by a र् by the rule 'उरण् रपरः' (90). The इ, from the fact of its being उपधा and being followed by a र्, becomes दीर्घ by the rule 'उपधायां च' (2265). Thus कॄत्+णिच+शप् तिप्–किर्त् णिच ·अति=कीर्त् णिच् अति=कीर्ति अति=कीर्ते अति by 'सार्व—' (2168)=कीर्तय् अति by 'एचोऽय्—' (61)=कीर्तयति। In लुङ् (where चङ् comes in by 'णिश्रि—' 2312), we have अचीकृतत् (by 'उर्ऋत्'—(2567) and अचिकीर्तत् by this rule 'उपधायाश्च')। The process is this in order ह्रस्व of ॠ by 'उर्ऋत्', then द्वित्व of कृत्, अत्त्व of ऋ by 'उरत्', चुत्व by 'कुहोश्चुः' सन्वत्त्व of the अभ्यास due to लघुपरत्व by 'सन्वल्लघुनि—' (2316) इत्त्व of अत्व by 'सन्यतः' (2317) and दीर्घ of इत्व by 'दीर्घो लघोः' (2318)—अचीकृतत्। In the latter, इत्त्व of the दीर्घ ॠ, रपरत्व of the same by 'उरण् रपरः' दीर्घ of इ by 'उपधायाश्च' (2265), then द्वित्व of 'कीर्त्', हलादिशेष, ह्रस्व of अभ्यास by 'ह्रस्वः' (2180) and चुत्व of the same as before. The अभ्यास is not दीर्घ due to the want of सन्वद्भाव as a long vowel containing in कीर्त् follows. The rest is easy.

मित—। 'धातो' रित्यधिकृतं वर्त्तते। 'ऋत इद्धातोः' इति च पूर्व्वसूत्रम्। उपधाया इति च षष्ठ्यन्तं तदाह—धातोरुपधाभूतस्येत्यादि। रपरत्वमिति—'उरण्

रपर' इत्यनेन इति शेषः। अचीकृतत्—अचिकीर्तदिति। अत्र ऋत्त्वविकल्पं दर्शयति स्वयमेव—'उऋ॑त्' इत्यनेन। तथाच कॄत् णिच् कृत् चङ् तिप् इति स्थिते ऋत्त्वे कृत् अ त् इति जाते द्वित्वे कृत् कृत् अ त् इति तत 'उरत्' इति उरदत्वे, हलादिशेषे, 'कुहोश्चु'रिति अभ्यासस्य चुत्वे, अडागमे, लघुपरतया 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावेन 'सन्यतः' इति इत्त्वे, तस्य 'दीर्घो लघोः' इति दीर्घे 'अचीकृतत्' इति रूपम्। उत्तरत्र तु ऋत्त्वाभावे अनेन इत्त्वे 'उरण् रपरः' इति रपरत्वे, 'उपधायां च' इति दीर्घे, 'कीर्त्' इत्यस्य द्वित्वम्। ततो हलादिशेषे, चुत्वे, 'ह्रस्वः' (२१८०) इति ह्रस्वे पूर्ववदडागमे रूपम्। अत्रपरतः 'कीर्त्' इति दीर्घस्वरसत्त्वात् लघुपरकत्वाभावेन 'सन्वत्—', 'सन्यतः', 'दीर्घो लघोः' इति त्रिसूत्री न प्रसरति। तेन अभ्यासदीर्घो न। अन्यत् स्पष्टम्।

टी—। आ कुस्मादात्मनेपदिनः। 'कुस्म नाम्नो वा' इति वक्ष्यते। तमभिव्याप्येत्यर्थः। अकर्त्तृगामिफलार्थमिदम्। चित १६७४ सञ्चेतने। चेतयते। अचीचितत। दशि १६७५ दंशने। दंशयते। अददंशत। इदित्त्वाण्णिजभावे—दंशति। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः। नलोपि सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम्। दसि १६७६ दर्शनदंशनयोः। दंसयते—दंसति। 'दस' इत्यप्येके। डप १६७७ डिप १६७८ संघाते। तत्रि १६७९ कुटुम्बधारणे। तन्त्रयते। चान्द्रा धातुद्वयमिति मत्वा 'कुटुम्बयते' इत्युदाहरन्ति। मत्रि १६८० गुप्तपरिभाषणे। स्पश १६८१ ग्रहणसंश्लेषणयोः। तर्ज १६८२ भर्त्स १६८३ तर्जने। बस्त १६८४ गन्ध १६८५ अर्दने। बस्तयते। गन्धयते। विष्क १६८६ हिंसायाम्। 'हिष्क' इत्येके। निष्क १६८७ परिमाणे। लल १६८८ ईप्सायाम्।

कूण १६८८ सङ्कोचे। तूण १६८० पूरणे। भ्रूण १६८१ आशाविशङ्कयोः। शठ १६८२ श्लाघायाम्। यक्ष १६८३ पूजायाम्। स्यम १६८४ वितर्के। गूर १६८५ उद्यमन। शम १६८६ लक्ष १६८७ आलोचने। 'नान्ये मितः—' इति मित्त्वनिषेधः। शामयते। कुत्स १६८८ अवक्षेपणे। त्रुट १६८८ छेदने। 'कुट' इत्येके। गल १७०० स्रवणे। भल १७०१ आभण्डने। कूट १७०२ आप्रदाने। 'अवसादने' इत्येके। कुट्ट १७०३ प्रतापने। वञ्चु १७०४ प्रलम्भने। वृष १७०५ शक्तिबन्धने। शक्तिबन्धनं प्रजननसामर्थ्यं, शक्तिसम्बन्धश्च। वर्षयते। मद १७०६ तृप्तियोगे। मादयते। दिवु १७०७ परिकूजने। गृ १७०८ विज्ञाने। गारयते। विद १७०८ चेतनाख्याननिवासेषु। वेदयते।

सत्तायां विद्यते, ज्ञाने वेत्ति, विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ, श्यन्-लुक्-श्नम्-शेष्विदं क्रमात्॥

मान १७१० स्तम्भे। मानयते। यु १७११ जुगुप्सायाम्। यावयते। कुस्म १७१२ नाम्नो वा (ग. सू. १८८) 'कुस्म' इति धातुः कुत्सितस्मयने वर्त्तते। कुस्मयते। अचुकुस्मत। अथवा कुस्म इति प्रातिपादिकम्। ततो धात्वर्थे णिच्। इत्याकुस्मीयाः।

दी—। आकुस्माद्‌··· ··· इत्याकुस्मीयाः।

Now follow the आत्मनेपदी roots ending in कुस्म १७१२ नाम्नो वा which is to be expressed presently. The list is inclusive of

कुश also. The expression 'आ कुशादात्मनेपदिनः' suggests that the roots, beginning from 'चित १६७४ सञ्चेतने' and ending in 'कुश १७१२ नाम्नो वा' will have आत्मनेपद cojugation even if the fruit of the action does not accrue to the agent. Thus it is a modification of 'णिचश्च' (२५६४)। चित to bring ( back ) to senses. चेतयते etc, see ante. अचीचितत—अभ्यास दीर्घ by 'दीर्घो लघोः' ( २३१८ ). अददंशत—there being no short vowel following, सन्वद्भाव etc are wanting. इदित्वात् etc see ante. ( 2564 ). आकुशीयम् etc—The scholiasts of Panini-system hold that the आकुशीय roots i.e. roots from चित ( १६७४ ) to कुश ( १७१२ ) are आत्मनेपदी—only when णिच् is affixed to them. Thus परस्मैपदित्व of दशि in दंशति etc. is justified for there is no णिच् here. This दशि which by 'इदितो नुम्—' becomes दंश्, will not drop its न by the rule 'दंशसञ्जस्वञ्जां शपि' ( २३९६ ) so as to give दशति etc inasmuch as in the matter of नलोप ( elison of न ) 'दंश' of the भ्वादि is to be taken due to its contact with सञ्जि in the rule 'दंशसञ्जस्वञ्जां शपि' and not this दशि of the चुरादि class. चान्द्रा etc—The followers of the Grammar of Chandra mean two roots here viz तत्रि and कुटुम्ब—to hold and not as तत्रि to hold or maintain kith and kin. Thus they instance as कुटुम्बयते etc. मत्रि—to consult privately—मन्त्रयते etc. Similarly स्पशयते, तर्जयते etc शम—लक्ष—शामयते—लक्षयते etc. for निशामय etc. see under—'ण्यो णिटि' ( २३५२ आदि )। 'नान्ये मितः—' etc—see 'ज्ञप मिच...upto चिञ् १६३० चयने under 'मितां ह्रस्वः' ( २५५८ )। Thus शम being excluded becomes दीर्घ। वृष—शक्तिबन्धने—शक्तिबन्धन means to possess virility or sexual power and to have prowess, मद to intoxicate or give

pleasure. मादयते—दीर्घ due to मित्त्वाभाव। दिव (दिव्) to complain or lament—देवयते etc, विद—to know, to gain and to exist—विद 'to exist' is conjugated as विद्यते etc, to know as वेत्ति etc, to consider or judge as विन्ते etc. and to gain or attain as विन्दति—विन्दते etc in श्यन् (दिवादि), लुक् (अदादि), श्नम् (रुधादि) and in श (तुदादि) respectively. कुस्म नाम्नो वा etc—कुस्म is a root meaning 'to shrink from evil'—(?) etc. अचुकुस्मत—the duplication etc are as be fore, the उ of च is not दीर्घ due to the दीर्घत्व of उ in कुस्म। The word 'कुस्म' is either a root or a crude (uninflected) form (प्रातिपादिक) as 'नाम्नः वा' suggests. Hence Bhattoji says अथवा etc. Thus also i.e. being a प्रातिपादिक also it will take णिच् in the sense of a root so as to have आत्मनेपद terminations by the गणसूत्र—'आकुस्मादात्मनेपदिनः'। Hence it will not take णिच् in the sense of प्रातिपदिक by 'तत्करोति तदाचष्टे' for it would then give परस्मैपदी forms. Here end the roots ending in कुस्म।

मित—। आ कुस्मादिति। अत्र स्वयमेव व्याचष्टे कुस्म नाम्नोवेति। तम् कुस्मम् अभिव्याप्य गृहीत्वा तेन सहेत्यर्थः। ननु 'णिचश्च' (२५६४) इत्यनेन पाक्षिकात्मनेपदे सिद्धे इदमाकुस्मादिति व्यर्थमित्यत आह—अकर्तृगामीति। णिचश्चेत्यनेन कर्तृगामिन्येव फले धातोरात्मनेपदं स्यात् अत्र तु अकर्तृगामिन्यपि फले धातोरात्मनेपदं यथा स्यादित्येवमर्थमिदमिति भावः। अददंशत इति। अभ्यासस्य लघुपरकत्वाभावात् सन्वत्त्वादिकं नेति बोध्यम्। इदित्त्वादिति—व्याख्यातं प्राक् चिति (१५२६) सूत्रमित्यत्र। ननु भवत्विदित्वाण्णिचः पाक्षिकत्वं तथापि आकुस्मादित्यनुसारेण आत्मनेपदेनैव भाव्यम्—न परस्मैपदेनेति दंशति इति दुर्लभमित्याशङ्क्य आह—आकुसीयमिति। कुस्माधिकारे येऽत्र धातवो विन्यस्ता न्ते यदा (अथा प्रत्ययेन युज्यन्ते तदैव तेषामात्मनेपदित्वं भवति अन्यदा तु परस्मैपदित्व-

मेवेति पाणिनीयव्याख्याकर्तारो मन्यन्ते। नन्वेवमपि 'दंशसञ्जस्वञ्जां शपि' इति नलोपे 'दशति' इति भवेदिति चेत्। तत्राह—सञ्जिसाहचर्य्यादिति। तथाच भ्वादेरेव दशति इत्यादि सिद्धं न लस्येति भावः। चान्द्रा इति। तत्रि, कुटुम्ब धारणे इति पठित्वा तन्त्रयते, कुटुम्बयते इति पठन्तीत्यर्थः। मंत्रि—मन्त्रयते। स्पश—स्पाशयते। तर्जयते—ननु तर्हि 'तर्जयन्निव केतुभिः' (रघु—४।२८) इति परस्मैपदित्वं कथम्। अत्राहुः—'तर्जिभर्त्स्योरनुदात्तत्वेऽपि चक्षिङो ङित्करणेन अनुदात्तेत्त्वनिमित्तम् आत्मनेपदमनित्यमिति वामनः'। तत्त्वबोधिनीकारस्तु—'णिजन्तादस्माद् भौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्य'मित्याचचक्षे। लक्षिति—लालयते—आत्मन् इच्छति। भ्रूण इति—भ्रूणयते—'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः। मानेत्र—मित इति। प्रागेतत्—स्पष्टीकृतम्। भल आभण्डणे इति—आभण्डणं निरूपणम्। वृष शक्तिबन्धने इति—प्रजननसामर्थ्यं सन्तानोत्पादनशक्तौ रतिशक्तिरित्यर्थः। दिवु—परिकूजने इति—परिकूजनं खेदेनाक्षेपः परिशोचनं वा। परिदेवयते। परिदेवयन् (पञ्चतन्त्र) परिदेवयति (भास) इत्यादि तु चिन्त्यमेव। यद्वा दिवु मर्दने इत्यस्य ग्रहणम् धातूनामनेकार्थत्वात्। विद चेतनेत्यादि। अर्थनिर्देशपूर्वकमस्य चतुर्गणगतत्वं श्लोकेन दर्शयति—सत्तायामिति—श्यन्निति दिवादित्वम्; लुगिति अदादित्वम्। श्नमिति—रुधादित्वम्। श इति तुदादित्वम्। क्रमादिति—सत्तायां विद्यते इति श्यनि, ज्ञाने वेत्ति इति लुकि इत्येवं क्रमः। श—जुगुप्सायां कुत्सितकर्म्मणि इत्यर्थः। कुस्म नाम्नो वेति—गणसूत्रमिदम्। कुस्म इति धातुर्वा नाम (प्रातिपदिकं) वा। तत्र धातुत्वे व्याचष्टे कुत्सितस्मयने इति। कुत्सितात् स्मयनम् घृणया पृथग्भवनमित्यर्थः। 'अन्येष्वपि दृश्यते' इति सूत्रे अन्येभ्योऽपीति वक्ष्यमाणत्वात् कुपूर्वात् स्मयतेर्डप्रत्यये टिलोपे च 'कुस्मः—' इति समासे च निष्पन्नमिति तत्त्वबोधिनी। अथ कुस्मन इति। णाकुस्मीयत्वाद- कर्त्तर्गेऽपि फले आत्मनेपदम्। विलचुलादिकं प्राग्वत्। कुस्म इत्यत्र उकारस्य संयुक्तपरतया गुरुत्वेन 'सन्वल्लघुनि—' इत्यस्याप्राप्तेर्दीर्घो न। अचुकुस्मत इति। अधुना प्रातिपदिकत्वे व्याचष्टे—तती धात्वर्थे इति—न तु 'तत्करोति तदाचष्टे' इति

प्रातिपदिकार्थाश्रिचि इदं लभ्यमिति मास्तु धात्वर्थमिति वाच्यम्। कस्त्वाकुर्मीयत्वेन आत्मनेपदित्वनियमात्। इत्याकुर्मीयाः।

टी—। चर्च १७१३ अध्ययने। बुक्क १७१४ भाषणे। शब्द १७१५ उपसर्गादाविष्कारे च। चाद् भाषणे। प्रतिशब्दयति। प्रतिश्रुतमाविष्करोतीत्यर्थः। 'अनुपसर्गाच्च'। 'आविष्कारे' इत्येव। शब्दयति। कण १७१६ निमीलने। काणयति। 'णौ चङ्युपधाया ह्रस्वः' (२३२४)। 'काण्यादीनां वा' (वार्त्तिक) इति विकल्पात्। अचीकणत्—अचकाणत्। जभि १७२७ नाशने। जम्भयति—जम्भति। षूद १७१८ क्षरणे। सूदयति। असूषुदत्। जसु १७१९ ताड़ने। जासयति—जसति। पश १७२० बन्धने। पाशयति। अम १७२१ रोगे। आमयति। 'नान्ये मितः—' (गणसूत्र) इति निषेधः। 'अम' गत्यादौ अपि गतः। तस्माद्धेतुमण्णौ 'न कम्यमिचमाम्' (गणसूत्र) इति 'निषेधः। आमयति। चट १७२२ स्फुट १७२३ भेदने'। विकासे शशपोः 'स्फुटति स्फोटते' इत्युक्तम्। घट १७२४ संघाते। घाटयति। 'हन्त्यर्थाश्च' (गणसूत्र) नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिच' लभन्ते इत्यर्थः। दिवु १७२५ मर्दने। उदित्त्वाद्देवतीत्यपि। अर्ज १७२६ प्रतियत्ने। अयमर्थान्तरेऽपि। द्रव्यमर्जयति। घुषिर् १७२७ विशब्दने। घोषयति। 'घुषिरविशब्दने' (२०६३) इति सूत्रे 'अविशब्दने' इति निषेधाल्लिङ्गादनित्योऽस्य णिच्। घोषति। इरित्त्वादङ् वा। अघुषत्

—अघोषीत्। ण्यन्तस्य तु अजूघुषत्। आङः क्रन्द १७२८ सातत्ये। भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः। स एवाङ्—पूर्वो णिचं लभते सातत्ये। आक्रन्दयति। अन्ये तु 'आङ्-पूर्वो घुषिः क्रन्दसातत्ये इत्याहुः'। आघोषयति। लस १७२९ शिल्पयोगे। तसि १७३० भूष १७३१ अलङ्करणे। अवतं-सयति—अवतंसति। भूषयति। अर्ह १७३२ पूजायाम्। ज्ञा १७३३ नियोगे। आज्ञापयति। भज १७३४ विश्राणने। शृधु १७३५ प्रसहने। अशर्धीत्—अशीशृधत्। यत १७३६ निकारो-पस्कारयोः। वक १७३७ लग १७३८ आस्वादने। 'रग' इत्यके। अञ्चु १७३९ विशेषणे। अञ्चयति। उदित्त्वमिड्-विकल्पार्थम्। अतएव विभाषितो णिच्। अञ्चति। एवं शृधुजसुप्रभृतीनामपि बोध्यम्। लिगि १७४० चित्रीकरणे। लिङ्गयति—लिङ्गति। मुद १७४१ संसर्गे। मोदयति सक्तून् घृतेन। त्रस १७४२ धारणे। 'ग्रहणे' इत्येके। 'वारण' इत्यन्ये। उध्रस् १७४३ उञ्छे। उकारो धात्ववयव इत्येके। 'न' इत्यन्ये। ध्रासयति। उध्रासयति। मुच १७४४ प्रमोचने मोदने च। वस १७४५ स्नेहच्छेदापहरणेषु। चर १७४६ संशये। च्युस १७४७ सहने। 'हसने च' इत्येके। च्यावयति। 'च्युस' इत्येके। च्योसयति। भुवोऽवकल्कने १७४८। अवकल्कनं मिश्रीकरणमित्येके। चिन्तनमित्यन्ये। भावयति। कृपेश्च १७४९। कल्पयति।

चर्च अध्ययने etc.—The root शब्द preceded by an उपसर्ग means

to discover i. e. to answer or respond and from the चकार to express (also); thus प्रतिशब्दयति i. e. give expression to what is promised. But when it is preceded by no उपसर्ग it means आविष्कार only. कण to close one eye (only). In लुङ् (चङ्) the उपधा of the root काणि (कण्+णिच) becomes ह्रस्व by the rule 'णौ चङ्य—पधाया ह्रस्वः' (2314); but this ह्रस्वत्व is optionalised by the Varttika 'काण्यादीनां वा' i. e. the six roots काणि, राणि, श्राणि, भाणि, हेठि and लोपि optionally become ह्रस्वोपध in चङ् (लुङ्)। Thus अचीकणत्—अचकाणत्। The former is of the ह्रस्वपध—for कण being लघूपध the three rules 'सन्वल्लघुनि—', 'सन्यत:' and 'दीर्घो-लघो:' operate whereas the latter belongs to the दीर्घपध—for काण being दीर्घ, सन्वद्भाव etc. do not take effect—(see ante—अचीकमत—अचकमत)। जम्भयति etc by 'इदितो नुम्—' and 'इदित्वाच्चिज विकल्प:' (Bhattoji). सूदयति by 'धात्वादेः ष. सः'। असूषुदत्—by दीर्घो लघो:' (2818) and षत्व by 'इण्को:—आदेशप्रत्यययो:' (112—118) पश to tie gives पाश: (पश्+घञ् करणे)—a net or trap. The उपधा of आमयति has not become ह्रस्व due to the prohibition of मित्त्व by the गणसूत्र—'नान्ये मित:—।' The root अम is read in भ्वादि (अम 465 गत्यादिषु) and the मित्त्व due to 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' is barred by 'न कम्यमिचमाम्' hence in हेतुमान् or causative णिच् we have आमयति। स्फुट meaning to bloom (विकास) has been conjugated as स्फुटति and स्फोटते etc. in श and शप् i. e., in तुदादि and भ्वादि। घट, to kill, totally ruin (or assemble) though read in भ्वादि (under घटादि class), gets स्वार्थे णिच् by the गणसूत्र—'हन्त्यर्थाश्च' which means that the roots bearing the same sense as हन् (to kill

and to go, cp—'इन हिंसागत्योः') will have स्वार्थे णिच् even if they are mentioned or spoken of in the nine other classes than चुरादि. दिव being उदित् or उ—eliding will give देवति etc. also. otherwise उदित् serves no purpose, घुषिर् to make sound or proclaim will not necessarily be followed by णिच् due to the fact of the suggestion of prohibition existing in 'अविशब्दने' (न+विशब्दने) in the rule 'घुषिरविशब्दने' (3063) which means that घुषि in a sense other than विशब्दन will be considered अनिट् in निष्ठा। But as in विशब्दन the root takes णिच् so it (णिच्) will bar the roots having the aug. इट् for the निष्ठा प्रत्यय does not invariably follow the root घुषि (घुष्+णिच्+क्त). Thus the पर्युदास अविशब्दने is superfluous. And this superfluity (व्यर्थत्व) directs us to another way viz— granted that अविशब्दन is superfluous in the matter of निष्ठा प्रत्यय but it is serviceable in the field of णिच्। Thus घुषिर् gets णिच् optionally and so Bhattoji says 'अविशब्दने' इति निषेधात् etc. when it does not take णिच् it takes अङ् optionally due to इरित्व by 'इरितो वा' (2269) thus अघुषत्—अघोषीत्। But when it will take णिच् then by 'णिश्रिद्रुस्रुभ्यः—' (2312) it will have चङ् giving अजूघुषत् ('कुहोश्चुः—'दीर्घो लघोः')। क्रन्द preceded by आङ् means सातत्य or आह्वानसातत्य i. e. frequence of calling or lamenting (सततम्+ष्यञ् (स्वार्थे)=सातत्यम्)। The root क्रन्द belonging to the भौवादिक i. e. भ्वादि class and meaning 'to call' etc. has been dealt with. That very root preceded by आङ् gets णिच् in the sense of सातत्य।' Others, however, explain that घुषि or घुष् preceded by आङ् means क्रन्दसातत्य (same as आह्वानसातत्य)—आघोषयति।

अवध्वंसयति etc. due to इदित्त्व। ज्ञा is generally preceded by आङ्, वि etc. hence आज्ञापयति—commands etc. see भ्वादि. 'प' is due to the aug. पुक् by 'अर्तिह्री—' ( 2570 ). विज्ञापन means to practise charity. अजज्ञपत्—अजीज्ञपत् due to ह्रस्व विकल्प by 'उर्ऋत्' ( 2567 ) process same as in अचिकीर्तत्—अचीकृतत् ( see उपधायाश्च—2571). लुदित्त्वात् etc. i. e. the elision of लृ in यत्र् indicates the option of 'इट्, by उदितो वा'(3828) and this option of इट् indicates the option of णिच् in the cases of लृ—eliding roots—see मित—below. Similarly ग्रथ जस etc. मोदयति etc. i. e. mixes or besmears the flower or barley powder with clarified butter. उध्रस etc.—some hold that the उकार preceding the root is apart from the root itself and instance as उध्रासयति, others, however, do not follow this and instance as ध्रासयति meaning thereby the elision of the उकार। भुवः अवकल्कने i. e., भू takes णिच् in the sense of अवकल्कन—mixing or thinking ; cp 'तद्गुणैः परिभाव्य च' in the benedictory verse of Bhattoji himself. Hence it is obvious that he takes it in the sense of thinking. कृपेश्च i. e. कृप also takes णिच् in the sense of अव कल्कन—'ल' being provided for by the rule 'कृपो रो लः' ( 2350 ).

मित—। चर्च अध्ययने इति। अस्मादेव 'गुरोश्च हलः' इति स्त्रियामप्रत्ययेन चर्चा इति 'सर्व्वोऽपि चुरादिधातुः पाक्षिकणिज् भवती'त्युक्तिः। शब्द उपसर्गादिति। उपसर्गपूर्व्वः शब्दधातुः आविष्कारे भाषणे चार्थे प्रयुज्यते। अनुपसर्गपूर्व्वस्तु आविष्कारे एवेत्यर्थः। कण निमीलने इति। अत्र एकाक्षिनिमीलनं विवक्षितमिति तत्त्वबोधिनी। काणयति मित्त्वाभावाद् ह्रस्वाभावः। चकि ह्रस्वविकल्प इत्याह—णौ चङीति काण्यादीनां वेति—वार्त्तिकमिदम्। एतच्च 'भ्राजभासभाषदीप—' ( २५६५ )।

इति सूत्रे भाष्ये पठितम्। तथाच भाष्यम्—'काशि-राशि-शाशि-भाशि-हेठिलोपश्च: षट् काश्यादय:' इति। अचीकशत्—अचकाशदिति। पूर्व ह्रस्वपक्षे। कथ इत्यादाव्स्य लघु तया अभ्यासस्य लघु परकत्वेन 'सन्वल्लघुनि—' इति सन्वद्भावेत्त्वदीर्घाः क्रमेण। ह्रस्वाभावे तु सन्वद्भावादिविरह:। 'ह्रस्व:' (२१८०) इति ह्रस्वत्व। दिलत्वादि प्राग्वत्। जम्भयति—जम्भतीति। इदित्वाल्लिन्विकल्प:। अतुपुदत् इति। धात्वा—दे: ष: स इति स:। दित्वम्। 'दीर्घो लघो:' इति अभ्यासस्य दीर्घ:। 'इण्को:,' 'आदेशप्रत्यययो:' इत्यादेशत्वादकारस्य षत्वम्। पश बन्धने इति। अस्मादेव करणे घञि पाश=आनाय:। 'नान्ये मित:—' गणसूत्रमिदं प्राग्व्याख्यातम्। इति निषेध इति—मित्त्वनिषेध इत्यर्थ:। शपीति भ्वादौ। 'अम ४६५ गत्यादिषु' इति सवत्य: पाठ:। हेतुमण्णौ इति। 'हेतुमति' अस्यार्थे 'णौ' णिचि इत्यर्थ:। 'न कम्यमि-चमाम्' इति। एतदपि गणसूत्रं प्राग्विशदीकृतम्। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति प्राप्तं मित्त्वमनेन प्रतिषिद्धम्। तेन गत्याद्यर्थस्यापि ह्रस्वो न। शशपो:—श्रे शपि च तुदादौ भ्वादौ चेत्यर्थ:। स्फुटतीति तुदादौ—अतएव मित्त्वाभावाद् गुणाभाव:। घट सङ्घात इति। सम्—हन् + घञ् = सङ्घात:। 'हन हिंसागत्यो:'। ननु घटधातुरन्ये च धातवो भ्वादौ अन्यत्र च तत्र तत्र पठिता अपि कथमिह चुरादौ पठ्यन्ते। तत्राह—'हन्त्यर्थाश्च' इति—गणसूत्रमिदम्। अर्थस्तु स्वयमेव व्याख्यात:। नवगण्यामिति। भ्वाद्यादिषु क्र्याद्यन्तकेषु नवसु गणेषु इत्यर्थ:। उदित्त्वादिति। 'उदितो वा' (२२२८) इतीड्विकल्पार्थं सूत्रम्। तत्र यदा अस्माद् देवयतेक्त्वान्तरम् इड्विधीयते तदा णिचा-धातुप्रत्यययोर्व्यवहितत्वाद् इडागमस्यावकाश एव नास्ति। ततश्च 'दूत्वा—देवित्वा' इत्यादार्थम् 'उदितो वे'ति इड्विकल्पविधानं व्यर्थम्। तदेव व्यर्थं सद् लिङ्गयति ज्ञापयति यद् उदितो धातवो विभाषितणिच्का इति। एव अथ गृध जसु प्रभृतिष्वपि बोध्यम्। प्रतियत्नो गुणाधानम्। अर्थान्तरसुपादानम्। 'क्षुधिरविशब्दने' (३०६३) इदन्तसूत्रमिदमिण्निषेध प्रकरणे पठितम्। तस्य विशब्दनमभिप्रायं घुषेरिडागमो न स्यादित्यर्थ:। यथा घुष्टा—रज्जु:—उत्पादिता प्रसारिता चेत्यर्थ:। विशब्दने—तु घुषितं वाक्यम्—'शब्दं न प्रकटीकृताभिप्रायमि'त्यर्थ:। एतदपि सूत्रं 'घुषिरविशब्दने'

इति व्यर्थमेव। कथमिति चेदुच्यते—। विशब्दनार्थस्य घुषेस्तावत् चुरादित्वम् स्वीकृतम्। चुरादित्वाच्च णिजपि भवेत्। ततश्च णिचा धातुर्व्यवहितः (घुष्+णिच्+क्त)। एवञ्च णिच्सन्नियोगेनैव इण्निषेधः फलितः। तथा सति विशब्दनभिन्नार्थे व्यवधानाभावाद् अस्यैव इडागमस्यावकाशः। अतो 'घुषिरविशब्दने' इति न कर्तव्यं निष्प्रयोजनत्वात्। एवञ्च इड्विकल्पं निष्प्रयोजनं सदिदं ज्ञापयति—'घुषेर्णिज् विभाषितो भवती'ति। अतएव घोषति इत्याद्यपि साधु। इरित्वादिति—इरितो वे'ति सूत्रादिति भावः। अङ्पक्षे ङित्त्वात् 'क्ङिति चेति' निषेधाद् गुणाभावः। इरित्पाठो भाष्यानारूढत्वात् (भाष्येऽनुक्तत्वात्) चिन्त्य इति केचित्। ण्यन्तस्य तु इति। अजूघुषत्—चङ् णिलोपोपधाह्रस्वादिर्शेषाः। 'अभ्यासे चर्चे'ति जश्त्वेनाभ्यासस्य—गः। तस्य 'कुहोश्चु'रिति चत्वेन जः। लघुपरतया—उकारस्य 'दीर्घो लघो'रिति दीर्घः। आङः क्रन्द सातत्ये इति—आङ्पूर्वः क्रन्दधातुः सातत्ये—आह्वान सातत्ये—वर्तत इत्यर्थः। भौवादिक इति भ्वादिः। स एवेति भौवादिकक्रन्द एव। अन्येत्विति। स्पष्टम्। शिल्पयोगे इति शिल्पं क्रियाकौशलम्। तसीति। अवपूर्वोऽयमिति दर्शयति। इदित्वाण्णिज् विकल्पः। आज्ञापयतीति—। 'अर्तिह्री—' (२५७०) इत्याकारान्तत्वात् पुक्। मित्त्वाभावाद् दीर्घश्च। एतत्प्रसङ्गे 'मारणतोषणनिशामनेषु ज्ञा' इति गणसूत्रमपि द्रष्टव्यम्। विश्राणने इति। विश्राणनं वितरणम्—'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः। अशशर्धदिति—अशीशृधत् च अचीकृतदादि—वत्। यत निकारोपस्कारयोरिति। निर्यातनप्रतिदानादिष्वित्यर्थः। अतएव निर्यातयति शत्रुम् ऋणं वेति प्रयोगः। चङि निरयीयतत् इति। अत्र तत्त्वबोधिनी—यत्नो वा प्रैषो वा निकारः। क्रियानिघण्टौ—'यत्नं प्रैषे निराकारे पादपे चाप्युपस्कृतौ। नित्योऽयं धान्यधनयोः—' इत्युक्तम्। अस्यार्थः—यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत। निसः परभागे चेत् प्रयुज्यते तदाऽयं धान्यधनयोः प्रतिदाने वर्तते इति। ऋणं निर्यातयति—प्रतिददातीत्यर्थः' इति। शुदसंसर्गे इति मिश्रणे इति। भुवः अवकल्कने इति। अवकल्कनेऽर्थे भूधातोर्णिच् स्वादित्यर्थः। कृपेश्चेति।

प्रागर्थं चिजिति शेषः। कालयतीति। 'क्रपो रो लः' (२३५०) इति लत्वम्। अप्‌लिखाद्यः प्रागवदिति।

दो—। आ स्वदः सकर्म्मकात् (गणसूत्र)। स्वदिम-भिव्याप्य सम्भवत्कर्म्मभ्य एव णिच्। ग्रस १७५० ग्रहणे। ग्रासयति फलम्। पुष १७५१ धारणे। पोषयत्याभरणम्। दल १७५२ विदारणे। दालयति। पट १७५३ पुट १७५४ लुट १७५५ तुजि १७५६ मिजि १७५७ पिजि १७५८ लुजि १७५९ भजि १७६० लघि १७६१ त्रसि १७६२ पिसि १७६३ कुसि १७६४ दशि १७६५ कुशि १७६६ घट १७६७ घटि १७६८ बृहि १७६९ बर्ह १७७० बल्ह १७७१ गुप १७७२ धूप १७७३ विच्छ १७७४ चीव १७७५ पुथ १७७६ लोकृ १७७७ लोचृ १७७८ णद १७७९ कुप १७८० तर्क १७८१ वृतु १७८२ वृधु ७८३ भाषार्थाः। पाटयति। पोटयति। लोटयति। तुञ्जयति—तुञ्जति। एवं परेषाम्। घाटयति। घण्टयति।

णिच् is here affixed to those roots only which are transitive beginning from ग्रस (1750) ग्रहणे (to take or swallow) and ending in स्वद (1806) आस्वादने to taste, the roots numbering fifty—six (56) only. The rest is easy.

मित—। आस्वदः सकर्म्मकादिति। तत्र आङभिविधावित्याह स्वदिम् अभि-व्याप्येति। ग्रस (१७५०) ग्रहणे इत्यारभ्य—स्वद (१८०६) आस्वादने इत्यन्त-मित्यर्थः। सम्भवत्कर्मभ्य एवेति। येषां सकर्मकत्वं सम्भवतीति तदर्थः। सर्व्वोऽपि सकर्मक इति तत्त्वबोधिनी। केचित्तु 'स्वदिरकर्मक' इत्याहुः। भाषार्थाः

इति। इह भाषायां (लौकिकप्रयोगे) यादृशेष्वर्थेषु ते प्रयुज्यन्ते तादृशा एव तेषामर्था इति प्रत्येतव्यमित्यर्थः। घटधातोरन्यत्र पाठ अर्थान्तरमाश्रित्य इह पुनरुक्तिः कृता। अथ ऋदितां लोकृ—लोचृ प्रभृतीनामचङि विशेषमाह—

२५७२। नाग्लोपिशास्वृदिताम् ॥७।४।२॥

दी—। णिच्यग्लोपिनः शास्तेः ऋदितां चोपधाया ह्रस्वो न स्याच्चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्तयति। वर्धयति। उदित्वाद् वर्तति। वर्धति। रुट १७८४ लजि १७८५ अजि १७८६ दसि १७८७ भृशि १७८८ रुशि १७८७ शीक १७९० रुसि १७९१ नट १७९२ पुटि १७९३ जि १७९४ चि १७९५ रवि १७९६ लघि १७९७ अहि १७९८ रहि १७९९ महि १८०० च। लड़ि १८०१ तड़ १८०२ नल १८०३ च। पूरी १८०४ आप्यायने। ईदित्त्वं निष्ठायामिण्निषेधाय। अतएव णिज्-वा। पूरयति—पूरति। रुज १८०५ हिंसायाम्। ष्वद १८०६ आस्वादने। 'स्वाद' इत्येके। असिष्वदत्। दीर्घस्य—त्वषोपदेशत्वाद् असिस्वदत्। इत्यासदीयाः।

The penultimate is not ह्रस्व (short) of a root which drops an अनुबन्ध belonging to the अक् प्रत्याहार (अ, इ, उ, ऋ, लृ), of शास and of the roots which drop ऋ (as लोकृ, लोचृ)—when णि i.e. णिच्, followed by चङ्, follows. This is an exception to the rule 'णौ चङ्युपधाया ह्रस्वः' (2314—7. 4. 1). Thus अलुलोकत्—etc. Here the अभ्यास लु not being लघुपर has not been दीर्घ for the rule 'दीर्घो लघोः' does not apply. उदितास्—i. e इनु इधु (1782—

83 ) being उ—eliding, we may add शप् to them to have वर्ण्दति—वर्धंति—for the इड्विकल्प सूत्र 'उदितो वा' ( 3828 ) being superfluous in its sphere suggests that उकार-eliding roots will have option of णिच् ( See मित—above ). पूरी—to please or satisfy. The root पूर् is read as पूरी ( with ईकार which elides at the time of operation ) in order to prohibit the aug. इट् from it ( by the rule 'श्वीदितो निष्ठायाम्'—3039 ). Thus the option of णिच् takes effect. The drift is—if the root were read as पूर् without ईकार then also there would have been the option of इट् for when णिच् is interposed there is no chance of इट्। Thus the fact of ईदित्करण suggests the option of णिच्। असिष्वदत्—by 'धात्वादेः—', द्वित्व, 'हलादि—' 'सन्वल्लघुनि—', 'सन्यतः' and 'इण्कोः' and 'आदेशप्रत्यययोः' ( 112—13 ). Here 'दीर्घो लघोः' does not apply for इकार has been गुरु due to the following of स्व which is a conjunct ( संयुक्त ) letter—by 'संयोगे गुरुः'। दीर्घस्य तु—i. e स्वाद not being षोपदेश the rule 'आदेशप्रत्यययोः' ( 113 ) does not apply inspite of the scope of 'इण्कोः' ( 112 )—thus असिस्वदत् without षत्व। Here end the स्वादीय roots.

मित—। नाग्लोपीति। न+अक्+लोपि शासु+ऋदिताम्—इतिच्छेदः। 'णौ चङ्युपधाया ह्रस्वः' (७।४।१) इत्यव्यवहितं पूर्व्वसूत्रम्। ततः सर्व्वमप्यनुवर्त्तते। तत्र णाविल्यावर्त्तते। एकम् 'अग्लोपी' इत्यंशं विशिनष्टि, अन्यत्—'चङि' इत्यत्र अन्वेति। चङि:इति च परसप्तमी। तदाह—णिचि अग्लोपिन: शास्' रित्यादि। सूत्रे अग्लोपीति विशेष्यमेव न तु कस्यापि विशेषणम्। अलुलोकदिति—द्वित्वादुत्तर' 'ह्रस्वः' इत्यभ्यास—ह्रस्वः। तस्य 'लोक' इत्यङ्गस्य दीर्घत्वेन लघुपरकत्वा-भावात् 'दीर्घो लघोः' इत्यस्याप्राप्तिः ह्रस्वत्वमेव। एवमन्यत्र। चदित्वादिति—हतु वध

ऋध्यनयोरुदित्त्वेन 'उदितो वा' इति क्त्वाच् प्रत्यये इड्विकल्पार्थं सूत्रम्। तच्च निरर्थकम् णिचा व्यवहितत्वात्। तथाहि ऋत्+णिच्+क्त्वाच् इति स्थिते तत्र इडागमस्यावकाश एव नास्ति णिज्व्यवधानादव्यवहितपरत्वाभावात्। एवमुदितो वेति सूत्रं व्यर्थं सत् ज्ञापयति 'उदितां णिज् विभाषितो भवती'ति। एतच्च पूर्वमुपक्रान्तम्। एवं पूरी आप्यायने इत्यत्र। तदाह—ईदित्त्वमिति। 'श्वीदितो निष्ठायाम्' ( ७·२८ ) इतीण्निषेधकं सूत्रम्। तदपि पूर्वसूत्रमिव व्यर्थं सत् ज्ञापयति 'ईदितां णिज् विभाषितो भवती'ति। पूरयति—पूरति इति। चङि तु—अपूपुरत्—अपूरि इति। असिष्वदत् इति। षोपदेशत्वात् 'इण्कोरादेशप्रत्यययो'रिति षत्वम्। अभ्यासस्य इकारस्य संयोगपरत्वेन गुरुत्वान्न दीर्घः। असिस्वददिति। व्याख्यातं सूत्रे। इत्यास्वदीयाः।

दी—। 'आ धृषाद्वा' ( गणसूत्र )। इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। युज १८०७ पृच १८०८ संयमने। योजयति—योजति। अयौजीत्। पर्चयति—पर्चति। पर्चिता। अपर्चीत्। अर्च १८०९ पूजायाम्। षह १८१० मर्षणे। साहयति। 'स एवायं नागः सहति कलभेभ्यः परिभवम्'। ईर १८११ क्षेपे। ली १८१२ द्रवीकरणे। लाययति—लयति। लेता। वृजी १८१३ वर्जने। वर्जयति—वर्जति। वृञ् १८१४ आवरणे। वारयति—वरति—वरति। वरिता—वरीता। जॄ १८१५ वयोहानौ। जारयति—जरति। जरिता—जरीता। ज्रि १८१६ च। ज्राययति—ज्रयति। ज्रेता। रिच १८१७ वियोजनसम्पर्चनयोः। रेचति। रेक्ता। शिष १८१८ असर्वोपयोगे। शेषयति—शेषति। शेष्टा। अशिक्षत्। अयं विपूर्वोऽतिशये। तप १८१९ दाहे।

तापयति—तपति। तप्ता। तृप १८२० तृप्तौ। 'सन्दीपने' इत्येके। तर्पयति—तर्पति। तर्पिता। छृदी १८२१ सन्दीपने। छर्दयति—छर्दति। छर्दिता। छर्दिष्यति। 'सेऽसिचि—' (२५०६) इति विकल्पो न। साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात्। 'चृप, छृप, दृप सन्दीपने' इत्येके। चर्पयति। छर्पयति। दृभी १८२२ भये। दर्भयति—दर्भति। दर्भिता। दृभ १८२३ सन्दर्भे। अयं तुदादावोदित्। श्रथ १८२४ मोक्षणे। 'हिंसायाम्' इत्येके। मी १८२५ गतौ। माययति—मयति। मेता। ग्रन्थ १८२६ बन्धने। ग्रन्थयति—ग्रन्थति। शीक १८२७ आमर्षणे। चीक १८२८ च। अर्द १८२९ हिंसायाम्। स्वरितेत्। अर्दयति—अर्दति—अर्दते। हिसि १८३० हिंसायाम्। हिंसयति—हिंसति। 'हिनस्ति' इति श्नमि गतम्। अर्ह—१८३१ पूजायाम्। आङः षद १८३२ पद्यर्थे। आसादयति—आसीदति। 'पाघ्रा—' (२३२०) इति सीदादेशः। आसत्ता। आसात्सीत्। शुन्ध १८३३ शौचकर्मणि। शुन्धिता। अशुन्धीत्। अशुन्धिष्टाम्। छद १८३४ अपवारणे। स्वरितेत्। जुष १८३५ परितर्कणे। परितर्कणमूहो हिंसा वा। 'परितर्पण' इत्यन्ये। परितर्पणं परितृप्तिक्रिया। जोषयति—जोषति। प्रीतिसेवनयोर्जुषते इति तुदादौ। धूञ् १८३६ कम्पने। णावित्यधिकृत्य 'धूञ्-प्रीञोर्नुग् वक्तव्यः' (वार्त्तिक)। धूनयति—धवति—धवते। केचित्तु 'धूञ्प्रीणोः—' इति पठित्वा प्रीणातिसाहचर्याद्‌ना-

तैरेव नुकमाहुः। धावयति। अयं स्वादौ, क्र्यादौ, तुदादौ च, स्वादौ ह्रस्वश्च। तथाच कविरहस्ये—

"धूनोति चम्पकवनानि धुनोत्यशोकं
चूतं धुनाति धुवति स्फुटितातिमुक्तम्।
वायुर्विधूनयति चम्पकपुष्परेणून्
यत् कानने धवति चन्दनमञ्जरीश्च॥"

प्रीञ् १८३७ तर्पणे। प्रीणयति। 'धूञ्प्रीञोः—' इति हरदत्तोक्तपाठे तु प्राययति—प्रयति—प्रयते। ग्रन्थ १८३८ ग्रन्थ १८३९ सन्दर्भे। आप्लृ १८४० लम्भने। आपयति—आपति। आपत्। आप्ता। स्वरितेदयमित्येके। आपते। तनु १८४१ श्रद्धोपकरणयोः। 'उपसर्गाच्च दैर्घ्ये'। तानयति—वितानयति—तनति—वितनति। 'चन श्रद्धोपहननयो' रित्येके। चानयति—चनति। वद १८४२ सन्देशवचने। वादयति। स्वरितेत्। वदति—वदते। अनुदात्तेदित्येके। ववदतुः। ववदिथ। ववदे। वद्यात्। वच १८४३ परिभाषणे। वाचयति—वचति। वक्ता। अवाचीत्। मान १८४४ पूजायाम्। मानयति—मानति। मानिता। विचारणे तु—भौवादिको नित्यसन्नन्तः। स्तम्भे तु—मानयते (इत्याकुस्मीयाः—'?)। मन्यते इति दिवादौ। मनुते इति तनादौ च। भू १८४५ प्राप्तावात्मनेपदी। भावयते-भवते। णिच्सन्नियोगेनैवात्मनेपदमितरके। भवति। गर्ह १८४६ विनिन्दने। मार्ग १८४८ शोके। उत्पूर्वो-

ऽप्युत्कण्ठायाम् । 'कण्ठते' इत्यात्मनेपदी गतः । मृजू १८४९ शौचालङ्कारयोः । मार्जयति—मार्जति । मार्जिता—मार्ष्टा । मृष १८५० तितिक्षायाम् । स्वरितेत् । मर्षयति—मर्षति—मर्षते । मृष्यति—मृष्यते इति दिवादौ । सेचने ऽपि मर्षति । धृष १८५१ प्रसहने । धर्षयति—धर्षति । इत्याधृषीयाः ।

अथादन्ताः । कथ १८५२ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् । वर १८५३ ईप्सायाम् । वरयति । वारयतीति गतम् । गण १८५४ सङ्ख्याने । गणयति ।

'आ धृषाद्वा' etc.—This is a गणसूत्र—meaning the roots mentioned here upto धृष प्रसहने ( 1851 ) (including)—take णिच् optionally ; when they do not take णिच् they will take शप् only as they do in the भ्वादि class and when any root ends in ङ् or ञ् or if it is अनुदात्तेत् or स्वरितेत् it will, in the भ्वादि पक्ष, be conjugated in the manner of आत्मनेपद or उभयपद by the rules 'अनुदात्तङित आत्मनेपदम्' and 'स्वरितञितः कर्त्रभिप्राये क्रियाफले'—which ( rules ) apply to nine classes ( गण ) other than चुरादि । Cp—वृज् ( 1814 ) वरणे—वारयति—( वरति—वरते )। But चुरादि roots become आत्मनेपदी when expressly mentioned or by the rule 'णिचश्च' (2564). अवर्जीत् —( लुङ्+सिच् in भ्वादिपक्ष ) वृद्धि by the rule 'वदव्रजहलन्तस्याचः' (2267). In the णिजन्त form—अववृजत् । Similarly elsewhere. षाहयति —सह by 'धात्वादेः षः सः' ; स एवायम् नागः etc.—shows use of सहति ; ष्वौ to melt. लाययति—लयति but in हेतुमण्णिच् ( causative ) we have

विलीनयति—विलाययति—विलापयति (स्तम्) by 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' (2591). वरिता—वरीता and जरिता—जरीता by 'वृतो वा' (2391) अवशेषोपयोगे i. e. in the sense of existing as remainder. अशिश्रयत्—the लुङ् form in the अणिजन्त stage by 'शल इगुपधादनिट: क्सः' (2336). आक्रन्दयति etc.—the rule 'सेऽसिचि—' (2506) directs the option of इट् to 'उच्छृदिर् (1446) दीप्तिदेवनयोः' read in रुधादि due to its contact with कृत (कृती) and तृद (उतृदिर्) read in रुधादि। Thus कृती (चुरादि) will give कर्दिष्यति only; अर्द to kill or injure, torment etc. cp.—'शरदृघनं नार्दति चातकोऽपि' (रघु); अपि i. e. in रुधादि। आङः सदः i. e. सद preceded by आङ् conveys the sense of पदि or पद to go read in दिवादि and चुरादि। असात्सीत्—अ-सद+लुङ् त (वृद्धि by 'वदव्रज—' (2267). But in the णिजन्त form we have—आसीषदत्। अशुश्रीत्—(शुभ्+लुङ्) no वृद्धि due to गुरुत्व of शु in connection with स्र (a conjunct letter). छद—छादयति—छदति—छदते। The Varttika 'धूञ्प्रीञोर्नुग्वक्तव्यः'—'नुक् (augment) has to be directed to धूञ् (धू) and प्रीञ् (प्री) in णिच्' provides नुक् (न्) for धू—धूनयति। Some however, read the Varttika as 'धूञ्प्रीणोर्नुग्वक्तव्यः' and state that धूनाति (धू+क्र्यादि) alone gets नुक् due to its (धूञ्'s) contact with प्रीणाति (प्री क्र्यादि) and not this चुरादि धू। Thus in their opinion it (चुरादि धूञ्) will give धावयति (and not धूनयति)। This root (धूञ्) is included in स्वादि, क्र्यादि and तुदादि also and it is ह्रस्व in स्वादि i. e. in स्वादि it is read as 'धुञ् कम्पने' and 'दीर्घान्तोऽप्ययम्'। As for instance in कविरहस्य (composed by बोपदेव) :—

धूनोति—धुनोति (स्वादि); धुनाति (क्र्यादि); धुवति (तुदादि); विधुनयति

(चुरादि) ; भवति (भ्वादि—with शप्) alt. in चुरादि by the गणसूत्र 'आधृषाद् वा' read herein. The meaning of the verse is very easy. It is composed to collect in a single verse the uses of भुज्। स्फुटितामुक्तम् is obj. of भुवति। अतिमुक्त means the creeper माधवी and स्फुटित is blown or blossomed. सन् refers to वायु (?)। प्रीणयति—with नुक् by the Varttika 'धूञ्प्रीञो:—' but according to 'धूञ्प्रीणो:—' the reading of the same by Haradatta, we cannot have नुक् but by वृद्धि in णिच् we will have प्रापयति and by गुण in शप् we will have प्रयति—प्रयते। उपसर्गाच्च दैर्घ्ये—i. e. तनु means to spread or lengthen whether preceded or not by an उपसर्ग, thus तानयति etc. वाचयति cp—'ततो गुरुभ्य: चितिपालपुत्रो वाचयति'—भोजप्रबन्ध। अवाचीत्—in णिच् in the non-causal form. Here चङ् by 'अस्यतिवक्तिख्यातिभ्योऽङ्' does not operate for it (चङ्) is directed to अदादि—वच् only. ववदतुः—because this वद् does not belong to the यजादि class (see भ्वादि under—'वचिस्वपियजादीनां किति'—२४०६). विचारणे तु i.e. मीमांसते, cp 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य'। णिच्सन्नियोगेन एव—in connection with णिच् only. मार्जिता—मार्ष्टा—due to option of इट् by 'स्वरति सूति सूयति धूञूदितो वा' (2279). In मार्ष्टा (want of it) ज् is changed into ष् by 'व्रश्चभ्रस्जसृजमृज्—' (294). Here end the आधृषीय roots.

अथ अदन्ता: etc :—The root कथ 'to describe' is अकारान्त and the अकार disappears in connection with णिच् by 'अतो लोप:' (2308). It may be argued in this connection that when the 'अ' of कथ elides due to the following of णिच् it (कथ) will become कथ् so that the उपधा will get वृद्धि by 'अत उपधाया:' (2282).

and the form will be काथि and not कथि। But the rule 'अचः परस्मिन् पूर्व्वविधौ' comes in and decides the case otherwise, as it inculcates that the elision of अ (अल्लोप)—an आदेश in con. with णिच—is to be treated as not having been elided i. e. as the existence of the 'अ' itself (स्थानिवत्)—in as much as णिच् being the cause of the elision of अ, enjoins at the same time the वृद्धि of the उपधा—which precedes the अ—an अच् ('अचः पूर्व्वत्वेन दृष्टस्य विधौ कर्त्तव्ये')। Thus by गुण we have कथयति (गुण by 'सार्व्वधातुकार्द्धधातुकयोः'). Hence Bhattoji says अल्लोपस्य etc. अग्लोपित्वात्—i. e due to the elision of अ which is contained in अक् (अ, इ उ, ऋ, लृ). न दीर्घसन्वद्भावौ—by 'सन्वल्लघुनि चङ् परेऽनग्लोपे' (2316), सन्यतः' (2317) and 'दीर्घो लघोः' (2318). वारयति—cp—'वृङ् 1814 आवरणे' above. गण—to count.

मित—। 'आ धृषाद्' इति। गणसूत्रमिदम्। युज पृच इत्यारभ्य—धृष प्रहसने इत्यन्तमन्तराळवर्त्तिषु धातुषु—णिच् च शप् च विकल्पेन भवतीति तदर्थः। अत आह—इत ऊर्द्धमित्यादि। अनिट्त्वात् शप्पक्षे वदव्रजेति हलन्तलक्षणा वृद्धिः। णिच्पक्षे तु अयूयुजत् इति पूर्व्ववत्। अपर्चीत् इति। सेट्कत्वात् शप्पक्षे—'इट इटि' इति सिज्लोपे रूपम्। अन्यत्र—अपिपर्चत् इति। स एवायमित्यादि—अर्थः स्पष्टः। नागो हस्ती। कलभेभ्यः स्तपोतकेभ्यः—अपादाने पञ्चमी। लाययति इति—लुक् तु न—'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' इत्यस्य हेतुमण्ण्यन्तविषयत्वात्। वरति—वरते इति। णिजन्तेऽपि अपि एव सार्थकत्वादित्यर्थः अन्यथा 'णिचश्च' इत्यनेनैव गतार्थत्वात्। वरिता—वरीता; जरिता—जरीता—इति—उभयत्रापि 'वृतो वा' (2391) इतीड्विकल्पः। अशिक्षदिति—शप्पक्षे अनिट्त्वात् 'शल इगुपधादनिटः क्सः' (२३३६) इति क्सः। कित्वाद्द गुणाभावश्च। णिच्पक्षे तु अशिशिचत् इति। अयमिति—शिष्। शर्दिष्यति इति। 'सेऽसिचि कृतचृतछृद-

ऽदन्तुरः' ( २५०६ ) इति सूत्रगतचकुदस्य रौधादिकटदन्तसाहचर्यात् तस्यैव इड्विकल्पो न लस्येति दर्शयति—साहचर्यादिति। अर्द हिंसायामिति। स्वरितेदिति। स्वरितेत्त्वस्य धातुमात्रापेक्षत्वात् शप्येव परतो धातोः परस्मैपदित्वमात्मनेपदित्वञ्च। पदार्थे इति। पदि च, गत्यर्थे वर्त्तते। अपादसीत् इति। शप् पक्षे अनिट्त्वात् सिचि वृद्धौ रूपम्। अधुक्षीत् इति। उकारस्य संयोगपरत्वेन ह्रस्वाभावान्न वृद्धिः। णाविल्यधिकृत्य इति। णिजधिकारे इत्यर्थः। अतएव णिचि परत एव नुक् इति दर्शयति—धूनयति इति। ञित्त्वाच्चापि उभयपदित्वम्। अस्य वार्त्तिकस्य पाठान्तरमाह—केचित्तु इति। 'प्रीञ्' इत्यस्य स्थले श्नाविकरणसहितस्य 'प्रीणा' इत्यस्य—पाठं कल्पयित्वा तत्साहचर्य्यात् धवतेरपि क्र्यादित्वे एव नुक् न चुरादाविति तेषां भावः। अतएव णिचि 'अचीकॢ पति' इति वृद्धौ धावयति इति रूपम्। कविकल्पं वोपदेवविरचितधातुग्रन्थविशेषः। धुनोति—धूनोति ( स्वादि )—ह्रस्वपाठस्यापि सत्त्वात्। धुनाति—( क्र्यादि )—'प्वादीनां ह्रस्वः' ( २५५८ ) इति ह्रस्वः। धुवति—( तुदादि ) 'अचि श्नु धातु—'इत्युवङ्। विधूनयति—( चुरादि ) 'धूञ्प्रीञोर्नुक्—' इति नुक्। धवति—( भ्वादि )। अत्र सर्व्वत्र उदाहरणेषु—विधूणयति-वर्ज्जम् आत्मनेपदेऽप्यस्य धातोः प्रयोगो विद्यते इति बोद्धव्यम्। 'स्वरितञितः—' इति सूत्रात्। स्फुटितातिमुक्तम् इति—स्फुटितः विकशितः अतिमुक्तः माधवीलता तं धुवति कम्पयति। 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी—लता' इत्यमरः। 'अतिमुक्त' इत्यस्य स्त्रीत्वेऽपि पाठो दृश्यते। यथा—

'स्फुरदतिमुक्तालतापरिरम्भणपुलकितमुकुलितचूते' ( जयदेव )।

धदिति, वायुरित्यर्थः। अव्ययानां विशेष्यलिङ्गानपेक्षप्रयोगदर्शनात् (?)। उपसर्गाच्चेति—उपसर्गात् अनुपसर्गाच्च परतस्तनधातुर्दैर्घ्ये वर्त्तते अनुपसर्गात्तु शब्दोपकरणयोरेव इत्यर्थः। ववदतुरिति। यजादित्वाभावान्न संप्रसारणमिति भावः। अवाचीत् इति। अस्यतिवक्तीति लुका निर्द्देशादस्मादुत्तरमङ् नेति भावः। अनिट्त्वात् सिचि वृद्धौ रूपम्। णिचि—अवीवचत्। विचारणे त्विति—। मीमांसते इत्यर्थः। णिच्-सन्नियोगेनैवेति।

णिचि परत एवेत्यर्थः। तेन णिचि परत आत्मनेपदं नेति दर्शयति—भवतीति। मार्जिता—मार्ष्टा इति। 'स्वरति सूति सूयति धूञूदितो वा' इत्यूदित्वादिड्विकल्पः। इडभावे 'व्रश्च भ्रस्ज सृजमृज—' (२९४) इत्यादिना षत्वम्। इत्याधृषीयाः—।

कथादन्ता इति। कथ १८९८ वाक्यप्रबन्धे—इत्यन्तमेव आपाततो धातवोऽदन्ता अकारान्ता इत्यर्थः। अल्लोपस्येति। इदमत्र विवक्षितम्—कथधातुस्तावदकारान्तः। तेन कथ+णिच्+शप्+तिप् इति स्थिते 'अतो लोपः' (२३०८) इति कथ्+णिच् इत्यादौ जाते 'अत उपधायाः' (२२८२) इत्युपधावृद्धौ काथि इत्येवं भवितुं न्याय्यम्। किन्तु 'अचः परस्मिन् पूर्वविधौ' (५१) इति सूत्रम् उपतिष्ठते। तथाहि णिजिति अल्लोपस्य निमित्तम्। पुनः स एव णिच् अल्लोपादुत्तरमुपधावृद्धेरपि निमित्तम्। उपधावृद्धिश्च अल्लोपाख्यस्य अजादेशस्य पूर्वो विधिः ततश्च अल्लोपः स्थानिवद् भवति। एवञ्च सति उपधावृद्धिर्दुरापास्ता। अकारसत्त्वे उपधात्वस्यैव अभावात्। तेन च णिच्सन्नियोगेन 'कथि' इत्येव भवति न तु 'काथि' इति। ततः 'सार्वधातुकार्ध-धातुकयो'रिति गुणेन कथयति इति सिद्धम्। न चात्मात्रमाश्रित्य—पूर्वविधेः प्रवर्त्तनात् 'स्थानिवदादेशोऽनल्विधौ' (५०) इति निषेधात् स्थानिवत्त्वमत्र नास्तीति वाच्यम्। तत्र हि आदेशमाश्रित्य—विधेः प्रवर्त्तनम्। यथा द्यौः, पन्थाः इत्यादौ। अत्र तु स्थानिनमेवाश्रित्य विधिः प्रवर्त्तनमित्यनयोर्भेदः। ततश्च 'स्थानिवत्—' इति सूत्रं नोपस्थापनीयमित्यलम्। अग्लोपित्वादिति। 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (२३१६) इति, 'सन्यतः' इति, 'दीर्घो लघोः' इति च सूत्रादिति भावः। अकारलोपित्वादग्लोपित्वम्। वरयतीति। कथयतीतिवत्। चङि—अववरत्। वारयतीति। अस्याधृषीयत्वमिति भावः। अथ गणयतेरपि अग्लोपित्वेन दीर्घ-सन्वद्भावनिषेधादजगणदित्येव प्राप्ते आह—

२५७२। ई च गणः ॥७।४।९७॥

दी—। गणेरभ्यासस्य ईत् स्यात् चङ्परे णौ। चादत् (अपि?)। अजीगणत्—अजगणत्। शठ १८५५ श्वठ १८५६

सम्यगवभाषणे। पट १८५७ वट १८५८ ग्रन्थे। रह १८५९ त्यागे। स्तन १८६० गदी १८६१ देवशब्दे। स्तनयति। गदयति। अजगदत्। पत १८६२ गतौ वा। वा णिजन्तः। वा अदन्त इत्येके। आद्ये पतयति—पतति। पताञ्चकार। अपतीत्। द्वितीये पातयति। अपीपतत्। पष १८६३ अनुपसर्गात्। गताविति[?]व। पषयति। स्वर १८६४ आक्षेपे। स्वरयति। रच १८६५ प्रतियत्ने। रचयति। कल १८६६ गतौ संख्याने च। चह १८६७ परिकल्कने। परिकल्कनं दम्भः शाठ्यं च। मह १८६८ पूजायाम्। महयति। महति इति अपि गतम्। सार १८६९ कृप १८७० श्रथ १८७१ दौर्बल्ये। सारयति। कृपयति। श्रथयति। स्पृह १८७२ ईप्सायाम्। भाम १८७३ क्रोधे। अबभामत्। सूच १८७४ पैशुन्ये। सूचयति। अषोपदेशत्वान्न षः। असुसूचत्। खेट १८७५ भक्षणे। तृतीयान्त इत्येके। 'खोट' इत्यन्ये। चोट १८७६ क्षेपे। गोम १८७७ उपलेपने। अजुगोमत्। कुमार १८७८ क्रीडायाम्। अचुकुमारत्। शील १८७९ उपधारणे। उपधारणम्—अभ्यासः। साम १८८० सान्त्वप्रयोगे। अससामत्। 'साम सान्त्वने' * इत्यतीतस्य तु असीषमत्। वेल १८८१ कालोपदेशे। वेलयति। 'काल' इति पृथग्धातुरित्येके। पल्पूल १८८२ लवनपवनयोः। वात १८८३ सुखसेवनयोः। 'गतिसुखसेवनेषु' इत्येके। वातयति। अववातत्। गवेष १८८४ मार्गणे। अजगवेषत्। वास १८८५ उपसेवायाम्। निवास

१८८६ आच्छादने। अनिनिवासत्। भाज १८८७ पृथक्कर्मणि। सभाज १८८८ प्रीतिदर्शनयोः। 'प्रीतिसेवनयो'—रित्यन्ये। सभाजयति। ऊन १८८९ परिहाणे। ऊनयति। 'ओः पूयण्जि—' (२५७७) इति सूत्रे 'पयोः' इति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं 'णिचि अच आदेशो न स्याद्द्वित्वे कार्ये' इति। 'यत्र द्विरुक्तावभ्यासस्योत्तरखण्डस्याद्योऽच्, प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते, तत्रैवायं निषेधः।' ज्ञापकस्य सजातीयापेक्षत्वात्। तेन अचिकीर्त्तत् इति सिद्धम्। प्रकृते तु 'न'—शब्दस्य द्वित्वम्। तत उत्तरखण्डेऽल्लोपः। औननत्। मा भवान् ऊननत्। ध्वन १८९० शब्दे। अदध्वनत्। कूट १८९१ परितापे। 'परिदाह' इत्यन्ये। सङ्केत १८९२ ग्राम १८९३ कुण १८९४ गुण १८९५ चामन्त्रणे। चात् कूटोऽपि। कूटयति। सङ्केतयति। ग्रामयति। कुणयति। गुणयति। पाठान्तरम्। केत १८९६ श्रावणे निमन्त्रणे। च। केतयति। निकेतयति। 'कुण गुण चामन्त्रणे। चकारात् केतने। कूण १८९७ सङ्कोचनेऽपि। स्तेन १८९८ चौर्ये। अतिस्तेनत।

The अभ्यास of गण gets ईत् ( ई in place of अ ) when णि ( णिच् ) followed by चङ् follows and from the चकार in the rule it (अभ्यास) gets अत् (अ) also ( drawn from 'अत् स्मृदृत्वर—' 2566 ). Thus अजगणत् ( with चुत्व and अत् )—अजीगणत् ( with चुत्व and ईत् ). रह to leave cp—'रहयत्यापदुपेतमायतिः' ( भारविः ). अररहत् like अचकदत्।

नदी—It is not ईकारान्त but अकारान्त—ईत्व is due to the compound स्तनयं नदिव—स्तनगदी ( इन्द ). ईदशब्द here means the roar of clouds. 'स्तनयित्नु र्वलाहक:' अमर: । पत गतौ वा—i. e पत is optionally चिजन्त in the sense of movement ( गति ) or falling. Some explain that it is optionally अदन्त due to the ambiguity of 'वा' । पतापकार—owing to अकारान्तत्व it becomes अनेकाच्‌ and आम्‌ comes in by the Varttika 'कास्यनेकाज्‌ग्रहणं कर्त्तव्यम्‌' under 'कास्प्रत्ययादाममन्त्रे लिटि' (2306)। अपतीत्—लुङ् form in the अदपक्ष. It is सेट्. Hence स of सिच्‌ elides by 'इट ईटि'(2288). Note that it is diff. from पतॢ (845) पतने ( भ्वादि ) which gives 'अपतत्' by 'पतः पुम्' ( 2355 ) in लुङ् ( due to ऌदित्व ). द्वितीये etc.—पातयति for in this case पत not being अदन्त, the उपधावृद्धि in णिच्‌ applies. अपीपतत्—(लुङ्‌चङ्) not being अदन्त, सन्‌वद्भाव etc. apply. रच प्रतियत्ने i. e. to make etc. cp. 'रचयति शयनं सचकितनयनं पश्यति तव पन्थानम्' ( जयदेव )। ईप्सायाम्—wishing to get. अबभामत् by 'ह्रस्वः' ( 2180 ). असूसूचत्—here the reading असूसुचत्‌ is wrong, it should be असूसूचत् ( in सूच, अल्लोप being स्थानिवत्,'णौचङ्युपधाया: ह्रस्वः' does not apply and we get दीर्घ in 'सूच' when णौ चङ् follows, and there is no दीर्घ of the अभ्यास for 'अल्लोपित्वात्‌ दीर्घसन्‌वद्भावौ न') । No षत्व for सूच is not षोपदेश ; hence 'इण्कोः and आदेशप्रत्ययोः' do not apply. अजुगोमत्—Here 'णौ चङि—' (2316) does not apply for the root गोम is अकारान्त । The अभ्यास gets ह्रस्व and चत्व as before. Similarly अचुकुमारत्‌ । शील in उपधारण or practice ( अभ्यास ). * It means also to put on—cp—'शीलय नीलनिचोलम्' ( जयदेव )। गवेष—to search or research. गवेषयति hence गवेषणा ( स्त्रियाम्—'ण्यासश्रन्थो युच्' ). सभाज to visit and express pleasure. ऊन to lessen, reduce etc. णौ: पुवयुजि—

## Translation of the words of Bhattoji.

In the rule 'ओः पुयण्जि अपरे' ( 2577 ), the expression or acceptance of वर्ग i. e. पवर्ग ( पु ), प्रत्याहार ( यण्—यवरल ) and जकार ( जि ) instead of 'पयोः' ( of प and य ) i.e, instead of enunciating 'ओः पयोः अपरयोः'—is an indication that 'when द्वित्व or duplication has to be effected, no substitute of an अच् will operate due to the existence of णिच् behind.' But this prohibition viz 'णिचि ( सति ) अच आदेशो न स्याद् द्वित्वे कार्ये' holds good only where ( i.e. in which root ), in the matter of duplication, the first अच् ( vowel ) of the latter portion ( or part and parcel ) of the अभ्यास is found to be an अवर्ण or अकार whether when it ( the root ) stands for operation ( प्रक्रिया ) or when it is viewed in its modified or established form (परिनिष्ठिते रूपे) after operations द्वित्व etc. have been executed over it. And this we infer on the ground that a ज्ञापक or indication is true to similar cases ( only ). Thus the form 'अचिकीर्तत्' is justified. But in the case at our hand viz the lung. (लुङ्) form of ऊन (ऊन + णिच् + चङ् + तिप् ), the particle न is duplicated ( first ) then elides the अ existing in the न of the latter portion giving औननत्. But if मा is added the form will be ऊननत् ( without आट् by 'न माङ्योगे' and ह्रस्व by 'णौ चङ्युपधायाः—' 2572 ).

---

* N. B.—Note that 'साम सान्त्वने' is not to be met with in the extant धातुपाठ of the अष्टाध्यायी so that either Bhattoji is mistaken or the text is vicious. Some hold that 'षान्त्व सामप्रयोगे' is referred to here. But that also is open to question.

## Exposition of his idea

How to form 'औननत्' lung. form of ऊन? we have at our disposal two process viz (i) the general significance of Panini's rules and (ii) the suggestion or indication (ज्ञापक) inferred. If we proceed according to the former method, it will give 'औनिनत्' thus :—ऊन + णिच् + चङ् + तिप्—Here as णिच् is not a cause of द्वित्व so 'द्विर्वचनेऽचि' will not apply, consequently णिच् will first operate giving ऊनि + अत् by 'अतो लोपः' (2308—6.4.48) which is later than 'चङि' (2315—6.1.11) which directs द्वित्व. Then by द्वित्व we have ऊनि नि अत् due to the duplication of नि only by the rule 'अजादेर्द्वितीयस्य,' finally, by णिलोप or elision of णिच् by 'णेरनिटि' (2313) and the aug. आट्, we have औनि न् अत्. (वृद्धि by 'आटश्च')—औनिनत्. But that (औनिनत्) is not sanctioned by usage. Hence we have no other alternative but to proceed with the second method (ii); thus—(Here we shall first show the effect of the suggestion, derived from the rule 'ओः पुयण्ज्यपरे', to exhibit the formation of 'औननत्' and then discuss the suggestion itself)—The suggestion is that when द्वित्व has to take effect, an अजादेश resulting from णिच् will not take place. Then in ऊन + णिच् + चङ् + तिप्—duplication (द्वित्व) will first appear giving ऊन न इ अत्; then 'अ' of the verbal stem (अङ्ग) i. e of the second न disappears by 'अतो लोप' due to णिच् which is an आर्द्धधातुक; then we have ऊन न् इ अत्; finally by the disappearance of णिच् (इ) by 'णेरनिटि' and the application of 'आट्' which enjoins वृद्धि by 'आटश्च' we have औननत्। Now to

discuss the suggestion let us see :—What does the rule 'ओः पुयण्ज्यपरे' means? It means that 'इकार is the substitute of an उकार occurring in the अभ्यास of an अङ्ग followed by पवर्ग, यण्(यवरल) and जकार—each containing or followed by the vowel 'अ' when सन् or सन्वद्भाव takes place'. As for instance :—'पिपावयिषति—

पवर्ग { (पूङ्+णिच्+सन्), अपीपवत् (पूङ्+णिच्+चङ्—सन्वद्भाव); बिभावयिषति, अबीभवत्; मिमावयिषति, अमीमवत्;

यण् ज { यियावयिषति, अयीयवत्; रिरावयिषति, अरीरवत्; लिलावयिषति, अलीलवत् and जिजावयिषति, अजीजवत्। (from पू-भू मू—यु-रु-लू and जु respectively in सन् & चङ्)

But all these forms save and except पिपविषते ( पूङ्+सन् ) and यियविषति ( यु+सन् ) could have been effected without the help of 'ओः पुयण्ज्यपरे'. Take for instance पिपावयिषति। पू+णिच्+सन्+तिप्=पावि सति ( णिच् not being a cause of द्वित्व takes effect first for 'द्विर्वचनेऽचि' ( 2243 ) does not apply )=पावि-पावि इट् सन् शप् तिप् ( duplication and इडागम )=पपावि इषति ( by 'ह्रस्वः' 'हलादिः—' and इण्कोः—', 'आदेश—') = पिपावय् इषति (by 'सन्यतः' (2317),'सार्व—'(2168) and 'एचः—) = पिपावयिषति। Similarly the rest. Thus 'सन्यतः' serves what is directed by 'ओः पुयण्—', for the purpose of the latter is only the direction of इत्व। Hence 'ओः पुयण्—' fails* and

---

* But 'ओः पुयण्—' is not altogether friuitless. It is serviceable in the cases of पिपविषते ( पूङ्+सन् लट्ते ) and यियविषति ( यु+सन्+तिप् ) where no णिच् follows. But its scope however is narrowed i. e, it is to do with पूङ् and यु ( प and य ) only. If so, then it is proper to enunciate as 'ओः पयोरपरयोः'. So Bhattoji says 'पयोः' इति वक्तव्यं।

being a failure suggests 'णिचि अच आदेशो न etc' ( explained ). Thus according to this suggestion द्वित्व first operates and then the अजादेश due to the following of णिच् ( and it is for this reason that भाष्यकार exclaims :—

'सामर्थ्ययोगान्न हि किंचिदत्र
पश्यामि शास्त्रे यदनर्थकं स्यात्' )।

But does this prohibition 'णिचि अच आदेशो न—' hold good every where ? No. It is of service in the case of that duplication ( यत्र द्विरुक्तौ—etc. ) where the first अच् or vowel of the latter part of ( or after ) the अभ्यास is an अवर्ण no matter whether it ( अवर्ण ) is found in the face of the procedure or after the same has been carried out—for a ज्ञापक applies in a similar case only ( as in औननत्, the अवर्ण is found in the face of the procedure and in पिपावयिषति etc. in the established form ( परिनिष्ठितरूप ) । Thus the prohibition ( 'अच् आदेशः—' ) does not apply in the case of 'अचिकीर्तत्' for there णिच् operates first ( by 'उपधायाश्च' etc. ) and then द्वित्व and thus there is no अवर्ण to be found after the अभ्यास । मा भवान् etc.—In ऊननत्—the उपधा is not ह्रस्व due to अग्लोपित्व or अग्लोपित्व by 'नाग्लोपि—' ( 2572 ) ; no वृद्धि due to the want of आट् by 'न माङ्योगे' । असिस्वनत्——by 'ह्रस्व' and 'एच इग् ह्रस्वादेशे'—no षत्व due to अनेकाच्त्व ( polysyllabicness ) which prohibits its being षोपदेश ।

मित—। ई चेति—। 'णौ चङि—' ( ७।४।१ ) इत्यतो णाविति, 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) इत्यतः अभ्यासस्येति, 'सन्वल्लघुनि—' ( ७।४।९३ ) इत्यतः 'चङ् परे' इति चानुवर्तते। तदाह—णवेरभ्यासस्येत्यादि। सूत्रे चकार—

याख्यमाह—चान् अन् इति। अतएव अदादेशे अजगणदिति, ईदादेशे अजीगणदिति। अररक्षत् इति अचकथदितिवदग्लोपित्वान्न दीर्घसन्वद्भावौ। गदीति—नायम् ईकारान्त किन्तु अकारान्त एव। ईका निर्देशः। सनयगदिर्येति विग्रहः। पत गतौ वेति गणसूत्रमिदमिति तत्त्वबोधिनी। आर्घ इति—वशब्दस्य णिजर्थत्वं इत्यर्थः। पताधकार—गुप्पक्षे अनेकाच्कत्वात् 'कास्यनेकाज्ग्रहणं कर्त्तव्यम्' इति वार्त्तिकादाम्। अपतीदिति। सेटत्वात् गुप्पक्षे 'इट ईटी'ति सलोपः। पातयतीति—वा अदन्त इति व्याख्याने अदन्ताभावपक्षे पूर्ववद् णिचि वृद्धिः। अपीपतदिति—अदन्ताभावपक्षे अग्लोपित्वा—भावाद् दीर्घसन्वद्भावौ इत्यर्थः। चह परिकल्कने इति। घटादिपर्ये ऽप्यस्य पाठः। सार दौर्बल्ये इति। अतएव अतिशयेन सारयति (मलादिनिःसारणेन दुर्बलं करोति) इत्यतीसारः। अससारदिति। 'ह्रस्वः' इति ह्रस्वः। जश्त्वम्। 'अतो लोप' इत्यल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। अचीकथदित्वादिति—स्पष्टम्। अजुगोमदिति। 'एच इग्घ्रस्वादेशे' इत्यभ्यासस्योकारत्वम्। कुलजश्त्वे प्राग्वत्। अन्यत् स्वयं साधनीयम्। 'साम सान्त्वने' इति—एतत्तु मूलपुस्तके कुत्रापि न दृश्यते। तेन 'ननु साम...इति कथादेः प्राक्चुरादौ पाठो व्यर्थः' इति वदतां केषाञ्चिद् वचनमपि व्यर्थम्। मूलमनुसन्धित्सुभिस्तत्त्वबोधिनी द्रष्टव्या इति दिक्। गवेष इति अनेकाच्-कोऽपि—'कुमार क्रीडायामि'ति वदेकाजेव गृह्यते। तेन गकारमात्रस्य द्वित्वम्। एवम्—अनिनिवासत् अससभाजदित्यादौ प्रक्रिया ऊहनीया। ननु औननदिति कथं सिद्धम्। यदात्र सूत्रमहतिराश्रीयते तदा ऊन णिच् चङ् तिप् इति स्थिते 'चङि' (६।१।११) इत्यपेक्षया 'अतो लोपः' (६।४।४८) इत्यस्य परत्वादन्तरङ्गत्वाच्च (१) न—शब्दस्य द्वित्वं न भवति। न च 'द्विर्वचनेऽचि' (१।१।५९) इति प्रतिषेधपरपरिभाषोपस्थानाद् द्वित्वं प्राग् विधेयमिति वाच्यम्। णिच्प्रत्ययस्य—द्वित्वनिमित्तत्वाभावेन तस्य सूत्रस्येह दुर्लभत्वात्। न चाल्लोपस्य स्थानिवद्भावाद् भविष्यति इति गद्यम्। पूर्वत्र केवले (हलि) नकारे कर्त्तव्याभावाद् 'अचः परस्मिन्—' इत्यस्याप्रवृत्तेः।

(१) चङ् तावद् धातुप्रत्ययोभयापेक्षत्वाद् बह्वापेक्षत्वेन बहिरङ्गः। णिच तु धातुमात्रापेक्षत्वेन स्वल्पापेक्षत्वादन्तरङ्ग इति विवेकः।

तथाचात्र पक्षे ( सूत्रप्रकृतिपक्षे ) 'अतो लोपः' ( २३०८ ) इत्यल्लोपे कृते 'पुगन्त—' ( २१८९ ) इत्यस्याविषयत्वाद् गुणाभावे ऊनि चङ् तिप् इति स्थिते 'चङि' ( २३१५ ) इति द्वित्वविधौ 'अजादेर्द्वितीयस्य' इति निशब्दस्य द्वित्वम्। तत आडागमे 'आटश्च' इति वृद्धौ औनिनि अत् इति जाते 'णेरनिटि' ( २३१३ ) इत्यभ्यासादुत्तरस्य—इकारलोपे औनिनत् इति भवति न तु औननदिति। अतः सूत्रप्रकृतिपक्षो हेयः सूत्रज्ञापकपक्षश्चाश्रयणीयः। अतएव ज्ञापकपक्षं विवृणोति—'ओः पुयण्जि—' इत्यादिना। अयं भावः :—'ओः पुयण्ज्यपरे' ( २५७७—७।४।८० ) इति सूत्रं तावद् व्यर्थम्। तथाहि 'सनि परे ( सन्वद्भावविषये च ) यदङ्गं तदवयवाभ्यासोकारस्य इत्त्वं स्यात् पवर्गे यण् जकारेषु अवर्णपरेषु परतः इति सूत्रार्थः'। पिपावयिषति, अपीपवत्। बिभावयिषति, अबीभवत् ( णिजन्तस्य भवतेः सनि, चङि च क्रमेण रूपे )। मिमावयिषति, अमीमवत् ( मूङ् इत्यस्य प्राग्वदिति पवर्गे उदाहरणानि )। यियावयिषति, अयीयवत् ( यु इत्यस्य प्राग्वत् )। रिरावयिषति, अरीरवत् ( रु ) लिलावयिषति, अलीलवत् ( लू इति यण्प्रत्याहारे उदाहरणानि )। जिजावयिषति, अजीजवत् ( इति जकारगतमुदाहरणम् )। एतेषु तावत् 'ओः पुयण्जि—' सूत्रमन्तरेणैवं प्रक्रिया :—पूङ्+णिच्+इट् सन्+शप्+तिप् इति स्थिते 'सन्यङोः' ( ६।१।९ ) इति प्राग् द्वित्वे उत्तरखण्डे णिच्कार्य्येण पुपावि इषति इति जाते अनेन सूत्रेण पु इत्यस्य इत्त्वेन पिभावः। इडागमादेशौ। पिपावयिषति। एवमन्यत्र। अपीपव-दित्यादौ तु पूङ् णिच् चङ् तिप् इति स्थिते पूर्ववत् प्राग् द्वित्वम् ततो णिच् कार्य्यम्। एवम् अडागमेन च पुपावि अत् इति स्थिते 'णेरनिटी'ति णिलोपे 'णौ चङि—' इत्युपधाह्रस्वे अभ्यासस्य अनेन इत्त्वे 'सन्वल्लघुनि—' इति सन्वद्भावे 'दीर्घो लघोः' इति दीर्घे च कृते अपीपवत् इति सिध्यति। एवमन्यत्र। एवञ्च इत्त्वकरणमेव सूत्रफलम्। तत्तु 'सन्यतः' ( २३१७ ) इत्यनेनापि सिध्यति। तथाहि—पूङ्+णिच्+इट् सन् शप् तिप् इति स्थिते प्राक् णिच्कार्य्येण पावि इषति इति जाते 'सन्यङो'रिति द्वित्वे पूर्वखण्डस्य 'ह्रस्वः' इति ह्रस्वे इडागमादेशेषु; 'सन्यतः' इति इत्त्वे इडागमादेशयोश्च कृतयोः पिपावयिषति इति सिध्यत एव एवमन्यत्रापूह्यम्। अपीपव-

द्वित्वादावपि पूङ्+णिच्+चङ्+तिट् इति स्थिते प्राक् णिच्कार्य्येण पावि अत् इति स्थिते 'चङि' इति द्वित्वे अडागमे अभ्यासकार्य्ये, हलादिशेषे, णिज्लोपे, उपधाह्रस्वे, 'सन्वत' इत्यभ्यासस्य इत्त्वे 'दीर्घो लघोः' इति दीर्घे च कृते अपीपवदिति सिध्यत्येव। तथा सति 'ओः पुयण्जि—' इति सूत्रं व्यर्थम्। प्राक् णिच्कार्य्येण द्वित्वादि 'सन्वत' इति इत्त्वेन च यथोक्तरूपसिद्धेः। ननु तर्हि पिपविषते, यियविषति इत्युभयत्र कथम्। तत्र हि पु—यु इत्यनयोरुत्तरम् इषते—इषति इति यथाक्रमं स्थिते णिच्परकत्वाभावात् तत्कार्य्याभावेन द्वित्वं भवति। ततश्च पू पू इषते, यु यु इषति इति जाते 'सार्व्व—' इति गुणावादेशयोःकृतयोः'ओः पुयण्जि—' इत्यनेन अभ्यासेत्वे च पिपविषते, यियविषति इति सिध्यति न तु भवदुपन्यस्तणिच्-कार्य्येण। तत्र णिच एव अभावात्। ततश्च 'सन्वत' इत्यस्याप्यप्रवृत्तेरिति चेत्। सत्यम्। वर्ग-प्रत्याहारजकारपरइत्यनु व्यर्थम् (पु=पवर्ग, यण्=प्रत्याहार जि=जकारः)। पूङ्यौ इति द्वयोरेव विधानप्रयोजनात्। तथा सति 'ओः पयर्योरपरयोः'. इत्येव सुवचम्। न तु 'ओः पुयण्जि अपरे' इति। तथापि यत् सूत्रं करोति तद् विज्ञापयत्या-चार्य्यः 'णिचि अच आदेशो न—स्याद् द्वित्वे कर्त्तव्ये' इति पिपावयिषति—अपीपव-दित्यादौ—सर्व्वत्र णिचः सत्त्वात् इति। अतएवाह 'पयर्योरिति वक्तव्ये वर्ग-प्रत्याहारजकारपरो लिङ्गमि'त्यादि। परो=परत्वम् भावे अप्। वर्गप्रत्याहार—परः—कर्त्तृपदम्। लिङ्गमिति विधेयम् इत्यन्वयः। ननु किमयं निषेधः सर्व्वत्र प्रवर्त्तते नेत्याह—यत्रेति। यत्र 'धातौ' द्विरुक्तौ 'द्वित्वे कृते सती'त्यर्थः, आद्यः 'प्रथमः (१) अच् 'स्वरः' (इदमुद्देश्यम्) अवर्णः 'अकारः' लभ्यते भवतीत्यर्थः (इदं विधेयम्) तत्र 'धातौ' अयम् 'एषः' निषेधः ('णिचि अच आदेशो न—' इत्यादिरूपः) प्रवर्त्तते इति शेषः। नन्वस्मिन्नवर्णे कुत्र वर्त्तमाने निषेधोऽयं प्रवर्त्तता—मित्यपेक्षायामाह—'प्रक्रियायां परिनिष्ठते रूपे वा' इति। प्रक्रियायामिति द्वित्वप्रवृत्ति-वेलायाम्। परिनिष्ठते रूपे इति द्वित्वादुत्तरं गुणवृद्धिणिजादिप्रक्रियायाः परत्र

---

(१) आद्यः अच् इति स्पष्टार्थम्। एकाचो धातोर्द्वित्वे अभ्यासोत्तरखण्डेऽपि तस्यैव सत्त्वाद् द्वितीयस्याचोऽभावात् इति विभावनीयम्।

इत्यर्थः। वाशब्देन क्वचिदवर्णपरत्वं विवक्षितम्। तत्र अवर्णो भविष्यति इति नियमस्य निर्दिशासम्भवादेवमुक्तमिति विवेचनीयम्। कुतः—ज्ञापकत्वेति। सजातीये समानजातीये जिज्ञावयिषतीत्यादौ अभ्यासोत्तरखण्डे अवर्णपरकत्वनियमादित्यर्थः। तत्र अतिव्याप्तिं वारयितुमाह—तेनेति। अत्र प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णाभावात् 'णिचि अच आदेशो न स्यात्—' इति निषेधो न प्रवर्तते। अचिकीर्तदिति पूर्ववत् 'उपधायाश्च' (२५७१) इति सूत्रे प्रतिपादितम्। प्रकृते लिति। औननदिति। नतम्। मा भवानिति। 'न माङ्योगे' इत्याडागम—निषेधः। अग्लोपित्वात् 'नाग्लोपिशास्—' इति निषेधान्न उपधावृद्धिः। हिलादि प्राग्वत्। पाठान्तरमिति। सङ्कोचने इत्येतत्पर्यन्तमिति बोध्यम्। अतिस्तेनदिति। 'एच इग्-ह्रस्वादेशे' इति अभ्यासे ह्रस्वम्। अनेकाच्कत्वेन अषोपदेशत्वान्न षत्वम्।

दो—। आ गर्वादात्मनेपदिनः। पद १८९९ गतौ। पदयते। अपपदत। गृह १९०० ग्रहणे। गृहयते। मृग १९०१ अन्वेषणे। मृग्यति इति कण्ड्वादिः। कुह १९०२ विस्मापने। शूर १९०३ वीर १९०४ विक्रान्तौ। स्थूल १९०५ परिबृंहणे। स्थूलयते। अतुस्थूलत। अर्थ १९०६ उपयाच्ञायाम्। अर्थयते। आर्तथत। सत्र १९०७ सन्तानक्रियायाम्। अससत्रत। अनेकाच्त्वान्न षोपदेशः। सिसत्रयिषते। गर्व १९०८ माने। गर्वयते। अदन्तत्वसामर्थ्याण्णिज्विकल्पः। धातोरन्त उदात्तः लिटि आम् च फलम्। एवमग्रेऽपि। इत्यागर्वीयाः।

आ गर्वात् etc. Now we take up the आत्मनेपदी roots ending in (and inclusive of) 'गर्व 1908 माने'। पदयते etc. the process is similar to that in कथयति etc. (ante.) for गर्वादि roots are a

-subdivision of अदन्त roots which will extend to the end of the चुरादि class. अतुत्थ्‌_तत्—ह्रस्व etc by 'ह्रस्वः','शर्पूर्वाः खयः' and 'अभ्यासे चर्च' —the penultimate is not ह्रस्व by 'नाग्लोपि—' for being अदन्त or ending in अ which elides by 'अतो लोपः', it is अग्लोपि. अर्थ to beg or entreat. अर्थयते—Here the वृद्धि enjoined by 'अचो ञ्णिति' (254) does not apply by the dictum 'वृद्धेर्लोपो बलीयान्' (भाष्य)—Elision (of an अच्) is superior to the वृद्धि (of an अच्). Thus 'अतो लोपः operates. Then 'अत उपधायाः' (2282) also does not apply for रेफ and not अ is the उपधा of अर्थ् after अल्लोप। आर्तयत like औननत्. अनेकाच्त्वात् etc.—cp 'एकाचः षोपदेशाः—' etc, under 'उपधायां च' (2265), अदन्तसामर्थ्यात् etc—Hence अर्थते (without णिच्). This (option of णिच्) is inferred from the root's ending in अकार which being elided by 'अतो लोपः' fails to effect उपधावृद्धि (in सार्वधातुक), and सन्वद्भाव and दीर्घ (in लुङ्) as in the case of कथ, ग्रह, etc. But in the case of गर्व, अकार after 'व' is not उपधा and it is दीर्घ and there is no occasion for वृद्धि here. Thus it (अ) here prescribes णिज्विकल्प to गर्व। Moreover the root is उदात्त at the end and takes आम् in लिट् due to its being polysyllabic (अनेकाच्) Here end आगर्वीय roots.

मित—। आगर्वादिति—। गर्व १९०८ माने इत्यन्ता धातवोऽप्यदन्ता आत्मनेपदिनश्चेत्यर्थः। पदयते—अपपदत इति। कथयति—अचकथदित्यादाविवात्र प्रक्रिया—। एवं ग्रहयते—अजग्रहत इत्यादौ। अतुत्थ्‌_तत इति। शर्पूर्वाः खयः इति थकारशेषः तस्य अभ्यासे चर्चेति चर्त्वेन तकारः। ह्रस्व इति ह्रस्वः। 'नाग्लोपि—' (२५७२) इति नोपधाह्रस्वः। अर्थयते इति। अत्र अर्थ णिच् शप् तिप् इति स्थिते 'अतो लोपः' इत्यल्लोपात् अर्थ् अति जाते अकारस्य रेफसत्त्वेन उपधात्वविरहात्—'अत उपधायाः' (२२८२) इत्यस्याप्रवृत्तेर्नोपधावृद्धिः। न च 'अतो लोपः' (६।४।४८)

इत्यपेक्षया 'अचो ञ्णिति' (७।२।११५) इत्यस्य परत्वाद् वृद्धिः स्यादिति शङ्काम् 'वृद्धेर्लोपो बलीयान्' इति न्यायादस्या अप्रसक्ते'रिति भाष्ये स्पष्टम्। एवञ्च 'अर्थापयति' इति बोपदेवोक्तं चिन्त्यम्। आपुगागमस्य 'अर्थवेदसत्यानाम्—' इति प्रातिपदिक एव नियमादिति तत्त्वबोधिन्यामनुसन्धेयम्। आरीरस इति। अकारस्य प्राक् स्थितम्। अन्यत् पूर्ववत्। अनेकाच्त्वादिति। एतच्च भ्वादौ 'धात्वादेः षः सः' इत्यस्याधस्ताद् 'एकाचः षोपदेशाः—' इत्यत्र संगृहीतम्। अदन्तसामर्थ्यादिति। अयं भावः पदादीनां सर्वेषामेव अदन्तत्वम्। अदन्तत्वाच्च 'अतो लोप' इत्यल्लोपा-दुत्तरं तत्र तत्र उपधावृद्धिदीर्घसन्वद्भावादिर्न। अत्र तु 'अतो लोप' इत्यल्लोपे विहितेऽपि णकारस्थस्य अकारस्य अनुपधत्वादुपधावृद्धेः प्रसक्तिरेव नास्ति। न च सन्वद्भावविनिवृत्तये अग्लोपित्वमित्यपि वाच्यम्। 'गर्व' इत्यस्य अकारस्य 'संयोगे गुरु' इति गुरुतया लघुपरकत्वाभावात् सन्वत्त्वस्याप्यप्रसक्तेः। अतो विज्ञायते अदन्तत्वस्य णिज्विकल्प एव फलमिति। अन्यदप्यस्त्यत्र फलमिति दर्शयति—धातोरन्त इति। आम् इति। अनेकाच्त्वात् 'कास्यनेकाज् ग्रहणं कर्तव्यमि'ति वार्तिकादया-मित्यागर्वीयाः।

दी—। सूत्र १९०९ वेष्टने। सूत्रयति। असुसूत्रत्। मूत्र १९१० प्रस्रवणे। मूत्रयति—मूत्रति। रूक्ष १९११ पारुष्ये। पार १९११ तीर १९१३ कर्मसमाप्तौ। अपपारत्। अतितीरत्। पुट १९१४ संसर्गे। पुटयति। धेक १९१५ दर्शने इत्येके। अदिधेकत्। कत्र १९१६ शैथिल्ये। कत्रयति—कत्रति। 'कर्त्त' इत्यप्येके। कर्तयति—कर्तति।

'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (गणसूत्र)। प्राति-पदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव—रभाव—टिलोप—विन्मतुब्लोप—यणादिलोप—प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे

पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः—अपीपटत्। 'णौ चङि—' (२३१४) इत्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति स्थितम्। अपपटत्॥ 'तत्करोति तदाचष्टे' (गणसूत्र)। पूर्वस्येव प्रपञ्चः। करोत्याचष्टे इति धात्वर्थमात्रं णिजर्थः। लडर्थस्त्वविवक्षितः।—'तेनातिक्रामति' (गणसूत्र)। अश्वेनातिक्रामति अश्वयति। हस्तिनातिक्रामति—हस्तयति॥ 'धातुरूपं च' (गणसूत्र)। णिच् प्रकृतिर्धातुरूपं प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथाच वार्त्तिकम्—'आख्यानात् कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' (वार्त्तिक—१७६६)। कंसवधम् आचष्टे कंसं घातयति। इह 'कंसं हन् इ', इति स्थिते—

सूत्र वेष्टने etc.—Easy—proceed as before. असुसूत्रत्—the अभ्यास is ह्रस्व by 'ह्रस्वः' and the उपधा of the उत्तरखण्ड is not ह्रस्व due to 'नाग्लोपि—' (2572), as also सन्वत् is barred due to polysyllabicness (अनेकाच्त्व) of the root.

प्रातिपदिकात्—etc. This is a गणसूत्र meaning—णिच् is affixed to a प्रातिपदिक in various ways in the sense of a root as in the case of an इष्ठप्रत्यय, so in the case of णिच् towards the प्रातिपदिक are enjoined the following viz.—पुंवद्भाव or the state of being masculine, रभाव i.e. रत्व, टिलोप or the elision of टि ('अचोऽन्त्यादि टि'—79); विन्मतुब्लोप or the disappearance of विन् and मतुप्, यणादिलोप (elision of यण् (प्रत्याहार) etc.), प्रस्थस्फाद्यादेश or substitutes like प्र, स्थ, स्फ etc. and भसंज्ञा ('यचि भम्'—79). Thus

पुंवद्भावः—
एणीमाचष्टे i.e. speaks of or describes the roe (she-deer—मृगी)

In इष्ठ—अतिशयेन पट्वी—पटिष्ठ ; here पुंवद्भाव is effected by the vartika 'भस्याढे तद्धिते' under 'तसिलादिष्वाकृत्वसुचः' (836). Then by टिलोप—पटु becomes पट्. Then इष्ठ। In णिच्—एणीम् आचष्टे—एतयति (एनी+णिच्+शप्+तिप्)

रभावः—

In इष्ठ—दृढ्+इष्ठन्=द्रढिष्ठ—रत्व of ऋ by 'र ऋतो हलादेर्लघोः' (178९). In णिच्—दृढं करोति—दृढ+णिच्+शप्+तिप्—द्रढयति (corroborates or confirms).

टिलोपः—

In इष्ठ—अतिशयेन साधुः—साधु+इष्ठन्—साधिष्ठः by 'भस्याढे तद्धिते'। 'उ' is टि here. In णिच्—पटुमाचष्टे—पटु+णिच्+शप् तिप् पटयति (as in the text).

विन्मतुब्लोपः—
In गवयति—गो is gunnated by 'सार्व—' (2168) due to णिच् an आर्ध-धातुक।

In इष्ठ—अतिशयेन स्रग्वी (having a good many garlands) स्रग्विन्+इष्ठ=स्रजिष्ठ and अतिशयेन गोमान् (having a number of cows)—गोमत्+इष्ठ—गविष्ठ—both being defended by 'विन्मतोर्लुक्' (2020). In णिच्—स्रग्विनमाचष्टे (speaks of one having garlands to an excess) स्रग्विन्+णिच्+शप् तिप्=स्रजयति (ज is not replaced by ग due to भसंज्ञा) and गोमन्तमाचष्टे speaks of one having too many cows—गोमत्+णिच् शप् तिप्—गवयति।

टयादिलोपः— In इष्ठ—अतिशयेन स्थूलः—स्थविष्ठ by 'स्थूलदूरयुवह्रस्व—' ( 2015 ).
In णिच् दूरं करोति—दवयति ( the process is as before ).

अस्यस्थाद्यादेशः— In इष्ठ—प्रेष्ठ, स्थेष्ठ etc. in the sense of अतिशयेन प्रिय, स्थिर etc by the rule 'प्रियस्थिरस्फिरोरु—' ( 2016 )
In णिच्—प्रापयति, स्थापयति स्फारयति etc. in the sense of प्रियं करोति, स्थिरं करोति etc.

भसंज्ञा— In इष्ठ—स्रजिष्ठः । In णिच्—स्रजयति । No कुत्व due to the the भसंज्ञा of स्रज् in each case.

परत्वाद् वृद्धौ etc.—i.e. After वृद्धि, enjoined by 'अचो ञ्णिति' ( 254—1. 2. 115 ) due to its being पर or subsequent to टि—लोप, directed by 'भस्य टेर्लोपः' (368—7.1.88), has already taken effect, then there will be the elision of टि ( टिलोप ).The idea is this ;—In पटु+णिच्+शप्+तिप्, if वृद्धि is enjoined then we have पटौ, next by टिलोप or औलोप we have पट् ; if वृद्धि is not enjoined then also by टिलोप or उलोप we have पट् ;thus टिलोप applies both in पटौ and in पटु. It (टिलोप) is thus अनित्य by the dictum 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः or—An injunction which applies ( equally ) to two diff. 'word—forms' is अनित्य or temporary i.e. not obligatory. Moreover, वृद्धि also is अनित्य by the dictum 'यस्य लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्'—for it once applies and once not. Thus both are अनित्य ; this being the case वृद्धि being subsequent will

apply first and then टिलोप will operate. अपीपटत्—अपपटत्—The former is formed (पटु + णिच् + तिप्) when वृद्धि due to णिच् operates prior to टिलोप. Then द्वित्व, णिजलोप ( by णेरनिटि ) उपधाह्रस्व: ( by 'णौ चङि—' 2314) and ह्रस्व, and दीर्घसन्वद्भाव of the अभ्यास ; whereas the latter is derived when टिलोप ( अलोप ) operates first. Here there is no सन्वद्भाव etc for in this case पटु is अग्लोपी ( अलोपी ) and so the prohibition 'सन्वल्लघुनि चङ्परेऽनग्लोपे' applies The latter is according to भाष्य where under 'णौ चङि—' ( 2314 ) is stated the dictum 'वृद्धेर्लोपो बलीयान्'. Tattwavodhini says that both the forms are correct.

तत्करोति—etc. This also is a गणसूत्र meaning—णिच् is affixed to a प्रातिपदिक in the sense of तत्करोति ( he does that ) and तत् आचष्टे ( he narrates or attempts that ). Thus it is an elaborate statement of the former 'प्रातिपदिकात् धात्वर्थे—'. By the pronunciation of करोति आचष्टे ( आ + चक्ष् + लट् ते ) it does not follow that it is used in लट् only but in (प्रातिपदिक) is used in all other tenses ( लोट, लङ् etc. ) also. 'अश्वेन etc.' ( गणसूत्र )—meaning—णिच् is added to a प्रातिपदिक or nominal base as अश्व, हस्ती etc. in the sense of 'rides or goes ( he ) by on it'. Thus अश्वयति, हस्तयति, गर्दभयति etc.—by टिलोप everywhere due to भ संज्ञा । 'धातुरूपं च' ( गणसूत्र )—A base or stem to which णिच् is affixed, retrocede or retire to its original basis i e to the root primitive whence it was derived. The word 'च' in the सूत्र is intended to supply what is wanting or not stated here ; cp—the Varttika 'आख्यानात्—'etc. meaning :—in the senses of तद् आचष्टे ( narrates that ) a कृदन्त base, des-

cribing some legend or story, ❀ drops its affix, retrocedes to or appear in its original root—form and the कारक (as also the कार्य—कुत्व, तत्व etc) remain as they were originally, though not contained in the root itself, in the causal form. Thus कंसवधम् आचष्टे gives कंसम् घातयति। Thus the form standing 'कंसं हन् इ (णिच्) शप् तिप्, we look forward :—

भित—। सूत्र वेष्टने इति। सूत्रयति इत्यादि कथयति इत्यादिवत्। असुसूत्रत् इति। अग्लोपित्वात् नोपधाह्रस्व' अनेकाच्त्वेनाषोपदेशत्वाद्य षत्वम्।

प्रातिपदिकाद्दिति। गणसूत्रम् इदम्। व्याख्यातं स्वयमेव। तद्वदधावपीति इष्ठे परतो यथा प्रातिपदिकस्य पुंवद्भावादिर्भवति तथा णिचि परतोऽपि प्रातिपदिकस्य पुंवद्भावादिर्भवतीत्यर्थः। इष्ठे इव इष्ठवत् इति सप्तम्यन्ताद्वतिः। तेन 'इष्ठस्य यिट् च' (२०१८—६।४।१५९) इत्यत्र यष्ठ्यादारणपूर्व्वकप्रोक्तो यिडागमो—'भूयिष्ठ' इत्यत्र भवन्नपि बहून् आचष्टे 'भावयति' इत्यत्र न भवतीत्याहुरिति तत्त्वबोधिन्यां स्पष्टम्। तत्र पुंवद्भाव इष्ठे परतो यथा अतिशयेन पट्वी इति पटिष्ठा। अत्र 'भस्याढे तद्धिते' इति वार्त्तिकात् पुंवद्भावे सति ङीब्लोपादुत्तरम् 'भस्य टेर्लोपः' (358) इति टिलोपे इष्टन्। णिचि तु एनीमाचष्टे—एतयति। अत्र पुंवद्भावाद् ङीब्नकारयोर्निवृत्तिः। एवं क्रमेण द्रढिष्ठः (अतिशयेन दृढः)—द्रढयति (दृढं करोति) 'र ऋतो हलादेर्लघोः' इति रभावः। टिलोपः पुंवद्भावे गतः। अतिशयेन स्रग्वी—स्रजिष्ठः स्रग्विणमाचष्टे स्रजयति। उभयत्र विन्मतोर्लुगिति विनो लुकि प्रातिपदिकस्य भसंज्ञकत्वात् कुत्वाभावे रूपे। एवञ्चात्र भसंज्ञापि

---

❀ The word 'आख्यान' in the Varttika does not insist on a famous story or legend in as much as णिच् may apply in the same sense elsewhere as नरहत्याम् आचष्टे etc.

दर्शिता। एवं मतुपि—अतिशयेन गोमान्—गविष्ठः इति। णिचि तु—गोमन्तम् आचष्टे गवयति। 'अङ्गवृत्तपरिभाषया न वृद्धि'रिति कश्चित्। अतिशयेन स्थूलः—स्थविष्ठः। स्थूलं करोति—स्थवयति। 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' (२०१५) इति यणलोपः। ततो गुणः। 'यणादिपर'मित्यत्र आदिपदग्राह्य' शब्देन्दुशेखरे प्रपञ्चितम्। अतिशयेन प्रियः, स्थिरः, स्फिरः—प्रेष्ठः, स्थेष्ठः, स्फेष्ठः। णिचि च प्रियं, स्थिरं, स्फिरं वा करोतीति प्रापयति, स्थापयति, स्फापयति 'प्रिय-स्थिर-स्फिरोरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रप्-द्राघि-वृन्दाः' (२०१६) इति प्राद्यादेशः। सम्प्रति पटयतीत्यस्य साधनप्रकारमाह—परत्वादिति। अयमभिप्रायः—पटु णिच् शप् तिप् इति स्थिते वृद्धिटिलोपयोरुभयोरेव प्राप्ति-रुभावपि चानित्यौ। तथाहि—पटु इत्युकारसत्त्वे यथा 'भस्य टेर्लोपः' प्राप्नोति तथा 'अचो ञ्णिति' (७।२।११५) इति वृद्धौ कृतायामपि (औकारसत्त्वेऽपि) प्राप्नोति। तेन चायम् (टिलोपः) अनित्यः। 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति न्यायात्। वृद्धिरप्यनित्या। इयं हि कुत्रचित् प्राप्नोति कुत्रचिन्न। तेन 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्य'मिति न्यायात् साप्यनित्या। एवमुभयोरप्यनित्ययोः परत्वाद् वृद्धिः प्राग् विधीयते। ततष्टिलोपः। चङि रूपमाह—अपीपटदिति। पटु णिच् चङ् तिप् इति स्थिते परत्वाद् वृद्धौ टिलोपः। एवञ्च औकारलोपित्वेन अक्—(अ, इ, उ, ऋ, ऌ)—लोपित्वाभावात् 'सन्वल्लघुनि—' इत्यस्य प्राप्तिः। ततश्चाभ्यासस्य 'सन्यत' इतीत्त्वम् दीर्घो लघोरिति दीर्घः 'णौ चङि—' इत्यङ्गस्य उपधाह्रस्वः, 'णेरनिटि' इति णिलोपश्च। भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति न्यायमाश्रित्य—प्राग् टिलोपं विधाय वृद्धिर्विहिता। एवञ्च उकारलोपित्वेन अग्-लोपित्वात् 'अनग्लोपे' इति प्रतिषेधान्न दीर्घसन्वद्भावौ। अन्यत् पूर्ववत्—अपपटत्। 'वृद्धेर्लोपो बलीयान्' इति च 'मुण्ड मिश्र—' (२६७७—३।१।२१) इति सूत्रे भाष्य-कैयटयोः स्पष्टम्। भाष्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति तत्त्वबोधिन्यां स्थितम्। 'तत्करोति तदाचष्टे'—एतदपि गणसूत्रम्। करोत्यर्थे आचष्टेऽर्थे च प्रातिपदिकात् णिच् स्यादित्यर्थः। अस्यार्थः पूर्वतापुनरुक्तत्वादाह—पूर्ववेति। 'प्रातिपदिकाद्धात्वर्थे—'

इत्यस्येत्यर्थः। प्रपञ्चो विस्तरः। ननु करोत्याचष्टे इत्यनयोरुक्तत्वाभावात्तदर्थस्याप्युक्तत्वात् कुतोऽस्य पूर्वेण गतार्थत्वं तत्राह—धात्वर्थमात्रं णिजर्थ इति। ननु करोतीत्यादिलक्ष्यमात्रप्रयोगपूर्वकविधानाल्लकारान्तरे परतः प्रातिपादिकाण्णिज् नोपपद्येत तत्राह—लक्ष्यर्थमिति। अन्यत्रापि लकारे परतः प्रातिपदिकादुक्तार्थे णिच्स्यादित्यर्थः। 'तेनातिक्रामति'। एतदपि गणसूत्रम्। एवं तत्करोतीत्यादौ द्वितीयाया प्रकृतिभूताद्वितीयान्ताद् वा णिजिति ज्ञेयम्। तृतीयाप्रकृतिभूतात् तृतीयान्ताद् वा प्रातिपदिकादभिन्नर्थे णिज् इति प्रामाणिकाः। हस्तयतीति। 'नलोपः प्रातिपदिकस्येति नलोपे प्राग्वत्। एवं बलीवर्द्दं यति गर्द्दभयतीत्यादौ। 'धातुरूपं च'—गणसूत्रम्। तत्र 'धातुरूपम्' इत्यंशस्य अर्थमाह—णिच्प्रकृतिरिति। यस्मादुत्तरं णिज् विधीयते। स णिच्प्रकृतिः प्रातिपदिकमित्यर्थः। धातुरूपम् इति। अप्रतिबद्धियोगेन धातोर्यो यो रूपो भवति स स प्रातिपदिकस्यापीत्यर्थः। प्रतिपद्यते इति, प्राप्नोतीत्यर्थः। अथ सूत्रगतचकारार्थं व्याचष्टे चशब्द इति। समुच्चयः संग्रहः। अत्र अनुक्तांशो वार्त्तिककृता समुच्चीयते इत्याह—तथा च वार्त्तिकमिति। आख्यानात् 'आख्यान-(उपाख्यान)-वाचिनः' कृतः 'कृदन्तात्'—कृदन्तशब्दादित्यर्थः तदाचष्टे 'अभिन्नर्थे णिचि विहिते इति शेषः 'कृल्लुक्' कृत्प्रत्ययस्य अजादेर्लुक् लोपः स्यात्' प्रकृतिप्रत्यापत्तिः 'प्रकृतेर्मूलभूतस्य धातोः' प्रत्यापत्तिः वधाद्यादेशपरित्यागेण स्वरूपे 'हन्' इत्यादौ अवस्थानम् च स्यादित्यर्थः (कृतो लुक्—कृल्लुक; प्रकृतेः प्रत्यापत्तिः—प्रकृतिप्रत्यापत्तिः (क्लीवत्) कृल्लुक् च प्रकृतिप्रत्यापत्तिश्चेति विग्रहः। आर्षम् एकत्वम्)। 'आख्यानात्...प्रत्यापत्तिः' इत्यंशस्यायमर्थः—* आख्यानादिवाचि—कृदन्तशब्दात् तदाचष्टे इत्यर्थे णिच्प्रत्ययः स्यात्। णिच्प्रत्ययसन्नियोगेन तत्तच्छब्द-निर्माणनिमित्तम् 'अण्' इत्यादि प्रत्ययो लुप्यते। मूलभूतस्य धातोरादेशे च सति

---

* 'आख्यान'इति व्यापारमात्रं विवक्षितम्। तेन भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णिजिति नाग्रहः। तथा सति वाचमाचष्टे—वाचयतीत्याद्यनुपपत्तेरित्यलम्।

स आदेशोऽपगच्छति। ततश्च धातुः स्वरूपे तिष्ठति इति। 'प्रकृतिवच्च कारकम्' इत्यंशस्तु स्वयमेव अग्रे 'हनस्तोऽचिण्णलोः' (२५७४) इत्यत्र व्याख्यास्यति। एवं कंसवधम् आचष्टे इत्यत्र वधादेश—(हन्+अप् भावे 'हनश्च वधः' (३२५९) इति वधादेशः)—प्रत्ययविरहाभ्यां, तात्कृत्प्रकृतिप्रत्यापत्तौ' कंसं हन् णिच् इति जाते कंसं घातयति इति लभ्यते (यद्यपि वधशब्द एव कृदन्तो न तु कंसपूर्व्वो वधशब्दस्तथापि 'कृद्ग्रहणे गतिकारकपूर्व्वस्यापि ग्रहणम्' इति न्यायात् 'कंसवध-शब्दस्यापि कृदन्तत्वोपचारः)। अथ घातयति अजीघतदित्यादेः प्रक्रियाप्रदर्शनार्थ-माह—इहेति। (घातयति इति तु 'हो हन्तेर्' इति कुत्वे तस्य घत्वे 'हनस्तः—' इति तकारान्तादेशे णिचि वृद्धौ च रूपम् इति विज्ञेयम्)—

२५७४। हनस्तोऽचिण्णलोः ॥७।३।३२॥

टी—। हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति। नन्वत्र अङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता। ततश्चाड्-द्वित्वयोर्दोषः। किञ्च कुत्वतत्वे न स्याताम्। धातोः स्वरूप-ग्रहणे तत्प्रत्यये कार्य्यविज्ञानात्। सत्यम्। 'प्रकृतिवच्च' इति चकारो भिन्नक्रमः। कारकं च। चात् कार्य्यम्। हेतुम-ण्णिचः प्रकृतेर्हन्त्यादेर्हेतुमत्तो यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्य्यं कुत्वतत्वादि तदिहापीत्यर्थः। कंसमजीघतत्। 'कर्तृकरणाद्धात्वर्थे' (गणसूत्र)। कर्तुर्व्यापा-रार्थं यत् करणं न तु चक्षुरादिमात्रमित्यर्थः। असिना हन्ति—असयति।

वल्क १९१७ दर्शने। चित्र १९१८ चित्रीकरणे। आलेख्यकरणे इत्यर्थः। कदाचिद्दर्शने। 'चित्र' इत्ययमद्भुतदर्शने

णिचं लभते। चित्रयति। अंस १८१८ समाघाते। वट १८२० विभाजने। लज १८२१ प्रकाशने। 'वटि' 'लजि' इत्येके। वण्टयति। 'लञ्जयति। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति। शाकटायनस्तु कथादीनां सर्व्वेषां पुकमाह। तन्मते—कथापयति, गणापयति—इत्यादि। मिश्र १८२२ सम्पर्के। संग्राम १८२३ युद्धे। अयमनुदात्तेत्। अकार—प्रश्लेषात्। अससङ्ग्रामत। स्तोम १८२४ श्लाघायाम्। अतुस्तोमत्। छिद्र १८२५ कर्णभेदने। 'करणभेदने' इत्यन्ये। कर्ण इति धात्वन्तरमित्यन्ये (अपरे ?)। अन्ध १८२६ दृष्ट्युपघाते। उपसंहारे इत्यन्ये। आन्दधत्। दण्ड१८२७ दण्डनिपातने। अङ्क १८२८ पदे लक्षणे च। आञ्चकत्। अङ्ग १८२९ च। आञ्जगत्। सुख १८३० दुःख १८३१ तत्क्रियायाम्। रस १८३२ आस्वादनस्नेहनयोः। व्यय १८३३ वित्तसमुत्सर्गे। अवव्ययत्। रूप १८३४ रूपक्रियायाम्। रूपस्यदर्शनं करणं वा रूपक्रिया। छेद १९३५ द्वैधीकरणे। अचिच्छेदत्। छद १९३५ अपवारणे इत्येके। छदयति। लाभ १९३७ प्रेरणे। व्रण १८३८ गात्रविचूर्णने। वर्ण १८३९ वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः। 'बहुलमेतन्निदर्शनम्'—(गणसूत्र)—अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि बोध्याः। तद् यथा—पर्ण १९४० हरितभावे। अपपर्णत्। विष्क

१६४१ दर्शने। च्चप १६४२ प्रेरणे। वस १६४३ निवासे। तुत्थ १६४४ आवरणे। एवम् आन्दोलयति। प्रेङ्खोलयति। विडम्बयति। अवधीरयति इत्यादि। अन्ये तु दशगणीपाठो 'बहुलम्' इत्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो 'बहुलम्' इत्याहुः। तेनापठितेभ्योऽपि क्वचित् स्वार्थे णिच्। 'रामो राज्यमचीकरत्' इति यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः। 'णिङ् अङ्गान्निरसने' (गणसूत्र)। अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति—हस्तयते। पादयते। 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' (गणसूत्र)। श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते। णिङ् च धात्वर्थे। श्वेताश्वमाचष्टे, तेनातिक्रामति वा—श्वेतयते। अश्वतरमाचष्टे—अश्वयते। गालोडितं वाचां विमर्शः। तत् करोति—गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्त्तयन्ति—तन्मते परस्मैपदमपि। 'पुच्छादिषु धात्वर्थे इत्येव सिद्धम्' (गणसूत्र)। णिजन्तादेव बहुलवचनादात्मनेपदमस्तु। मास्तु'पुच्छभाण्ड—' (२६७६)। इति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः॥

इति तिङन्तचुरादिप्रकरणम्—।

तकार is the final substitute of हन् when follows a ञ-dropping or ण-dropping affix except चिण् and णल्. Thus हन् becoming घन् of which ह changes into घ by 'हो हन्तेः—'

(358), we have घातयति (by वृद्धि and गुण) and अजीघतत् (in चङ्—by कुत्वम्, द्वित्व, सन्वत्त्व and दीर्घ); but in चिण् and णल we have अघानि and जघान. Well (ननु etc), when the form stands as कंसवध णिच् चङ् तिप्—then by 'यस्मात् प्रत्ययविधिस्तदादि-प्रत्यये ऽङ्गम्' (199) and by 'सनाद्यन्ता धातवः' (2364), the whole word 'कंसवध' becomes अङ्ग as also धातु so that the augment अट् will be placed before 'क' and the portion 'कंस' will be duplicated. But such process is faulty, for it fails to give अजीघतत् where it is clear to see that अट् is before हन् or घत् which has been doubled. Moreover, कुत्व (i.e. घत्व) and तत्व will not follow on the score of the परिभाषा 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्य्यविज्ञानम्' (१)—'when some individual root is put down in a rule, the operation which concerning that is taught in the rule, is understood to take place only when the root is followed by such an affix as can be added to roots' (Kielhorn). For कुत्व and तत्व (directed by ('हो हन्तेः—' and 'हनस्तः—') take effect only when णिच् etc. follow the individual root हन्; but here there is 'कंसवध' and no हन्. This being the case how to proceed? सत्यम्—True, (we are perplexed)—but still we have a way through the last or second half of the varttika 'आख्यानात् कृतः—' viz 'प्रकृति-

(१) This reading is inconsistent with भाष्य where we find it modified thus 'धातोः कार्य्यमुच्यमानं तत्प्रत्यये भवति' See भाष्य under 'मृजेर्वृद्धिः' (7. 2. 114) as also the परिभाषेन्दुशेखर।

च्च कारकम्' where the चकार is disorderedly placed and should therefore be placed after कारकम् (giving प्रकृतिवत् कारकम् च) so that from this च we will have (the अतिदेश or hyper-reference of ) कार्य (operation in addition to the कारक or case ). Thus 'प्रकृतिवच्च कारकम्' will now mean 'As, on the occasion of हेतुमण्णिच् or casual form of हन् etc. which are the प्रकृतिs or bases of the affix णिच्, an accusative case ( द्वितीयान्तम् कारकम् ) is not included in the roots ( themselves) and as operations like कुत्व and तत्व etc follow so will it (each of them ) behave here i.e the द्वितीयान्त word कंस will not be considered as a part of the root and कुत्व etc will not be forbidden. Thus we have कंसम् अजीघतत् ।

'कर्तृकरणात्—' ( गणसूत्र ) meaning—णिच्, in the sense of a root, is added to a प्रातिपदिक which is an instrument of the कर्त्ता or agent. 'कर्तृकरण'—signifies an instrument intended to serve some purpose of the कर्त्ता and not merely the organs such as eyes, ears etc. 'चित्र कदाचिद्दर्शने'—i.e. 'चित्र' takes णिच् in the sense of ' seeing an awe-inspiring subject' —चित्रयति—no वृद्धि cp. पटयति. Similarly असयति etc. अदन्तेषु etc—some hold that वट and लज being read under the अदन्त or अकारान्त roots, will have वृद्धि ( by the rule 'अचो ञ्णिति'— 254, due to the failure of अदन्तत्व and consequently there will appear the aug. पुक् by 'अर्त्तिह्री—' 2570 ). शाकटयनस्तु— The idea is that Shakatayana enjoins पुक् to all अदन्त roots ( कथ etc ), but there is no authority that every one of them is अदन्त for other

wise it cannot have पुक्. 'संग्रामयुद्धे'—This is a गणसूत्र and the root संग्राम is अनुदात्त-eliding ( आत्मनेपदी ) due to the disunion or elision of अ (at the end)—Thus अससङ्ग्रामत in चङ् for it is thus अग्लोपी —and so no सन्वद्भाव and दीर्घ follow. अतुत्रोमत्—by 'ऊस:', 'एच इग् ह्रस्वादेशे,' etc. and being अनेकाच्, षत्व fails ; cp—अतिस्तिनत् । 'बहुल-मेतन्निदर्शनम्' * (गणसूत्र). These अदन्त roots are multifarious ; thus examples or instances of अकारान्त roots (or bases) are as in आन्दोलयति etc. the bases are आन्दोल, प्रेङ्खोल, विडम्ब and अवधीर etc. Others explain the above गणसूत्र that the reading of the ten classes of roots is of various types so that there are सौत्र, लौकिक and and वैदिक roots not read here exclusively ; while the third party limit the term बहुल to nine classes so that स्वार्थणिच् applies to undermentioned roots also. But another party hold that णिच् attaches itself in an inconsistent way (various ways) to चुरादि roots. All these schools orparties ( पक्षा: ) are to be met with in the works of old grammarians like वामन, जयादित्य etc. 'णिङङ्गान्निरसने' ( गणसूत्र )—णिङ् is added to a प्रातिपदिक, denoting limbs, in the sense of rejecting or refusing (निरसन) । Thus हस्तयते etc. (refuses lays aside ( someone's ) hands )—आत्मनेपदी due to ङित्त्व of the affix णिङ् । 'श्वेताश्वाश्वतर etc—' ( गणसूत्र )—of the four bases or प्रातिपदिकs namely श्वेताश्व, अश्वतर, गालोडित and आह्वरक, disappear in order ( the portions ) अश्व, तर, इत and क—as also णिङ् is

---

* ''क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्य एव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"

attached to them in the sense of a root. Thus श्वेतयति etc. narrates or speaks of ( or rides by a white horse ). Similarly अश्वयते ( due to the elision of तर )। Note in this connection the distinction between अश्वयति and अश्वयते. गालोडित means the consideration of utterances or speeches. गालोडयते ( with the elision of इत ). Similarly आह्वरयते with the elision of क। Some, however, carries down णिच् ( and not णिङ् ) to this गणसूत्र। Thus in their opinion अश्वयति etc. ( परस्मैपद )। 'पुच्छादिषु etc.—' ( Last गणसूत्र ) meaning 'there is no need of the णिङ्विधि in the rule 'पुच्छभाण्डचीवराण्णिङ्' ( 2516 ) when पुच्छ etc. could have had आत्मने. terminations in णिच् due to the utterance of the term 'बहुल' in the गणसूत्र 'बहुलमेतन्निदर्शनम्'। The word सिद्ध in the rule indicates मङ्गल or benediction at the end.

Here end the चुरादि class.

मित— । 'हनः + तः + अचिण्णलोः' इति पदच्छेदः । 'हनः' इति षष्ठी—निर्देशात् अलोऽन्त्यपरिभाषया अन्तादेश इति लभ्यते । 'अचो ञ्णिति' (७।२।११५) इत्यतो ञ्णिति (ञिति णिति) इति चानुवर्तते । अचिण्णलोरिति च विशेषणं, तदाह—हन्तेस्तकार इत्यादि । ञिति—घातः ( हन् + घञ् भावे )। णिति—घातयति, अजीघतत् । चिण्—णलोस्तु—अघानि, जघान इति । तदेवं 'हो हन्तेः—' ( ३५८ ) इति कुत्वे, अनेन तत्वे, णिचि वृद्धौ च घातयति इति सिध्यति । अजीघतदिति च उक्त—क्रमेण हन्तेः—'घत्' इत्यादेशे जाते, तस्य द्वित्वे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे 'अभ्यासे चर्चे'ति जश्त्वे, अनग्लोपित्वात् 'सन्वतः' इतीत्वे, तस्य दीर्घे च सिद्धम् । तत्र आगच्छति नन्विति— । कंसविधिश्चेत्यस्य इति—वधशब्दश्चेति शेषः कंसवधशब्दश्चेत्यर्थः । तत्र को दोष इत्यत आह—तत्र्येति । तथाच कंसवध णिच् चङ् तिप् इति स्थिते 'यस्मात् प्रत्यय-

'विधिस्तदादि प्रत्ययेऽङ्गम्' इत्यनेन 'सनाद्यन्ता धातवः' इत्यनेन च कंसवधशब्दस्य णिच्परकत्वेन अङ्गसंज्ञा धातुसंज्ञा च भवति। ततश्च चङि आसन्नमाने अडागमे कंसवधस्य कान् पूर्व एव अट्, कंसशब्दस्यैव च द्वित्वं भवति। एवं दोषद्वयं दर्शयित्वा पुनर्दोषद्वयं दर्शयितुमाह—किञ्चेति। धातोरिति। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति हि परिभाषा भवति। 'यदा कस्य चिद्धातोरुत्तरं किञ्चित् कार्यं विधीयते तदा तस्य धातोः स्वरूपसंशब्दने सत्येव धातोर्विहितप्रत्यये च परत एव तत् कार्यं भवतीति' तदर्थः। कंसवधशब्दस्य तु नास्ति धातुत्वम्। ततश्च 'हो हन्तेः—', 'हनस्तः—' इति कुत्वतत्वविधिद्वयमपि न प्रवर्तते हन एवात्र अभावात्। एवं दोषानभ्युपगम्यापि मार्गं दर्शयितुम्—'आख्यानात् कृतः—' इति वार्त्तिकस्योत्तरार्धं व्याचष्टे—प्रकृतिवच्चेति। भिन्नक्रम इति। 'कारकम्' इत्यस्मादुत्तरं निवेशनीयम् इत्यर्थः। अत आह—'कारकं च' इति। अथ चकारस्याभिधेयमाह—चात् कार्यमिति। ततश्च 'कारकं कार्यं च प्रकृतिवद्'इति फलितम्। इदानीमर्थं स्पष्टीकरोति हेतुमतीव इति। प्रकृतिवदित्यत्र सप्तम्यर्थे वतिः। प्रकृताविव प्रकृतिवत्। अत्र 'प्रकृति' इत्यनेन हेतुमण्णिचः प्रकृतिर्विवक्षितो व्याख्यानात्। अयमर्थः—यथा 'कंसं हन्ति कृष्णः तं प्रेरयति कंसं घातयति,' अजीघतदित्यादौ हेतुमण्णिचि ( णिजन्तावस्थायाम् ) द्वितीयान्तं कंसपदम् धातोरन्तर्गतं तिष्ठति ( धातोरङ्गीभूतो न भवति ) किञ्च यथा—तत्र हन्तेः कुत्वतत्वादि कार्यं भवति, तद्वदत्रापि ( कंसवधमाचष्टे, ) कंसवधमाचष्ट इत्यादौ ) कंसं हन् णिच् ( चङ् ) इति स्थिते द्वितीयान्त-कंसशब्दस्य धातौ नान्तर्भावः, हन्तेश्च ( वार्त्तिकपूर्वार्धेन वधादिविगमे ) कुत्वतत्वादि सिध्यत्येवेति। एवमजीघतदित्यादि निर्बाधमेव। ('धातोः स्वरूपग्रहणे—' इति परिभाषा तु 'सृजिदृशोः' (७।२।११४) इत्यत्र भाष्ये दूषिता। अतएव नागेशोऽपि 'धातोः कार्यमुच्यमान तत्प्रत्यये भवती'त्येवं पठति। विशेषं जिज्ञासुभिर्भाष्यमनुसन्धेयम्)।

कर्तृकरणादिति। गणसूत्रम्। तत्र कर्ता च करणञ्चेत्येवमर्थ इति भ्रमं वारयितुमाह—कर्तृव्यापारार्थं यत्करणमिति। णिच् स्यादिति शेषः। असयति इति। इकारलोपित्वेनाग्लोपित्वाच्चङि असससयदिति। एवमन्यत्र। यत्त्व इत्यादि

प्रातिपदिकं न धातुः । कदाचिद्दर्शने इति । चित्र इति शेषः । काचिद्दर्शने इत्यस्य विवरणमद्भुतदर्शने इति । अदन्तेष्विति—मतान्तरमिदम् । शाकटायनस्त्विति । 'अत्र अवधिबीजन्तु सर्वत्रास्मिन्पक्षे मानाभाव' इति नागेशः । संग्राम युद्धे इति । युद्धवाचि-संग्रामशब्द 'युद्धं करोतीत्यर्थः'—णिचं लभत इत्यर्थः । अनुदात्तेदिति । आत्मनेपदीत्यर्थः । 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति न्यायात्तु परस्मैपदमपि भवतीति बोध्यम् । एतच्च 'कर्तुः क्यङ् सलोपश्च' ( ३।१।११ ) इति सूत्रस्थभाष्यात् भृशादिसूत्रभाष्यस्य कैयटाच्चेति बोध्यम् । नन्वनुदात्त्वे किं मानमित्यत आह—अकारप्रश्लेषादिति । अयं भावः—अदन्तेषु संग्रामशब्दस्य पाठाददन्तत्वम् । अत्र अकारोऽनुदात्तः । 'ग्रामादीनां च' इति फिट्सूत्रेण आद्युदात्तत्व—नियमादन्तिमानुदात्तत्वस्य लाभात् । स चानुदात्तः स्वरः 'अतो लोपः' इति णिचि परतो लुप्यत एव । ततश्चायमनुदात्तेदिति । न च 'णिचश्च' इत्येवात्मनेपदे सिद्धे एतावान् क्लेशो न कर्तव्य इति वाच्यम् । परगामिन्यपि फले आत्मनेपदं यथा स्यात् । किञ्चैवम् अकारलोपादग्लोपित्वम् आदाय असससङ्ग्रामत' इत्यत्र नोपधाह्रस्वः । यद्यपि 'ग्रसेराच' इत्यौणादिसूत्राद् 'ग्रसु अदने' इत्यस्मात् ग्रसति सैन्यानि लोकान् वेति कृत्वा मन् प्रत्यये आकारे च सति ग्राम इति लब्धे तदुपसर्गविहीनस्य युद्धार्थत्वमस्ति तथापि 'संपूर्वो संयुगे स्मृतः' इत्येवं ऋद्धिमादायैवमुक्तम् । उपसर्गेण सहोक्तत्वाच्च सकारात् प्राग् अट् सकारस्य द्वित्वञ्च सिध्यति । एतच्च 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' ( २६६७ ) इत्यत्र स्वयमस्माभिश्च विशदीकरिष्यते इति दिक् । अतुलोमदिति । अतिसेनदिति-वदत्र प्रक्रिया । तत्क्रियायामिति । सुखदुःखानुकूलव्यापारे इत्यर्थः । सुखयति । दुःखयति । करोत्यर्थे णिच् । 'बहुलम्—' गणसूत्रम् । निदर्शनमियत्तया अवधारणम् । एतावन्तोऽदन्ता धातव इत्येवं निर्देष्टुमशक्या इत्यर्थः । तेनात्र अनुक्ता अन्येऽपि सन्तीति ध्येयम् । एवमिति । अत्र आन्दोल, प्रेङ्खल, विडम्ब, अवधीर इत्यादि प्रातिपदिकम् । एतेन अवपूर्वो धीर इति चौरादिको धातुरिति मत्वा अवधीर्येत्यादि केषाञ्चिद् व्याख्यानं प्रामादिकमेवेति प्रतिपत्तव्यमित्यलम् । अन्ये त्विति । 'बहुलम्—' इति गणसूत्रस्य—व्याख्यानान्तरमाह—

दशगणीपाठ इति। दशगणाम् भ्वादादिचुरादान्तेषु इत्यर्थः। सौत्रा इति सूत्र-प्राप्ताः। लौकिका इति लोकव्यवहारात् प्राप्ताः, वैदिका इति वेदेभ्यः प्राप्ताः। अपरे त्विति। स्पष्टम्। अचीकरदिति। करोतेः स्वार्थण्यन्तात् लुङि चङि अग्लोपित्वा-भावेन दीर्घसन्वद्भावौ। अकारेत्यर्थः। ननु कुत एतज् ज्ञातम् तत्राह—सर्वे यथा इति। प्राचामिति—वृत्तिकृन्माधवहरदत्तादीनाम्। 'णिङ् अङ्गात्—' इति। गणसूत्रम्। अर्थः स्पष्टो मूले। निरसने इति—निषेधे इत्यर्थः। इस्रायते इति। णिङ् इत्यस्य ङित्त्वात् 'अनुदात्तङित' इत्यात्मनेपदम्। 'श्वेताश्व—' इति गणसूत्रम्। श्वेताश्वादीनामिति। तथाच श्वेताश्व इत्यस्य 'अश्व' इति, अश्वतर इत्यस्य 'तर' इति, गालोडित इत्यस्य 'इत' इति आह्वरक इत्यस्य 'क' इति लुप्यते। विमर्श इति—विवेचनं विचारो वेत्यर्थः। कैचित्त्विति। स्पष्टम्। 'पुच्छादिषु—' इति। एतदपि गणसूत्रम्। तेनान्ते सिद्धशब्दो मङ्गलार्थं प्रयुक्तः 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते...' इति भूवादिसूत्रस्थ-भाष्यात्। अर्थस्तु—पुच्छादिशब्देभ्यो धात्वर्थे णिच् स्यात्। णिजन्तानां चैतेषाम् 'बहुलमेतन्निदर्शनम्' इत्यत्र बहुलग्रहणादात्मनेपदं सिध्यतीति णिङ्—विधिर्न कर्त्तव्य' इति। के तावत् पुच्छादयः शब्दाः ?—उच्यते—'पुच्छभाण्डचीवराण्णिङ्' (२६७६) इति सूत्रोपात्ता इति शम्।

इति मितभाषिण्यां तिङन्तचुरादि-प्रकरणम्।

अथ

# तिङन्तणिच्-प्रकरणम्

२५७५। तत्प्रयोजको हेतुश्च ॥१।४।५५॥

कर्त्तुः प्रयोजको हेतुसंज्ञः कर्त्तृसंज्ञश्च स्यात्।

The employer of the कर्त्ता or agent ( of the non-causal form ) is designated as हेतु or cause as also कर्त्ता or agent ( in the causal form ).

मित—। तत्प्रयोजक इति। 'तत्' इत्यनेन 'स्वतन्त्रः कर्त्ता' ( १।४।५४ ) इत्यवस्थः कर्त्ता परामृश्यते। चकारेणाप्येवम्। अत आह कर्त्तुरिति। प्रयोजकः प्रेरकः कर्तृव्यापारानुकूलव्यापारवानित्यर्थः। अणिजन्तावस्थायाः कर्त्तुः प्रेरको णिजन्तावस्थायां कर्त्तेति हेतुरिति चोच्यते इति यावत्। तत्र हेतुसंज्ञायाः 'हेतुमति च', 'भीस्म्योर्हेतुभये', 'भियो हेतुभये षुक्,' इत्यादीनि प्रयोजनानि। कर्तृसंज्ञायास्तु—'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यत्र प्रयोजके वाच्ये लकारादय इति बोध्यम्।

२५७६। हेतुमति च ॥३।१।२६॥

दी—। प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति। 'णिचश्च' ( २५६५ ) इति कर्तृगे फले आत्मनेपदम्। भावयते। भावयाम्बभूवे।

. The affix णिच् is attached to a root when any employment or operation coming from the प्रयोजक ( or resulting from the

agency of the प्रयोजक ) in the form of sending ( or causing to do something ) is sought to be expressed ( by the root ). Thus भवनम् ( भू+अट्+ख्या १व ) etc. i.e to be or grow. A causative root will also have आत्मनेपद terminations after it when the fruition rests on the agent. e. g. भावयते etc.

मित—। हेतुमतीति। 'सत्यापपाशरूपवीणा...चुरादिभ्यो णिच्' ( ३।१।२५ ) इत्यतो णिजित्यनुवर्त्तते। हेतुमतीति निमित्तसप्तमी। तदाह वाच्ये इति सतीति शेष:। कश्च हेतुमान्? यस्य हेतुर्विद्यते। कस्य च हेतुर्विद्यते? प्रेषणादिव्यापारविशेषस्य। प्रेषणादयस्तावत् कमपि निमित्तीकृत्य प्रवर्त्तन्ते यश्च निमित्तीकृत्य प्रवर्त्तते स पुनर्हेतुर्वा प्रयोजको वा 'तत्प्रयोजको हेतुश्चे'ति पूर्व्वसूत्रात्। तदाह—प्रयोजकव्यापारे प्रेषणादाविति। आदिशब्देन अध्येषणानुमत्यु—पदेशा—नुग्रहाणामुपादानम्। तत्र भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेषणा आज्ञेत्यर्थ: ( command ); समानस्य अधिकस्य वा ऋत्विगाचार्य्यादे: प्रवर्त्तना अध्येषणा—प्रार्थना ( Request ) इत्यर्थ:। अनुमतिस्तु राजादे: संमति: ( permission )। उपदेशो हितवचनम् ( Advice )—ज्वरित: कषायं पिबेत्, नैकाकी नक्तं व्रजेत् इत्यादिरूपम्। अनुग्रहस्तु 'हन्तुनिष्टस्य पलायमानस्य निरोध' इति उपकाराख्य: प्रवर्त्तनाभेद:। तत्र निरोधकस्य प्रवर्त्तकत्वात्। भवनमिति भूधातो: अवन्तमिदम्। णिचश्चेति—व्याख्यातं प्राक्। भावयते इति। णिचि वृद्धौ अवादय:। भावयाम्बभूव इति। 'कास्प्रत्ययात्—' इत्याम् ततश्च णिजन्तकरोत्यादेरनुप्रयोग:। आम्प्रत्ययवत्—इति तङ्।

२५७७। ओ: पुयण्ज्यपरे ॥७।४।८०॥

दी—। सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परत:। अबीभवत्। अपीपवत्। मूङ्। अमीमवत्। अयीयवत्। अरीरवत्। अलीलवत्। अजीजवत्।

ह्रस्व i. e इकार is substituted for the उकार of the अभ्यास a part and parcel of the अङ्ग (verbal stem), followed by सन् ( or declared to be सन्वत् ) provided the said उकार is followed by ( or contains ) पवर्ग ( प, फ, ब, भ ), यण् ( य, व, र, ल ) and जकार which ( पवर्ग, यण् and जकार ) again are followed by अकार। Thus अबीभवत् etc.—भू णिच् चङ् तिप् *। Here वृद्धि in connection with णिच् will not apply first due to the prohibition 'द्विर्वचनेऽचि' (2243). Thus द्वित्व takes effect first giving भू भू इ अत् of which the second भू will have वृद्धि and आवादेश as the result of णिच्कार्य and उपधाह्रस्वः by णौ चङि—' ( 2313 ) then the उकार ( by this rule ) of the first i. e the अभ्यास भू will be replaced by इ for 'सन्यत:' ( 2317) will not apply as there is no अकार in the first or अभ्यास भू। Then by दीर्घ ( 'दीर्घो लघो:' ) and अभ्यासजश्त्व we have अबीभवत्। Similarly अपीपवत् ( पूङ् ), अमीमवत् ( मूङ् ), अयीयवत् ( यु ), अरीरवत् ( रु ), अलीलवत् ( लू ) and अजीजवत् (जु)। Note that as the rule 'ओ: पुयण्—' merits the modification as 'ओ: पयो:' for which see दीक्षित under 'ई च गण: ( 2578 ) we could have effected अबीभवत् etc excepting पिपविषते and यियविषति by applying वृद्धिकार्य first of all and finally by सन्यत: ( These are all evident under 'अौनमत्' resulting from ऊन परिहाणे under चुरादि ).

मित—। ओरिति। पुयण्जि अपरे इतिच्छेद। ओरिति उ इत्यस्य षष्ठ्यन्तम्। 'पुयण्जि' इति समाहारद्वन्द्वात् सप्तम्येकवचनम्। पुश्च यण् च ज् च तस्मिन्। अपरे इति बहुव्रीहि:। अ: परो यस्मात् इति। 'सन्यत:' ( ७।४।७९ )

* Here सन्वद्भाव comes in by 'सन्वल्लघुनि—' (2316).

इत्यतः सनीति अनुवर्तते। 'अङ्गस्य' (६।४।१) इति सप्तमाध्यायपरिसमाप्तिक-मधिकारसूत्रम्। 'अत्रामित्' (७।४।७९) इत्यत इदिति। 'अत्र लोपोऽभ्यासस्य' (७।४।५८) इत्यतोऽभ्यासस्येति चानुवर्तते। तदाह—सनि परे यदङ्गमित्यादि। अभ्यासस्येति षष्ठीसम्बन्धेन ओरित्यस्य विशेषणम्। तदाह—अभ्यासोकारस्येति। अपरे इति तु पुयण्जि इत्यस्य विशेषणम्। अत आह—अवर्णपरेषु इति। पु इति पवर्गः। यण् इति प्रत्याहारः। अबीभवदिति। भू णिच् चङ् तिप् इति (लुङि) स्थिते * अजादेशस्य णिचि निषिद्धत्वात् प्रागेव द्वित्वम्। ततोऽङ्गस्य (उत्तरखण्डस्य) णिचि वृद्धौ, आवादेशे, 'णौ चङि—' (२३१४) इत्युपधाह्रस्वे च अकारपरकतया भू इत्यभ्यासस्थस्य उकारस्य इत्त्वम्। तस्य दीर्घोलघोरिति दीर्घः। 'लुङ् लङ्—' इत्यडागमश्च। अत्र अभ्यासे अकाराभावात् 'सन्यतः' (२३१७) इत्यस्याप्रवृत्तिरिति ज्ञेयम्। अत्र सन्वत्त्वं तु 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेनेति ज्ञेयम्। नच भुभु इति द्वित्वोत्तरं वृद्ध्यावादेशयोः कृतयोः 'णौ चङि—' (२३१४) इत्युपधा—ह्रस्वे 'अचः परस्मिन् पूर्वविधौ' (५०)इति तस्य (उपधाह्रस्वस्य) स्थानिवद्भावेन अभ्यासो-कारस्य—अकारपरपवर्गादिपरकत्वाभावात् सन्वत्त्वाप्रसक्तेरित्त्वं न स्यादिति वाच्यम्। एतत् सूत्रारम्भसामर्थ्यादेव स्थानिवद्भावस्याप्रवृत्तेरिति तत्त्वबोधिन्यादौ स्पष्टम्। एवमपीप-वत् (पूङ् पवने इति धातुः)। अमीमवत्। स्पष्टं मूले। अयीयवत् (यु मिश्रणादौ)। अरीरवत् (रु शब्दे)। अलीलवत् (लूञ् छेदने)। अजीजवत् (जु गतौ)। सौत्रोऽयमन्तिमो धातुः। 'जुचङ्क्रम्य—'इत्यत्रोक्तः। अपरे किम्। बुभूषति। पुयण्जीति किम्? ऊर्णुनविषति।

२५७८। स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥७।४।८१॥

दो—। एषामभ्यासोकारस्य इत्त्वं वा स्यात् सन्यवर्णपरे

---

* 'ओः पुयण्जि—' (२५७७) इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजकार—ग्रहो लिङ्गं 'णिचि अच आदेशो न स्याद् द्वित्वे कार्ये' इति दीक्षितग्रन्थः 'ई च गणः।' (२५७२) इति सूत्रे द्रष्टव्यः। तत्रैव च अबीभवदित्यादिः प्रकारान्तरेण (प्राक् णिच् प्रसक्त्या) साधनमपि द्रष्टव्यम्।

धात्वचरे परे। असिस्रवत्—असुस्रवत्। 'नाग्लोपि—' (२५७२) इति ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे—अचचकासत्। अग्लोपीति सुब्धातुप्रकरणे उदाहरिष्यते। ण्यन्ताण्णिच्। पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः। चोरयति। 'णौ चङि—' (२३१४) इति ह्रस्वः। 'दीर्घो लघोः' (२३१८)* इति दीर्घः (?)। न चाग्लोपित्वाद् द्वयोरप्यसम्भवः। एवाकृतिनिर्देशात्। अचूचुरत्।

इत्त्व i.e. इकार is optionally substituted for the उकार of the अभ्यास of these roots (स्रु, श्रु, द्रु, प्रु, प्लु and च्यु) when in सन् (or सन्वद्भाव) a radical धात्वचर letter followed by अवर्ण follows. Thus असिस्रवत्—असुस्रवत्। अशिश्रवत्—अशुश्रवत्। अदिद्रवत्—अदुद्रवत्। अपिप्रवत्—अपुप्रवत्। अपिप्लवत्—अपुप्लवत्। अचिच्यवत्—अचुच्यवत्। The process in all the cases is the same as in अबीभवत् etc. The only diff. is that here 'दीर्घो लघोः (2318) does not apply for the इकार in असिस्रवत् etc becomes गुरु (and not लघु) in connection with स्रु etc which contain a conjunct letter (संयुक्तवर्ण)। The उकार of शासु elides. Thus it (शासु) is अग्लोपी and consequently 'नाग्लोपि—' (2572) applies. अचीचकासत्—अचचकासत्—the former is effected by the saying 'लघुपरे णौ यदङ्गम्—' and the latter by 'चङ्संज्ञानिमित्तं यल्लघुपरं

---

* 'इति दीर्घः' इति—इति ह्रस्व इत्युक्तत्वादिति दीर्घ इत्यपि वाच्यम्। परन्तु तत् क्वापि मूले न दृश्यते। अतः प्रश्नचिह्नोदयः।

णिश्रिति यावत् तत्परं यत्नत—etc.' see the rule 'सन्वल्लघुनि—' (2316) as also the verse 'चकास्तौ तूभयमिदं न स्यात् स्याच्च व्यवस्थया' (4th)—under 'दीर्घो—(२३१८); चकास्र is ऋदित् or ऋ-eliding and hence अग्लोपी. Thus 'नाग्लोपि—' (2572) applies. We shall also instance the cases of 'अग्लोपी—' in the सुब्धातु or नामधातु chapter (cp.—असंग्रामत अतितिरायत् etc ).

स्वन्तात्—etc. A root which takes णिच् in स्वार्थ (as चुरादि class do) will take also the हेतुमण्णिच् or causative णिच्। Thus चुर by स्वार्थ णिच् becomes चोरि. Then चोरि (चुर्+णिच्)+णिच् +शप्+तिप् will give चोरयति (as in स्वार्थ णिच्) for the स्वार्थ णि or णिच् elides by barring the वृद्धि (directed by 'अचो ञ्णिति'—245) owing to the varttika 'णिल्लोपाधिवङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्व्वविप्रतिषेधेन' (explained under 'णेरनिटि'—2313) or because 'णेरनिटि' is an अपवाद सूत्र and hence णिलोप occurs first. Now the form stands चोरि ० शप् तिप्—चोरयति by गुण and अयादेश ('सार्व—' (2168) and 'एचोऽय—' 61). In con. with चङ् the उपधा of the अङ्ग will be ह्रस्व by 'णौ चङि—' (2314). Thus अट् चोर् इ चङ् तिप् will now give अ चुर् इ अत्. Then by duplication अ चुर् चुर् इ अत्=अचुचुरत् (हलादिः शेषः and णिलोप)= अचूचुरत् by 'दीर्घो लघोः'. Here you cannot urge that both उपधाह्रस्व and अभ्यासदीर्घ are impossible due to the अग्लोपित्व or इ-लोपित्व (elision of इ of चोरि whence we have चोर् as above). For णि is held to be an आकृति or जाति (Genus) and not व्यक्ति (Individual). Thus the elision of the first णिच does not make any change as there exists the 2nd णिच्.

Hence the rule 'नाग्लोपि—' (2572) does not apply, consequently चोर् becomes ह्रस्व by 'णौ चङ्यि—' (2314) and the अभ्यास is दीर्घ by दीर्घो लघोः (See also मित—below).

मित—। भवतीत्यादि। पूर्ववदनुवृत्तिः। पूर्वसूत्रादपरे इति चानुवर्तते न तु 'पुयण् जि' इत्यपि असम्भवात्। तदाह—एषामित्यादि। अपरे। इति वर्णे इत्यर्थः। असिस्रवत्—असुस्रवत् इति। 'स्र' इति संयुक्तवर्णपरकत्वेन 'सि' इत्यस्य इकारस्य 'संयोगे गुरु' इति गुरुतया 'दीर्घो लघो'रित्यस्याप्रवृत्तेर्न दीर्घः। एवमसुस्रवदित्यत्र, अन्यत् पूर्ववत्। प्रयोगेत्यादेरुदाहरणन्तु अशिश्रवत्—अशुश्रवत्। अदिद्रवत्—अदुद्रवत् इत्यादि। अत्र शासु अनुशिष्टौ इत्यस्य उकारलोपेन अग्लोपित्वादुपधाह्रस्वाभाव इत्याह—'नाग्लोपि—' इति। तत्रापि लघुपरकत्वाभावाद् अभ्यासाकारस्य न दीर्घः। एवम् अडुढौकत् 'ढौकृ' इति ऋदिदयम्। अचीचकासत्—अचचकासत् इति। 'चकासृ' इति ऋकारान्तत्वेन अग्लोपित्वाभावादुपधाह्रस्वः। मतान्तरे इति। 'चकास्तौ तूभयमिदं न स्यात् स्याच्च व्यवस्थया' इति 'दीर्घो लघोः (२३१८) इत्यत्र चतुर्थफक्किकायामेव उक्तं मतद्वयम्। तत्र पूर्वं 'अङ्-परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर' इति व्याख्याने दीर्घसन्वद्भावाभ्यां सिध्यति। अयन्त्वयं पक्षो भाष्यानारूढो नागेशासम्मतश्च। उत्तरन्तु (रूपम्) 'अङ्गसंज्ञानिमित्तं यत्तदङ्परम्' इति प्रथमव्याख्याने सिध्यति। अत्रानेकहल्व्यवधानाद् दीर्घसन्वद्भावौ न। सुब्धातुप्रकरणे इति—अतितिरायदित्यादौ इत्यर्थः। उदाहरिष्यते मयेति शेषः।

ण्यन्ताण्णिजिति। चुरादिगणीयधातुभ्यः स्वार्थण्यन्तेभ्यो हेतुमण्णिजपि भवतीत्यर्थः। तत्र स्वार्थणिचा चुर धातोः 'चोरि' इति रूपे जाते हेतुमण्णिचि चोरि + णिच् + शप् तिप् इति स्थिते 'अचो ञ्णिति' (२५४) इति प्राप्तां वृद्धिं बाधते पूर्वविप्रतिषेधादिति। 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्तिकादित्यर्थः। (वार्तिकमिदं 'णेरनिटि' (२३१२) इत्यत्र व्याख्यातम्)। पक्षान्तरमाह अपवादत्वाच्चेति। णेरनिटि इति सूत्रस्य अपवादत्वात् णिलोपस्यैव 'परनित्यान्तरङ्ग—' इति परिभाषया

प्राक्प्रवृत्तेरिति भावः। एवञ्च हेतुमण्णिचो लोपात् शपस् तिपो वा पित्त्वमादाय—सार्वधातुकार्द्धधातुकयोरिति गुणः। अथ चङि प्रक्रियामाह—'णौ चङि—' (२३१४) इत्यत्र इति। अङ्गस्य उपधाह्रस्व इति भावः। दीर्घो लघोरिति—अभ्यासदीर्घ इति शेषः। अत्र स्वार्थण्यन्तस्य 'चोरि' इत्यस्य णेरिकारलोपात् 'चोर्' इति जाते 'णौ चङि—' इत्युपधाह्रस्वे च चुर इत्यस्य द्वित्वम्। ततोऽभ्यासस्थस्य चु इत्यस्य दीर्घे अचूचुरत् इति सिध्यति। परन्तु णेरिकारलोपात् धातुरयम् अग्लोपी भवति। ततश्च 'नाग्लोपि—' (२५७२) इति उपधाह्रस्वाभाव आपद्यते। तदभावाद 'दीर्घो लघो' रित्यपि न प्रवर्त्तते ह्रस्वाभावत्। अत आह—न चाग्लोपित्वादिति। द्वयोरपि इति। उपधाह्रस्वाभ्यासदीर्घयोरित्यर्थः। कुतो नासम्भव इत्यत आह—ण्याकृतिनिर्देशादिति। णेर्णिच्प्रत्ययस्य आकृतेः जातेः निर्देशाद व्यवस्थितत्वात्। एवञ्च जातिलेन स्वार्थणिचा हेतुमण्णिचोः साम्यं फलितम्। ततश्च स्वार्थणिचो लुप्तत्वेऽपि हेतुमण्णिचः सत्त्वात् न णिच्परत्वविरहः। अत इकारलोपाभावान्नाग्लोपित्वम्। अतश्च ह्रस्वदीर्घौ सिध्यतः। परन्तु 'अत्र जातिनिर्देशोऽयुक्तः' इति शब्देन्दुशेखरे विस्तरेण प्रपञ्चितमिति तत्रैव द्रष्टव्यम्। अथ 'टु ओ श्वि गतिवृद्ध्यो'रित्यस्य चङि सम्प्रसारणविकल्पं दर्शयितुमाह—

२५७८। णौ च संश्चङोः॥ ६।१।३१॥

दी—। सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात्। 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्' (परि—) इति वचनात् आदौ सम्प्रसारणं पूर्वरूपम्। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्।

The root श्वि (टु ओ श्वि गतिवृद्ध्योः) gets सम्प्रसारण optionally when णि i.e. णिच् followed by सन् as also चङ् follows. Thus in णि followed by सन्—शिश्वाययिषति—शुशावयिषति (see under—'स्रवतिशृणोति—' २६२६). Now in णि followed by चङ् the form standing—

श्वि णिच्, चङ् तिप्, the णिच् कार्य i.e. वृद्धि and आयादेश due to णिच comes in first, then सम्प्रसारण। But in this case the form will be अशुश्वयत् and not अशूशवत् which is intended. So Bhattoji brings forward the statement of Bhasya viz सम्प्रसारणम् etc (see भाष्य under 'लिट्यभ्यासस्योभयेषाम्') meaning सम्प्रसारण as well as operation in connection with it is of greater force than any other operation. Thus सम्प्रसारण and पूर्वरूप ('सम्प्रसारणाच्च'—३३०) operate first and then द्वित्व, णिच्कार्य and अभ्यासदीर्घ giving अशूशवत्। When there is no सम्प्रसारण the form is अशिश्वयत्—here the अभ्यास is not दीर्घ for इ of श्वि is not लघु due to the following of the संयोग letter 'श्व' (the 'व' of श्वि is dropped by 'हलादिः शेषः')।

णित—। चौ चेति। 'विभाषा श्वेः' (६।१।३०) इति सूत्रम्, 'ष्यङः सम्प्रसारणम्' (६।१।१३) इत्यतः सम्प्रसारणमिति चानुवर्त्तते। 'संयङो'रिति च विषयसप्तमीद्विवचनम्। सन् च चङ् च (द्वन्द्वः) तयोः। एतद् चौ इत्यस्य विशेषणम्। अत आह—सन्परे चङ्परे च णौ इत्यादि। ननु श्वि णिच्, चङ्, तिप् इति स्थिते अन्तरङ्गत्वाद् णिच्कार्य प्रागेव स्यात् ततः सम्प्रसारणम्। तथाच सति अशुश्वयत् इत्येव स्यात् न त्वभीष्टम् अशूशवत् इति। अत आह—सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत् (नैषा परिभाषा इति शब्देन्दुशेखरे स्थितम्—परन्तु मूले सर्वत्र परिभाषात्वेनैव ग्रहणं दृश्यते)। भाष्यवचनमेतत् 'लिट्यभ्यासस्योभयेषाम्' इत्यत्र निबद्धम्। एवञ्च प्रागेव सम्प्रसारणम् तदाश्रयं कार्यञ्च 'सम्प्रसारणाच्च' (३३०) इति प्राप्तं पूर्वरूपमपि भवति। ततो द्वित्वणिच्कार्ये भवतः। ततश्च अशूशवत् इति सिद्धम्। सम्प्रसारणाभावपक्षे आह—अलघुत्वादिति। अभ्यासस्थस्य 'शि' इत्यस्य इकारस्य संयोगपरत्वेन गुरुतया 'दीर्घो लघो'रित्यस्याप्रवृत्तिरिति भावः। अशिश्वयत् इति। श्वि इत्यस्य द्वित्वम्। वस्य हलादिः शेषः। उत्तरखण्डस्य णिच्कार्ये च वृद्ध्यायादेशयोः

ऌतयोः 'णौ चङि—' ( २३१४ ) इत्युपधाह्रस्वः। एवम् अगूगवदित्यत्रापि उपधाह्रस्वः। अभ्यासदीर्घस्तु लघुपरत्वादिति विभावनीयम्। अयतेर्णिचि लङादौ आययतीत्यादि ज्ञेयम्। अथ 'सवाचालम्बनाविदूर्ययोः' इति प्राप्तं षत्वं चङि वारयति—

२५८०। स्तम्भुसिवुसहां चङि ॥८।३।११६॥

टी—। उपसर्गनिमित्त * एषां सस्य षो न स्याच्चङि। अवातस्तम्भत्। पर्यसीषिवत्। न्यसीषहत्। आटिटत्। आशिशत्। बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेव। ओणेर्ऋदित्करणाल्लिङ्गात्। मा भवानिदिधत्। एजादावेधतौ विधानान्न वृद्धिः। मा भवान् प्रेदिधत्। 'न न्द्राः—' ( २४४६ ) इति नदराणां न द्वित्वम्। औन्दिदत्। आड्डिडत्। आर्चिचत्। 'उज आर्जवे'। उपदेशे दकारोपधोऽयम्। 'भुजन्युब्जौपाण्युपतापयोः' ( २८७७ ) इति सूत्रे निपातनाद्दस्य बः। स चान्तरङ्गोपि द्वित्वविषये 'न न्द्राः—' ( २४४६ इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्त्तते। न तु ततः प्राक्। दकारोच्चारणसामर्थ्यात्। औब्जिजत्। अजादेरित्येव। नेह। अदिद्रवत्।

The स of these roots in चङ् is not replaced by ष due to a cause existing in the उपसर्ग's. Thus अवातस्तम्भत् (but elsewhere अवष्टम्भयति etc. with षत्व)—this is an exception

---

* 'उपसर्गस्थान्निमित्तात्' इति तत्त्वबोधिनीसंमतः पाठः। स एव च समीचीनः 'उपसर्गादिति वक्तव्यम्' इति वार्त्तिकसत्त्वात् अस्यतार्थ्येवं स्वयं व्याख्यातत्वाच्च।

to the rule 'ब्याप्रालम्बनाविदूर्य्ययोः' ( 2273 ). पर्य्यसीषिवत्, न्यसीषदत् ( परि—षिवु ( तन्तुसन्ताने ) + णिच् + चङ् तिप् ; नि—षद्द ( मर्षणे ) + णिच् + चङ् तिप् ) here in both the cases the उपसर्गनिमित्त षत्व directed by 'परिनिविभ्यः सेवसितसयसिवुसह—' ( 2275 ), is prohibited by this rule, hence the अभ्यास is without षत्व ; but the अभ्यास-निमित्त षत्व of the अङ्ग is not prohibited ; hence we have षत्व in षिवु and षद्द by 'इणकोः and 'आदेशप्रत्यययोः' (211—12 ). In आटिटत् (अट् + णिच् + चङ् तिप् ) and आशिशत् (अश् + णिच् + चङ् तिप् ), the उपधा ह्रस्व, though बहिरङ्ग, * will apply prior to the duplication ( द्वित्व ) due to the fact of making ओणि or ओण् (ओणृ अपनयने) as ऋदित् or ऋ-eliding. The drift is this :—ओणृ is ऋदित् and so अग्लोपी. Thus, in ओण् इ ( णिच् ) अत् (चङ् तिप् ) or ओणि अत्, by द्वित्व ( which is अन्तरङ्ग ), we will have औणिणि अत् ( 'अजादेर्द्वितीयस्य' ) ; but as ओ now ceases to be उपधा, the rule 'नाग्लोपि—( 2572 ) does not apply, consequently the ऋदित्करण or अग्लोपिकरण fails and this failure suggests

---

* उपधाह्रस्व directed by 'णौ चङि—' ( 2314 ) is बहिरङ्ग or an external injunction because it necessitates the existance of two affixes viz. चङ् and णि whereas द्वित्व is अन्तरङ्ग ( inherent injunction ) in as much as it applies when the single affix चङ् follows ; cp. the saying of कैयटः—'बह्वपेक्षो बहिरङ्गः' and 'अल्पापेक्षोऽन्तरङ्गः' or what necessitates more than one (विधि or प्रत्यय ) is बहिरङ्ग and what does only a very few (or one ) in comparison is अन्तरङ्ग ।

that the उपधाह्रस्व ( णौ चङि—2314 ), though वृद्धिरञ्ज will apply before द्वित्व. Thus in ओण् इ अत्, 'नाग्लोपि—' applies first due to अग्लोपित्व of ओण् giving औण् इ अत्=औणिणि अत् ( by अट्, णिच्कार्य and द्वित्व )=औणिणत् (by णिलोप—'णेरनिटि' ) । Similarly ( from the fact of this suggestion which is general 'ज्ञापकस्य सामान्यापेक्षत्वात्' ) in आटिटत् and आशिशत्, the उपधाह्रस्व directed by 'णौ चङि—' applies first and then द्वित्व, अडागम, णिच्कार्य and णिलोप etc.

To make his view more lucid Bhattoji brings forth another case such as ऐदिधत् (एध्+णिच्+चङ् तिप्) in connection with माङ् which prohibits वृद्धि due by the rule 'आटश्च' ( 269 ) —for in आटिटत् etc we could proceed by applying द्वित्व first and then उपधाह्रस्व on the strength of 'आटश्च' the application whereof effects आटिटत् etc. To answer another rejoinder, viz. in 'मा भवान् प्रेदिधत्'—(प्र+इदिधत् ) there will be वृद्धि giving प्रैदिधत् by 'एत्येधत्यूठ्सु' ( 73 ) as इदि is nothing but एध् itself by the maxium (न्याय or परिभाषा—) 'एकदेशविकृतस्यानन्यत्वात्', (1) Bhattoji says एजादौ etc. i.e. as the वृद्धि takes place only when एति and एधति etc, have एच् ( ए, ओ, ऐ, औ, ) for their beginning letter. Hence here in प्रेदिधत् there will be गुण and not वृद्धि by 'एकदेश—'. औन्दिदत्—the root उन्दी क्लेदने ( रुधादि ). In उन्द् इ ( णिच् ) अत् ( चङ् तिप् )—after णिच्कार्य

(1) A term or word which has undergone any change only partially is to be looked upon as the selfsame word or term ; cp.—भाष्य—श्वन: पुच्छे नष्टेऽपि श्वत्वाचतेः ।

'द्रि' will be duplicated by 'न न्द्राः—' (2446) then as before. In आञ्जिढत्—the root is अड्ड (अड्+ड) hence its उपधा is ड्. Here after णिच्कार्य्य, 'ड्डि' will be doubled. Similarly in आर्चिचत् (अर्च इ अत्), after णिच्कार्य्य, चि is doubled then णिलोप etc. The root उब्ज (आर्जवे) has द for its penultimate as instructed in धातुपाठ and this द् becomes ब irregularly as we have seen it is used thus in the rule 'भुजन्युब्जौ—' (2877). And although this (ब) is अन्तरङ्ग yet in the matter of द्वित्व, it will take place after the word 'जि' (ज् with णिच्) has been duplicated owing to the prohibition 'न न्द्राः—' and not before this i. e. the prohibition 'न न्द्राः—' on the score of the utterance of दकार. Thus औब्जिजत् (अट् उद्जि चङ् तिप्=औद्जि जि अत्=औब्जिजत्). The prohibition 'न न्द्राः—' (2446) will apply only when न, द and र come after अच् and not otherwise; cp. 'अचः पराः संयोगादयो नदरा द्विर्न भवन्ति'. Thus it will not hold good in the case of अदिद्रवत् (द्रु+णिच्+चङ् तिप्=अट् द्रुद्रु इ अत्=अदुद्रावि अत्= अदिद्रवत्—इ by 'स्रवतिशृणोति—' (2578) then उपधा—ह्रस्व and णिलोप (alternative अदुद्रवत्) for the 'द्' here does not come after an अच्. If the reading is अदिद्रपत् then the root is 'द्रा' which becomes द्रापि by 'अर्त्तिह्री—' (2570), the अभ्यास 'दा' (हलादिः शेषः) first being 'द' by 'ह्रस्वः' and then being 'दि' by सन्वत्.

मित—। सम्भु इत्यादि। 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यधिकृतम्। 'सहेः साडः सः' (८।३।५६) इत्यतः स इत्यनुवर्त्तते। 'न रपरसृपिसृजि—' इत्यतो

नैति च। अत्रैव सूत्रे 'उपसर्गादिति वक्तव्यम्' इति च वार्त्तिकं वर्त्तते। तदेतत् सकलमभिप्रेत्याह—उपसर्गनिमित्त इत्यादि। 'उपसर्गस्थान्निमित्तात्' इति पाठो ज्यायान् अन्यथाप्यर्थसुलभत्वादित्यलम्। अवातस्तम्भत् इति—स्पष्टम्। अभ्यासस्य 'शर्पूर्वाः खयः' इति तकारशेषः। पर्यसीषिवत् इति—परिपूर्वात् 'षिवु तन्तुसन्ताने' इत्यस्मात् ण्यन्तात् चङि रूपम्। उपसर्गनिमित्त इत्युक्तत्वात् व्यवहितस्याप्यभ्याससकारस्यैव षत्वनिषेधः ( 'षट्कुस्वाङ्—' ) न त्वभ्यासपरवर्तिन उत्तरखण्डस्य, इण्कोरित्यादिना तस्य षत्वनिमित्तत्वादिति ज्ञेयम्। 'धात्वादेः षः सः' इत्यनेन सत्वे ण्यन्तस्य सिवेर्द्वित्वात्पूर्वम् उत्तरखण्डे णिलोपः दीर्घो लघोरिति दीर्घः। एवम् न्यसीषदत् ( नि—षद्ऌ मर्षणे + णिच् + चङ् तिप् ) इत्यत्र। ननु आडागमेन आट् णिच् चङ् तिप्, इति, आश् णिच् चङ् तिप्—इति च स्थिते 'णौ चङि—' (२३१४) इति धात्वन्तात्पूर्वम् उपधाह्रस्वो विधेयः। स तु बहिरङ्गः, चङ्परणिजपेक्षत्वेन बह्वपेक्षत्वात्। द्वित्वन्तु चङ्मात्रापेक्षम्—अत इदमन्तरङ्गम्। ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' ( परि— ) इति न्यायाद् द्वित्वमेव प्राक् प्रसज्यते। कृते च द्वित्वे आटिटदित्यादौ 'आटश्च' ( 269 ) इति वृद्ध्या सिद्धेऽपि—औणिणत्, ऐदिधत् इत्यादौ न सिध्यति। तदत्र कथं प्रवर्तितव्यमिति प्राप्ते आह—बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेव इति विधेय इति वाक्यशेषः। ननु कुत इदं समाधानमित्याशङ्क्य आह—ओणेर्ऋदित्करणात् लिङ्गादिति—'ओणृ अपनयने' इति ऋकारान्तोऽयं धातुः। तस्य ऋकारस्य इत्संज्ञकत्वेन अग्लोपित्वं फलितम् ( अ, इ, उ, ऋ, लृक् )। 'तथा सति आडागमेन णिच्कार्येण द्वित्वेन च 'अजादेर्द्वितीयस्य' इति णिशब्दस्य द्वित्वे औणिणि अत् ( चङ् तिप् ) इति स्थिते उत्तरखण्डे 'णी' इत्यस्य अभावात् उपधात्वाभावेन 'नाग्लोपि—' (२५७२) इत्युपधाह्रस्वप्रतिषेधो न प्रवर्तते। ततश्च ओणेर्ऋदित्करणं व्यर्थम्। तदेतद्व्यर्थं सद् उक्तार्थे ( बहिरङ्गस्याप्युपधाह्रस्वस्य द्वित्वात् प्राक्प्रवृत्तौ ) ज्ञापकम्। एवञ्च णिच्कार्येण आटि, आशि इति जाते 'अजादेर्द्वितीयस्य' इति टिशब्दस्य शिशब्दस्य च द्वित्वे 'णेरनिटि' (२३१३) इत्युत्तरखण्डे णिलोपः। एवमन्यत्र। मा भवान् इदिधत् इति। एधतेर्ण्यन्ताच्चङि

रूपम्। 'न माङ्योगे' इत्याट् प्रतिषेधः। आड्योगेन 'आटश्च' (२६९) इति वृद्धिः स्यात्। इह तदभावात् तन्न। अत उपधाऽऽकारस्य स्पष्टप्रतिपत्त्यर्थमिदमिति बोध्यम्। ननु मा भवान् 'प्रेदिधत्' (प्र+इदिधत्) इत्यत्र 'एत्येधत्यूठ्सु' (७३) इति वृद्ध्या प्रैदिधत् इति स्यात् 'एकदेशविकृतमनन्यवत्'दिति न्यायात् इति चेत्। तत्राह—एजादौ इति। अयमर्थः—'एत्येधत्यूठ्सु' इति सूत्रं तावत् 'अवर्णादिजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्या'दिति व्याख्यातम्। तत्रश्चात्र एजादित्वाभावाद् वृद्धिर्न प्रवर्त्तते इति। उन्द क्लेदने इत्यस्य चङ्परे णौ णिचा सहितस्य 'दि' इत्यस्य द्वित्वेन औन्दिदत् इति भवति। न तु 'अजादेर्द्वितीयस्य' इति नकारस्येति बोध्यम् इत्याह—'न न्द्राः—'(२४४६) इति। 'अचः पराः संयोगादयो नदरा द्विर्न भवन्ति' इति व्याख्यातं प्राक्। एवम् आड्डिडत् ('अड्ड अभियोगे'—इत्यस्य दकारात् परस्य (अड्+ड) ड्डि इत्यस्य द्वित्वे प्राग्वत्)। आर्चिचत्—(अर्च पूजायाम्—अत्रापि रेफस्य न द्वित्वं किन्तु तस्मात् परस्य 'चि' इत्यस्यैव)। उब्ज आर्जवे इति। ननु अट् उब्जि चङ् तिप् इति स्थिते 'ब्जि' इत्यस्य द्वित्वे हलादिशेषे औबिब्जत् इत्यनिष्टम् आपद्येत। इष्यते तु औबिजजत् इति। तच्च कथमित्यत आह—उपदेशे इति। तत्र किं मानमित्यत आह—'भुजन्युब्जौ—' (२८७७) इति। ननु तथापि जकारमात्रापेक्षया बस्य अन्तरङ्गत्वेन तस्मिन् प्राग्विहिते पुनर्बकारोपधत्वमेव भवति। ततश्च दकारोपधत्वेन उपदेशो व्यर्थः। दकारोपधोपदेशस्य हि एतदेव प्रयोजनं यथा 'न न्द्राः—'इति निषेधाद् दकारस्य द्वित्वं न भवेत् किन्तु तत्परवर्त्ति 'जि' इत्यस्यैव भवेदित्याशङ्का समाधत्ते स चान्तरङ्गोऽपीत्यादिना दकारोच्चारणसामर्थ्यादित्यन्तेन। स इति बः। अन्यत् सुगमम्। ननु 'न न्द्राः—' इति किं सर्वत्र प्रवर्त्तते? नेत्याह—अजादेरित्येव इति। अजादेरेव धातोः परः संयोगादयो नदरा द्विर्न भवन्ति न तु हलादेरपि पराः। तथैव व्याख्यातत्वादिति भावः। एवञ्च अदिद्रवत् इत्यत्र 'द्रु' इत्यस्य द्वित्वं फलितम्। तत्र उत्तरखण्डे वृद्ध्यायादेशयोः कृतयोः उपधाह्रस्वे णिलोपे च 'स्रवतिशृणोति—' (२५७८) इत्यनेन अदिद्रवत्—अद्-

दुद्रवत् इति सिद्धम्। अदिद्रपत् इति तत्त्वबोधिन्यां पाठः। तत्र 'द्रा' इत्यस्य चङि रूपम्। णिचि 'अर्तिह्री—(२५७०) इति पुगागमे द्रापि इति जाते तस्य द्वित्वे हलादिशेषे अभ्यासे दा इत्यस्य 'ह्रस्वः' (२१८०) इति ह्रस्वे तस्य 'सन्वतः' (२०१७) इतीत्त्वे 'दि' इति भवति। उत्तरखण्डे तु 'णौ चङि—' (२३१४) इत्युपधाह्रस्वः, 'णेरनिटि' (२३१३) इति णिलोपश्च।

२५८१। रभेरशब्लिटोः ॥७।१।६३॥

टी—रभेर्नुम् स्यादचि न तु शब्लिटोः।

The aug. नुम् takes place after रभ् when अच् follows but not when शप् and लिट् follow.

मित—। रभेरिति। 'इदितो नुम्—' (७।१।५८) इत्यतो नुम् इति, 'रधिजभोरचि' (७।१।६१) इत्यतोऽचीति चानुवर्तते। अत आह—रभेरित्यादि।

२५८२। लभेश्च ॥७।१।६४॥

टी—। अररम्भत्। अललम्भत्। 'हेरचङि' (२५२१) इति सूत्रे 'अचङि' इत्युक्तेः कुत्वं न। अजीहयत्। 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' (२५६६)—असस्मरत्। अददरत्। तपरसामर्थ्यादत्र लघोर्न दीर्घः।

लभ् also gets नुम् when अच् follows but not in शप् and लिट्। Thus अररम्भत् and अललम्भत् (अट् रभ् इ (णिच्) चङ् तिप् —no ह्रस्व and दीर्घ of the अभ्यास due to the following of 'म्भ' which is a संयोग letter). अजीहयत्—Here the 'ह' after अभ्यास is not substituted by कु i.e. घ due to the प्रसज्यप्रतिषेध 'अचङि' in 'हेरचङि' (2513). असस्मरत्—here 'सन्वतः' is barred

by 'अत् स्मृ —' (2566). अददरत्—the substitute अत् being तपर (तः परो यस्मात्), the short अ in the अभ्यास 'द' is not दीर्घ।

अतत्वरत्। अपप्रथत्। अममदत्। अतत्वरत्। अपस्पशत्।

मित—। लभेर्थं ति। प्रागवदर्थं इत्यनुक्तिः। योगविभागस्तु—'भाजो णि' (७।१।६५) इत्यत्र लभेरेवानुवृत्तिर्यथा स्यादित्येवमर्थमित्याहुः। अररभत्। अललम्भत् इति। संयोगपरत्वेन लघुत्वाभावात् सन्वद्भावविरहः। ततश्च इत्त्वदीर्घावपि न प्रवर्त्तेते। कुत्वं नेति—अजीह्यत् (ह्वि णिच् चङ् तिप्) इत्यत्र अभ्यासात् परस्य हेः कुत्वं (घत्वं) नेत्यर्थः। असस्मरत्—अत्र 'अत् स्मृ—' इत्यनेन 'सन्यतः' इत्यस्य बाधः। लघुपरत्वाभावान्न दीर्घः। ननु अददरत् इत्यत्र अभ्यास-दकारादकारस्य दीर्घः स्याल्लघुत्वात् इत्याशङ्का आह—तपरसामर्थ्यादिति। 'अत्' इत्यस्य तपरकरणात्। एवम् अतत्वरत्। अपप्रथदित्यादौ यथास्वं बोध्यम्।

२५८२। विभाषा वेष्टिचेष्ट्योः ॥७।४।९६॥

दी—। अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ। अववेष्टत्—अविवेष्टत्। अचचेष्टत्—अचिचेष्टत्। 'भ्राजभास—' (२५६५) इत्यादिना वोपधाह्रस्वः। अबिभ्रजत्—अबभ्राजत्। 'काण्यादीनां वेति वक्तव्यम्' (वार्त्तिक)—ण्यन्ताः कण-रण-भण-श्रण-लुप-हेठः काण्यादयः षड् भाष्ये उक्ताः। ह्वायि-वाणि-लोठि-लोपयश्चत्वारो अधिका न्यासे। 'चाणिलोटो' इत्यप्यन्यत्र। इत्थं द्वादश। अचीकणत्—अचकाणत्।

अत्त्व i. e. अ is optionally substituted for the अभ्यास of वेष्टि (वेष्ट्) and चेष्टि (चेष्ट्) when णि (णिच्) followed by चङ्, follows. Thus अववेष्टत् etc. The penultimate of भ्राज will optionally become ह्रस्व by 'भ्राजभास—' (2565). Thus

अबिभ्रजत्—अबभ्राजत्. When the उपधा is ह्रस्व, the अभ्यास gets इत्व by सन्वत: due to 'सन्वल्लघुनि—' (2316) but the same is not lengthened (दीर्घ) due to 'भ्र' which is a संयोग letter. 'काण्यादीनाम्—' This is a Varttika meaning the उपधा of काणि, राणि, भाणि etc. optionally become ह्रस्व. भाष्य states that णि-ending (causative) कण, रण, भण, श्रण, लुप and हेठ् are six only; whereas न्यास reads four ह्वायि (ह्वेञ्), वाणि (वण्), लोठि (लुठ्) and लोपि (लुप्) or लापि (लप्) in addition to the above six. Moreover elsewhere we find two more—चाणि (चण्) an लोटि. (लुट्). Thus काण्यादि roots are twelve in all. अचीकणत्—अचकाणत् (the इकार being लघु, the rule 'दीर्घो लघो:' applies). Similarly अरीरणत्—अरराणत् etc.

भ्रस—। विभाषेति—'अत्र लोपोऽभ्यासस्य' (७।४।५८) इत्यतोऽभ्यासस्य इति। 'अत् स्मृदृ—' (७।४।९५) इत्यतोऽत् इति, 'सन्वल्लघुनि चङ्परे—' (७।४।९३) इत्यतश्चङ्परे इति चानुवर्तते। चङ्पर इत्यनेन णेराक्षेपात् 'चङ्परे णौ' इति लभ्यते। तदेतत् सर्वमभिप्रेत्याह—अभ्यासस्य अत्त्वमित्यादि। अबवेष्टत् इत्यादि। एकारस्य उपधात्वाभावान्न ह्रस्व: एवमभ्यासदीर्घोऽपि न। अबिभ्रजत् इति—'भ्राज—' इत्यनेन उपधाह्रस्वपक्षे 'सन्वल्लघुनि—' इति सन्वत्त्वम्। 'सन्वत' इति इत्वम्। 'भ्र' इति संयोगपरतया इकारस्य लघुत्वाभावान्न दीर्घ:। काण्यादीनामिति—वार्तिकमिदम्। काण्यादीनां चङ्परे णौ वा उपधाह्रस्व: स्यादिति तदर्थ:। काण्यादयश्च द्वादश इति दर्शयति ह्वायीत्यादिना। कण निमीलने। रण भण शब्दे। श्रण दाने 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनमि'त्यमर:। लुप छेदने। हेठ विबाधायाम्। ह्वायीति। ह्वेञ् स्पर्धायां शब्दे च। वण शब्दे। लुठ प्रतीघाते। अन्यत्रापि दृश्यते। 'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले' साहित्यदर्पणे। लोपीति णिजन्तनिर्देश:। लापि इति पाठे लप व्यक्तायां वाचि। चाणिलोटी इति। चण दाने। लुट लोठे।

टवर्गप्रथमान्तः। पूर्वस्तु टवर्गद्वितीयोपध इति भेदः। अचीकणत्—अचकाणत् इति। उपधाह्रस्वपक्षे सन्वत्त्वेत्वदीर्घाः प्राग्वत्। एवम् अरीरणत्—अरराणत्। अबीभणत्—अबभाणत्। अशिश्रणत्—अशश्राणत्। अलूलुपत्—अलुलोपत्। अजीहिठत्—अजिहेठत्। अजूहुवत्—अजुहावत् इत्यादि।

२५८४। स्वापेश्चङि ॥६।१।१८॥

टी—ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत्।

स्वप् followed by णि will have सम्प्रसारण in चङ्। Thus असूषुपत्—here सम्प्रसारण and पूर्वरूप will operate first, then द्वित्व, सन्वत्त्व and दीर्घ; cp.—सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्'। षत्व by 'इण्कोः' 'आदेश—' (२११—१२)।

मित—। स्वापेरिति। 'ष्यङः सम्प्रसारणम्' (६।१।१३) इत्यतः सम्प्रसारणम् इत्यनुवर्त्तते। स्वापेरिति णिचा निर्द्देशः। तदाह—ण्यन्तस्य इति। चङि किम्। स्वापयति। असूषुपत् इति। 'सम्प्रसारणे पूर्व्वरूपे च द्वित्वम्'। सन्वत्त्वदीर्घौ। षत्वम्।

२५८५। शाच्छासाह्वाव्यावेपां युक् ॥७।३।३७॥

टी—। णौ। पुकोऽपवादः। शाययति। छाययति। साययति। ह्वाययति। व्याययति।

The aug. युक् is ordered after the roots शो, छो, षो, ह्वेञ्, व्येञ्, वेञ् and पा to drink when णिच् follows. ( शो etc = शा etc by 'आदेच उपदेशेऽशिति'। Thus शो + णिच् शप् तिप् = शा युक् णि अति = शायि अति = शाययति )। वेञ् and पा give वाययति and पाययति cp 'पिबत्यसौ पाययते च सिन्धुः' ( रघु—१३ canto ).

मित—। शेत्यादि। 'अर्त्तिह्री...पुक् णौ' (७।३।३६) इत्यतः णौ इत्यनुवर्त्तते। अतः

शेषपुरणेनाह—णाविति। शूर्ल शो तनूकरणे, छो छेदने, षो अन्तकर्मणि, ह्वेञ् स्पर्धायां शब्दे च, व्येञ् संवरणे इत्येषां क्रतात्वानां वेञ् तन्तुसन्ताने पा पाने इत्यनयोश्च द्वन्द्वात् षष्ठीबहुवचनम्। 'ह्वा' इत्यत्र 'दीर्घात्' (१४८) इति तुगागमो बोध्यः। शाययति इति। शो णिच् शप् तिप्=शा इ अति ('आदेचः—') शाय इ अति=शायि अति=शाये अति=शायय् अति—एवमन्यत्र। वेञ्पयोस्तु—वाययति, पाययति। अत्र पा रक्षणे इतिलुग्विकरणस्य (आदादिकस्य) न ग्रहणम्—'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव' इति न्यायात्। तेन तस्य पालयति इत्येव। शैत्यादीनां चङि तु अशीशयत् अचिच्छयत् इत्यादि।

२५८६। ह्वः सम्प्रसारणम् ॥६।१।३२॥

टी—। सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात्। अजूहवत्—अजुहावत्।

The root ह्वे gets सम्प्रसारण in णि followed by सन् and चङ्। Thus in सन्—जुहावयिषति and in चङ्—अजूहवत्—अजुहावत्—here optional उपधाह्रस्व takes place by the वार्त्तिक—'काण्यादीनां वा—'।

मित—। ह्व इति। 'णौ च संश्चङोः' (६।१।३१) इति पूर्वसूत्रं, तदाह—सन्परे इत्यादि। सन्परे—जुहावयिषति इति वक्ष्यते। अजूहवत् इत्यादि काण्यादीनां वेति—उपधाह्रस्वपक्षे अभ्यासदीर्घः। अजुहावत्—अत्र उपधाह्रस्वाभावे सन्वत्त्वाभ्यासदीर्घौ न। 'ह्वायिवाणी'त्यत्र कश्चित् न्यासग्रन्थस्य ह्वायतेरजिह्वपत्—अजिह्वापत् इत्युदाजहार। तच्चिन्त्यं सम्प्रसारणाभावात्।

२५८७। लोपः पिबतेरीच्चाभ्यासस्य ।७।४।४॥

टी—। पिबतेरुपधाया लोपः स्यात् अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। 'अर्तिह्री—' (२५७०) इति पुक्। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति।

The penultimate of पिवति ( पा पाने ) disappears and the reduplicate ( अभ्यास ) gets ईत् ( ई ) as the final substitute when णि followed by चङ् follows. Thus अट् पा णिच् चङ् तिप्=अपापि अत् =अपापि पापि अत्=अपा पाप्=अपी प्य् अत्=अपीप्यत्। अतिंङ्क्षी etc— explained.

मित—। लोप इति। 'णौ चङ्युपधाया ह्रस्वः' (७।४।१) इत्यतोऽनुवृत्तेराह—पिवतेरुपधाया इत्यादि। 'नानर्थकेऽलोऽन्त्यविधि'रित्यस्य अनभ्यासविकारे इति निषेधादभ्यासान्तस्य ईत्वमित्याह—अपीप्यत् इति। पापि इति णिचा सहितस्य द्वित्वे, पूर्वखण्ड अभ्यासह्रस्वादूर्ध्वम् ईत्वम् उत्तरखण्डे तु उपधाह्रस्वणिलोपयोरुत्तरमुपधालोपः। यद्वा अभ्यासह्रस्वो न कार्यः। णिलोपादूर्ध्वमेवोपधालोपः। 'अतिंङ्क्षी—' (२५७०) इत्यादि तत्रैव सूत्रे दर्शितम्। 'अर्पयति' इत्यत्र ऋर्त्ति बाधित्वा गुणः। यलोप इति 'लोपो व्योर्वलि' (८७६) इत्यनेनेत्यर्थः।

२५८८। तिष्ठतेरित् ॥७।४।५॥

टी—। उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्।

Eng.—Easy.

मित—। तिष्ठतेरिति। पूर्ववदनुवृत्तिः। अतिष्ठिपदिति। सन्वत इत्यनेन अभ्यासस्य इत्वम्। उत्तरखण्डस्योपधायास्त्वनेनेति विवेकः।

२५८९। जिघ्रतेर्वा ॥७।४।६॥

टी—। अजिघिपत्—अजिघ्रपत्। 'उर्ऋत्' (2567) अचीकृतत्—अचिकीर्त्तत्। अवीवृतत्—अववर्तत्। अमीमृजत्—अममार्जत्। 'पातेर्णौ लुग्वक्तव्यः' (वार्त्तिक)। पुकोऽपवादः। पालयति।

Eng—Easy. अचीकृतत्—अचिकीर्तत् see उपधायाश्च (२५७१)। अमीमृजत्—अममार्जत्—In the आद्यपक्ष—सन्वत्त्व, इत्त्व and दीर्घ take effect but in the alt. case (अममार्जत्), वृद्धि comes in by 'मृजेर्वृद्धिः' (२४७२)। पातेर्णौ etc—varttika. Here 'लुक्' is the aug. (ल्) which repudiates (bars) पुक् or प्। Thus पा+णिच्=पालि।

मित—। जिघ्रतेरिति। स्पष्टम्। अजिघ्रिपत्—अजिघ्रपत्। कृतोत्त्व्रिति चुलम्। अचीकृतत्—अचिकीर्तत् इति—'उपधायाश्च' (२५७१) इत्यत्र प्रतिपादितमेतत्। अवीवृतत—अववर्तत् इति। अत्र द्वितीयोदाहरणे 'वृत्' इत्यस्य उपधायाऋत्यस्य अप्राप्त्या इत्त्वाभावेन एकत्र लघुपरकत्वादभ्याससन्वद्भावदीर्घौ। एवममीमृजदित्यत्र। अममार्जत् इति तु इत्त्वाभावपक्षे रूपम्। अभ्यासस्य उरदत्त्वेन मकार—शेषः। उत्तरखण्डस्य 'मृजेर्वृद्धिः' (२४७२) इति वृद्धिः। पातेर्णाविति। वार्तिकमिदम्। लुगित्यागमः। तदाह—पुकोऽपवाद इति। एवं लुका पालि इति जाते पालयति इत्यादि सिध्यतीत्यलम्।

## २५९०। वो विधूनने जुक् ॥७।३।३८॥

दी—। वातेर्जुक् स्याण्णौ कम्पेऽर्थे। वाजयति। कम्पे किम्। केशान् वापयति। 'विभाषा लीयतेः' (२५०८)।

Easy. 'वो' means—'of the root वै to drain.' विधूनन means shaking. वापयति—makes scented or sweet—smelling. विभाषा लीयतेः—explained. It is brought forward to remind the readers of optional आत्त्व of the root 'ली'।

मित—। व इति। 'अर्तिह्री—' (७।३।३६) इत्यतो 'णौ' इत्यनुवर्तते। विधूनन इति च कम्पार्थकं तदाह—वातेरित्यादि। अतैवार्थे पुगपवादो जुक् प्राप्नोति न त्वन्यत्र इत्याह—केशान् वापयति इति। सुगन्धी-करोतीत्यर्थ इत्याहुः। 'वः' इति 'ओवै शोषणे' इत्यस्य कृतात्वस्य षष्ठ्या निर्देशः। 'ङः' इतिवत्।

'लुग्विकरणालुग्विकरणयोः—' इति न्यायादत्र लुग्विकरणस्य वातेर्ग्रहणं न वैञ् इत्यन्ये। नागेशस्तु 'वातेरेवात्र ग्रहणम्, न तु वैञः। नापि वै इत्यस्य। लाक्षणिकत्वात् सानुबन्धकत्वाच्चे'त्याह। विभाषा लीयतेरिति। 'लीलीङोरात्त्व' वा स्यादेज्विषये ल्यपि चे'ति दिवादावुक्तम्। तेनात्त्वधारणार्थमस्यात्रोपन्यासः। तत्र लीयतेरिति यकानिर्देशः न तु श्यना। तेन 'ली श्लेषणे' इति श्नाविकरणस्य 'लीङ् श्लेषणे' इति श्यन्विकरणस्य च ग्रहणमित्युक्तम्।

**२५८१। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥७।३।३९॥**

**टी—। लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे। विलीनयति—विलाययति, विलालयति—विलापयति वा घृतम्। 'ली ई' इतीकारप्रश्लेषादात्वपक्षे नुग् न। स्नेहद्रवे किम्? लोहं विलापयति। 'प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमणिति (इति—?) वाच्यम्' (वार्तिक)।**

The augments 'नुक्' and 'लुक्' are optionally posted (placed) after लीयति (ली, लीङ्) and ला in order in णिच् in the sense of dissolving or liquifying oily substances such as (cocoanut oil), ghee etc. Thus 'ली' gives विलीनयति (वि—ली+नुक्+णिच् शप् तिप्) and विलाययति (वि—ली+णिच्+शप् तिप्—by वृद्धि and गुण) and ला gives विलालयति (वि—ला+लुक्+णिच्+शप् तिप्) and विलापयति (वि—ला+पुक् इ अति by 'अर्त्ति—' 2570). All the forms mean the same thing. In the आत्वपक्ष i.e. in the case of ला there will be no नुक्, on the strength of the dissolution or separation as 'ली ई'. That is, this sort of प्रश्लेष

bars the स्थानिवद्भाव or एकदेशविकृतन्याय; hence नुक् does not apply in 'ला' which is itself nothing but 'ली' by स्थानिवत्त्व or एकदेशविकृतन्याय। 'प्रलम्भन—etc' (वार्त्तिक)—It has to be stated that ली is always or persistently replaced by ला (by आत्व) in the sense of deception (प्रलम्भन), oppression or overpowering (अभिभव) and respect (पूजा), when a non-श-eliding affix follows. This varttika is essential for the next aphorism.

मित—। लीलोरिति। ली ला इत्यनयोर्द्वन्द्वात् षष्ठीद्विवचनम्। अनुवृत्तिः पूर्ववत्। 'ला' इत्यनेन ली (क्र्यादिः), लीङ् (दिवादि), ला आदाने (अदादिः) इति त्रय एवात्र गृहीता इति तत्त्वबोधिन्यां विस्तरः। तत्र आत्वेन लीलोर्लाभावो जायत इति ध्येयम्। लीयतेर्नुक् (न्) लातेस्तु लुक् (ल्) इति विवेकः। तत्र नुकि—विलीनयति (विपूर्वाद्लीयतेर्णिच्)। नुगभावपक्षे तु वृद्धिरित्याह—विलाययति (वृद्धौ लायि इति जाते अपि गुणः)। लुकि तु विलालयति (वि—ला+लुक् इत्यादि) इति। लुगभावे 'अर्त्तिह्री—' (२५७०) इत्यादिना पुक्—विलापयति। सर्वे तुल्यार्थकास्तदाह—वा घृतम्। स्नेहो तैलघृतादिः। विपातनं द्रवीकरणम्। ननु 'लीलोः' प्राप्तः 'ला' इत्यस्यापि 'स्थानिवदादेश—' इति, 'एकदेशविकृतमनन्यवत्' इति वा कृत्वा नुगपि स्यात्। तत्राह—'ली' 'ई' इति। तथा च ईकारान्तस्य लीयतेरित्यर्थादिति भावः। लीङमिति। अत्र नुगागमो न। प्रलम्भनेत्यादि। वार्त्तिकमिदम्। प्रलम्भनं वञ्चनम्। अभिभवः तिरस्कारः। अशिति इति एज्विषये। एवमेतेन लीयतेरात्वे कृते अकर्त्रृगेऽपि फले णावात्मनेपदार्थमाह—

२५८२॥ लियः संमाननशालीनीकरणयोश्च ॥१।३।७०॥

दो—। लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्त्रृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे। जटाभिर्लापयते। पूजामधि—

गच्छतीत्यर्थः। श्येनो वर्तिकामुल्लापयते। अभिभवतीत्यर्थः। बालमुल्लापयते। वञ्चयतीत्यर्थः।

The ण्यन्त or causative लीङ् and ली become आत्मनेपद—even if the fruition does not rest upon the agent—in the senses of respect, overpowering and deceiving; e. g. लापयते etc. आलीनीकरण = अभिभव or overpowering.

मित—। लिय इति। लिय इत्यनेन लीलीङोर्ग्रहणम्। 'अनुदात्तङित:—' (१।३।१२) इत्यत आत्मनेपदमित्यनुवर्तते। 'णेरणौ—' (१।३।६७) इति च। तदन्तविधि:। तदाह—लीङ्लियोर्ण्यन्तयोरित्यादि। अकर्तृगेऽपि फले इति। अन्यथा 'णिचश्च' इत्येव सिद्धेरिति भाव:। पूजाभिभवयोरिति सम्माननशालीनीकरणयोरर्थे:। प्रलम्भने इति। सूत्रस्थचकारेण पूर्वसूत्रात् 'गृधिवञ्च्योः—' (१।३।६९) इत्यस्मादितदनुकृष्यत इति बोध्यम्। अन्यत् स्पष्टम्।

२५९३। बिभेतेर्हेतुभये ॥६।१।५६॥

टी—। बिभेतेरेच आत्त्वं वा स्यात् प्रयोजकाद् भयं चेत्।

आत्त्व or आ is substituted for the एच् (ए etc) of भी when the प्रयोजक or णिजन्तकर्त्ता causes fear.

मित—। बिभेतेरिति। 'आदेच:—' (६।१।४५) इत्यत आदिति एच इति चानुवर्तते। 'विभाषा लीयते:' (६।१।५१) इत्यतो विभाषा इति। 'चिस्फुरोर्णौ' (६।१।५४) इत्यतो णौ इति च। तदाह—बिभेतेरित्यादि। 'वा स्यात्' इत्यत उत्तरं णाविति योज्यम्। हेतुभये इत्यस्य विवरणम्—प्रयोजकाद् भयं चेदिति।

२५९४। भीस्म्योर्हेतुभये ॥१।३।६८॥

टी—। आभ्यां ण्यन्ताभ्यामात्मनेपदं स्याद्धेतोश्चेद्

भयस्मयौ। सूत्रे भयग्रहणं धात्वर्थोपलक्षणम्। मुण्डो भापयते।

आत्मनेपद terminations (ते आते etc.) are used after भी and स्मि (followed by णि) i. e. धातु भी and स्मि become आत्मनेपदी, provided the fear and admiration or astonishment arises (direct) from the हेतु or cause (even though the fruit of the action does not accrue to the agent). The word भय in the rule stands for or carries the sense of स्मय (derived from स्मि) also. मुण्डो भापयते—one who has shaved his head terrifies—पुक् by 'अर्त्तिह्री—' (2570) and आत्व by 2593 In the alt. case there will come in षुक् by the next rule—

मित—। भीस्म्योरिति। अत्र भीस्म्योरिति व्यत्ययेन षष्ठीत्याह—आभ्याम् इति पञ्चम्यन्तेन। स्मयन्ताभ्याम् इत्यादौ पूर्ववदनुवर्त्तिनीया। हेतुभये—इत्यस्य विवरणं—हेतोः (प्रयोजकात्) चेत् भयस्मयौ। ननु सूत्रे 'भय' इत्येवास्ति। तत् स्मय इति कुत इत्यत आह—सूत्रे भयग्रहणमिति। धात्वर्थोपलक्षणम् इति। धातोः अवतेरर्थस्य—स्मयरूपस्य (अपीति शेषः) उपलक्षणं ग्राहकं संग्राहकमिति वा। भापयते इति—'बिभेतेर्हेतुभये' इत्यनेनात्त्वे कृते 'अर्त्तिह्री—' (२५७०) इति पुक्। अत्राप्यकर्तृगे फले आत्मनेपदमिति विभाव्यम्। आत्वाभावपक्षे तु षुगागमः स्यादित्याह—

२५९५। भियो हेतुभये षुक् ॥७।३।४०॥

दी—। 'भी' 'ई' इति ईकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्याण्णौ हेतुभये। भीषयते।

The word भियः is the genitive form of भी which is the combination of भी+ई. Thus the meaning is—the aug. षुक् is attached

to the root भी ending in ई in णिच्, if the fear results direct from the cause (प्रयोजक). Thus (मुण्डो) भीषयते. The object of breaking up as भी+ई (which is found in the भाष्य also under 'स्थानिवदादेशः—') is to prohibit पुक् from the आत्त्व पक्ष which could claim the same by 'स्थानिवत्—' or 'एकदेशविकृतन्याय'—

मित—। भिय इति। 'भी' 'ई' इति। एतच्च 'स्थानिवदादेशः—' इत्यत्र भाष्ये स्पष्टम्। एवं सत्यर्थमाह—ईकारान्तस्येति। एवञ्च ईत्वे सत्येव षुक् नान्यथेति आत्त्वपक्षे तन्निरासः फलितः। युक्ता भीषि इति जाते अपि गुणेन भीषयते इति। स्मयतेस्तु नित्यमात्त्वं स्यादित्याह—।

५५८६। नित्यं स्मयतेः ॥६।१।५७॥

दी—। स्मयतेरेचो नित्यमात्त्वं स्याण्णौ हेतोः स्मये। जटिलो विस्मापयते। हेतोर्य्यदभयस्मयाविति प्रत्युक्तं नेह। कुञ्चिकयैनं भाययति—विस्माययति। कथं तर्हि 'विस्मापयन् विस्मितमात्मवृत्तौ' इति। 'मनुष्यवाचा' इति करणादेव हि तत्र स्मयः। अन्यथा आनजपि स्यात्। सत्यम्। 'विस्माययन्' इत्येव पाठ इति साम्प्रदायिकाः। यद्वा—मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते। तया सिंहो विस्मापयन्निति ण्यन्तात्सौ 'शता' —इति व्याख्येयम्।

आत्त्व is always substituted for the एच् of स्मि in णिच्—if the स्मय or astonishment comes from the हेतु or cause (प्रयोजक). Thus जटिलः—one having matted locks astonishes or excites surprise. Our explanation (in 'भीस्म्योः—') being

"'हेतोर्भये—,' here in कुञ्चिकया—' i.e, he ( some one ) terrifies him ( a child etc ) with a stick,—there is no chance of आत्मनेपद in भाययति ( भी+णिच्+शप्+तिप्=भै इ अति=भाय् अति=भाययति by 'सार्वधातुकार्धधातुकयोः'—2168 ). Here आत्व directed by 'विभेतेः—' (2593 ) does not come in for there is no हेतुभय here. Thus पुक् also is barred. [ Hence भापयति as in बालमनोरमा is wrong ]. Similarly विस्माययति । Then how to explain 'विस्मापयन्' occurring in 'विस्मापयन् विस्मितमात्मवृत्तौ'. [ The full verse is as follows ;—''समार्थयत्ता' निग्रहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।

विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ।''

रघु—2nd, 33 (sl.)

Eng.—"The lion, the oppressor of the cow, addressed that supporter of the good, in human voice, thus astonishing that lion-hearted scion of the race of Manu already astonished at his own plight."

विस्मापयन्—(For Sans. Expl. see 'मल्लिनाथ' in the मित—below.) ]

For, the astonishment there results from the 'human speech'—मनुष्यवाचा which is the instrumental ( करण ). Otherwise i.e. had it been प्रयोजककर्त्री or हेतुकर्त्री instead of being करण, then विस्मापयन् would have been replaced by विस्मापयमान with शानच् and would not take शतृ as it has done. True i.e. the argument of yours ( an imaginary opponent ) is partly justified indeed but the reading, according to the sectarians ( साम्प्रदायिकाः ), is विस्माययन् ( with two यकारs ). Or—explain as मनुष्यवाक् which is प्रयोज्यकर्त्री i.e. प्रयोजककर्त्री or हेतुकर्त्री herself

excites surprise. Then with her i.e. through her instrumentality, the lion causes surprise. Thus the णिजन्त form takes णिच् again and then शप्. Thus :—

स राजा विस्मयते (non-casual form),

मनुष्यवाक् तं विस्मापयते ( casual form ),

सिंहः मनुष्यवाचा तं विस्मापयति ( again casual ) so that स्मि + णिच् = स्मापि whence स्मापयते and स्मापि + णिच् = स्मापि ( first णि eliding which see चोरयति under सत्यापपाश—2578 ) whence स्मापयति ।

Remark—Bhattoji's attempt to explain विस्मापयन् is roundabout. Hence we prefer the reading विस्माययन् to विस्मापयन्. Mallinath also here reads विस्माययन् and rejects विस्मापयन् as he finds that the aug. पुक् has no scope herein.

नित्य—। नित्यमिति। 'आदेच:—' (६।१।४५) इत्यत 'आदेच' इति, 'चिस्फुरो:—' (६।१।५४) इत्यतो 'णौ' इति, 'विभेते:—' (६।१।५६) इत्यतो हेतुभये इति चानुवर्तते। तदाह—स्मयतेरेच इत्यादि। विस्मापयते इति। वि—स्मि+णिच्+शप् तिप् इति स्थिते वृद्धा ऐ इति जाते अनेन आत्वम्। ततः 'अर्त्तिह्री—' (२५७०) इत्यादिना पुकि 'सार्वधातुकार्ध—' (२१६८) इति गुणे आयादेशे च रूपम्। 'भीस्म्योर्हेतुभये' इत्यत्र 'हेतुभये' इति 'हेतोर्थे इयस्मयौ' इति व्याख्यातम्। इदानीं तादृशव्याख्यानस्य प्रयोजनं दर्शयति—इत्युक्तेरेह इति। इह भाययति इत्यत्र आत्वम् आत्मनेपदस्य नेति भावः। अत्र हि 'कुञ्चिकया' इति करणादेव भयं न तु हेतोर्जनात्। अतएवात्र वृद्धा आयादेशे च भायि इति जाते तस्य सार्वधातुकगुणेन भाययति इति। एवं विस्माययति। कथं तर्हीति। रघुवंशीयद्वितीयसर्गस्थत्रयस्त्रिंशत्तमश्लोकस्य उत्तरार्द्धे 'विस्माययन्' इति पाठं विस्मापयन् इति मन्वानस्य दुरुपपादत्वमुत्पश्य—पूर्वपक्षयति, 'मनुष्यवाचा' इतीति। अन्वयेति। आत्मनेपदे सतीत्यर्थः। अथार्थाङ्गीकारपूर्वकं समाधानमाह सत्यमिति। 'विस्माययन्' इति पाठस्यैव औपयिक-

तरलं प्रेक्ष्य प्राह—विस्माययन्नित्येव इति। साम्प्रदायिकाः इति—मल्लिनाथादयोऽभियुक्तव्याख्यातारः इत्यर्थः। समाधानान्तरमाह यद्वेति। प्रयोज्यकर्त्रीति। प्रयोजकर्त्री इत्येवात्र वाच्यम्। यद्वा प्रयोज्यः कर्ता यस्याः सेति समाधेयम्।

अयमत्राभिप्रायः।—(१) राजा ( दिलीपः ) विस्मयते ( अणिजन्तावस्था )।

(२) मनुष्यवाक् ( प्रयोजककर्त्री ) राजानं विस्मापयते ( णिजन्तावस्था )।

(३) सिंहः (प्रयोजककर्ता) मनुष्यवाचा ( करणेन ) राजानं विस्मापयति। ततश्च शता—शतृप्रत्ययः = सिंहो विस्मापयन् ( णिजन्तस्य—णिजन्तावस्था )।

स्मापि = स्मि+णिच्, प्रयमपक्षेऽपि स्मापि इत्येव स्थिते गुणायादेशाभ्यां विस्मापयतीति सिध्यति। यद्यपि शब्देन्दुशेखरे तत्त्वबोधिन्यां चैवं व्याख्यानं समर्थितम् तथापीदं सर्वत्रानवस्था स्यादिति 'विस्माययन्' इत्येव पाठो महाकवेः कालिदासस्याभिप्रायः। अतएव मल्लिनाथोऽपि 'विस्माययन्' इत्येव पपाठ तथाचात्र सञ्जीवनी—

"तमार्य्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः॥ ३३॥

सञ्जीवनी :—"निगृहीता पीड़िता धेनुर्येन सः सिंहः आर्य्याणां सतां गृह्यं पक्ष्यम् ( "पदास्वैरिबाह्यापक्ष्येषु च" इति क्यप् )। मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम्। सिंह इव ऊरुसत्त्वः महाबलः तम्, आत्मनः वृत्तौ वाहुस्तम्भरूपे व्यापारे, अभूत—पूर्वत्वाद् विस्मितम् [ कर्त्तरि क्तः ] तं दिलीपं मनुष्यवाचा करणेन पुनः विस्माययन् विस्मयमाश्चर्यं प्रापयन् निजगाद। ['ष्मिङ् ईषद्धसने' इति धातोर्णिचि शतौ आयादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम्। "विस्मापयन्नि"ति-पाठे पुगागमस्याव वक्तव्यं तच्च "नित्यं स्मयतेः" इति हेतुभयविवक्षायामेवेति "भीस्म्योर्हेतुभये" इति आत्मनेपदे 'विस्मापयमान' इति स्यात्। तस्मात् मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् करणविवक्षायां न कश्चिद् दोषः" इति ]।

२५९७। स्फायो वः ॥७।३।४१॥

टी—। णौ। स्फावयति।

Eng.—Easy.

मित—। स्फाय इति। सुगमम्। 'स्फायी वृद्धौ' इति भौवादिको धातुः। अलोऽन्त्यपरिभाषया यकारस्य वकार इति विवेकः।

२५९८। शदेरगतौ तः ॥७।३।४२॥

टी—। शदेर्णौ तः अन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु—गाः शादयति गोविन्दः। गमयतीत्यर्थः।

Eng.—Easy.

मित—। शदेरिति। स्पष्टम्। शातयति—तीक्ष्णीकरोतीत्यर्थः।

२५९९। रुहः पोऽन्यतरस्याम् ॥७।३।४३

टी—। णौ। रोपयति—रोहयति।

२६००। क्रीङ्जीनां णौ ॥६।१।४८॥

टी—। एषामेच आत्त्वं स्याण्णौ। क्रापयति। जापयति। अध्यापयति।

मित—। क्रीङित्यादि—। क्री + इङ् + जीनामिति छेदः। डुक्रीञ् द्रव्यविनिमये,' 'इङ् अध्ययने,' 'जि जये'—इत्येषां द्वन्द्वात् षष्ठीबहुवचनम्। 'आदेचः—' (६।१।४५) इत्यत्र 'आदेच' इत्यनुवर्त्तते। तदाह—एषामेच इत्यादि। आत्त्वे कृते 'अर्त्तिह्री—' (२५७०) इत्यादिना पुकि रूपम्। इङ् प्रायेणाधिपूर्वस्तदाह—अध्यापयतीति। लुङि चङि अचिक्रपत्। अजीजपत्। अधिपूर्वस्येङस्तु अधि इङ् अङ्, तिप्, इति स्थिते विशेषमाह—

२६०१। णौ च संश्चङोः ॥२।४।५१॥

दी—। सन्परे चङ्परे च णौ इङो गाङ् वा स्यात्। अध्यजीगपत्—अध्यापिपत्।

In गाङादेशपक्ष—अध्यजीगपत्. Otherwise अध्यापिपत्। In सन्—अधिजिगापयिषति—अध्यापिपयिषति।

मित—। णाविति। 'इङश्च' (२।४।४८) इत्यत इङ इति, 'गाङ् लिटि' (२।४।४९) इत्यतो गाङिति, 'विभाषा लुङ्लृङोः' (२।४।५०) इत्यतो विभाषेति चानुवर्तते। च संश्चङोरिति सप्तमीद्विवचनम् णावित्यस्य विशेषणम्। तत आह—सन्परे चङ्परे च णावित्यादि। तत्र गाङ्पक्षे—अध्यजीगपदिति। अधि अट् इङ् णिच् चङ् तिप् इति स्थिते गाङादेशे—पुकि च अधि अगापि अत् इति जाते 'गापि' इत्यस्य द्वित्वे उत्तरखण्डे 'णौ चङि—' (२३१४) इत्युपधाह्रस्वे, अभ्यासस्य ह्रस्वे तस्य 'दीर्घो लघोः' (२३१८) इति दीर्घे, 'णेरनिटि' (२३१३) इत्युत्तरखण्डे णिलोपे च रूपसिद्धिः। गाङभावे तु—'क्रीङ्जीनां णि'ति आत्वे, 'अर्त्तिह्री—' इति पुकि 'आपि' इति जाते पि इत्यस्य द्वित्वे प्राग्वत् प्रक्रियया अध्यापिपदिति। अत्र आडागमः। 'अजादेर्द्वितीयस्य' इति पि—शब्दस्य द्वित्वम्। अत्र सन्वद्भावदीर्घे। अत्र अध्यजीगपदित्यत्र 'णिज्निमित्तस्य गाङः द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा न शङ्क्यः। सर्वत्राभ्यासोत्तरखण्डे आद्योच् अवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्' इत्यादि तत्त्वबोधिन्यां द्रष्टव्यम्। एतच्च मूलानुवादमात्रम्। तथा च 'ईच गणः' (२५७३) इति सूत्रे मूले 'अजीगणदि'ति पदसाधनावसरे—'अत्र द्विर्वचनावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वावर्णोऽस्ति तत्रैवायं निषेधः' (णिचि अजादेशो न—' इत्यंशकः) इत्युक्तं व्याख्यातृभिरपीति दिक्।

२६०२। सिध्यतेरपारलौकिके ॥६।१।४८॥

दी—। ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्याण्णौ। अन्नं साधयति, निष्पादयतीत्यर्थः। 'अपारलौकिके'

किम्। तापसः सिध्यति, तत्त्वं निश्चिनोति । तं प्रेरयति —सेधयति तापसं तपः।

आत्त्व or आ, when णिच् follows, is directed to the एच् of सिध्—denoting a sense as 'belonging to this world.' Thus अन्नं साधयति i.e. boils rice—which is an worldly affair. But in the sense of पारलौकिक or in a sense belonging to the other world, there is no आत्त्व as सेधयति तापसं तपः i. e. penance enables (or causes) the ascetic to ascertain the तत्त्व (the twenty-five elements or the nature of the Supreme Being). —whence final emancipation results and this sort of sense is quite foreign to this world.

मित—। सिध्यतेरिति। 'आदेचः—' इति, 'क्रीङ्जीनां णौ' इति चवर्तते। परलोके भवः पारलौकिकः। न तथा अपारलौकिकः, ऐहलौकिक इत्यर्थः। अत आह—ऐहलौकिकेऽर्थे इत्यादि। अन्नं साधयति इति। अन्ननिष्पादनं तद्वुत्या तत्क्रिया-भिन्नेव हि लोके भवति। अत आत्त्वं भवति। तापसः सिध्यतीति। नैतदुदाह-रणम्, अत्र णेरभावात्। किन्तु सिध्यतेरर्थप्रकाशनमात्रमेतत्। अतः 'सेधयति' इत्येवोदाह-रणमिति बोध्यम्। अत्र तपः कर्तृ। तपः तापसं सेधयति—तत्त्वनिश्चयाय प्रेरय-तीत्यर्थः। तत्त्वनिश्चयश्चात्मस्वरूपावधारणं पञ्चविंशतितत्त्वसाक्षात्कारो वा। उभय-त्रापि अर्थोऽयमामुष्मिक एव न लौकिक इति नात्र एच आत्त्वमित्यलम्।

२६०३। प्रजने वीयतेः ॥६।१।५५॥

टी—। अस्येच आत्त्वं वा स्याण्णौ प्रजनेऽर्थे। वापयति—वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। 'ऊदुपधाया गोहः' (२३६४)। गूहयति।

आत्, when णि follows, is optionally enjoined for the एच् of the root वी ('गतिव्याप्तिप्रजनकान्ति—' अदादि) in the sense of प्रजनन or conception. Thus वापयति etc. i.e. the पुरोवायु (wind blowing aface or the rainy wind) causes the cow to conceive. In the आत्पक्ष=वापयति where पुक् comes in by 'अर्तिह्री—' (2570); then गुण and अयादेश। But आत्व being wanting—वाययति with वृद्धि, आयादेश, गुण and अयादेश। ऊदुपधायाः etc.—explained. गूहयति—here ऊत्व bars the लघूपधगुण।

मित—। प्रजने इति। 'आदेचः—' (६।१।४६), 'विभाषा लीयतेः' (६।१।५१), 'चिस्फुरोर्णौ' (६।१।५४) इति पूर्वसूत्राणि। तदाह—अस्यैच आत्वमित्यादि। अत्र वीयतेरिति श्यकानिर्द्देशो न तु श्नना (धातुसू—वी १०४८ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु—अदादिः)। तेन 'व्ये'ऽपि ग्रहणमिति केचित्। तन्नेति शब्देन्दुशेखरे स्पष्टम्। प्रजनं गर्भग्रहणम्। तदाह—गर्भं ग्राहयतीत्यर्थः। पुरोवातकाले (वर्षासु) गावो गर्भं गृह्णन्तीति प्रसिद्धिः। वापयतीति—आत्वे कृते 'अर्तिह्री—' इत्यादिना पुकि रूपम्। तदभावे वृद्धिः, आयादेशः, गुणायादेशौ—वाययति। णिचि गूहतेर्लघूपधगुणे प्राप्ते तद् वारयन्नाह—'ऊद—' इति। अतएव ऊदादेशेन—गूहयतीति सिद्धम्।

२६०४। दोषो णौ।६।४।९०॥

दो—। 'दुषः' इति सुवचम्। दुष्यतेरुपधाया ऊत् स्याण्णौ। दूषयति।

मित—। दोष इति। 'ऊदुपधायाः' (६।४।८९) इति पूर्वसूत्रम्। तदाह—दुष्यतेरित्यादि। दुष इति सुवचमिति। 'दोषो णौ' इत्यनुक्त्वा 'दुषो णौ' इति वक्तुमुचितमित्यर्थः। गुणनिर्द्देशस्य व्यर्थत्वात् स्पष्टतरत्वाचेति भावः।

२६०५। वा चित्तविरागे॥६।४।९१॥

दी—। विरागोऽप्रीतता। चित्तं दूषयति—दोषयति वा कामः। 'मितां ह्रस्वः' (२५६८)। भ्वादौ चुरादौ च मित उक्ताः। घटयति। 'जनीजॄष्—' (ग. सू. १८८), जनयति—जरयति। जृणातेस्तु—जारयति। 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' (वार्तिक)। मृगरमणमाखेटकम्। रजयति मृगान्। 'मृग—' इति किम्। रञ्जयति पक्षिणः। रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन। चुरादिषु ज्ञपादिष्विव्। 'चिस्फुरोर्णौ' (२५६९) (इति वा आत्वम्). चपयति—चययती-तुरङ्गम्। चिनोतीस्तु—चापयति—चाययति। स्फारयति—स्फोरयति। अपुस्फरत्—अपुस्फुरत्।

ऊत् is optionally substituted for the उपधा of दुष् in णिच् when it (दुष्) denotes a spirit of renunciation. 'चित्तम्—' i.e. cupidity acts upon heart. जारयति—derived of जॄष् वयोहानौ घटादि। जृणातेः i. e. of जॄ वयोहानौ क्र्यादि which is not घटादि। 'रञ्जेर्णौ—' (वार्त्तिक)—It has to be stated that रञ्ज् drops its न in णिच् in the sense of hunting.' Thus रजयति. But रञ्जयति पक्षिणः—catches the birds. In a sense other than hunting—रञ्जयति मृगान्—pleases the beasts or deer. etc. चापयति etc.—by 'चिस्फुरोर्णौ' and 'अर्तिह्री—'.

मित—। वेति। दुष्यतेरुपधाया ऊत्स्याद्वा णौ चित्तविरागेऽर्थे सति। दूषयतीत्यादि—विषयविमुखतामुत्पादयतीत्यर्थः। जरयतीति 'जॄष्' इत्यस्य वित्त्वेन घटादित्वादुपधाह्रस्वः। जारयतीति 'जॄ' इत्यस्य क्र्यादिकस्तु तथात्वाभावान्न तथा। रञ्जेर्णाविति—वार्त्तिकमिदम्। अर्थः स्पष्टो मूले। आखेटकं मृगया। रजयति

मृगान् इति । हननार्थमनुसन्धातीत्यर्थः । एवं रचयति पचिण इत्यत्र । मृगकर्मकत्वाभावादत्र णलोपो न । रचणादन्यत्रे'ति । मृगयाभिन्नार्थे इत्यर्थः । अन्यत् सुगमम् । अपुस्फरत्—आत्वपचे उपधाह्रस्वेन रूपम् । तदभावे—अपुस्फुरत्—णिचि अशादेशनिषेधात् स्फुरित्यस्य द्वित्वम् ।

२६०६ । उभौ साभ्यासस्य ॥८।४।२१॥

टी—। साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् ।

Both the नकारs of the root अन् along with the अभ्यास i.e. after duplication, become cerebral when any cause exists (in a prefix such as प्र etc). Thus प्राणिणत्—here after णिच्-कार्य, णि is doubled. Then the अभ्यास णि being meaningless and the second णि being intervened by first, there was no chance of णत्व. Hence the improtance of the rule.

मित—। उभाविति । 'रषाभ्यां नो णः—' (८।४।१) इत्यधिकृतम् । 'उपसर्गादसमासेऽपि—' (८।४।१४) इत्यस्मात् उपसर्गादित्यनुवर्त्य (उपसर्गरूप) निमित्ते सतीति व्याख्यातम् । 'अनितेः' (८।४।१९) इति च वर्त्तते । तदाह—साभ्यासस्यानितेरिति । अभ्यासेन सहितस्य 'अन प्राणने' इत्यस्य, इत्यर्थः । एतेनैतत्—सूत्रेण द्वित्वादूर्ध्वं णत्वमिति ज्ञापितम् । न च तादृशज्ञापने फलं नास्तीति वाच्यम् । प्र आट् अन् इ अन् इति स्थिते हि णिच्कार्य्यादनन्तरं 'णि' इत्यस्य द्वित्वे सति 'अनिते'रिति अभ्यासस्य णत्वं न भवति तस्यानर्थकत्वात् । तथा उत्तरखण्डस्यापि न भवति तस्य अभ्यासेन व्यवहितत्वात् । एवमुभयत्राप्यप्राप्ते णत्वे वचनम् । न च 'पूर्व्वत्रासिद्धीयमद्विर्वचने' इति न्यायाद् द्विर्वचने पूर्व्वत्रासिद्धीयत्वाभावेन अनितेरित्यनेन कृते णत्वे ततो द्वित्वमित्यपि वाच्यम् । एतेनैव सूत्रेण तस्य (न्यायस्य) अनित्यत्वज्ञापनात्, अत्र तदप्राप्तेः । ननु तथापि 'णिश्रिद्रुस्रुभ्यः

आदेशौ न द्वित्वे कार्ये' इति निषेधादत्र णिच्कार्यं प्राग् न भवतीति चेत्। न। 'यत्र द्विरुक्तौ अभ्यासोत्तरखण्डे आद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते, तत्रैवायं निषेधः' इत्युक्तत्वादत्र तथाविधावर्णस्य क्वाप्यनुपलम्भादित्यपास्तम्। एवंरूपेण द्वित्वे अनेन णत्वे णिलोपे च रूपम्।

## २६०७। णौ गमिरबोधने ॥२।४।४६॥

टी—। इणो गमिः स्याण्णौ। गमयति। बोधने तु प्रत्याययति। 'इन्वदिकः' (वार्त्तिक)। अधिगमयति। 'हनस्तोऽचिण्णलोः' (२५७४)। 'हो हन्तेः—' (३५८) इति कुत्वम्। घातयति। 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' (वार्तिक)। तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये यकारस्य द्वित्वं वारयितुमिदम्। द्वितीये तु 'अजादेर्द्वितीयस्य' (२२७६) इत्यस्यापवादतया सन्नन्ते प्रवर्तते। ऐर्ष्यियत्—ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते। हलादिशेषात्। द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः॥ निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः। तेन "प्रार्थयन्ति शयनोत्थितं प्रिया" इत्यादिसिद्धम्। एवं सकर्मकेषु सर्वेषूह्यम्।

### इति तिङन्तणिच्प्रकरणम्।

The root इण् (to go) is replaced by गमि (गम्) when णिच् follows, in a sense other than to cause to understand (अबोधने), e. g. गमयति। But in causing to understand—प्रत्याययति (प्रति—इण्+णिच्+शप् तिप्=प्रति+आययति)। The root इक् (to remember)

also is replaced by गम् in णिच् by the varttika 'इण्वत् इकः'। Thus अधिगमयति ( अधि + इक् + णिच् शप् तिप् ) i.e. स्मारयति। पातयति— clear in the text. 'ईर्ष्यतेः—' ( varttika ). The meanning is 'it has to be stated that either ( i ) the third consonant. or ( ii ) the third single vowel (अच्) of the root ईर्ष्य ( ईर् ष्य् ) is duplicated. By the first explanation it is meant that this varttika forbids the duplication of the षकार ( duplication of रकार or रेफ being barred by the prohibition 'न न्द्राः—' 2446 ), while the second explanation suggests that this varttika takes effect in the सन्नन्तप्रक्रिया as a special injunction barring the application of 'अजादेर्द्वितीयस्य' ( 2176 ). [ Thus it is important to observe that the 2nd expl. has nothing to do here and has been stated with the first in connection with the explanation of the varttika which is ambiguous. Here the first expl. and the rule 'अजादेर्द्वितीयस्य' will apply ]. Thus by the first expl. we have ऐर्षिष्यत् with the duplication of the षकार alone, the third consonant (ईर् ष् य ) after the prohibition of द्वित्व of the रेफ by 'न न्द्राः—,' and by अजादेर्द्वितीयस्य' we have ऐर्षिष्यत् [आट् ईर् षि षिष् चङ् तिप् ] with the duplication of षि, the second vowel ( along with ष ) after the prohibition as above. To answer as to why the second explanation does not apply here Bhatttoji says द्वितीयव्याख्यायाम् etc. i.e. in आट् ईर्ष्य णिच् चङ् तिप्, षकार alone and not यकार also is heard in the अभ्यास due to हलादिशेष. द्वित्व, however, is of the second ( vowel ) षि—for here the varttika has no scope as there is no third अच् present here.

In हेतुमण्णिच् or causal form, the root whence the action or idea of casuality has disappeared ( निवृत्तप्रेषणा ), bars the same sense as it did in its original or primitive form. Thus expressions like 'प्रार्थयन्ति शयनोत्थितं प्रियाः'—( माघकाव्य ? ) see tika below ).—'The lovers (women) urge on rising from the bed etc. are explained (as grammatically correct). Thus the same to be understood in all cases of transitive roots.

Here ends the णिच्प्रकरण in तिङन्त.

मित—। णाविति। 'इणो गा लुङि' ( २।४।४५ ) इत्यत इण इत्यनुवर्तते। तदाह—इण इत्यादि। बोधनमिहार्थं इति वाक्यशेषः। प्रत्याययतीति। बोधयतीत्यर्थः। प्रतिपूर्वादिणः णिचि वृद्ध्यायादेशयोः कृतयोः अपि गुणेन रूपम्। लुङि तु इण्+णिच् तिप् इति स्थिते अडागमे चङि अ इ णिच् चङ् तिप् इति स्थिते 'णौ चङ्युपधाया ह्रस्वः' इति प्राक् णिच्कार्यं म्। ततश्च 'अचो ञ्णिति' ( २५४—७।२।११५ ) इति वृद्धावायादेशे च आयि अत् भवति। न च 'इणो यण्' ( २४५५—६।४।८१ ) इति यणा भाव्यमिति वाच्यम्। परत्वेन वृद्धा तस्य बाधितत्वात्। ततोऽजादेर्द्वितीयस्य' इति यिशब्दस्य द्वित्वम्। तस्य उत्तरखण्डे णिलोपः। प्रत्यायियत्। न च 'द्विर्वचनेऽचि' ( २२४३ ) इति निषेधात् द्वित्वात् प्राक् अजादेशो ( णिच्कार्यं रूपः ) नेति वाच्यम्। 'यत्र द्विरुक्तौ अभ्यासोत्तरखण्डस्य आद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तत्रैवाऽऽ निषेधः' इत्युक्तत्वात् ( 'ई च गणः'—२५७१ )। अधिगमयतीति—स्मारयतीत्यर्थः। वातयतीति। उपधावृद्धिः। लुङि अवीवतत्। ईर्ष्यतेरिति। वार्त्तिकम्। तस्यार्थं स्वयमेवाह—इति वार्थं इति। द्वित्वमिति शेषः। एतच्च व्याख्यानद्वयमपि भाष्यारूढमिति ज्ञेयम्। चार्थ इति। तृतीयव्यञ्जनद्वित्वपक्षे इत्यर्थः। यकारस्य

द्वित्वं वारयितुमिति। 'न न्द्राः—' (२४४६) इति रेफस्य द्वित्वनिषेधात् 'अजादेर्द्वितीयस्य' इति द्वितीयस्य षकारस्यापि द्वित्वं वारयितुमिदं वार्त्तिकं प्रयोजनमिति प्रथमपक्षार्थः। तथा च, आट् ईर् ष् य् णिच् चङ् तिप् इति स्थिते तृतीयव्यञ्जनस्य यकारमात्रस्यैव द्वित्वम्। तत उत्तरखण्डे णिलोपः। आटश्चेति वृद्धिः। ऐर्ष्यियत् इति प्रथमपक्षलभ्यं रूपम्। द्वितीये त्विति। तृतीयैकाचो द्वित्वपक्षे इति भावः। अपवादत्वेनेति। ईर्ष्य्+इट्+सन् इति स्थिते ष्यिस् इत्यस्य द्वित्वं वारयितुमित्यर्थः। सन्नन्ते इति—न त्वन ण्यन्ते इत्यभिप्रायः। प्रवर्त्तते इति। ईर्ष्यितेरिति वार्त्तिकमिति शेषः। ननु तर्हि तृतीयव्यञ्जनपक्षे यकार—मात्रस्य द्वित्वेन ऐर्ष्यियत् इत्यस्य सिद्धावपि तृतीयैकाचो द्वित्वाभावेन उक्तवार्त्तिका-प्रवृत्तेः—'ऐर्षिष्यत्' इति कथम्। तत्राह—द्वितीयव्याख्यायामिति। षकार एवा-भ्यासे श्रूयत इति। आडागमेन ऐर्ष्य्+णिच् चङ् तिप् इति स्थिते 'न न्द्राः—' (२४४६) इति रेफस्य द्वित्वनिषेधात् तृतीयव्यञ्जनस्य च वैकल्पिकद्वित्व-फलकतया सकृत्प्रवृत्तत्वेन पुनःप्रवृत्त्यभावात् णिच्कार्यादूर्ध्वं 'ष्यि' इत्यस्य द्वित्वे हलादिशेषादनन्तरमभ्यासे इकारसहितः षकारः श्रूयते इति भावः। द्वित्वं तु द्वितीयस्यैवेति। अजादेरित्यनुसारादिति यावत्। नन्वेवं 'तृतीयैकाचो वा' इति यदुक्तं तस्य का गतिरत्राह—तृतीयाभावेनेति। अयमभिप्रायः—ईर्ष्यतेरिति वार्त्तिकं व्याख्यानद्वयसहम्। तत्र प्रथमव्याख्यानं ण्यन्ते प्रवर्त्तते द्वितीयन्तु यद्यप्यत्रैवोक्तं तथापि तत् सन्नन्ते एव प्रवर्त्तते इत्यव्यवगन्तव्यमिति॥ निवृत्तप्रेषणाद् धातोरिति। हरिकारिकाया एकतरार्द्धमिदम्—

अवस्थां पञ्चमीं माहुर्ण्यन्ते तां कर्मकर्तरि।
निवृत्तप्रेषणाद् धातोः प्राकृतेऽर्थे णिजिष्यते।—इति।

इदञ्च णेरणाविति सूत्रे भाष्ये स्पष्टमित्याहुः।

निवृत्तं प्रेषणं प्रेरणं यस्मात् सः निवृत्तप्रेषणः। प्रेषणार्थे एव हेतुमणिः

प्रवृत्तिसत्त्वेऽपि इदानीं तादृगर्थस्याविवक्षातः केवलं णिजेव प्रयुज्यते। अयञ्च णिज्रहिततदवस्थायां यथासीत् तथैव सत्यपि णिचि वर्तत इत्यर्थः। अत आह— शुद्धेन तुल्योऽयं इति। शुद्धेनेति णिज्रहितेन प्राकृतेनेति यावत्। तादृगर्थे— उदाहरणमाह—तेन प्रार्थयन्तीति। प्रार्थनां कुर्वन्तीत्यर्थः। माघकाव्यस्थश्लोकांशोऽयमिति बहवः, परन्तु तत्र तन्नोपलभ्यत इति मूलं मृग्यम्। प्रिया इति कर्तृपदमन्यत् स्पष्टम्।

इति मितभाषिण्यां तिङन्तणिच्प्रकरणम्।

अथ

# तिङन्तसन्-प्रकरणम्

२६०८। धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥३।१।७॥

टी—। इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सन आर्द्धधातुकत्वम्। इट्। द्वित्वम्। 'सन्यतः' (२३१७)—पठितुमिच्छति पिपठिषति। 'कर्मणः' किम्? गमनेनेच्छतीति करणान्मा भूत्। 'समानकर्तृकात्' किम्? शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात् पक्षे वाक्यमपि॥ 'लुङ्सनोर्घस्लृ' (२४२७)। 'एकाच उपदेशे—' (२२४६) इति नेट्। सस्य तत्वम्। अत्तुमिच्छति जिघत्सति। 'ईर्ष्यतेस्तृतीयस्य' (वार्तिक) इति यिसनोर्द्वित्वम्। ईर्ष्यियिषति—ईर्षिषिषति।

In the sense of wish, the affix सन् is optionally attached to a root which has the object of wish (इषि) for its object and of which the subject is the same as that of the verb expressing wish. Here the affix सन् is (to be known as) आर्द्धधातुक due to the Panini's ordaining with the utterance 'धातोः' in the rule. (It is, therefore, important to observe that the want of the expresion 'धातोः' in the rule 'गुप् तिज् कितद्भ्यः सन्' (*2393*) makes the affix सन्

there a सार्वधातुक and not आर्द्धधातुक)। Now this सन् being आर्द्धधातुक and वलादि, the aug. इट् comes in by 'आर्द्धधातुकस्येड् वलादेः' (2184) as also द्वित्व takes effect by 'सन्यङोः (2395). Thus पठ् इट् सन् (no शप् for सन् is आर्द्धधातुक)=पपठ् इट् स=पिपठिष by 'सन्यतः' and 'इण् कोः, आदेशप्रत्यययोः'। Then पिपठिष is to be considered as a separate root (सनन्तधातु) by 'सनाद्यन्ताः—'(२३०४) and consequently by शप्. तिप we have पिपठिषति by 'अतो गुणे'॥ शिष्याः etc— Here the subject of पठन्ति differs from that of इच्छति। For the acceptance of 'or' in the rule, the very expression 'पठितुम् इच्छति' will serve as an alternative of पिपठिषति। सस्य तत्वम् i.e. by 'सस्यार्द्धधातुके' (२३४२)। जिघत्सति by 'लुङ्सनोर्घस्लृ'(2245);of the root ईर्ष्य, र्ष्य i.e. the यकार and the affix सन् (स) is duplicated by the varttika 'ईर्ष्यतेस्तृतीयस्य' —explained under 'यो गमिः—' (2607). Thus ईर्ष्यियिषति (when यकार with इट is doubled) and ईर्ष्यिषिषति (when सन् is doubled).

मित—। अथ सन्प्रक्रियां निरूपयितुम् धातोरिति सूत्रमवतार्य्य व्याचष्टे इषिकर्मण इति। धातोरिति पञ्चम्यन्तम्। तत्र लिङ्गम् समानकर्त्तृकादिति। कर्मण इति समानकर्त्तृकादिति च धातोर्विशेषणम्। इच्छायामिति चार्थप्रकाशनम्। तदाह—इषिकर्मण इषिणैककर्त्तृकादित्यादि। 'इषिणा' इति तृतीयान्तं 'समान' इति सूत्रगतशब्दात् 'केन समान' इति प्रश्ने न लभ्यते। सन्प्रत्यय इति। एतच्च 'गुप्तिज्किद्भ्यः सन्' (३।१।५) इत्यतोऽनुवर्त्तते। ननु सूत्रे 'कर्मणः समानकर्त्तृकात्' इत्यनयोरुच्चारणादेव धातोरिति निगमयितुं शक्यं तथापि 'धातो'रिति विशिष्योच्चारणं कथं', तत्राह—धातोर्विहितत्वादिति। अतएव 'गुप् तिज् —'इत्यत्र तादृशविधानाभावात् ततश्च—सनः आर्द्धधातुकत्वं नेत्याशं प्राक्। इडिति। 'आर्द्धधातुकस्येड् वलादेः (२१८४) इत्यनेनेति बोध्यम्। द्वित्वम् इति—'सन्यङोः (२३९५) इत्यनेनेति भावः। तदेवं—पठ्+सन्=पठ् इट् सन्=पठि+

स = पठि पठि स = पपठिष = पिपठिष + शप् + तिप् = पिपठिषति 'सनाद्यन्ता—' इति धातुत्वात्—शपि सति 'अतो गुणे' इति पररूपम्। एवमन्यत्रापि ज्ञेयम्। शिष्या इति—अत्र समानकर्तृकत्वाभावात् पठतेः सन् न। वाग्रहणादिति। पठितुम् इच्छती-त्यपूर्वार्थं साध्विव्यर्थः। अथ ऋदेः सनि घसृभावं वारयितुमाह—लुङ्सनो रिति। अस्य तत्वमिति—'सः स्यार्धधातुके' (२३४२) इत्यनेनेति ज्ञेयम्। ईर्ष्यतेरिति। व्याख्यातं वार्त्तिकमिदं प्राक् 'णौ गमिः—' (२६०७) इत्यत्र। धिसनोरिति। प्रथमव्याख्यायां तृतीयव्यञ्जनस्येति यकारमात्रस्य द्वित्वम्। 'यि' इतीकारस्तु उत्पत्त्समानम् इड्विधिमादाय। द्वितीयव्याख्यायां तु 'तृतीयैकाच' इत्युक्तेः सन एव द्वित्वम्। तदेवं प्रथमपक्षे 'इर्ष्यि' यिषति' इति द्वियकारकं रूपम् इडागमश्च। द्वितीयपक्षे तु 'ईर्ष्यि' षिषति' इति द्विसकारकं रूपम्। षत्वं तु इण्कोरित्यादिना। 'षि' इति 'सन्यतः' इत्यनेनाभ्यासस्येत्वम्। 'ईर्ष्यि' इत्यत्र इकारस्तु इडागमफलमिति ज्ञेयम्।

२६०८। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥१।२।८॥

दी—। एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति।

सन् and क्त्वा following these roots are to be considered as कित्s. The object of making them कित् is to bar the गुण of the उपधा of रुद्, विद् etc due by 'पुगन्तलघूपधस्य च' (2189). Thus रुरुदिषति etc.

मित—। रुदेत्यादि समाहारद्वन्द्वात् पञ्चम्येकवचनम्। तदाह—एभ्य इति। 'असंयोगाल्लिट् कित्' (१।२।७) इत्यतः 'क्त्वा' इत्यनुवर्त्तते। तदाह—सन् क्त्वा चेति। एतच्च संश्चेति चकारात् समुच्चीयते। 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतः किदित्यनुवर्त्तते। तदाह—कितौ स्त इति। अतएव 'पुगन्तलघूपधस्य चे'ति गुण-निषेधेन रुरुदिषति इत्यादि सिद्धम्। 'इस्सन्ताच्च' (२६१६) इत्येव कित्त्वे सिद्धे

रुदविदेत्यादीनां विशिष्य ग्रहणम्. 'रलो व्युपधात्—' ( २३१७ ) इति विकल्पो मा भूदित्येवमर्थम्। किञ्च, 'न क्त्वा सेट्' ( २६२२ ) इति निषिद्धस्य कित्त्वस्याव विधानार्थं ग्रहेर्ग्रहणम्। स्वपिप्रच्छ्योस्तु क्त्वायामेव कित्वं विहितम्। अतो यथा अत्रापि स्यादित्येवमर्थमनयोर्ग्रहणम्। अत्र 'विद' इत्यनेन वेत्तेरेव ग्रहणमिति तत्त्वबोधिनी। नागेशस्तु 'सत्यानुरोधात् वेत्तेः सर्व्वस्यैव ग्रहणमित्याहु'रित्याह। एषां क्त्वायां रुदित्वा, विदित्वेत्यादि द्रष्टव्यम्।

## २६१०। सनि ग्रहगुहोश्च ।।७।२।१२।।

दी—। ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात्। 'ग्रहिज्या—' ( २४१२ ) इति सम्प्रसारणम्। सनः षत्वस्यासिद्धत्वाद् भष्भावः। जिघृक्षति। जुघुक्षति।

The aug. इट् is not enjoined to the affix सन् when it ( सन् ) comes after the roots ग्रह, गुह, and those that end in उक् प्रत्याहार। The षत्व of सन् is असिद्ध; so भष्भाव is effected i.e. ग्रह्+सन् by सम्प्र. first becoming—ग्रह् स or ग्रढ् स by 'हो ढः' (8. 2. 31), next ग्रक् स by 'षढोः कः सि' (8. 2.41) ग्रक् ष by 'इण् कोः' (8. 3. 57) finally घृक् ष by 'एकाचो बशो भष् झषन्तस्य स्ध्वोः', जि ( of जिघृक्षति ) being the result of duplication, चुत्व and इत्व. But it should be observed that not only the fact of असिद्धत्व of षत्व but also that of कत्व leads to the occurrence of भष्भाव, for कत्व having first come in there is no झषन्तत्व of ग्रढ्. Hence it is better to say षत्वकत्वयोरसिद्धत्वात् or simply कत्वस्यासिद्धत्वा as षत्व takes effect last. सुषुप्सति by 'वचिस्वपि—' ( 2409 ).

मित—। सनीति। 'स्नाकः किति' (७।२।११) इत्यतस्तदन्तपरिभाषया

'उगन्तात्' इति चकारेण सम्बध्यते। 'नेड् वशि कृति' (७।२।८) इत्यतो नेडिति चानुवर्तते। सनीति च षष्ठ्यर्थस्य वाचकम्। तदाह—ग्रहेर्गुहेरित्यादि। ग्रहिज्येति। ग्रह्+सन् तिप् इति स्थितेऽनेन ग्रहः सम्प्रसारणमृकारः, सनीत्यनेन सनः कित्त्वात्। एवं गृह् सन् इति जाते 'हो ढः' (८।२।३१) इति ढत्वे कृते गृढ् स इति सम्पद्यमाने 'षढोः कः सि' (८।२।४१) इति कत्वे 'इणकोः' (८।३।५७) इति षत्वे च गृक्ष् ष इति भवति। तत्र गृ इत्यस्य घ् इति भष्भावो विधेयः। तच्चात्र दुर्लभम् झषन्तत्वस्य सत्वस्य चाभावादित्यत आह—सनः षत्वस्येति। षत्वकत्वयोरसिद्धत्वादितीवात्र वाच्यम्। यद्वा—केवलं कत्वस्यासिद्धत्वादित्येव सुवचम्। कत्वमादायापि षत्वविधानसामर्थ्यादिति सुधीभिर्विभाव्यम्। एवं भष्भावेन द्वित्वादिना च जिघृक्षति इति। सुषुप्सतीत्यत्र तु 'रुदविद—' इति सनः कित्त्वात् 'वचिस्वपि—' (२४०९) इति सम्प्रसारणम् इणकोरिति षत्वम्। अथ प्रच्छौ विशेषं दर्शयितुमाह—

**२६११। किरश्च पञ्चभ्यः ॥७।२।७५॥**

**टी—। कॄ, गॄ, दृङ्, धृङ्, प्रच्छ—एभ्यः सन इट् स्यात्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। अत्रेटो दीर्घो नेष्टः। दिदरिषते। दिधरिषते। कथम् 'उद्दिधीर्षु'रिति? भौवादिकयोर्धृङ्धृञोरिति गृहाण।**

[Meaning—easy]. जिगरिषति—जिगलिषति by 'अचि विभाषा' (2541) 'अत्रेटो दीर्घो नेष्टः—' this is a varttika (इष्टि) found in the काशिकावृत्ति though not in the भाष्य—meaning 'इट् is here (in the cases of कॄ & गॄ) not lengthened (by 'वॄतो वा'—2391).' How 'उद्दिधीर्षुः'—(उद्—धृ+सन्+उ) is formed? (for, if धृ is considered to be of this किरादि class, it would by इडागम have given उद्दिधरिषुः): Well, take it as a case of धृङ् (अवस्थाने) or धृञ् (धारणे) read in भ्वादि for thus it will not have इट् and by

'अज्झनगमां—' ( 2614 ) धृ will be धॄ, then by 'ऋत इद्धातोः' ( 2390 )—धिर् and then by 'हलि च'=धीर्.

मित— । किरयेति । 'स्मिपूङ्रञ्ज्वशां सनि', 'इडत्यर्ति व्ययतीनाम्' ७।२।७२ (—७।२।६६) इत्यतोऽनुवर्त्य राह—सन इडिति । 'किर इति पञ्चम्यन्तं तत्र 'कृ विक्षेपे गृ निगरणे, दृङ् आदरणे धृङ् अवस्थाने, प्रच्छ ज्ञीप्सायाम्' इति किरादीनां पञ्चानां ग्राहकत्वादाह एभ्य इति । पिपृच्छिषतीति—पूर्वप्रकृतत्वात् प्रागुपन्यासः । कित्त्वात् सम्प्रसारणम् । अनेनेट् । चिकरिषतीत्यादौ 'वृतो वा' ( २३९१ ) इति दीर्घे प्राप्ते आह—'अचिटो दीर्घो नेष्ट' इति । वार्त्तिकमिदम् वृत्तौ दृश्यते न तु भाष्ये—इति नागेशः । जिगरिषति—जिगलिषतीति । 'अचि विभाषा' ( २६४१ ) इति रेफस्य लत्व—विकल्पः ; दिदरिषते इत्यादि ङित्त्वादात्मनेपदम् 'पूर्ववत् सनः' इति नियमात् । एवमन्यत्रापि बोध्यम् । उदिधीर्षुरित्यत्र दीर्घं प्रतिपादयितुमाह— कथमिति । किरादित्वे हि एकः किरत्वेनैव इडागमः स्यात् । ततश्च उद्दिध- रिषुरित्येव स्यात् । अत आह भौवादिकयोरिति । तत्र ( भ्वादौ ) धृङ् अवस्थाने, धृञ् धारणे इति पठितम् । तयो रुभयोरपि इडागमाभावेन उद्—धृ+सन् इति स्थिते 'अज्झनगमां सनि' ( २६१४ ) इति दीर्घे, उद्—धॄ—इति जाते 'ऋत इद्धातोः' ( २३९० ) इति इत्त्वे, 'उरण् रपरः' इति रपरत्वे, 'हलि च' ( ३५४ ) इति दीर्घे, 'सनाशंसभिक्ष उः' ( ३१४८ ) इत्युप्रत्यये च रूपम् ।

२६१२ । इको झल् ॥१।२।९॥

दी—। इगन्ताज्झलादिः सन् कित् स्यात् । बुभूषति । दीङ् । दातुमिच्छति । दिदीषते । एज्विषयत्वाभावात् 'मीनातिमिनोति—' ( २५०८ ) इत्यात्त्वं न । अतएव 'सनि मीमा—' ( २६२३ ) इति सूत्रे माधातोः पृथङ् मीग्रहणं कृतम् ।

A सन्, preceded by a झल् letter and coming after a

root ending in इक् becomes कित्; hence बुभूषति without गुण। दिदीषते—आत्मने. by पूर्ववत् सनः' (2734). No गुण due to कित्त्व and this गुणनिषेध or in other words the want of एज्विषयत्व bars the आत्व directed by 'मीनातिमिनोति—' (2508). Thus to suggest that आत्व is not enjoined except in the एज्विषय, the rule 'सनि मीमा—' (2623) reads मी separately.

मित—। इक इति। इक इत्यनेन धातोराक्षेपात्तदन्तविधिः। झल् इत्यस्य च प्रत्यय-विशेषणत्वात्तदादिविधिस्तदाह—इगन्ताज्झलादिरिति। 'रुदविद—' (१।२।८) इत्यतः सनन्नुवर्त्तते। 'असंयोगाल्लिट् कित्' (१।२।७) इत्यतः किदिति च। अत आह—सन् कित् स्यादिति। बुभूषति। कित्त्वान्न गुणः। दिदीषते। अत्र कित्वेन गुणाभावादेज्विषयत्वाभावः। ततश्च 'मीनातिमिनोति—' (२५०८) इत्यात्वमपि न भवति। न च एज्विषयादन्यत्रापि आत्वं भविष्यति इति वाच्यम्। तथा सति 'सामान्यविशेषयोरविशेषः' इति न्यायात् 'सनि मीमा—' (२६२३) इत्यत्र मागुणेनैव सिद्धे पृथङ्मीग्रहणं व्यर्थं स्यात्। अत आह—एज्विषयत्वाभावादित्यादि। इगन्तात् किम्। पिपासति। झलिति किम्। शिशयिषते।

२६१३। हलन्ताच्च ॥१।२।१०॥

दी—। इक्समीपाद्धलः परो झलादिः सन् कित् स्यात्। गुह—जुघुक्षति। बिभित्सति। 'इकः' किम्। यियक्षते। 'झल्' किम्। विवर्धिषते। हल्ग्रहणं जातिपरम्। तृंह तितृक्षति—तितृंहिषति।

A झलादि सन् 'coming after (a root ending in a हल्) which again is invariably preceded by an इक् letter, becomes कित्। Thus गुह etc gives जुघुक्षति etc. without गुण। यियक्षते —यज् not having इक् letters, सन् is not कित् and hence no

सम्प्रसारण ॥ तितृक्षति—तितर्हिषति—इड्विकल्प due to ऊदित्व whereas गुह् has जुघुक्षति only by 'सनि ग्रह गुहोश्च' (2610). In the rule 'हलन्ताच्च', हल्—has been adopted in a general way so that in the case of तृन्ह् the interposition of the अनुस्वार or नकार does not mar the हल्परत्व of तृन्ह्।

मित—। हलन्तादिति। इको झलिति वर्तते। अनुवृत्तिश्च पूर्ववदेव। किञ्च अन्तशब्दोऽत्र समीपवाची इकः इत्यस्यानुवर्तनेन हलन्तत्वासम्भवात्। तदाह—इक्समीपादित्यादि। जुघुक्षति। गुह् इति ऊकार इत्। तथात्वेऽपि 'सनि ग्रह—' (२६१०) इत्युक्तत्वान्नेट्। यियक्षते—अत्र इक्समीपत्वाभावेन सनः कित्त्वाभावान्न सम्प्रसारणम्। विवर्धिषते—अत्र इडागमसत्त्वेन झलादित्वाभावात् सनो न कित्त्वम्। ततश्च न गुणनिषेधः। हल्ग्रहणं जातिपरमिति—सामान्यपरं, तेन एकेन द्वाभ्यां बहुभिर्वा व्यवधाने सत्यपि न हल्परत्वक्षतिरित्यर्थः। 'येन नाव्यवधानम्—' इति न्यायात्। एवं च तृंह (तृन्ह्) इत्यत्र नकारव्यवधानेऽपि सनो हल्परत्वम्। ततश्च कित्त्वम्। ततश्च तितृक्षति—तितर्हिषति इत्यत्र न गुणः। 'स्वरतिसूति—' (२२७९) इतीड्विकल्पः।

## २६१४। अज्झनगमां सनि ॥६।४।१६॥

**दी—। अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि। 'सन्लिटोर्जेः' (१३३१)—जिगीषति। 'विभाषा चेः' (२५२५)। चिकीषति—चिचीषति। जिघांसति।**

The vowel of roots ending in अच् (vowel), of हन् and of गमि the substitute of इण्, इङ् and इक्, becomes दीर्घ, when a झलादि सन् follows. Thus जिगीषति (अजन्त), जिघांसति etc. and (जिगांसते (गम्).

मित—। अज्झनगमामिति। अच् च हन् च गम् चेति द्वन्द्वात् षष्ठी-

बहुवचनम्। गम् इत्यनेन गम्लृवर्ज्जं सर्वेषां इण्, इङ्, इक् इत्येषाम् आदेशस्य गमेः सामान्येन ग्रहणम्। तदाह—अजादेशगमेश्चेति। 'अनुनासिकस्य क्विझलोः—' (६।४।१५) इत्यतो झल्, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) इत्यतो दीर्घ इति चानुवर्त्तते। अचोऽनुवृत्तिलभ्याङ्गविशेषणत्वेन तदन्तविधिस्तदाह—अजन्तानामित्यादि। अन्यत् स्पष्टं मूले।

२६१५। सनि च ॥२।४।४७॥

टी—। इणो गमिः स्यात् सनि न तु बोधने। जिगमिषति। बोधने प्रतीषिषति। 'इण्वदिकः' (वार्तिक)। अधिजिगमिषति। कर्मणि तङ्। 'परस्मैपदेषु' इत्युक्तेर्नेट्। 'झलादौ सनि' इति दीर्घः। जिगांस्यते। अधिजिगांस्यते। अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः। जिगंस्यते। सञ्जिगंसते।

The root इण् except in the sense of बोधन or to cause to understand—is replaced by गम् when सन् follows. Thus जिगमिषति (इण्+सन् तिप्). प्रतीषिषति—प्रति—इण्+सन् तिप् (duplication of सन् by 'अजादेर्द्वितीयस्य' then षत्व as before). अधिजिगमिषति i.e. causes to remember. कर्मणि तङ् i.e. by 'भावकर्मणोः' (2679). परस्मैपदेषु i.e by 'गमेरिट् परस्मैपदेषु' (2401). नेट् because it is आत्मनेपद। झलादौ सनि i.e. by 'अज्झनगमां सनि' (2614). Thus जिगांसते—इण्+सन्+यक्+ते। अजादेशस्य etc for which see the rule 'अज्झनगमां—' above. जिगंस्यते—गम् (गम्लृ)+सन्+यक् ते। सञ्जिगंसते—सम्—गम्+सन्+ते—आत्मने. by 'समो गम्यृच्छिभ्याम्' (2699).

मित—। सनि चेति। 'इणो गा लुङि' (२।४।४५) इत्यस्मात् 'इणः' इति। 'णौ गमिरबोधने' (२।४।४६) इत्यतो 'गमिरबोधने' इति चानुवर्त्तते।

तदाह—इणो गमिरित्यादि। जिगमिषतीति—इणो गम्यादेशे इटि षत्वे च रूपम्। प्रतीषिषतीति। प्रतिपूर्व्वादिणः सनि रूपम्। 'अजादेर्द्वितीयस्य' इति सनो द्वित्वम्। ततः 'सन्यत' इत्यभ्यासस्य इत्वम्। षत्वमुभयत्रैव सकारस्य। बोधयितुमिच्छतीत्यर्थः। इण्वदिकः इति। एतत् 'णौ गमि—' (२६०७) इत्यत्र गतम्। कर्म्मणि तङिति—'भावकर्म्मणोः' (२६७९) इत्यनेनेति भावः। परस्मैपदेष्विति—गमेरिडिति पूर्व्वार्द्धम्। झलादौ सनीति—'अज्झन गमाम्—' इत्यस्य व्याख्यानैकदेशः। फलमाह—जिगांसते इति। इणो सनि गम्यादेशे यकि दीर्घे तङि च रूपम्। केवलस्य गमे रूपमाह—अजादेशस्येति। एतदपि अज्झनगमामित्यत्र स्पष्टम्। सञ्जिगंसते इति—'समो गम्यृच्छिभ्याम्'ति (२६९८) तङ्।

२६१६। इङश्च ॥२।४।४८॥

टी—। इङो गमिः स्यात् सनि। अधिजिगांसते।

Easy.—इङ् means to read and is always preceded by अधि; cp. 'प्रायेणायमधिपूर्वः' (ante).

मित—। स्पष्टम्। ङित्त्वात् तङ्। अतएव नेट्। 'पूर्ववत् सनः' इत्यवाप्यात्मनेपदम्।

२६१७। रलो व्युपधाद्धलादेः संश्च ॥१।२।२६॥

टी—। उश्च इश्च वौ। ते उपधे यस्य तस्माद्धलादेः रलन्तात् परौ क्त्वासनौ सेटौ वा कितौ स्तः। 'द्युतिस्वाप्योः सम्प्रसारणम्' (२३४४)। दिद्युतिषते—दिद्योतिषते। रुरुचिषते—रुरोचिषते। लिलिखिषति—लिलेखिषति। 'रलः' किम्? दिदेविषति। 'व्युपधात्' किम्? विवर्तिषते। 'हलादेः' किम्? एषिषिषति। इह नित्यमपि द्वित्वं गुणेन

बाध्यते। 'उपधाकार्यं हि द्वित्वात् प्रबलम्' ओणेर्ऋदित्-करणस्यसामान्यापेक्षज्ञापकत्वात्।

The affixes क्त्वा and सन्, which are सेट् or have the aug. इट् after them, are pronounced to be कित् optionally—provided they (क्त्वा and सन्) follow a root which has उ or इ for penultimate (उपधा), a consonant for its commencing letter and any one of the letters of the प्रत्याहार—रल् (इयवरट्...हल्) for its ending letter. Thus दिद्युतिषते (कित्)—दिद्योतिषते (अकित्) etc. सम्प्र. of the अभ्यास being effected by 'द्युतिस्वाप्योः—' (2344). दिदेविषति—here no option of कित्त्व, for the final व of दिव् does not fall under the प्रत्याहार—रल्। विवर्तिषते—because वृत् has no उ or इ for its उपधा। Why say हलादि? Witness—एषिषिषति—इष्+सन् तिप्=एष् इट् सति=एष् इष ति=एषिषति; duplication of षिष by 'अजादेर्द्वितीयस्य', षत्व as before. The duplication, though नित्य, is here barred by गुण for the operation regarding the penultimate is superior to duplication'—which fact is indicated, in a general way, by the attaching of ऋ, which elides in practice, to 'ओणृ अपनयने'. [for a clear explanation see under 'सन्यतः इत्' ... 'चङि' (2580)].

मित—। रल इति. [वौ+उपधात्]+हलादेः, सन्+च इतिच्छेदः। तदाह—उश्च इश्चेति—तौ इति वौ (उ इ इत्यनयोर्द्विवचनम्)। वौ उपधे यस्येति बहुव्रीहिः। रल इत्यनेन प्रत्याहारग्रहणम् तदन्तविधिः। क्त्वासनाविति। 'पूङः क्त्वा च' (१।२।२२) इत्यतः क्त्वा अपि संगृहः। सेटाविति। 'न क्त्वा सेट्' (१।२।१८) इत्यतस्मादनुवृत्तः। वा कितावि... 'नोपधात्थफान्ताद्वा'

( १।२।२३ ) इत्यत्र 'असंयोगाल्लिट् कित्' ( १।२।५ ) इत्यतश्च तदनुवृत्तेः । तदिदं कित्त्वविकल्पाद् गुणविकल्पेन रूपद्वयं दर्शयति—दिद्युतिषते दिद्योतिषते—इत्यादि । द्युतिस्वाप्योरित्यनेन अभ्यासस्य सम्प्रसारणम् । इट् । 'पूर्ववत् सन' इत्यात्मनेपदम् । रलः किम् इत्यादि । स्पष्टम् । एषिषिषतीति अत्र झलादित्वाभावात् कित्त्वाभावेन न गुणनिषेधः । नन्विह कित्त्वाभावेऽपि इष् इट् सन् तिप् इति स्थिते नित्यत्वाद् द्वित्वे प्राग्विहिते इ षिस षिस ति इति रूपे जाते 'इष्' इत्यस्याभावात् कुतो लघूपधगुण उपधाया एव विरहादित्याशङ्का आह—इषेति । तत्र हेतुमाह—उपधाकार्य्यमिति । एतत् बहिरङ्गोऽपुपधाङ्गस्यो द्वित्वात् प्रागेव' इत्यस्य व्याख्यानावसरे 'अमुमिषु—' ( २५८० ) इत्यत्र प्रपञ्चितम् । ओणे रिति एतदपि तत्रैव द्रष्टव्यम् । सामान्यपेक्ष-ज्ञापकत्वादिति ।· एतत्तु भाष्यासम्मतत्वाच्चिन्त्यम्—'णौ चङि—' इति सूत्रं भाष्ये यदयमोणिरिदितं करोति तज् ज्ञापयति द्विर्वचनादभूसत्वं बलीय इत्युक्तत्वेन सामान्यापेक्ष—ज्ञापकत्वानौचित्यादि'ति शब्देन्दुशेखरे स्पष्टम् । क्त्वायाम्—द्युतित्वा —द्योतित्वा इत्यादि । सेट् किम् । छित्त्वा । भित्त्वा ॥ वक्ष्यते ।

२६१८ । सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥७।२।४९॥

टी— । इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा स्यात् । इडभावे 'हलन्ताच्च' ( २६१३ ) इति कित्त्वम् । 'च्छ्वोः—' ( २५६१ ) इति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति—दिदेविषति । 'स्तौतिण्योरेव—' ( २६२७ ) इति वक्ष्यमाणनियमान्न षः । सुस्यूषति—सिसेविषति ।

The aug. इट् is optionally attached or prefixed to सन्, coming after roots ending in व् and after ऋध्, भ्रस्ज etc (enumerated in the rule above.). Take for instance दिव्. When सन् after it is not followed by इट्, then being झलादि, सन् will be कित् by 'हलन्ताच्च' ( 2613 ). Then due to कित्त्व

of सन्, the व of दिव् will be replaced by ऊठ् (ऊ);—consequently the इ of दिव् (दि+ऊठ्) will be replaced by यण् (य्) giving दुद्यूषति (duplication,—हलादिशेष, दीर्घ by 'अज्झनगमां—' (2614). But when दिव् is followed by इट् the form is दिदेविषति by लघूपधगुण which appears because दिव is not रलन्त or ending in a रल् letter. सुस्यूषति etc.—the सन्नन्त form of सिव् (षिवु तन्तुसन्ताने), have no ष (in place of स्) in conformity with the restriction to be expressed in 'स्तौतिण्योरेव—' (2627).

मित—। सनीति। इव् अन्ते येषां ते इवन्ता: दिवसिवादय:। सनि इवन्त इतिच्छेद। इवन्त, ऋध, भ्रस्ज, दम्भ्, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि सन् एषां द्वन्द्वात् षष्ठीबहुवचनम्। पञ्चम्यर्थे षष्ठीत्याह—इवन्तेभ्य इत्यादि। सनीति षष्ठ्यर्थे वर्त्तते तदाह—सन इति। इड्वेति। 'इषिष्टायाम्' (७।२।४८) इत्यत: 'स्वरति सूति सूयति धूञूदितो वा' (७।२।४४) इत्यतश्च तदनुवृत्ते:। दिव्धातोरिवन्तत्वेन इडविकल्पात्—दुद्यूषति—दिदेविषतीति रूपद्वयम्। तत्र इडभावे दुद्यूषतीति। तदेव साधयति इडभावे इत्यादिना। वस्येति। दिव् इत्यस्येत्यर्थ:। यण् इति। इकारस्येति यावत्। द्वित्वम् इति। द्यू (दिव्+ऊठ्) इत्यस्येत्यर्थ:। हलादिशेष:। 'अज्झनगमाम्—' (२६१४) इति दीर्घ:। इट्पक्षे तु रलन्तत्वाभावेन कित्वाभावात् लघूपधगुणेन दिदेविषतीति। सुस्यूषतीत्यादौ अभ्यासेण: परस्य षत्वाभावं व्याचष्टे 'स्तौतिण्यो'रित्यादिना। सिव्धातौ रूपे प्रक्रिया दिवुवत्।

## २६१८। आप्ज्ञप्यृधामीत् ॥७।४।५५॥

### टी—। एषामच ईत् स्यात् सादौ सनि।

These roots (आप्, ज्ञपि & ऋध्) get ईत् (ई) for their अच् when सन् preceded by स only (and not इट् also) follows.

मित—। आबिति। आप् अपि ऋधाम् ईदितिच्छेदः। 'सनि मीमा—' (७।४।५४) इत्यतः सनीति अच इति चानुवर्तते। 'सः स्यार्धधातुके' (७।४।४९) इत्यतः सीति च। तदादिविधिरपि सादाविति लभ्यते। तदाह—एषामित्यादि। एवमाबादीनामीत्त्वं उत्तरमाह—

२६२०। अत्र लोपोऽभ्यासस्य ॥७।४।५८॥

टी। 'सनि मीमा—' (२६२३) इत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्तुमिच्छति ईप्सति। ऋधितु-मिच्छति रपरत्वम चर्त्वम्=ईर्त्सति—अर्दिधिषति। बिभ्रज्जि-षति—बिभर्जिषति—बिभ्रक्षति—बिभर्क्षति।

The elision of the अभ्यास of those roots that have been mentioned under rules beginning from 'सनि मीमा—' (7. 4. 54) and ending in 'मुचोऽकर्मकस्य गुणो वा' (7. 4. 51) four rules only) is effected when सन् follows. Thus आप् सन् तिप्=ईप्स ति=ई प्स प्स ति=ई ० प्सति। रपरत्वम् i.e when ऋध् of ऋध्+सन् is replaced by ई। चर्त्वम् i.e. by 'खरि च' (8. 4. 55). Thus ऋध् सन्=ईर्त्स of which by 'अजादेर्द्वितीयस्य', स along with त् (त्स) will be doubled but not the रेफ due to the prohibition 'न न्द्राः—' (2446). Then अभ्यासलोप as before. Now, when by 'सनीवन्त—' (2618), ऋध् is followed by इडादि सन्, the ईत्त्व directed by 'आप्—' (2619) fails; consequently गुण takes effect giving अर् ध् इ सति (रपरत्व) or—अर् धिस धिस ति where the अभ्यास is not dropped due to the इडादि सन्. Thus अर्दिधिषति with अभ्यासकार्य। By 'भ्रस्जोरोपधयोः—' (2535) and इट् we have बिभर्जिषति। But without रम्—बिभ्रज्जिषति. In the इडभावपक्ष—बिभर्क्ष-

सति = विभर्क्षति = विभर्चति ( with रम् ) and बिभ्रक्षति (without रम् )।

मित—। अवेति। सनि मीमेति। 'सनि मीमाघुरभलभशकपतपदामच इस्' (७।४।५४), 'आप्ज्ञप्यृधामीत्' (७।४।५५), 'दम्भ इच्च' (७।४।५६), 'मुचोऽकर्मकस्य गुणो वा' (७।४।५७) इति चतुःसूत्रामित्यर्थः। यदुक्तमिति। ये धातव उक्ता इति यावत्। लोपः स्यादिति। सादौ सनीति योजनीयम्। तेन अर्दिधिषतीत्यादावीडादौ सनि अभ्यासलोपो न। ईर्त्सतीति। पूर्वेण ईत्त्वे ईर्स इति जाते अजादेरिति त्स इत्यस्य द्वित्वम्। अभ्यासलोपः। रपरत्वमिति। ऋध् सन् इति स्थिते पूर्वेण ईत्त्वे 'उरण्—' इतिरपरत्वम् इत्यर्थः। एवम् ईर्ध् स इति जाते 'खरि च' (८।४।५५) इति चर्त्वेन ईर्त् स इति भवति। ततो 'न न्द्राः—' (२४४६) इति रेफस्य द्वित्वनिषेधात् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषया चर्त्वादूर्ध्वम् 'अजादे—'रिति 'त्स' इत्यस्य द्वित्वे अभ्यासलोपे च ईर्त्सति इति। 'सनीवन्त—' (२६१८) इत्यनेन इड्विकल्पादिड्भावे इदम्। परं तु सनः सादित्वाभावात् ईत्त्वाभावेन लघूपधगुणः। अभ्यासलोपाभावश्च। जश्त्वम्। विभ्रज्जिषतीत्यादि। रम्विकल्पात् इड्विकल्पाच्च चत्वारि रूपाणि। तत्र रमिड्भ्याम् विभर्जिषति। रमभावे विभ्रज्जिषति इति। इडभावे रमि बिभर्क्षति। इडभावे रमभावेच—बिभ्रक्षति। रमागमवीजन्तु 'भस्जोरोपधयोः—' (२५३५) इत्यत्रोक्तम्। साधनप्रकारश्च तत्रैवास्माभिः प्रदर्शितमित्यलम्।

२६२१। दम्भ इच्च ॥७।४।५६॥

दी—। दम्भेरच इत् स्यादीच्च सादौ सनि। अभ्यासलोपः। 'हलन्ताच्च' (२६१३) इत्यत्र हल्ग्रहणं जातिपरमित्युक्तम्। तेन सनः कित्त्वान्नलोपः। धिप्सति—धीप्सति—दिदम्भिषति। शिश्रीषति—शिश्रयिषति। 'उदोष्ठ्यपूर्वस्य' (२४९४)—सुस्वूर्षति—सिस्वरिषति। युयूषति—यियविषति। ऊर्णुनूषति—ऊर्णुनु-

विषति - ऊर्णुनविषति। न च परत्वाद् गुणावादेशयोः सतोर—भ्यासे उकारो न श्रूयेतेति वाच्यम्। 'द्विर्वचनेऽचि' (२२४३) इति सूत्रेण द्वित्वे कर्त्तव्ये स्थानिरूपातिदेशादादेशनिषेधात्। नच सन्नन्तस्य द्वित्वं प्रति कार्य्यित्वान्निमित्तता कथमिति वाच्यम्। "कार्य्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते, न त्वननुभवन्नपि" (परिभाषा)। न चेह सन् द्वित्वमनु भवति॥ बुभूर्षति—बिभरिषति। ज्ञपिः पुगन्तो मित्संज्ञः पकारान्तश्चौरादिकश्च। इडभावे 'इको झल्' (२६१२) इति, कित्त्वान्न गुणः। 'अज्झन—' (२६१४) इति दीर्घः परत्वाण्णिलोपेन बाध्यते। 'आप्ज्ञप्—' (२६१८) इति ईत्। ज्ञीप्सति—जिज्ञपयिषति। अमितस्तु—जिज्ञापयिषति। 'जनसन—' (२५०४) इत्यात्वम्। सिषासति—सिसनिषति। '* तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' (वार्तिक)।

The अच् or vowel of दम्भ् is replaced by इत् (इ) and by ईत् (ई) as well, when a सादि (having स in the beginning) सन् follows. Then there is elision of the अभ्यास by 'अत्र—' (2620). We have already stated that the acceptance of हल् in the rule 'हलन्ताच्च' (2613) is intended in a general way. Hence सन् coming after दिम्भ् or दीम्भ् becomes कित्—consequently the न (of दिम्भ् and दीम्भ्) is

---

॥ "इदं च 'सनीवन्त—' (२६१८) इति सूत्रे एव 'भरज्ञपिसनितनिपतिदरिद्राणाम्' इति केचित् पठन्तीति सूत्रशेषभूतमिति काशिका। अपरं वार्तिकमेवेति कैयटाशयः" इति बालमनोरमा।

dropped ( by 'अनिदितां हल उपधायाः क्ङिति'—415 ). Thus दिम्भ् or दीम्भ् + सन् तिप् = दिम्भ् or दीम्भ् सति = धिप्सति or धीप्सति by भष्भाव ( एकाचो बशोभष् ) चर्त्व, द्वित्व of स and अभ्यासलोप । But इट् coming in by 'सनीवन्त —'(2618) we have दिदम्भिषति without नलोप and अभ्यासलोप । श्रिश्रीषति सन्नन्त form of श्रि, without इट् । शिश्रयिषति of same with इट् । सुस्वूर्षति—सिस्वरिषति(स्वृ + सन् तिप्). The former is without इट् । स्वृ सन् तिप्= स्वृ सति = स्वुर् सति by 'उदोष्ठ्य—' ( २४९४ ) and 'उरण् रपरः' = स्वुर् स्वुर् सति = सु स्वूर्षति by 'हलि च' ( 354 ) and 'सौतिष्वोरिव—' (2627). सिस्वरिषति with इट्, गुण and रपरत्व । यियविषति—by द्वित्व of यु due to the prohibition 'द्विर्वचनेऽचि' (2243) and इत्व of the अभ्यास by 'ओः पुयण्जि —' (2577 ). ऊर्णुनूषति—This is without इट् by 'सनीवन्त—' ( 2618 ). द्वित्व of नु due to the prohibition 'न न्द्राः—' ( 2446 ) and दीर्घ by 'अज्झन—' (2614). णत्व is in con. with रेफ । No गुण due to कित्त्व by 'इको झल्' ( 2312 ). ऊर्णुनुविषति—ऊर्णुनविषति of these two the former is with इट् and उवङ् while the latter is with इट् and गुण । This is explained by 'विभाषोर्णोः' ( 2447 ) which makes सन् optionally ङित् whereby we have उवङ् in the case of ङित्त्व and गुण in the absence of it ( ङित्त्व )। Here in the case of ऊर्णुनविषति, you cannot rejoin that in the अभ्यास there will not be heard ( i.e. will not exist ) the उकार after गुण and अवादेश have been effected due to the subsequence ( परत्व ) of 'सार्वधातुकार्धधातुकयोः' ( 7. 3. 84 ) and 'एचोऽयवायावः' ( 6. 1. 78 ) in comparison with 'सन्यङोः' ( 6. 1. 9) which directs द्वित्व । For the prohibitory rule or परिभाषा 'द्विर्वचनेऽचि' ( 1. 1. 59 ) solves the difficulty here. It ( 1. I. 59 ) suggests

that either the substitute of the स्थानी will have the operations of the स्थानी itself (स्थानिरूपातिदेशात्) or that the substitute will be forbidden (to undergo any such operation beforehand) when duplication (द्वित्व) has neceesarily to be effected. (Thus ह्रु is first of all duplicated and then गुण and अवादेश take effect). Nor can it be questioned that a root ending with सन् (as ऋणुं+इस) being कार्यी towards द्वित्व there is want of निमित्त or cause (of द्वित्व). The drift is this: कार्यी means what has a कार्य or operation—say द्वित्व. Here ऊर्णु+इस both are कार्यी. Then how can the 'नु' only of ऊर्णु be duplicated as the part इस which is the cause of द्वित्व has already become कार्यी? The answer is—that although ऊर्णु & इस—both are कार्यी here, yet नु alone will be taken to be a कार्यी and इस will retain the form of निमित्तत्व (of duplicity—द्वित्व) cp.—the परिभाषा 'कार्यमनुभवन् हि कार्यी—' (परि—10). "Surely that which undergoes an operation can so far as it undergoes that operation not be made the cause of the application of a grammatical rule"—(Prof. Kielhorn)—but not—until and unless it has undergone the operation (कार्य). And here सन् has not undergone the operation of द्वित्व but it is the word 'नु' only that has done so. Thus it is established that सन् will remain the cause (निमित्त) of द्वित्व॥ बुभूर्षति—बिभरिषति (भृ+सन्) just like सुस्मूर्षति—सिस्मरिषति। The root ज्ञपि may be taken in two ways (1) as ज्ञा (read in घटादि and hence मित्)+पुक् by 'अर्त्तिह्री—' (2570) in हेतुमण्णिच्, or (2) as ज्ञपि—

पकारान्त read in चुरादि ( cf.—'ज्ञप मिच' ). इडभावे i.e. by 'सनीवन्त —' (2618). 'अज्झन—etc. i.e. as 'णेरनिटि' ( 6. 4. 51 ) is subsequent to 'अज्झन—' (6. 4. 16 ) so णिलोप bars दीर्घ—hence ज्ञपि now becomes ज्ञप् and then ज्ञीप् by 'आप्ज्ञप्—।' जिज्ञपयिषति —with इट् hence no अभ्यासलोप। But when ज्ञपि is not मित् it will become ज्ञापि and give जिज्ञापयिषति ( This ज्ञापि is either the result of मारणादिभिन्नार्थ ज्ञा or the चुरादि 'ज्ञा नियोगे'). तनिपति etc—This is a Varttika its meaning is easy. This is acc. to Kaiyata, but Kashika says that तनिपति etc is a part of the rule सनीवन्त etc. (2618).

मित—। दम्भ इति। अनुवृत्तिः'आप्ज्ञप्—' इत्यत्रैवावधि बोध्या। अभ्यासलोप इति। 'अत्र लोपः—' इत्यनेनेति भावः। जातिपरमिति—एकानेकव्यक्तिविभागो नास्तीत्यर्थः। एक एव हल् परतो भवेदिति नास्ति नियम इत्यर्थः। तेन दम्भ इत्यत्र हलद्वयपरत्वेपि न क्षतिरिति भावः। तेनेति। हल्परत्वादित्यर्थः। सनः किल्वादिति—'हलन्ताच्च'इत्यनेन। नलोप इति—'अनिदिताम्—' ( ४१५ ) इत्यनेन नस्य लोपः। धिप्सति—धीप्सतीति—अनिट्पक्षे इत्वं सप्रसङ्गात् रूपद्वयम्। दकारस्य 'एकाचो बशो भष् —' इति भष्भावेन धकारः। भकारस्य 'खरि च'ति चर्त्वेन पकारत्वम् प्राग्वदभ्यासलोपः। दिदम्भिषतीति—इट्पक्षेऽभ्यासलोपाभावात् सिद्धम्। 'सन्यतः' (2317 ) इतीत्त्वमभ्यासस्य। शिश्रीषति—शिश्रयिषति। 'सनीवन्त—' ( २६१८ ) इतीड्विकल्पः। पूर्वत्र 'अज्झन—' ( २६१४ ) इति दीर्घः उत्तरत्र 'सार्वधातुकार्ध—' ( २६१९) इति गुणः। उदोष्ठ्येति—स्तृ+सन् तिप् इति स्थिते 'अज्झन—' इति दीर्घे अनेन उत्वम् इत्यर्थः। रपरत्वम्। 'हलि च' (३५४ ) इति दीर्घः—सुस्तूर्षति। इटि तु सिस्तरिषति। उभयत्र 'स्तौतिण्योरेव—' ( २६२७ ) इति वक्ष्यमाण—नियमात् षः। युयूषति—'अज्झन—' इति दीर्घः। यियविषति—सनेटि सत्यपि

प्राक् न गुणः किन्तु 'द्विर्वचनेऽचि' (२२४२) इति निषेधात् नुशब्दस्यैव द्वित्वं ततः 'ओः पुयण्जि—' (२२७७) इत्यभ्यासस्येत्वम्। ऊर्णुनूषतीत्यादि—'सनी-वन्त—' (२६२८) इति इड्विकल्पादनिट्पक्षे इदमेकमेव। इट्पक्षे तु 'विभा-षोर्णोः' (२४४७) इति ङित्वविकल्पाद् रूपद्वयम्। तत्र पूर्वत्र ऊर्णु सन् तिप् इति स्थिते 'न न्द्राः—' (२४४६) इति रेफस्य द्वित्वनिषेधात् नुशब्दस्य द्वित्वम्। रेफसंसर्गात् पूर्वस्य षत्वम् — ऊर्णुनुषिषति—इट् ङित्त्वम्, तेन गुणाभाव उवङ्। ऊर्णुनविषति, इट् गुणश्च। तेनात्र अवादेशः। अत्र ऊर्णुनविषतीति गुणपक्षे आशङ्कां निराकरोति न चेत्यादिना। अयमाशङ्का—ऊर्णु + इस इति स्थिते 'सार्वधातुकार्ध—(७.३.८४) इति गुणस्य, 'एचोऽयवायावः' (६।१।७८) इत्यवादेशस्य च 'सन्यङोः' (६।१।९, इति द्वित्व-विधायकशास्त्रापेक्षया परत्वेन तयोरेव गुणावादेशयोर्विहितत्वात् प्रागविहितयोरभ्यासे उकारो नास्त्येव। ततश्च 'सन्यतः' (२३१७) इत्यनेन उर्णोनविषतीत्येव स्यान्न-त्विष्टम्—ऊर्णुनविषतीति। स्थानिरूपातिदेशात्, आदेशनिषेधाद्वेति। 'द्विर्वचने-ऽचि' (१।१।५९) इत्यस्य हि सूत्रक्रमवशादयमर्थः। अयं तावत् सूत्रक्रमः। 'स्थानि-वदादेशः—' (१।१।५६), 'न पदान्तद्विर्वचनवरे—' (१।१।५८) तत्र स्थानि-वदित्यनुवर्त्य—द्वित्वनिमित्तेऽचि परे योऽजादेशः स स्थानिवद् भवति स्थानिरूपं प्रतिपद्यते इत्यर्थः द्वित्वे कर्त्तव्ये इत्येकोऽर्थः। एष एव च स्थानिरूपातिदेशपक्षः आदेशस्य स्थानिरूपे (स्थानिकार्ये) अतिदेशात् (स्थानिनमतिक्रम्य देशनाद् विधान-प्रदानात्)। किञ्च नेत्यनुवर्त्त्य 'द्वित्वनिमित्तेऽचि परेऽच आदेशो न स्याद् द्वित्वे कर्त्तव्ये' इत्यपरोऽर्थः। एष एव चादेशनिषेधपक्षः। तत्र प्रथमव्याख्यानेऽपि अजादेशरूपस्य गुणस्य स्थानिवद्भावेन नु—शब्दस्यैव द्वित्वेऽभ्यासे उकार श्रूयत एव। द्वितीयव्याख्यानेऽपि तस्य अजादेशरूपस्य गुणस्य निषिद्धतया स्थानिनो नुशब्दस्यैव द्वित्वम्। ततश्चाभ्यासोकारश्रवणं भवति। अत उक्तं स्थानिरूपेत्यादि। नन्वे-वमपि ऊर्णु + इस इति स्थिते सन्नन्तस्यात्र द्वित्वरूपकार्यसत्तया 'इस' इत्यस्यापि कार्यित्वम्। तथा सति द्वित्वनिमित्तं नास्ति। तत् कुतो द्वित्वमित्याशङ्क्याह—

न चेति—निमित्ततेति। द्वित्वनिमित्ततेत्यर्थः। समाधानमाह—कार्य्यमनुभवन्निति। परिभाषेयम् '—नाश्रीयते' इत्यन्तैव परिभाषेन्दुशेखरे दृश्यते। तेन 'मत्वनु-भवन्नपि' इत्यंशो भट्टोजिना योजित इति प्रतीयते। न चेहसन्निति—किन्तु नु—शब्द इत्यर्थः। अत्राभियुक्तव्याख्यानमेव शरणम् नागेशोऽपि कार्य्यमनुभवन्नित्यस्य व्याख्यानावसरे एवमेवाह। तथाच तद्वचनम्—'मत्वध्येता श्वयितेत्यादाविङ्-शीङोङित्वाद् गुणनिषेधः स्यादत आह—कार्य्यमनुभवन् हि कार्य्यी निमित्ततया नाश्रीयते' ॥ १० ॥ स्वङ्गित्वाच्छ्वयितरि (४।२।१५) इति निर्द्देशश्चास्या ज्ञापकः। ऊर्णुनविषतीत्यादिसिद्धये कार्य्यमनुभवन्निति। अत्र हि 'द्विर्वचनेऽचि' (१।१।५९) इति नुशब्दस्य द्वित्वम्। अन्यथा 'सन्यङोः (६।१।९)' इत्यस्य षष्ठ्यन्तत्वात् सन्नन्तस्य कार्य्यित्वेन इको द्वित्वनिमित्तत्वाभावात् तत्प्रवृत्तिर्न स्यात्।' इति (परि—८म पृः)॥ बुभूर्षतीति—बिभरिषतीति। 'सनीवन्त—' (२६१८) इतीड्विकल्पात् रूपद्वयम्। अनिट्पक्षे भृ+सन् तिप् इति स्थिते 'अज्झन—' (२६१४) इति दीर्घे 'उदोष्ठ्य—' (२४९४) इति उत्वे र-परत्वे 'हलि चेति' (३५४) दीर्घे षत्वे च पूर्वं सिध्यति। इट्पक्षे तु गुणः। रपरत्वेत्यादि। ज्ञपिः पुगन्त इति—'मारणतोषणनिशामनेषु ज्ञा' इति घटा-दिकस्य माधवमते मित्त्वमादाय हेतुमणौ 'अर्त्तिह्री—' (२५७०) इत्यनेन पुकि ज्ञपिरिति भवति। चकारान्नचौरादिकर्येति। 'ज्ञप मिच' इति चुरादौ पाठादिति भावः। इडभावे इति। 'सनीवन्त—' इत्यनेन इड्विकल्पादिति यावत्। इको झल् इति—ऋवर्णकारमाश्रित्येदम्। कित्त्वान्न गुण इति। णिच इति शेषः। परत्वादिति। अज्झन—इति दीर्घः णिलोपेन बाध्यत इत्यन्वयः। णिलोपस्य परत्वं यथा—'अज्झन—' (६।४।१६), 'णेरनिटि' (६।४।५१) इति। ज्ञीप्स-तीति ईप्सतीतिवत्। जिज्ञपयिषतीति—अत्र सन् इडादित्वादभ्यासलोपाभावः। मित्त्वाद्धस्वः। अमितस्त्विति—'ज्ञा नियोगे' इत्यस्य त्वित्यर्थः। तनिपतीति—वार्त्तिकमिदमिति कैयटः। सनीवन्तसूत्रावयव इति काशिका। अर्थः स्पष्टः।

२६२२। तनोतेर्विभाषा ॥६।४।१७॥

टी—। अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति—तितंसति—तितनिषति। 'आशङ्कायां सन् वक्तव्यः" (वार्त्तिक)। श्वा मुमूर्षति। कूलं पिपतिषति।

Eng.—Easy. आशङ्कायाम् etc.—वार्त्तिक। श्वा etc.—or the dog apprehends death i.e. is on the point of death. कूलं—the bank is on the point of being fallen down.

मित—। तनोतेरिति। 'अज्झनगमाम्—' (२६१४—६।४।१६) इत्य-वाप्यनुवृत्तिः। तितांसतीत्यादि—इडभावे रूपद्वयम्। आशङ्कायामिति वार्त्तिक-मिदम्। आशङ्कार्थकक्रियावृत्तेरपि धातोः सन् स्यादिति तदर्थः। मुमूर्षतीति। मृतिशङ्कितो भवतीत्यर्थः। वर्तमानसामीप्ये लट्। 'पूर्ववत्सनः' इत्यात्मनेपदमत्र न शङ्क्यम्। 'म्रिदेः—'इत्यादि सूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति आत्मनेपदप्रकरणे वक्ष्यमाणत्वात्। पिपतिषतीति—'तनिपति—'इति वार्त्तिकादिट्-पक्षे इदम्।

२६२३। सनि मीमाघुरभलभशकपतपदामच इस् ॥७।४।५४॥

टी—। एषामच इस् स्यात् सादौ सनि। अभ्यासलोपः। 'स्कोः—' (३८०) इति सलोपः। पित्सति। दिदरिद्रिषति—दिदरिद्रासति। 'डुमिञ्', 'मीञ्' आभ्यां सन्। कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस्। 'सः सि—' (२३४२) इति तः। मित्सति—मित्सते। "मा माने"। मित्सति। माङ्—मेङोः—मित्सते। दोदाणोः—दित्सति। देङ्—दित्सते। दाञ्—दित्सति—दित्सते। धेट्—धित्सति। धाञ्—धित्सति—धित्सते। रिप्सते। लिप्सते। शक्लृ—शिक्षति। 'शक मर्षणे' इति दिवादिः। स्वरितेत्। शिक्षति—शिक्षते।

पित्सति (पित्सते—?)। 'राधो हिंसायाम् सनीस् वाच्यः' (वार्तिक)। रित्सति। हिंसायां किम्? आरिरात्सति।

एषामचः—etc.—easy. अभ्यासलोप—by 'अत्र—' (2620). Thus पत्+सन् तिप्=पि स् त् सति by अच इस् here. Then पि ० त्स ति by 'स्कोः—' (380) then पि त्स त्स ति next पित्सति by अभ्यासलोप (This is alt. of पिपतिषति). दित्सति दिद्रिद्रिषति etc.—by तनिपति &c see वार्त्तिक above. The word मी in the rule stands for both 'डुमिञ् प्रक्षेपणे'—स्वादि and 'मीञ् हिंसायाम्'—क्र्यादि। Similarly मा stands for 'मा माने'—अदादि, 'माङ् माने'—दिवादि and 'मेङ् प्रणिदाने'—भ्वादि। मित्सते—due to ङित्त्व। स् of इस् becomes त् by 'सः सि—' (2342)। 'दोदाणोः' i.e. of 'दोऽवखण्डने' and 'दाण् दाने'। मेङ् and दो become मा and दा by 'आदेचः—' (2370). 'राधो—' (वार्तिक)—It has to be stated that आ of राध् is replaced by इस् in सन् in the sense of injure; otherwise आरिरात्सति—wishes to worship. तत्त्वबोधिनी rightly reads पित्सते (पद+सन्) for पित्सति, because this should be an instance of पद (आत्मनेपदी)।

मित—। सनीति। एषामिति। मीमा इत्यादेरित्यर्थः। अभ्यासलोप इति—'अत्र लोपः—' (२६२०) इत्यनेनेत्यर्थः। 'तनिपति—' इति वार्त्तिकोक्तपतेरिटि रूपं दर्शयित्वा इडभावे दर्शयिष्यन्नाह—स्कोरिति। पत्+सन् तिप् इति स्थिते अनेन इसादेशे पिस् त् स इति जाते स्कोरिति सलोपे पित्स ति इति स्थिते 'त्स' इत्यस्य द्वित्वमभ्यासलोपश्च। क्रतदीर्घस्य इति। 'अज्झन'—(२६१४) इत्यनेनेत्यर्थः। मिञ् अथवा मीञ् सन् तिप् इति स्थिते इसादेशे प्राग्वत्। एवमन्यत्र। यथा 'मी'ति डुमिञ्मीञोर्ग्राहकम् तथा 'मे'ति—मा,

माङ्मेङाम्. 'घु' इति ※ दाधपाणां धाधयोश्च ग्रहणमिति बोध्यम्। तत्र दीङ्‌
मीङ्ग्रहणादि'रादेच उपदेशे—' (२३७०) इत्यनेन आत्त्वे कृतेऽनेनेत्वम्। तत्र
तस्य तत्त्वम्। पित्सतीति। अत्र 'पित्सते' इति तत्त्वबोधिन्यां पाठः। तदेव
च साधीयः प्रतिभाति। पदाते रुपदर्शनाभावात् पतेः पूर्वसूत्रत्वाच्चेति। 'राधो
हिंसायाम्—' इति। वार्त्तिकमिदम्। हिंसाद्गतेरस्य आकारस्थाने इसादेशः।
रित्सति—स्कोरितिसलोपः। धकारस्य चर्त्वेण तः। तत्सहितं सनो द्वित्वेऽभ्यास-
लोपः। आरिरात्सति—अत्र आराधनार्थकत्वात् (आ—राध्+सन्) इसादेशा-
भावः। 'अभ्यासस्य 'ह्रस्वः' इति ह्रस्वे जाते 'सन्यतः' (२३१७) इतीत्वम्। चर्त्वम्।

२६२४। मुचोऽकर्मकस्य गुणो वा ॥७।४।५७॥

दो—। सादौ सनि। अभ्यासलोपः। मोक्षते—मुमुक्षते वा वत्सः स्वयमेव। 'अकर्मकस्य' किम्? मुमुक्षति वत्सं कृष्णः। 'न वृद्भ्यश्चतुर्भ्यः' (२३४८)। विवृत्सति। तङि तु विवर्तिषते। 'सेऽसिचि—' (२५०६) इति वेट्। निनर्तिषति—निनृत्सति।

Eng.—Easy. स्वयमेव here indicates अकर्मकत्व।

मित—। मुच इति। 'सः सि—' (७।४।४९) इत्यतः सीति। 'सनि मीमा—'(७।४।५४) इत्यतः सनीति चानुवर्त्तते। तच्छेषं पूरयन्नाह—सादौ सनीति। मोक्षते इत्यादि। चस्य कुत्वेन कः। षत्वम्। अन्यत्र गुणाभावादभ्यास-लोपाभावः। 'हलन्ताच्च' (२७१२) इति सनः कित्त्वाद गुणनिषेधे प्राप्ते 'गुणो वे'त्युक्तम्। 'तङि' इति। 'तङानयोरभावे' इत्युक्तत्वादत्र इडिति भावः। निनृत्सतीति 'हलन्ताच्च' इति सनः कित्त्वान्न गुणः।

---

※ इत्थी—'दाञ—धाञ' इति 'डुदाञ्—डुधाञ्' इत्यनयोर्ग्राहकमिति विभावनीयम्।

२६२५। इट् सनि वा ॥७।२।४१॥

टी—। वृङ्वृञ्भ्यामॄदन्ताच्च सन इड् वा स्यात्। तितरिषति—तितरीषति—तितीर्षति। विवरिषति—विवरीषति—वुवूर्षति। वृङ्=वुवूर्षते—विवरिषते। दुध्वूर्षति।

The aug. इट् is optionally prefixed to सन् coming after the roots वृङ्, वृञ् and those that end in दीर्घ ॠ. Thus तितरिषति—तितरीषति (with इट्. Two forms due to दीर्घविकल्प of इट् by 'वॄतो वा' —2391). तितीर्षति (without इट्। Here (in तॄ+सन्) सन् is कित् by 'इको झल्'—2612; hence गुण fails and consequently इत् comes in by 'ॠत इद्धातोः'—2390. रपरत्व and हलि चेति (354) दीर्घ)। वुवूर्षति—without इट्. वृ becomes वॄ by 'अज्झन—' (2614) then वुर् by 'उदोष्ठ्य—' (2494) next after duplication the अङ्ग becomes दीर्घ by 'हलि च'। वुवूर्षते etc because वृङ् is ङित्। दुध्वूर्षति—सन् of 'ध्वृ कौटिल्ये'।

मित। इडिति। 'वॄतो वा' (७।२।३८) इत्यतो 'वॄत' इत्यनुवर्तते। सनीति च षष्ठ्यर्थकः तदाह—वृङ्वृञ्भ्यामित्यादि। 'सनि ग्रहगुहोश्च' (२६१०) इत्यस्यापवादोऽयमिति नागेशः। न च 'ॠदन्ताच्च' इत्यनेन करोतेरपि 'अज्झन—' इति दीर्घादूर्ध्वं मिड्विकल्पाच्चिकरिषतीत्यादि स्यादित्याशङ्कनीयम्। 'एकाच उपदेशे—' (७।२।१०) इत्यत उपदेशे इत्यनुवर्त्य 'उपदेशे ॠकारान्तात्' इति व्याख्यानादिट् सनि वेत्यस्य प्रवृत्त्यभावादित्याहुः। तितरिषतीत्यादि—इट्पक्षे 'वॄतो वा' (२३९१) इतीटो दीर्घविकल्पाद् रूपद्वयम्। गुणः। रपरत्वम्। अभ्यासेत्वम्। उत्तरत्र त्विड्भावात् 'इको झल्' (२६१२) इति सनः कित्वेन गुणनिषेधात् 'ॠत इद्धातोः' (२३९०) इतीत्वम्। रपरत्वम्। अभ्यासेत्वम्। हलि चेति (३५४) दीर्घश्च। वुवूर्षतीति—'अज्झन—' इति दीर्घात् 'उदोष्ठ्य

—' (२४६४) इत्युत्वम्। रपरत्वम्। द्वित्वम्। हलि चेति दीर्घः। तुतूर्षति—इति। छ्वोरित्यूठ्। दुध्यूर्षति—'धुर्वी कौटिल्ये' इत्यस्य प्राग्वत्।

२६२६। स्मिपूङ्रञ्ज्वशां सनि ॥७।२।७४॥

दी—। स्मिङ्, पूङ्, ऋ, अञ्जू, अश्—एभ्यः सन इट् स्यात्। सिस्मयिषते। पिपविषते। अरिरिषति। इह 'रिस्' शब्दस्य द्वित्वम्। 'इस्' इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगात्। 'द्विर्वचनेऽचीति (२२४३) न प्रवर्तते। अञ्जिजिषति। अशिशिषते। 'उभौ साभ्यासस्य' (२६०६)। प्राणिणिषति। उच्छेसुक्। चुत्वम्। 'पूर्वत्रासिद्धीयमद्वित्वे' (परि—') इति चकाभ्यां सहितस्येटो द्वित्वम्। 'हलादिः शेषः' (२१७८)—उचिच्छिषति। निमित्तापाये नैमित्तिकस्याप्यपाय' (परि—?) इति त्वनित्यम्। 'च्छ्वोः—' (२५६१) इति सतुकग्रहणाज् ज्ञापकात्। 'प्रकृतिप्रत्यापत्तिवचनाद्वा'—। 'णौ च संश्चङोः' (२५७८—२६०१) इति सूत्राभ्याम् इङो गाङ्श्वयतेः सम्प्रसारणं च वा। अधिजिगापयिषति—अध्यापिपयिषपि। शिश्वाययिषति—शुशावयिषति। 'ह्वः सम्प्रसारणम्' (२८८६)। जुहावयिषति। णौ द्वित्वात् प्रागच आदेशो न' इत्युक्तत्वात् उकारस्य द्वित्वम् पुप्यारयिषति। चुच्यावयिषति। 'ओः पुयण्ज्यपरे' २५७७)। पिपावयिषति। यियावयिषति। बिभावयिषति। रिरावयिषति। लिलावयिषति। जिजावयिषति। 'पुयण्जि' इति किम्? नुनावयिषति। 'अपरे' किम्? बुभूषति। 'स्रवति—' (२५७८) इतीत्त्वं वा। सिस्रावयिषति—सुस्रावयिषतीत्यादि। 'अपरे' इतीरद? शुश्रूषते।

The aug. इट् is sanctioned to सन् coming after the five roots श्वि, पू, ऋ, अञ्ज् and अश् ( to pervade ). Thus शिश्वयिषति etc. शिश्वयिषते—by गुण and षत्वनिषेध, cf. 'स्तौतिण्योरेव—' ( 2627 ). पिपविषते—by 'ओः पुयण्ज्यि—' ( 2577 ) after the duplication of पू. अरिरिषति—ऋ+इट्+सन् hereby गुण and रपरत्व—ऋ becomes अर् and the whole =अरिस्. Now by 'अजादेर्द्वितीयस्य,' रिस् gets द्वित्व. Here as in other cases, the prohibition 'द्विर्वचनेऽचि' (2243) does not apply, for इस् or सन् along with इट् is the object of operation ( कार्यभाक् or कार्यी ) and as such i. e. being कार्यी it ( इस् ) fails to be the cause of द्वित्व ( cf. 'कार्य्य—मनुभवन् कार्यी निमित्ततया नाश्रीयते' ). अञ्जिजिषति—the नकार of अञ्ज् not being duplicated due to 'न न्द्राः—' (२४४९ ), जिस् (with इट्) gets द्वित्व. Though अञ्ज् is ऊदित् and had the reason of having इड्विकल्प by 'स्वरतिसूतिसूयति—' ( 2279), yet it will have नित्य इट्. Similarly अशिशिषते ( अश् व्याप्तौ ). तुक् i.e. by 'छे च' ( 146 ). चुत्वम् i.e. श्चुत्वम् ( चत्वम् ) of तुक् ( त् ) by 'स्तोः श्चुना—' ( 111—8. 4. 40 ). Here the rejoinder that 'द्वित्व fails after श्चुत्व of तुक् on the score of पूर्वत्रासिद्धम् ( 12—8. 2. 1.) whereby श्चुत्व is declared to be असिद्ध or invalid towards the foregoing rules' does not hold good due to the परिभाषा—'पूर्वत्रासिद्धीयमद्वित्वे'— or Rules and operations falling under पूर्वत्रासिद्धम् ( 8. 2. 1.—पूर्वत्रासिद्धीय ) will be considered invalid towards their predecessors except when द्वित्व is to be effected ( cf. द्वित्वभिन्नं पूर्वत्र कर्त्तव्यं परमसिद्धमित्यर्थः—म. प्रौ. ). Thus here इट् along with च and छ gets द्वित्व। Then by 'हलादिः—'

(2179) we have उचिच्छिषति। The परिभाषा or maxinm 'निमित्तापाये नैमित्तिकस्याप्यपायः' is अनित्य or occasional on the strength or evidence of the acceptance of (छ) along with तुक् or च in the rule 'च्छोः शूठ्—' (2561) or from the term or वचन of 'प्रकृतिप्रत्यापत्ति', cp:—the varttika 'आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' under 'ई च गणः' (2573). The drift is this :—The परिभाषा—निमित्तापाये etc, meaning—that too, which results from a cause disappears, as soon as the latter (cause) disappears,—suggests that in उचिच्छिषति there will be no 'चकार' in the अभ्यास as it is नैमित्तिक and so deserves disappearance as the निमित्त 'छ' is dropped by छत्वादिशेष. But the परिभाषा is अनित्य. And this is inferred from 'च्छ्वोः —'. For in cases like प्रश्न (प्रच्छ्+न) etc we have, by 'च्छ्वोः', श् for छ along with च or तुक्. But when छ is replaced by श्, then च or तुक् also would have disappeared by 'निमित्तापाये—etc'. Thus च or तुक् in the rule 'च्छोः—' fails. And this failure of तुग्विधि indicates that the परिभाषा —'निमित्तापाये—' is (admitted as) अनित्य. Consequently there will exist चकार in the अभ्यास of उचिच्छिषति। Or take it thus—the term 'प्रकृतिप्रत्यापत्ति' or renovation of the primitive root, occurring in the varttika above is superfluous for by 'हनश्च वधः' (3153) the वधादेश in 'कंसवधम् आचष्टे' would have disappeared and made room for हन् as soon as 'कृल्लुक्' or the elision of the कृत्प्रत्यय अप् was effected. Thus this failure also suggests the अनित्यत्व or temporary basis of the

परिभाषा 'निमित्तापाये—'। Thus in either way the existence of चकार in the अभ्यास of उचिच्छिषति is established. (But Nagesha does not agree to this. See Tika below). The rule 'णौ च संश्चङोः' (2579—6. 1. 31) and the rule 'णौ च संश्चङोः (2601—2. 4. 51) direct, in order, the optional सम्प्र. of श्वि and the optional गाङादेश of इङ् (to read). Thus अधिजिगापयिषति etc. (द्वित्व of गापि, इट् and गुण, ह्रस्व of the अभ्यास etc. अध्यापिपयिषति (द्वित्व of पि of आपि formed by 'क्रीङ्जीनां णौ'—2600). शिश्वाययिषति—by वृद्धि of श्वि in connection with णिच् then द्वित्व of श्वायि, इट्+गुण)। शुशावयिषति—Here the सम्प्र. takes effect first by 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्', the द्वित्व of शु, णिच्कार्य्य in the 2nd शु, वृद्धि, इट् and गुण। जुहावयिषति like शुशावयिषति। The हकार (along with ह्) is duplicated due to our (Bhattoji's) explanation 'णौ द्वित्वात्—'; cf. ('ह्वः च गमः'—2573). पुस्फारयिषति—(स्फुर+णिच्+सन्+तिप्)। चुच्यावयिषति:(च्यु+णिच्+सन्). पिपावयिषति etc. everywhere the duplication respectively of पु,यु, भु, रु, लू and जु will take first and then णिच्कार्य्य in the उत्तरखण्ड or second पु, यु etc, the अभ्यास पु, यु etc. becoming पि, यि etc by 'ओः पुयण्—'। नुनावयिषति—no इत्व of the अभ्यास। बुभूषति—the अभ्यास is not followed by an अपर (अः परो यस्मात्) वर्ण। शुश्रूषते—आत्मनेपद by 'ज्ञाश्रुस्मृदृशां सनः' (2731).

मित—। क्षिपुञ्ज्यादि। धातूनां यङन्तत्वेऽपि तथा प्रत्ययस्य सनन्तत्वेऽपि समेषां यङन्तत्वं यङन्तत्वार्थः। तदाह—एभ्यः सन इति। इट् स्यादिति। 'इङश्चति—' (७।२।६६) इत्यतस्तदनुवृत्तेरिति भावः। सिस्मयिषते इति। ङित्वात् 'पूर्ववत् सनः' इत्यात्मनेपदम्। 'स्मिङ्पूङ्रञ्ज्वशां सनि' इत्यस्यानिट्त्वादनेन इट्।

सौतिर्ष्व रेवेति नियमान्न षः। पिपविषते इति—पू+इस इति स्थिते पूशब्दस्य द्वित्वम्। 'ओः पुयण्—'' (२५७७) इत्यभ्यासेत्वम्। अरिरिषति इति—ऋ +इस् इति स्थिते अजादेर्द्वितीयस्येति गुणरपराभ्याम् 'अरिस' इति जाते 'रिस्' इत्यस्य द्वित्वम्। एतयोरप्यनिट्त्वादनेन इट्। ननु 'इस' इति द्वित्वनिमित्तम्। तथा सति 'द्विर्वचनेऽचि' (२२४६) इत्यनादेशनिषेधाद् गुणाभावेन 'अरिस्' इति दुर्लभम्, तत्राह—'द्विर्वचने—' इति नप्रवर्त्तते इति। हेतुमाह—'इस्' इत्यादिना निमित्तत्वायोगाद्वित्वस्येन। कार्य्यभाग्विति—अजादेर्द्वितीयस्येति नियमादित्यर्थः। इड्गुणाद्यभावाद् द्वितीयस्याभावेन तस्याप्रवृत्तेः। कार्य्यभागिति, कार्यीत्यर्थः। कार्यिणो निमित्तत्वायोगादिति—अनुभूतकार्य्यत्वात्, 'कार्य्यमनुभवन् कार्यी निमित्ततया नाश्रीयते' इति निषेधाद्विति भावः। अंशस्य 'इस्' इत्यस्य कार्यित्वेऽपि समुदायस्य 'इस' इत्यस्य कार्यित्वमुपचर्य्यते। ततोऽपि च द्वित्वनिमित्तत्वाभावात्। अञ्जिजिषतीति—'अञ्जु' —इत्यस्य ऊदित्वेन स्वरतीत्यादिना इड्विकल्पे प्राप्तेऽनेन नित्यमिट्। 'न न्द्राः'—(२४४६) इति नकारस्य द्वित्वनिषेधाद् 'जिस्' इत्यस्य द्वित्वम्। अशिशिषते इति—अशू व्याप्तावित्यस्यात्मनेपदत्वम्। 'पूर्ववत्—' इति तङ्। उच्छ्रिरिति—'उच्छी विवासे' इति धातुः। तुगिति—'छे च' (१४६) इति तकार इत्यर्थः। चुत्वमिति। 'स्तोः श्चुना श्चुः' (१११—८।४।४०) इत्यनेन श्चुत्वे चकारत्वमित्यर्थः। 'पूर्वत्रासिद्धीयमद्वित्वे'इति— परिभाषेयम्। द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थः' इति नागेशः। ततश्च द्वित्वस्य कर्त्तव्यत्वान्नायमत्र प्रवर्त्तते। एवं च श्चुत्वस्य नासिद्धत्वम्। तदाह—चकाभ्यां सद्वित्वस्येति। एवम् उच्छ्+इस् इति स्थिते 'अजादे—'रिति 'च्छिस्' शब्दस्य द्वित्वम्। ततो हलादिशेषेण अभ्यासे इकारेण सह चकारमात्रं श्रूयते। उचिच्छिषतीति च लभ्यते। ननु 'च्छिस् च्छिस्' इति द्वित्वादूर्द्ध्वं हलादिशेषेण छकारस्यापि निवृत्तिः। तस्य च 'छे च' (१४६) इति तुकी निमित्तत्वात् तदपाये (छकारलोपे) नैमित्तिकस्य तुकोऽपि निवृत्तिप्रसङ्गः, ''निमित्तापाये नैमित्तिकस्याप्यपाय' इति नियमात्। ततश्च तुग्निवृत्त्या तदादेशस्य चुत्वस्य अभ्यासे श्रवणं न स्यादत आह—

—'निमित्तापाये—' इति लभ्यम् इति। तत्र लिङ्गद्वयमाह—सतुक्कग्रहणाज्ज्ञापका-दिति प्रकृतिप्रत्यापत्तिवचनाच्चेति च। 'च्छ्वोः शूडनुनासिके च' (२५६१) इत्यनेन हि चकारेण सहितस्यैव छकारस्य शकारत्वमनुशिष्यते। यथा प्रश्नः, विश्नः इत्यादौ। तथा च प्रच्छ्+न इत्यत्र च्छ्वोरिति छस्य शकारे कृते 'निमित्तापाये—' इति न्यायात् चकारस्यापि (यद्वा—तुकोऽपि) निवृत्तिः स्यात्। एवञ्च च्छ्वोरित्यत्र तुग्ग्रहणं (चकारग्रहणम्) न कर्त्तव्यम्। तथापि यत् 'छ्वोः शूट्—' इत्य-सूत्रयित्वा 'च्छ्वोः—'रिति चकारग्रहणं क्रियते तस्यैतत् प्रयोजनं 'निमित्ता-पाये—' इत्यनित्यमिति। किञ्च निदर्शनान्तरेणापि 'निमित्तापाये—' इत्यस्या-नित्यत्वम् दर्शयितुं शक्यत इत्याह—प्रकृतिप्रत्यापत्तिवचनाच्चेति। 'ई च गणः' (२५७२) इत्यस्यान्तिमे 'आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृति-प्रत्यापत्तिः प्रकृतिवच्च कारकम्' इति वार्त्तिकम्। तत्र 'कंसवधम् आचष्टे' इत्यत्र वधादेशस्य 'हन्' इति प्रकृतिप्रत्यापत्तिः ('आदेशविगमेन' स्वरूपावस्थानत्वम्) साधयितव्या। सा च 'कृल्लुक्' इत्यनेन कृतः कृत्प्रत्ययस्य लोप एव विगमात् ('हनश्च वधः' (३२५२) इति सूत्रात्) वधादेशस्यापि अदर्शनात् लभ्यते। ततश्च प्रकृतिप्रत्यापत्तिवचनं व्यर्थम्। तदेतद् व्यर्थं सत् ज्ञापयति 'निमित्तापाये—' इत्यनित्यमिति। तस्मात् सूत्रकारवार्त्तिककारवचने एवात्र प्रमाणमिति भावः। नागेशस्तु 'निमित्तापाये—'इति परिभाषा नास्त्येवेत्याह—'पुष्ययोगं जानाति पुष्येण योजयतीत्यर्थे तत्साधके पुष्ययोगेति वचने भाष्यकृत्कृतप्रत्यापत्ति-ज्ञापिका। तत्र हि 'चजो—'रिति घिति परतः कुत्वमन्यथा कृल्लुकि निमित्ता-पायपरिभाषयैव कुत्वनिवृत्तौ सिद्धायां किं तदनुकरणेनेत्यन्यत्र विस्तरः। वस्तुत एतैः (सूत्र-वार्त्तिक-भाष्यकृद्वचनैरित्यर्थः) तत्परिभाषाभाव एव बोध्यते' इत्याह—अतएव तत् कृतपरिभाषेन्दुशेखरे निमित्तापायपरिभाषा नोपलभ्यत इति संक्षेपः। सूत्राभ्यामिति। 'णौ च—' (२५७९—६।१।३१) इत्यनेन श्वयतेः सम्प्रसारणविकल्पः, 'णौ च—' (२६७१—२।४।५१) इत्यनेन इङो गाङादेशविकल्पश्चेति विवेकः। अधिजिगापयिषतीति। अत्र गाङादेशात् 'अर्त्तिह्री—' (२५७०) इति पुकि णापि इत्यस्य द्वित्वम्। इद्

गुणौ। अध्यापिपयिषतीति—'क्रीङ्जीनां णौ' (२६००) इत्यात्वे पुकि च कृते 'आपि' इति जाते 'पि'—शब्दस्य द्वित्वम्। इङ्गुणौ। शिशाययिषतीति—श्यतेर्णिचि वृद्ध्या-यादेशयोः कृतयोः 'शायि' इत्यस्य द्वित्वम्। हलादिशेषः ह्रस्वः। 'सन्यतः' इतीत्वम्। इङ्गुणौ। शुशावयिषति—'सम्प्रसारणं तदाश्रयञ्च कार्यं' बलवदि'त्युक्तत्वात् 'शु' इत्यस्य द्वित्वम्। उत्तरखण्डे णिच्कार्यम्, इट्, गुणश्च। णौ द्वित्वादिति। एतत् 'ई च गणः' (२५७२) इत्यत्रोक्तम्। उकारस्येति—हकारसहितस्येत्यर्थः। पुस्फारयिषति—'चिस्फुरोर्णौ' (२५६८) इति आत्वविकल्पस्य 'णिचि' च 'अच आदेशो न—' इत्युक्तत्वात् द्वित्वात्पूर्वं विधेयः। पुस्फारयिषतीत्यपि द्रष्टव्यम्। चुच्यावयिषतीति—अत्रापि च्यूधातोर्द्वित्वात्पूर्वं णिच्कार्यम्। पिपावयिषतीत्यादि—अत्र क्रमेण पू, यु, भू, रु, लू, जु इति धातवः। तेषां पू इत्यादीनां द्वित्वानन्तरं णिच्कार्यम्। ततः 'ओः पुयण्—' (२५७७) इत्यनेनाभ्यासोकारस्य इत्वम्। जुनावयिषतीति—अत्र पवर्गप्रत्याहारजकारान्यतमपरत्वाभावान्नेत्वम्। बुभूषतीति—अत्र पवर्गीयवर्णसत्त्वेऽपि उत्तरखण्डे अवर्णपरत्वाभावात् 'यत्र द्विरुक्तौ—' इत्युक्तत्वेन नाभ्यासेत्वम्। शुश्रूषते इति—'ज्ञाश्रु—' (२७२१) इत्यात्मनेपदम्।

२६२७। स्तौतिण्योरेव षण्यभ्यासात् ॥८।३।६१॥

टी—। अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यत्र। तुष्टूषति। 'दुरतिस्थाप्योः—' (२३४४) इत्युक्तम्। सुष्वापयिषति। सिषाधयिषति। 'स्तौतिण्योः' किम्? सिसिक्षति। उपसर्गात्तु 'स्थादिष्वभ्यासेन च—' (२२७७) इति षत्वम्। परिषिषिक्षति। 'षणि' किम्? तिष्ठासति। सुषुप्सति। अभ्यासादित्युक्तेर्नेह निषेधः। इण्—प्रतीषिषति। इक्—अधीषिषति।

The स coming after the इण् (प्रत्याहार) of the अभ्यास of

स्तु and ण्यन्त or causative roots only, becomes ष provided the स of सन् following has also become ष and not otherwise. Thus it is easy to see that there are two restrictions (1) that the स of स्तु or casual roots alone turns cerebral when it comes after the इकार or उकार etc lying in the अभ्यास। and (2) that this षत्व the स in the उत्तरखण्ड of 'स्तौतिण्यो' is effected only when the स of सन् following it ( स ) has also undergone षत्व but not so if the स of सन् remains unaffected. ( Hence it is that the rule reads षणि instead of सनि ). Thus तुष्टूषति ( दीर्घ of स्तु—दीर्घ being due by 'अज्झन—' 2614 ). स्वापि—a ण्यन्त root—gives सुष्वापयिषति ( duplication of स्वापि and सम्प्र. in the अभ्यास by 'द्युतिस्वाप्यो:—' ). सिसिचति—no guna due to 'हलन्तात्' ( 2613 ). But the restriction viz.—'अभ्यासेण: परस्य स्तौतिण्योरेव' does not hold good when a root comes after an उपसर्ग ( having the condition of षत्व ) for 'स्तौतिण्योरेव—' (8. 3. 61 ) bars 'आदेशप्रत्यययो:' ( 8. 3. 59 ) only and not 'स्थादिष्वभ्यासेन चाभ्यासस्य' ( 8. 3. 64 ) also ; cf. the परिभाषा 'मध्येपवादा: पूर्वान् विधीन् बाधन्ते नोत्तरान्' [ and it is evident that 'स्तौतिण्यो:—' is a special rule ( अपवादसूत्र ) placed in the middle ( मध्ये ) ]। Thus we have परिषिषिक्षति। तिष्ठासति etc because सन् has not been षण् here so षत्व due by 'आदेशप्रत्यययो: is not barred ( the root was ष्ठा then स्था ). अभ्यासादित्वात्:—etc i.e. as we have explained 'अभ्यासेण: परस्य······सस्य' ; So the षत्व of the स of सन् coming after the root इण् or इक् will not be affected in the least though षण् follows. Thus प्रतीषिषति—अधिषिषति

( स in both cases gets द्वित्व and the अभ्यास gets इत्व by 'सन्यत:' ).

मित—। स्तौतिण्योरिति। स्तौतिश्च णिश्चेति द्वन्द्वात् षष्ठीद्विवचनम्। 'णि' इत्यनेन तदन्तत्वं लक्ष्यम्। तदाह—स्तौतिण्यन्तयोरिति। स्तौतेर्ण्यन्तस्य चेत्यर्थ:। अभ्यासेण इति। 'इण्को:' (८।३।५७) इत्यत आदेशप्रत्यययोरित्येवानुवर्त्तते। तच्च विशेष्यतया अन्वीयते। सूत्रे एवकार: काकाक्षिगोलकन्यायेनोभयान्वयी 'स्तौतिण्यो-रेव' इति 'षण्येव' इति च। तदाह—स्तौतिण्यन्तयोरेवेति षभूते सनि नान्य-त्रेति च। कृतषत्वस्य सन् इत्यर्थ:। सस्य ष इति। 'अपदान्तस्य मूर्धन्य:' (८।३।५५) इत्यत: 'सहे: साड: स:' (८।३।५६) इत्यतश्च तदनुवृत्तेरिति भाव:। तुष्टूषतीति। स्तौते: सनिरूपम्। 'अज्झन—' (२६१४) इति दीर्घ:। षत्वं दर्शयितुमाह —सुषुापयिषतीति। 'द्युति—' (२३४४) इत्यनेनाभ्यासस्य सम्प्रसारणम्—। सिषिचतीति—'हलन्ताच्च' (२६१२) इति सन: कित्त्वान्न गुण:। उपसर्गा— त्विति। अयं भाव:—'आदेशप्रत्यययो:' (८।३।५९), 'स्तौतिण्योरेव—' (८।३।६१), 'स्थादिष्वभ्यासेन चाभ्यासस्य' (८।३।६४) इति सूत्रत्रयस्य मध्ये मध्यमोऽपवाद:। अतएवासौ—मध्येऽपवादा: पूर्वान् विधीन् बाधन्ते नोत्तरान्— इति न्यायेन 'आदेश—' इति विहित षत्वस्य च बाधको, न तु 'स्थादिष्वभ्यासेन—' इति विहितस्यापि। ततश्च उपसर्गात् (उपसर्गस्थान्निमित्तात्) 'स्थादिष्वभ्यासेन—' इति प्राप्तं षत्वं भवत्येव। एवञ्च परिषिषिक्षतीत्यादि निर्बाधमिति। तिष्ठासति इति—। षण्येव परतोऽभ्यासेण: परस्य सस्य षत्वमिति नियम:। अत्र च षणास्ति। अत उक्तनियमो न प्रवर्त्तते। ततश्च स्था+सन् इति स्थिते धात्वादेरिति सत्वे स्था सन् इति जाते द्वित्वादिकृत्वम् 'आदेश—प्रत्यययो'रिति षत्वं भवत्येवेति भाव:। सुषुप्सतीति, ञिष्वप् शये इति धातु:। अत्रापि प्रागवत्। 'रुदविद मुषग्रहि स्वापि—' (२६०९) इति सम्प्रसारणे कृते द्वित्वम्। अभ्यासादित्युक्तेरिति। अभ्यासेण इत्युक्तेरिति भाव:। नेह निषेध इति—प्रतीषिषति, अधीषिषतीत्यत्र। अत्र प्रति—इ+सन् तिप इति स्थिते 'अजादे—' रिति सस्य द्वित्वम् तस्य

च इण् धातोःपरत्वेन अभ्यासेण: परत्वाभावात् षत्वम्। एवञ्च 'स्तौति- ण्योरेव—' इति नियमस्य न षतिरेवमधीषिषतीत्यत्र।

२६२८। सः स्विदिस्वदिसहीनां च ॥८।३।६२॥

टी—। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः षणि परे। सिस्वेदयिषति—सिस्वादयिषति। सिसाहयिषति। 'स्वादिष्वेवाभ्यास' इति नियमान्नेह—अभिसुसूषति।

'शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः।

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सन्निष्यते॥'—( भाष्यम् )

शैषिकाच्छैषिकः सरूपो न। तेन शालीये भव इति वाक्यमेव। न तु छान्ताच्छः। 'सरूपः' किम्? अहिच्छत्रे भव आहिच्छत्रः। आहिच्छत्रे भव आहिच्छत्रीयः। अणन्ताच्छः। तथा मत्वर्थात् सरूपः स न। धनवानस्यास्ति। इह मतुबन्तान्मतुब् न। विरूपस्तु स्यादेव। दण्डिमती शाला। "सरूपः" इत्यनुषज्यते। अर्थद्वारा सादृश्यं तस्यार्थः। तेन इच्छासन्नन्तात् सन्न। स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते।

इति तिङन्तसन् प्रकरणम्।

The substitute स only and not ष replaces the स, of the causative स्विदि, स्वादि and सहि, coming after the इण् ( प्रत्याहार ) of the अभ्यास—when षण् follows. Thus सिस्वेदयिषति etc. According to the restriction ( नियम ) laid down in 'स्थादिष्वभ्यासेन—' ( 2277 ) we have अभिसुसूषति ( अभि—सु+सन्षति ) without षत्व for, though there is the उपसर्ग अभि, yet सु does not fall within the list of स्थादि ( which see ante—2270—2277 ).

Bhashya reads ( or holds) that—'A self same affix laid down in the शेषाधिकार or expressing the sense of मतुप् is not, for the second time, attached to a word formed ( by the same affix ) in the शेषाधिकार or bearing the sense of मतुप् as also that the affix इच्छा—सन् is not again enjoined to a word once formed with that सन्'.

Thus शालीय formed with छ in the शेषाधिकार will not have छ again after it, so that 'शालीये भव' will not make a single word but will remain in the form of a sentence. Why say सरूपः ( selfsame or similar ) ? Witness—आहिच्छत्रीयः। Here, at first, the base आहिच्छत्र is formed with अण् in the sense of अहिच्छत्रे भवः। Then आहिच्छत्रे भवः give आहिच्छत्रीयः with छः so that an अणन्त word is affixed with छ ( and not with अण् again ). Similarly in the case of affixes expressing the sense of मतुप्. Thus धनमस्यास्ति gives धनवान् with मतुप्; but धनवानस्यास्ति will remain unchanged for it will not take मतुप् again. But a different ( विरूपः ) affix of the same sense may be applied to such a base as—दण्डमस्यास्तीति दण्डी ( अतइनिठनौ ), again दण्डी अस्या अस्तीति दण्डिमती ( दण्डिन्+मतुप्+ङीप् ) शाला ( a shed ). सरूप इत्यनुवर्त्यते i. e. the word सरूप in third foot of the sloka should be drawn to सन् also in the fourth line. And this सरूप will denote similarity in sense ( and not in word ) so that an इच्छासन्नन्त word i. e., a word formed with सन् expressed by धातोरेकाचः—' (2608) will not again have इच्छासन् after it whereas a word formed with स्वार्थसन् (-expressed in 'गुप्तिज्किद्भ्यः सन्'—2393 etc ) will again

be allowed to have इच्छासन् after them so as to give जुगुप्सिषते ( जुगुप्स् + इट् सन् ते ), मीमांसिषते etc.

Here ends the सन् chapter of तिङन्त।

मित—। ष इति। 'सौतिण्योरेव—' ( ८।३।६१ ) इत्यतएवानुवृत्तिः। तथा तस्मात् सौति—वर्जं सर्वमनुवर्तते। तदाह—अभ्यासेण: परस्येत्यादि। सूत्रे स इति नियमार्थमित्याह सस्य स एवेति। सिस्वेदयिषतीत्यादि स्विदिप्रभृतीनां क्रमेण रूपम्। अभिसुसूषतीति—अत्र षत्वे सत्यपि 'सौतिण्योरेवे'ति नियमान्नाभ्यासेण: परस्य षत्वम्। तथा सुनोतेरभ्यासस्य अभ्युपसर्गात् परत्वेऽपि स्थादित्वाभावात् 'स्थादिष्वभ्यासेन—' ( २२७७ ) इति न षत्वम्। शैषिकादिति—'श्लोकवार्तिकमिद-मिति केचित्। भाष्यमिति बहवः' इति तत्त्वबोधिनी। अयमत्रान्वयः—

शैषिकात् सरूपः शैषिकः प्रत्ययः, ( तथा ) मतुवर्थीयात् सरूपः मतुवर्थीयः प्रत्ययः न इष्टः, ( किञ्च ) सन्नन्तात् ( सरूपः ) सन् न इष्यत इति।

अर्थस्तु तत्रैव स्पष्टीकृतः ( शेषे—शेषाधिकारे भवः शैषिकः—भवार्थे अध्यात्मादित्वात् ठञ्। एवं मतुबर्थे भवो मतुबर्थीयः—भवार्थे गहादित्वात् छः )। सरूप इति समानरूप इत्यर्थः। तेन-'छान्ताच्छो न, अणन्तादण् न, मतुब्निष्पन्नान्मतुप न' इत्यर्थ इति बोध्यम्। तेनेति—यतः शालीयशब्दः शालायां भव इति शैषिकछप्रत्ययनिष्पन्न इति भावः। भवेति—स्पष्टम्। विरूपस्त्विति। यथात्रैव दण्डिमतीत्यत्र इन्नन्तान्मतुबिति हृदयम्। अनुपत्यत इति—चतुर्थ—पादस्य-समाप्तत्वात् प्राङ्निर्धीयत इत्यर्थः। अर्थद्वारेति—न तु शब्दद्वारेति भावः। तथाहि सति सन्नन्तात् सन् न स्वादित्यर्थकतया 'गुप्तिज्किद्भ्यः सन्' ( २३९२ ) इति स्वार्थसन्निष्पन्नेभ्योऽपि 'जुगुप्सतीत्यादिभ्य' इच्छासन् प्रत्ययो न स्यात्। ततश्च जुगुप्सिषते, मीमांसिषते इत्यादि न सिध्येत्। अतो भाष्ये अर्थद्वारैवात्र सादृश्यं सरूपशब्दार्थः न तु पूर्वपूर्वत्रेव शब्दद्वारेति भणितव्यमित्यभिप्रायः। एवञ्च 'धातोः कर्मणः समानकर्तृकादिच्छायां—' ( २६०८ ) इति विहितेच्छासन्नन्तादेव पुनरिच्छासन्प्रत्ययो नेष्यत इति फलितार्थः।

इति मितभाषिण्यां तिङन्तसन्प्रकरणम्।

अथ

# तिङन्त यङ् प्रकरणम्

२६२९। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥३।१।२२॥

टी—। पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः, तस्मिन् द्योत्ये यङ् स्यात्।

क्रियासमभिहार means 'frequency' as also excess ( or too much occurance ) ; and in that sense the affix यङ् is attached to a monosyllabic ( एकाच् ) and consonant-leading (हलादि) root.

मित—। अथ यङ्प्रक्रियां निरूपयिष्यन् सूत्रमवतारयति—धातोरिति। तस्मिन् द्योते इति—न तु वाच्ये इति भावः। तस्य वाच्यत्वे हि प्रत्ययवाच्यस्य प्रधानतया सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति शब्देन्दुशेखरे व्याख्यातम्। यङ् स्यादिति। एकाच्कात् व्यञ्जनादेश्च धातोरिति शेषः। ङित्त्वादात्मनेपदमिति वक्ष्यति। तथा धातोरिति विहितत्वात् यङः आर्द्धधातुकत्वमिति च।

२६३०। गुणो यङ्लुकोः ।७।४।८२॥

टी—। अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। 'सनाद्यन्ताः—' (२३०४) इति धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति—बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। 'धातोः' किम्? आर्द्धधातुकत्वं यथा स्यात्। तेन 'ब्रुवो वचिः' (२४५३) इत्यादि। 'एकाचः'

किम् ? पुनः पुनर्जागर्ति । 'हलादेः' किम् ? भृशमीक्षते । भृशं शोभते रोचते इत्यत्र यङ् नेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' ( वार्तिक ) । आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते, सोसूत्र्यते । अनेकाच्त्वेनाषोपदेशत्वात् षत्वं न । मोमूत्र्यते ।

The reduplicate or अभ्यास (of a root), is gunnated when a यङ् or यङ्लुक् follows. A यङन्त word falls in the category of a root by 'सनाद्यन्ताः—' (2304) and thus is affixed with लट् ( शप् and तिप् etc ). यङ् being ङित्, the यङन्त bases are conjugated in the आत्मनेपद। 'He frequently or too often becomes' gives बोभूयते ( भू+यङ्=भूभूय by 'सन्यङोः—'—2395= =भो भू य by this rule=बोभूय by 'अभ्यासे चर्च'—2182. Then बोभूय +शप् ते=बोभूयते by 'अतो गुणे'—191). बोभूयाञ्चक्रे—by 'कास्प्रत्यया-दाम्—' 2306 and 'कृञ्चानुप्रयुज्यते लिटि'—2239 as also 'आमप्रत्ययवत् —' 2240. अबोभूयिष्ट—लुङ् अट्, इट्, सिच् त no guna due to कित्त्व of सिच् by 'लिङ्सिचावात्मनेपदेषु'— (2300). The aphorism reads 'धातोः' so as to announce that यङ् is an आर्धधातुक like सन्. And this is inferred from 'ब्रुवो वचिः' (2453; for had not यङ् been an आर्धधातुक, वावच्यते would not have resulted from the substitute वचि which replaces ब्रू only when an आर्ध. follows. Similarly in the case of 'चक्षो ख्याञ्' ( 2411 ). जागृ will not have यङ् after it as it is not एकाच् or monosyllabic ; similarly ऊर्णु will not be affixed with यङ्

as it is not हलादि or consonant-leading. The भाष्य holds that शुभ् and रुच् will not have यङ् after them in the sense of excess or too much ( भृशार्थे ). They will however, have it in the sense of frequency ( पौनःपुन्य ) so as to give शोशुभ्यते etc. 'सूचिसूत्रि—'. This is a varttika introduced here to attach यङ् after सूच to hint, सूत्र to entwine, मूत्र to urinate, अट् and ऋ to go, अश to eat, अशू to pervade and ऊर्णुञ् to cover —all of which without this varttika would have been dispensed with from having यङ् due to their अनेकाच्त्व, अजादित्व or both अजादित्व and अनेकाच्त्व. The first three of the list are read in चुरादि and are अदन्त or अकारान्त. Of these again सूचि and सूत्रि will not have षत्व as they are not षोपदेश (or read with षकार beginning) and due to their अनेकाच्त्व. Thus सोसूच्यते etc with णिच्, यङ्, णिलोप, द्वित्व and गुण of the अभ्यास।

मित— । गुण इति । यङ्लुकोरिति द्वन्द्वात् सप्तमीद्विवचनम् । लुगिति यङ्लुक एव ग्राहकमित्याह—यङ्लुकि चेति । अभ्यासस्येति—'अत्र लोपोऽभ्यासस्य' (७।४।५८) इत्यतस्तदनुवृत्तेः । गुण इति—स चाभ्यासस्य इक इत्यवगन्तव्यम् 'इको गुणवृद्धी' इति वचनात् । क्ङिदन्तत्वादिति—यङन्तस्येत्यर्थः । पुनः पुनरतिशयेन वेति । समभिहारार्थकमिदमित्युक्तं प्राक् । बोभूयत इति । भू+यङ् इति स्थिते 'सन्यङोः' (२३९५) इति द्वित्वेऽनेनाभ्यासस्य गुणेऽभ्यासे चर्चेति जश्त्वे च 'बोभूय' इति यङन्तो धातुः । तस्मात् कर्तरि शबिति शप् तिबादय आसज्यन्ते, 'सनाद्यन्ताः धातवः' (२३०४) इति शास्त्रात् । ननु 'सन्यङो'रिति द्वित्वादूर्ध्वं शबादिना बोभूयत इति सिद्धावपि 'क्रियासमभिहारे' इति सूचितत्वाद् द्विरुक्तप्रक्रियास्य—'क्रियासमभिहारे चे'ति वार्त्तिकात् लुनीहि—लुनीहीत्येवायं लुनातीत्यादिवत् पुनर्बोभूयते—बोभूयत इति स्यादिति चेन्न । लोट् तावत्

क्रियासमभिहारं व्यभिचरति। समुच्चयेऽपि जायमानत्वात्। ततश्च लोड्द्विर्वचनयोरिव तद्‌द्योतकत्वं न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम्। यङ् क्रियासमभिहारं न व्यभिचरतीति द्विर्वचनं विनैव तस्य (तद्) द्योतकत्वम्। तेन तदन्तस्य (यङन्तस्य) न द्विर्वचनमि'ति तत्त्वबोधिन्यामस्पष्टं च सुस्पष्टम्। एतच्च लकारार्थप्रकरणे 'क्रियासमभिहारे लोट—' (२८२५) इत्यत्र प्रपञ्चयिष्यते इत्यलम्। बोभूयांचक्रे इति। 'कास्प्रत्ययादाम्—' (२३०६) इत्याम्। 'कृञ्चानुप्रयुज्यते—' (२२३८) इति लिडन्तकृञनुप्रयोगः। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' (२२४०) इत्यनुप्रयुक्तस्यात्मनेपदम्। अबोभूयिष्टेति— लुङि सिचि अडिटावागमौ। सिचः कित्त्वाद्गुणाभावश्च। धातोः किमिति? 'क्रियासमभिहारे यङ्' इत्यनेनैव क्रियावाचकधातोर्लाभात् पुनः धातोरिति कथमिति प्रश्नः। उत्तरमाह—आर्द्धधातुकत्वमिति। यङन्तस्ये'ति शेषः। तत्र निदर्शनमाह— आर्द्धधातुक एव हि परतो ब्रुवो वचिरित्यादेशः स्यात्। ततश्च यङ आर्द्धधातुकत्वाभावे वच्यादेशाभावात् वावच्यते इति न स्यात्। इत्यादीति—आदिपदेन 'वेञोवयिः' (२४११) इत्यादि ग्राह्यम्। पौनःपुन्य इति। भृशार्थे एवानयोर्यङ् न भाष्यमते तु पौनःपुन्यार्थं इति भावः। सूचिसूत्रीति—वार्तिकमिदम्। अनेकाच्त्वादजादित्वादुभयविधत्वाच्चेतिभ्यो यङ् न स्याद् 'धातोरेकाचो—इति सूचितत्वादतः वर्त्ततेऽत्र वार्त्तिकावकाशः। सूच पैशुन्ये, सूत्र वेष्टने, मूत्र प्रस्रवणे, अट गतौ, ऋ गतौ, अश् भक्षणे, अश् व्याप्तौ, ऊर्णुञ् आच्छादने इति धातवः। सोसूच्यते। सोसूत्र्यते इति। अन्यं धातु स्वयमेव क्रमेणोदाहरणं वक्ष्यते। अनेकाच्त्वेनेति—सूचिसूत्र्योरिति भावः। यत्वं नेति। 'यादेश—' इत्यस्याप्रवृत्तेरिति भावः। चुरादित्वादेषां ण्यन्ताद् यङ् द्वित्वं णिलोपोऽभ्यासगुणश्च अकारान्तत्वाद् णिचि 'अतो लोप' (२३०८) इत्यल्लोपे सति णिच्।

२६३१। यस्य हलः।६।४।४९॥

टी—। 'यस्य' इति सङ्घातग्रहणम्। हलः परस्य य

अस्य लोपः स्यादार्धधातुके। 'आदेः परस्य' (४४)। 'अतो लोपः' (२३०८)। सोसूचांचक्रे। सोसूचिता। सोसूत्रिता। मोमूत्रिता।

The letter य of 'यस्य' in the rule is the combination of य् and अ. Then the letter 'य' thus formed, coming after a consonant, elides when an आर्धधातुक follows. Thus in सोसूचांचक्रे the यकार only elides by 'आदेः परस्य' (44) and then the अकार elides by 'अतो लोपः' (2308). The object of this 'सङ्घातग्रहण' is to prohibit the elision of यकार in forms like ईर्ष्यिता, मव्यिता etc; for in ईर्ष्यिता (ईर्ष्य+इट् ता) etc. the root being अकारान्त only (and not य्+अकारान्त) the rule (यस्य हलः) does not apply there (see Kashika).

मित—। य इति। 'अतो लोपः' (६।४।४८) इत्यतो लोपइत्यनुवर्तते तदाह लोपःस्यादिति। सङ्घातग्रहणमिति। यकाराकार समुदायग्रहणमित्यर्थः। ननु यस्येति षष्ठ्यन्तम्। ततः 'आलोऽन्त्यस्य—' इति परिभाषया यकारादकारमात्रस्य लोपः स्यान्न तु यकारस्यापि। तत्राह—आदेः परस्येति—तस्य अलोऽन्त्यपरिभाषापवादत्वादिति भावः। ततो यकार—अकारयोर्मध्ये अनेन यकारलोपे कृते 'अतो लोप' इत्यनेनाकार लोपः। अत्र काशिका—'यस्येति सङ्घातग्रहणमेतत्। तत्रालोऽन्त्यस्येत्येतन्न भवत्यतो लोप इत्यनेनैव तस्य सिद्धत्वात्। हल इति वा (च?) पञ्चमीनिर्दिष्टत्वादादेः परस्येति यकारोऽनेन लुप्यते। सङ्घातग्रहणं किम्? ईर्ष्यिता। मव्यिता। हल इति किम्? लोलूयिता। पोपूयिता।' इति। सोसूचांचक्रे इत्यादि सुगमम्।

२६३२ ॥ दीर्घोऽकितः ॥७।४।८३॥

दी—। अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। यटाट्यते।

( The अच् or vowel ) of an अभ्यास which is not कित् or क—eliding is lengthened when यङ् or यङ्—लुक् follows—अटाट्यते ( अट्+यङ्=अटाट्य=अटाटा then यप्ते ); similarly पापच्यते, पापठ्यते etc., but यंयम्यते, रंरम्यते without अभ्यासदीर्घ for the अभ्यास् is कित् here in connection with नुक् by the rule 'नुगतोऽनु—' ( 2646 ).

मित—। दीर्घ इति। 'अत्र लोपोऽभ्यासस्य' (७।४।५८) इत्यतोऽभ्यासस्येत्यनुवर्तते। 'गुणो यङ्लुकोः' (७।४।८२) इत्यतो यङ्लुकोरिति च। अकित इति बहुव्रीहिः। अविद्यमानं किद्यस्येत्यर्थः। किद्रहितस्येति यावदत आह—अकितोऽभ्यासस्येत्यादि। अटाटाते इति। अजादेर्द्वितीयस्येति यङ्कृते 'टा' शब्दस्य द्वित्वम्। हलादिशेषाभ्यासदीर्घौ। अकित इति किम्? संयम्यते। रंरम्यते। अत्र हि नुकि कृते कित्त्वान्न दीर्घ इति ( 'नुगतोऽनु—' (२६४६) इत्यत्र नुग्वक्ष्यति)। तदेवं 'सूचिसूत्रि—' इति वार्तिकोक्तानामटत्यन्तानां रूपं दर्शितम्। अर्तिप्रभृतीनां दर्शयितुमाह—

२६३२। यङि च ॥७।४।३०॥

टी—। अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि यङ्लुकि च(१)। यकारपररेफस्य न द्वित्वनिषेधः। 'अरार्यते' इति भाष्योदाहरणात्। अरारिता। अशाशिता। ऊर्णोनूयते। वेभिद्यते। अल्लोपस्य स्थानिवत्त्वान्नोपधा-गुणः। वेभिदिता।

The ऋत् i. e. ऋकार of the root ऋ ( अर्ति ) and of those that are संयोगादि (having a conjunct letter at the outset) is gunnated when यङ् or यङ् लुक् follows. The रेफ or a रकार followed by a यकार is not disallowed to have duplication ( by 'न न्द्राः—'

( १ ) 'यङ्लुकि च' इत्यंशस्तु तत्त्वबोधिन्यां न दृश्यते।

2446 ) as we have the instance 'अरार्यते' ( ऋ+यङ्=अर् य by गुण and रपरत्व = अ र्यं य ( द्वित्व with यङ्=अर र्य by हलादिशेषः=अरार्य by 'दीर्घोऽकितः'—2632=अरार्यते with शप्ते ) in the भाष्य ( under 'धातोरेकाचो—' 2629 ). अरारिता, अशाशिता by 'यस्य हलः' ( 2631 ) and 'दीर्घोऽकितः'। ऊर्णोनुयते—द्वित्व of नु, गुण of the अभ्यास by the prior rule and दीर्घ of the अङ्ग by 'अकृत् सार्वधातुकयोः—' ( 2298 ). वेभिद्यते—द्वित्व of भिद्, गुण of the अभ्यास। In the case of वेभिदिता ( भिद्+यङ्+ता ), we have at first वेभिद् इता ( with इट् ) after अलोप has been effected by 'यस्य हलः' ( 2631 ) and 'अतो लोपः' ( 191 ). But this elision of अ or अलोप being स्थानिवत् ( cf—स्थानिवदादेशः—50 ), there is no guna of the उपधा of भिद्।

नित्त—। यङ्चेति। 'गुणोऽर्तिसंयोगाद्योः' ( ७।४।२९ ) इत्यतः सर्वमप्यनुवर्तते। तथा 'रीङ् ऋतः' ( ७।४।२७ ) इत्यत ऋत इति च। तदाह—अर्तेः संयोगादेर्श्च्यादि। यङि लकि चेति—चकारेणैतत् समुच्चीयत इति भावः। यत्तुएतदंशः—तत्त्वबोधिन्यां न दृश्यते। यकार परेरेफस्येति—यकारः परो यस्मादिति विग्रहः। न द्वित्व—निषेध इति। 'न न्द्राः—' ( २४४२ ) इत्यनेनेति भावः। ननु कुत इयं व्यवस्थेत्यत्राह—भाष्योदाहरणादिति। 'धातोरेकाचो हलादेः—' इति सूत्रभाष्ये इत्यर्थः। तथाच ऋ यङ् इति स्थितेऽजादेर्द्वितीयस्येति गुणरपराभ्यां विहिताभ्यामनन्तरम् 'अर्य' इति जाते रेफस्यैव यकारसहितस्य द्वित्वं न तु यकारमात्रस्य। एवञ्च हलादिशेषेण यकारनिवृत्तावभ्यासेऽकारसहितो रेफस्तिष्ठति ( अर्य ); तस्य रेफस्याचो 'दीर्घोऽकितः' ( २६३२ ) इति दीर्घे कृते 'अरार्य' इति जाते शप्तङौ। अरारितेति— पूर्ववत् अरार्य इति जाते उत्तरखण्डे 'यस्य हल' इति अलोपे च कृते तासि रूपम्। इट्। अशाशितेत्यत्र अश इत्यस्य 'श्न' इत्यस्य द्वित्वं प्रायेण प्राग्वत्। ऊर्णोनूयत इति—ऊर्णु+यङ् इति स्थिते नु-शब्दस्य द्वित्वम्। तस्याभ्यासेऽनेन गुणः। उत्तरे खण्डे तु 'अकृत्सार्व—'

( २२८५ ) इति दीर्घः। वेभिद्यतेइति। भिद् इत्यस्य द्विर्वचनेन अभ्यासगुणे च रूपम्। अल्लोपस्येति—वेभिदितेवेति बोध्यम्। नोपधागुण इति। 'यस्य हलः' 'अतो लोपः' इति यकाराकारयोर्लोपे वेभिद् इति स्थिते भिद् इत्यस्य लघूपधगुणोऽस्तीति भावः।

२६३४। नित्यं कौटिल्ये गतौ ॥३।१।२३॥

दी—। गत्यर्थात् कौटिल्ये एव यङ् स्यान्न तु क्रिया—समभिहारे। कुटिलं व्रजति वाव्रज्यते।

यङ् is attached to a root expressing movement in the sense of circuity ( or going in a zigzag manner ) only, but no in the sense of frequency or excess. Thus वाव्रज्यते ( He moves in a circuitous manner ).

मित—। नित्यमिति। नित्यशब्द एवार्थकः कौटिल्यशब्दात् परो द्रष्टव्यः। तदाह—गत्यर्थात् कौटिल्ये एवेति। न त्विति। नित्यशब्दादेवैतद्व्यवच्छेद इति। 'धातोरेकाचः—' ( ३।१।२२ ) इति पूर्वं सूत्रम्। नागेशस्तु 'तस्माद् गत्यर्थेभ्यः क्रियासमभिहारे यङ् भवत्येव' इति निगमय्य 'अतएव अटिरर्तेश्च गत्यर्थकात् क्रियासमभिहारे यङुदाहृतो भाष्ये' इत्याह।

२६३५। लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥ ३।१।२४॥

दी—। एभ्यो धात्वर्थगर्हायामेव यङ् स्यात्। गर्हितं लुम्पति=लोलुप्यते। सासद्यते।

यङ् is attached to these ( eight ) roots only when they express an indecent or bad sense. Thus लोलुप्यते—he tempts indecently ( seduces ).

मित—। लुपसेदिति—। भावो धात्वर्थः। पूर्वसूत्रान्नित्यमित्यनुवर्तते। तच्चावधारणार्थम्। तदाह—धात्वर्थगर्हायामेवेति। लोलुप्यते—लुप विमोहने

( दिवादिः )। 'गुणोयङ्—लुको'रिति अभ्यासस्येको गुणः। लासयत इति। 'दीर्घोऽकित' इत्यभ्यासदीर्घः।

२६३६। चरफलोश्च ॥७।४।८७॥

दी—। अनयोरभ्यासस्यातो नुक् स्याद् यङ् यङ्-लुकोः। नुगित्यनेनानुस्वारो लक्ष्यते। 'स च पदान्त—वद्वाच्यः' (वार्तिक) 'वा पदान्तस्य' (१२५) इति यथा स्यात्।

The अत् or अ of the अभ्यास of those two roots (चर + फल) is replaced by the aug. नुक् when यङ् or यङ्लुक follows. नुक् drops उक् so it is treated as an अनुस्वार which, again, by the वार्तिक 'सच—' is treated as final in a पद so as to make it optional by the rule 'वा पदान्तस्य' ( 125 ).

मित—। चरफलोश्चेति—। 'नुक् अतोऽनु—' ( ७।४।८५ ) इत्यतो नुगिति अत इति चानुवर्तते। 'अत लोपः—' (७।४।५०) इत्यतोऽभ्यासस्येति 'गुणो यङ्लुकोः' ( ७।४।८२ ) इत्यतो यङ्लुकोरिति च। तदाह—अनयोरित्यादि। अनुस्वारो लक्ष्यते इति—उगदर्शनेन नकारमात्रावशेषादिति भावः। सचेति। वार्तिकमिदम्। स चेत्यनेनानुस्वारस्य परामर्शः। पदान्तवद्वाच्यत्वस्य फलमाह—वा पदान्तस्येति। अनेन परसवर्ण—विकल्पो यथा स्यादिति भावः। तथाचैवं रूपद्वयं भवेदित्याशयेनाह—

२६३७। उत् परस्यातः ॥७।४।८८॥

दी—। चरफलोरभ्यासात् परस्यात उत् स्याद्, यङ् यङ्—लुकोः। 'हलि च' ( ३५५ ) इति दीर्घः। चञ्चूर्यते—चंचूर्यते। पम्फुल्यते—पंफुल्यते।

Eng.—Easy.

मित—। चदिति। पूर्ववदनुवृत्तिर्यथायथं बोध्या। परस्मैपदेन पञ्चम्यन्तमाक्षिप्यते। तदाह—चरफलोरभ्यासादिति, अन्यत् स्पष्टं मूले। चञ्चूर्यते इत्यादिषु भाव—गर्हायां प्रयोग इति न विस्मर्त्तव्यमित्यलम्।

२६३८। जपजभदहदशभञ्जपशां च ॥७।४।८६॥

टी—। एषामभ्यासस्य नुक् स्याद् यङ् यङ्लुकोः। गर्हितं जपति=जञ्जप्यते इत्यादि।

Eng.—Easy.

मित—। जपेति। एषामिति। पूर्ववदनुवृत्तिः। जञ्जप्यत इति नुक्सत्त्वेन कित्त्वात् 'दीर्घोऽकितः' (१६३२) इत्यस्याप्रवृत्त्या न दीर्घ इति भावः। इत्यादीति। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। बम्भज्यते। पम्पश्यते—पम्पस्यते। पशधातुर्गत्यर्थः। स च दन्त्यान्तः सौत्रश्चेति माधवः। तालव्यान्त इति काशिका।

२६३९। ग्रो यङि ॥८।२।२०॥

टी—। गिरिति रेफस्य लत्वं स्याद् यङि। गर्हितं गिलति जेगिल्यते। 'घुमास्था—' (५४६२) इतीत्त्वम्। गुणः। देदीयते। पेपीयते। सेष्मीयते। 'विभाषा श्वेः' (२४२०)। शोशूयते। शेश्वीयते। 'यङि च' (२६३२)। सास्मर्य्यते। 'रीङृतः' (१२३४)। चेक्रीयते। सुट्। संचेस्क्रीयते।

Easy. जेगिल्यते—गुण of the अभ्यास by 'गुणः—'(2630). देदीयते—दा+यङ्=दीय by 'घुमास्था—' (2662)=दी दी य, then अभ्यास गुण; similarly पेपीयते। शोशूयते—first सम्प्रसारण then द्वित्व; next गुण of the अभ्यास and दीर्घ of the अङ्ग by 'अकृत्—' (2298). शेश्वीयते—द्वित्व of श्वि, then as before. सास्मर्यते—स्मृ+यङ्=स्मर्य by 'यङि च'=स्मर् स्मर् य=सास्मर्य by 'दीर्घोऽकितः' (2632), then शप् etc. चेक्रीयते—(डुकृञ् करणे)

क्ष+यङ्=क्षीय by 'रीङ्—' (1234)=क्षीक्षीय=क्षी क्षीय=चेक्षीय by 'कुहोश्चुः' and 'गुणः—' (2630). सञ्चेस्क्रीयते—(embellishes or collects again and again) सम्—क्ष+यङ्=सम्—क्री य=सम्—क्री क्री य =सम्—क्री क्रि य by सुट् ('सम्परिभ्यां करोतौ भूषणे; समवाये च'—2550—2551) then सञ्चेस्क्रीयते।

मित—। यो यङीति। यङति यङ इत्यस्य—'यङ्र्येकवचनं' गिरतेरित्यर्थः। 'ग्रो यङि' (८।२।२०) इत्यतः 'रो लः' इत्यनुवर्तते। तदाह—गिरतेरित्यादि। जेगिल्यते इति—। अभ्यासस्यःचुत्वम्। 'गुणोयङ्लुकोः' (२६३०) इति गुणश्च। इतीत्त्वमिति। ततो द्वित्वमित्यर्थः। सेषीयत इति। धोऽन्त्यकर्मणोत्यस्य सादेशे, 'आदेचः—' (२३७०) इत्यात्त्वं, 'घुमास्था—' इतीत्त्वं च द्वित्वं ततः प्रागवत्। शोशूयत इति—'सम्प्रसारणं तदाश्रयञ्च कार्य्यं बलवदि'ति न्यायेन सम्प्रसारणादनन्तरं द्वित्वम्। अभ्यासगुणः। 'अकृत्—' (२२९८) इति दीर्घः। सम्प्रसारणाभावे तु श्वि इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणे 'अकृत्—' इति दीर्घे च शेश्वीयत इति। सास्मर्यते इति—स्मृ चिन्तायाम् इत्यस्य 'यङि' परतो यङ्श्चेति द्वित्वात् परत्वाद्‌ गुणः। ततः स्मर् इत्यस्य द्वित्वम्। हलादिशेषात्पूर्वं 'दीर्घोऽकितः' (२६३२) इत्यभ्यासदीर्घः। चेक्रीयत इति—। रीङि 'क्री' इति जाते द्वित्वे प्रागवत्। सञ्चेस्क्रीय आह—सुडिति। 'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' (६।१।१३८—१३९) इति सुट्। तस्य च रीङपेक्षया (रीङृतः—७।४।२७) पूर्वत्वात् प्राक् रीङ्। ततो द्वित्वम्। ततः सुट्। न चैवमभ्यासेन व्यवहितत्वात् सुट् न स्यादिति वाच्यम्। 'अडभ्यासव्यवायेऽपि सुट् कात् पूर्वं' इति वार्त्तिकप्रामाण्यादिति तत्त्वबोधिन्यां विस्तरेण प्रतिपादित मित्यलम्।

२६४०। सिचो यङि ॥८।३।११२॥

दी—। सिचः सस्य षो न स्याद्यङि। निसेसिच्यते।

Eng.—Easy.

मित—। सिच इति। 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यधिकृतम्। 'सहेः साडः सः' (८।३।५६) इत्यतः स इति षष्ठ्यन्तमनुवर्त्तते। 'न रपरसृपिसृजि—' (८।३।११०) इत्यतो नेति च। तदाह—सिच स इत्यादि। 'उपसर्गात् सुनोति—', 'स्थादिष्वभ्यासेन—' (२२७०—७७) इत्युभयोरप्ययं निषेधः। यङि किम्—निषिषिच्यति।

२६४१। न कवतेर्यङि ॥७।४।६३॥

दी—। कवतेरभ्यासस्य चुत्वं न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु—चोकूयते।

The prohibition of चुत्व is with reference to 'कुङ् शब्दे' (भ्वादि); but it does not apply in the cases of कु and कुङ् (or कूङ् acc. to कैयट) read in अदादि and तुदादि respectively which give therefore चोकूयते in यङ्।

मित—। न कवतेरिति। 'अत लोपः—' (७।४।५८) इत्यतोऽभ्यासस्येत्यनुवर्त्तते। 'कुहोश्चुः' (७।४।६२) इत्यतश्चुरिति च। तदाह—कवतेरभ्यासस्येत्यादि। कवतेरिति शपा निर्देशस्तेन भ्वादेरेवात्र ग्रहणं न तु आदादिकतौदादिकयोः 'कु—कुङो'रिति ध्वनयन्नाह—कौतिकुवत्योस्त्विति। न च कौटितुरूक्तेऽपि तौदादिकस्य दीर्घान्तत्वात् (कूङ् इति कैयटसम्मतपाठः) 'लुग्विकरणालुग्विकरणयोः—' इति परिभाषया अदादिकस्य च व्यवच्छेदात् शब्विकरणस्यैवात्र निषेधः स्यादिति वाच्यम्। उक्तपाठस्यैव न्याससम्मतत्वादिति दिक्।

२६४२। नीग्वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम् ॥७।४।८४॥

दी—। एषामभ्यासस्य नीगागमः स्याद् यङ्यङ्लुकोः। अकित इत्युक्तेर्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते इत्यादि।

These roots (eight only) are कित् in connection with the aug. नीक्, so their अभ्यास will not be दीर्घ by virtue of the term 'अकितः' in the rule 'दीर्घः—' (2632). नलोप i.e. by the rule 'अनिदिताम्—' (415).

मित—। नीगिति। 'अत्र लोपः—' (७।४।५८) इत्यतोऽभ्यासस्येत्यनुवर्तते। 'गुणो यङ्लुकोः' (७।४।८२) इत्यतो यङ्लुकोरिति च, तदाह—एषामभ्यासस्येत्यादिति। अकितः इत्युक्तेरिति। 'दीर्घोऽकितः' (२६३२) इत्यत्र सूत्र इत्यर्थः। एवञ्च भविष्यतापि नीगागमसंसर्गेण कित्त्वादिति बोध्यम्। नलोप इति। 'अनिदिताम्—' (४१५=६।४।२४) इत्यनेनेति भावः। वनीवच्यत इति। वञ्च+यङ् इति स्थिते द्वित्वे हलादिशेषे अभ्यासे नीक् उत्तरखण्डे नलोपः। एवमन्यत्रापि स्वयं साधनीयम्। इत्यादीति—दनीध्वस्यते। सनीस्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते। यङ्लुकि तु—वनीवञ्चीति। सनीस्रंसीति। दनीध्वंसीतीत्यादि, तत्र ङित्त्वाभावेन नलोपाप्रवृत्तेः।

२६४३। नुगतोऽनुनासिकान्तस्य ॥७।४।८५॥

दी—। अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नुका अनुस्वारो लक्ष्यते इत्युक्तम्। यंयम्यते—यंयम्यते। तपरत्वसामर्थ्यात् भूतपूर्वदीर्घस्यापि न। 'भाम' क्रोधे=बाभाम्यते। 'ये विभाषा' (२३१८)। जाजायते—जञ्जन्यते। 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' (वार्तिक)। जेघ्नीयते। 'हिंसायां' किम्? जङ्घन्यते।

The augment नुक् is added to the final (vowel) of an अभ्यास which results from an अङ्ग (verbal stem) terminating in an अनुनासिक letter—(when यङ् and यङ्लुक् follow).

We have said already ( in 'चरफलोश्च'—2636 ) that by नुक्, अनुस्वार is referred to ( see also the varttika 'यथ—' and the rule 'वा पदान्तस्य'—125). नुक् will not be affixed after such an अकार as has at present, been so ( अ ) but was formerly an आकार, and this we know ( for certain ) on the strength of तपरत्व ( अत् ) here. Thus नुक् will apply where the अकार is natural ( अकृत्रिम ) and not made ( कृत्रिम ). Thus भाम gives बाभाम्यते—the अभ्यास becoming 'ह्रस्वः by ह्रस्वः' ( 2180 ) and then दीर्घ by 'दीर्घोऽकितः' ( 2632 ). 'हन्तेर्हिंसायां—' ( वार्तिक )—easy. जेघ्नीयते—by duplication of घ्नी.

मित—। नुगत इति। 'अङ्गस्य' ( ६।४।१ ) इत्यधिकारसूत्रम्। 'अत लोपः—' ( ७।४।५८ ) इत्यतोऽभ्यासस्येत्यनुवर्तते। 'गुणोयङ्लुकोः' ( ७।४।८२ ) इत्यतो यङ्लुकोरिति च। तत्रानुनासिकान्तस्येति अङ्गस्य विशेषणं तदाह—अनुनासिकान्तस्याङ्गस्येत्यादि। नुकिति। एतत् 'चरफलोश्च' ( २६३६ ) इत्यत्रोक्तम्। यंयम्यते इति पक्षे 'अनुस्वारस्य अनुनासिका यवलाः' इत्युक्तत्वादनुनासिकेन अनुस्वारस्य तुल्यता। नुगत इत्यत्र अदिति त-परो निर्देशः। तादृशनिर्देशस्योपयोगितां दर्शयति तपरत्वसामर्थ्यादिति। भाम क्रोधे इत्यस्य यङि द्वित्वादूर्ध्वमभ्यासे 'ह्रस्वः' ( २१८० ) इत्यनुसारादभ्यासह्रस्वे जातेऽपि नुग् न, तस्य भूतपूर्वदीर्घत्वात्। अतएवात्र तपरत्वसामर्थ्यादकृत्रिम एव अकारो गृह्यते न तु कृत्रिमोऽपीति भावः। बाभाम्यत इति। अभ्यासह्रस्वादनन्तरं 'दीर्घोऽकितः' ( २६३२ ) इति दीर्घः। हन्तेरिति। वार्तिकमिदम्। हन्तेर्हिंसायामेव घ्नीभावो भवति न तु भावगत्यामिति दर्शयति। जङ्घन्यत इति। गर्हितं गच्छतीत्यर्थः। यङीति विषयसप्तमी न तु परसप्तमी तेन प्राग् घ्नी भावे कृते द्वित्वम्। गुणादि प्राग्वत्।

२६४४। रीगृदुपधस्य च ॥७।४।९०॥

दो—। ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद् यङ

यङ्—लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्न णः। नरीनृत्यते। जरीगृह्यते। उभयत्र लत्वम्। चलीक्लृप्यते। 'रीगृत्वत इति वक्तव्यम्' (वार्तिक)। परीपृच्छ्यते। वरीवृश्च्यते।

ऋदुपधस्य etc—easy. वरीवृत्यते—वृत्+यङ्=वृत् वृत् य=वर्त् वृत् य by 'गुणो—' (2630)=व० वृत् य=वरीवृत्य, then शप् etc. Similarly in 'नरीनृत्यते'—no णत्व of नृत् due to its falling under क्षुभ्नादि class (cf. 'क्षुभ्नादिषु च'—792—8. 4. 39). जरीगृह्यते—ग्रह्+यङ् = गृह्+य by 'ग्रहिज्या—' (2412) due to the dictum—'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्'—then द्वित्व etc. In चलीक्लृप्यते there is लत्व both in the अभ्यास and the अङ्ग due to twofold explanation of the rule 'कृपोरोलः' (2350). 'रीगृत्वत—' (वार्तिक)—It has been stated that the अभ्यास of a ऋदयुक्त (and not ऋदुपध) root is affixed with the aug. रीक, when यङ् or यङ्लुक follows; thus according to Katyayana the rule stands 'रीगृत्वतः'; परीपृच्छ्यते etc. by सम्प्र (ग्रहिज्या—') etc. as before.

मित—। रीगिति। अनुवृत्तिः प्राग्वत्। वरीवृत्यत इति। वृत्+यङ् इति स्थिते द्वित्वेऽभ्यासस्य गुणरपरत्वहलादिशेषेषु विहितेषु रीक्। क्षुभ्नादित्वा'दित्या-दीति। 'नृतिर्यङि प्रयोजयति (प्रयुज्यते—?)' इति क्षुभ्नादिगण उक्तत्वादिति बोध्यम्। नरीनृत्यत इति—स्तुवत्। जरीगृह्यते—ग्रह् यङ् इति स्थिते 'सम्प्र-सारणं तदाश्रयञ्च कार्यं बलवदि'त्युक्तम्। 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणे कृते द्वित्वम्। तदेवानुवत्। उभयत्र लत्वमिति। क्लृप्+यङ् इति स्थिते द्वित्वे अभ्यासस्य 'गुणः—' (२६३२) इति गुणे रपरत्वे हलादिशेषे च रीक्। तस्य रीकोऽपि क्लृपधातोरवयवतया 'कृपो रो लः' (२३५०) इत्यस्य च व्याख्यानद्वयमभिन्ना एकेन व्याख्यानेन ('कृपो यो रेफःतस्य लः' स्या'दित्यनेन) लत्वम्। उत्तरखण्डस्य

-तु व्याख्यानान्तरेण ('क्लपि' ऋकारस्यावयवो यो रो रेफसदृशस्तस्य च लकारसदृशः स्यादि'त्यनेन) लत्वमिति विभावनीयम्। रीगृत्वत इति—वार्त्तिकमिदम्। 'रीगृदुपधस्य च' इत्यसूत्रयित्वा 'रीगृत्वतः' इत्येव सूत्रयितव्यमिति भावः। ऋत्वत इति ऋत्शब्दात् मत्वर्थीयो वतुप्—'तसौ मत्वर्थे' (१८९६) इति भसंज्ञकत्वान्न जश्त्वम्; तस्य। तथा ऋकारवतः प्रत्ययकम् अभ्यासस्य रीगागमः इत्यादिरर्थः सम्पद्यते। एवञ्च पृच्छति—इत्यत्रर्दुपधत्वाभावेऽपि नाव्याप्तिरिति वार्त्तिकाभिप्रायः। परीपृच्छ्यते इति। 'ग्रहिज्ये'ति सम्प्रसारणे कृते द्वित्वम्। एवं वरीवृश्च्यत इत्यत्र। अन्यत् प्रागवत्।

२६४५। स्वपिस्यमिव्येञां यङि ॥६।१।१९॥

दी—। सम्प्रसारणं स्याद् यङि। सोषुप्यते। सेसिम्यते। वेवीयते।

Eng.—Easy.

मित—। स्वपीत्यादि। 'ष्यङः सम्प्रसारणम्' (६।१।१३) इत्यतः सम्प्रसारणमित्यनुवर्तते। तेन शेषं पूरयन्नाह—सम्प्रसारणं स्यादिति। सोषुप्यत इति। ञिष्वप् शये इति धातुः। तस्य यङि अनेन सम्प्रसारणे कृते पूर्वरूपे द्वित्वम्। अभ्यासगुणः। षोपदेशत्वात् षत्वम्। सेसिम्यत इति—स्यमु शब्दे इत्यषोपदेशोऽयं धातुः। तस्य सम्प्रसारणात् प्राग्वत्। अषोप—देशत्वान्न षः। वेवीयत इति। वेञ् तन्तुसन्ताने इति धातुः। तस्याप्यनेन सम्प्रसारणे वि+यत् इति स्थिते द्वित्वेऽभ्यासगुणे 'अकृत्—' (२२९८) इति दीर्घे रूपम्।

२६४६। न वशः ॥६।१।२०॥

दी—। वावश्यते।

मित—नेति। सम्प्रसारणं नेत्यर्थः। 'वाशृ पूजानिशामनयो'रित्यस्य यङि कीभावः स्यादित्याह—

२६४७। चायः की ॥६।१।२१॥

दी—। चेकीयते।

मित—। चायः कीति—यङीति शेषः। चेकीयत इति। कीभावे जाते द्वित्वादि।

२६४८। ई घ्राध्मोः ॥७।४।३१॥

दी—। जेघ्रीयते। देध्मीयते।

मित—। ई इति। अनयोर्यङि ईकारोऽन्तादेशः स्यादित्यर्थः। जेघ्रीयत इत्यादि। घ्रीभावे जाते प्राग्वत्। ह्रस्वेकारविधावपि 'अकृत्—' इति दीर्घे सिद्धे 'ई' इति दीर्घोच्चारणम् 'अस्य च्वौ' इत्याद्यर्थमित्याहु—रिति दिक्।

२६४९। अयङ् यि क्ङिति ॥७।४।२२॥

दी—। शीङोऽयङादेशः स्याद् यादौ क्ङिति प्रत्यये परे। शाशय्यते॥ अभ्यासस्य ह्रस्वः। ततो गुणः। डोढौक्यते। तोत्रौक्यते।

इति तिङन्त-यङ्प्रकरणम्॥

The final of शी is replaced by the substitute अयङ् or अय् when a क्ङित् (क—eliding or ङ—eliding) affix beginning with a यकार follows. Thus शी+यङ्=शय यङ्=शयशय-यङ्=शाशय्य by हलादिशेष and 'दीर्घोऽकितः' (2632), then शप् and ते। डोढौक्यते—ढौक् ढौक् य=डुढौक्य by 'ह्रस्वः' (2180)=डोढौक्य by 'गुणो यङ्लुकोः' (2630), then शप् ते। Similarly त्रौक gives तोत्रौक्यते।

Here ends the यङन्त chapter of तिङन्त।

मित—। अयङ्ङिति। 'शीङः सार्वधातुके—' (७।४।२१) इत्यतः शीङ इत्यनुवर्तते। यीति विशेषणम्, तदादिविधिः। तदाह—शीङ् इत्यादि। 'ङिच्च' इति अयङोऽन्तावयवत्वम्। तस्य चाङौ ङितौ। अय् इति तिष्ठति। तदिदं शकि-परेऽन्तरङ्गत्वात् परत्वाच्च अयादेशः। ततः शय इत्यस्य द्वित्वेऽभ्यासदीर्घे रूपम्। डोढौक्यत इत्याद्यर्थमाह—अभ्यासस्य ह्रस्व इति गुण इति च। ढौकृ+यङ् इति स्थिते द्वित्वेऽभ्यासह्रस्वेन डुढौक् य इति जाते गुणो यङ्लुकोरिति गुणः। तोत्रौक्यत इति। त्रौक् इतिढौकवत्।

इति मितभाषिण्यां तिङन्तयङ्प्रकरणम्।

अथ

# तिङन्तयङ्लुक्-प्रकरणम्



२६५०। यङोऽचि च ॥२।४।७४॥

दी—। यङोऽच् प्रत्यये लुक् स्यात्, चकारात्तं विनापि—बहुलं लुक् स्यात्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात् कर्तरि—' (२१५९) इति परस्मैपदम्। 'अनुदात्तङित:—' (२१५७) इति तु न। ङित्त्वस्य प्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्। अतएव 'सुदृषत्-प्रासाद' इत्यत्र 'अत्वसन्तस्य—' (४२५) इति दीर्घो न। येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न। 'अनुदात्तङित:—' (२१५७) इत्यनुबन्धनिर्देशात्। तत्र च 'श्तिपा शपा—' (परि—) इति निषेधात्। अतएव श्यन्नादयो न। गणेन निर्देशात्। किंतु शबेव। 'चर्करीतं च' (गणसूत्र) इत्यदादौ पाठाच्छपोलुक्।

The elision of यङ् takes place when the affix (1) अच् follows, and by the force of the चकार ( in the rule ), the elision ( of यङ् ) is effected in an irregular or optional way even when that ( affix अच् ) does not follow. Thus the elision of यङ् or यङ्लुक् is of two kinds—नैमित्तिक or conditional and अनैमित्तिक or unconditional or absolute. It ( यङ्लुक् ) falls under the former division when अच् ( the affix ) follows, and under the latter when any affix but अच् steps behind. Thus it ( यङ्लुक् ) being अनैमित्तिक ( when तिप् etc. follow ), is treated as an अन्तरङ्ग ( injunction—विधि ) and ( therefore ) receives the prompt execution. ( Thus तिप् etc following, यङ् elides first and then duplication takes effect, although the द्वित्वविधायक सूत्र 'एकाचः—' ( 6. 1. 1. ) is posterior (पर) to 'यङोऽचि च—' 2.4.74; but the affix अच् following, the elision of यङ् is बहिरङ्ग and so द्वित्व takes effect first and then the elision of यङ् ). Then the whole being यङन्त by प्रत्ययलक्षण ( cf.—'प्रत्ययलोपे प्रत्ययलक्षणम्' — 262—1. 1. 62 ) gets द्वित्व by 'सन्यङोः' ( 2395 ), for the probibition 'न लुमताङ्गस्य' ( 263—1. 1. 63 ) does not apply here in as much as it forbids an अङ्गकार्य—due only by a लुमान् ( having the syllable लु ) निमित्त, and not by a लुमान् कार्य । The यङ्लुगन्त base is not the निमित्त but the कार्यं of द्वित्व ( see चर्करीतुविषति etc. ante ). Thus द्वित्व operates and so अभ्यासकार्य comes in. धातुत्वात्—i. e. by 'सनाद्यन्ताः—' (2304)

---

(1) अच् is here explained to be the affix and not the प्रत्याहार ।

due to प्रत्ययलक्षण। (1)। यङ्लुगन्त roots become परस्मैपदी by 'शेषात्—' (2159) and not आत्मनेपदी by 'अनुदात्तङित:—' (2157) due to ङित्त्व of यङ्. For प्रत्ययलक्षण (i. e., the force or sameness of an affix even after its elision) does not apply here (in यङ्लुगन्त) due to the common-ness or similarity of ङित्त्व, as it is found to exist both in the affixes and elsewhere (in प्रातिपादिक) e. g. यङ्, ईयङ् (अतेरीयङ्) and चित्रङ् (नमवरिवचित्रङ:—2675). And this ङित्त्व or any other प्रत्ययलक्षण takes effect only where the indicatory (अनुबन्ध) of the प्रत्यय is seen to exist in that particular प्रत्यय alone and not anywhere else. Thus the ङित्त्व or ङ—eliding-ness of the यङ्लुगन्त roots is not taken here into consideration. And this is not an idle creation on our part for we discover that in instances take 'सुदृषत् प्रासाद:' or—'a building wherein the stones are very fine,' the प्रतिपादिक दृषत् (or दृषत्) drops the affix जस् (शोभना: दृषद: यस्मिन् स:) which (जस्) ends in अस् and yet दृषत् does not turn दृषात् or दृषान् (दीर्घपथ) by 'अत्व-सन्तस्य—' (425) in as much asthere are crude bases (प्रतिपद्दिकs) also ending, like जस्, शस् etc, in अस् e. g. वेधस्, पयस् etc. Thus as the portion अस् being in common with affixes as well as crude bases, the दीर्घविधि does not apply, so the indicatory ङ् being in common with affixes (यङ्) and crude bases (चित्रङ्), the आत्मनेपदविधि due by 'अनुदात्तङित:—' (2157) will not hold good in the cases of यङ्लुगन्त roots. Moreover,

(1) For यङ्लुक has nothing to do with अङ्गकार्य and hence 'न लुमताङ्गस्य' (263) does not apply.

the आत्मनेपद terminations will not come in after the अनुदात्त-eliding roots like स्पर्ध etc and after the ङ-eliding roots like शीङ् etc, from the fact of अनुबन्धनिर्दिष्ट or being dealt with the indicatories attached to them, for that which is enunciated or expressed with अनुबन्धs attached to it will cease to have the particular operations due to those अनुबन्धs in यङ्लुक्, cf. the prohibition :—

"श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥"
( परिभाषा—explained in भ्वादि )

Thus in यङ्लुक्, श्यन्, श्नम्, etc are not taken into con-deration as they are expressed with गणs—दिवादिभ्यः श्यन्, रुधादिभ्यः श्नम् etc. Hence शप् only ( by कर्तरि शप् ) is attached to roots here and this शप् disappears due to the गणसूत्र—'चर्करीतम् च' which has been read (at the end of ) the अदादि class.

मित—। अथ यङ्लुक्प्रक्रियां दर्शयिष्यन् तद्विषयकं 'यङोऽचि चे'ति सूत्रमवतारयन् व्याचष्टे—यङोच्प्रत्यय इति। सूत्रेऽचीति न प्रत्याहारः किन्तु प्रत्यय एव, व्याख्यानात् ; सूत्रस्थचकारयाशमाह—चकारात्तं विनापि इति। अच-प्रत्ययेऽसत्यपीत्यर्थः। बहुलमिति—'बहुलं छन्दसि' ( २।४।७३ ) इत्यतो बहुलमित्येवानुवर्त्यत इति भावः। एतच्च काशिकायामपि स्पष्टम्। लुक् स्यादिति। 'ण्यक्षत्रियार्ष—' ( ४।४।५८ ) इत्यतस्तदनुवृत्तेः। बहुलग्रहणात् क्वचित् सत्यप्यच्-प्रत्यये लुग्विकल्पः। यथा—लोलूयः ( लूञ् छेदने + यङ् + अच् ) इत्यलुकि, लोलुवः ( लू + यङ् लुक् + अच्, उवङ् ) इति लुकि च सिद्धम्। तथा अच्-प्रत्ययाभावेऽपि बहुलंलुक्स्याद् यथा—बोभूयते इत्यलुकि, बोभवीति इति लुकि च। अनैमित्तिकोऽयमिति। अयमिति लुक्। स च अजभिन्न प्रत्ययेपरतोऽनैमित्तिको

भवति निमित्ताभावात्। यङ्ग्रहणेन विशिष्टप्रत्ययहेतुत्वाभावात्। अचि परे तु नैमित्तिक एवायं लुक्। तत्र नैमित्तिकस्य निमित्तसत्त्वेन प्रवृत्तेर्बहिरङ्गत्वम्। अनैमित्तिकस्य तु निमित्ताद्यनापेक्षेऽपि प्रवृत्तेरन्तरङ्गत्वं, लाघवात्। ततश्च 'पूर्वपर-नित्यान्तरङ्गापवादानाम्—' इति न्यायेनादौ प्रागेव 'लुक्'लोपः यङः इति शेषः। तदाह—अनैमित्तिकत्वादिति—। प्रत्ययलक्षणेनेति—'प्रत्ययलोपे प्रत्ययलक्षणम्' (२६२) इत्यनेनेत्यर्थः। यङन्तत्वाद् द्वित्वमिति—'सन्यङोः' (२३९५) इत्यनेनेतिभावः। अभ्यासकार्यमिति। 'गुणो यङ्लुकोः' (२६३०) इत्यादिनेति शेषः। धातुत्वादिति—'सनाद्यन्ताः—' (२३०४) इत्यनुसारात्। ननु तत्र यङन्तस्यैव धातुत्वं प्रतिपादितम् न तु यङ्लुगन्तस्यापि। तथाचोक्तम्—'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप् णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥' इति। यङोऽत्र (यङ्लुकि) लुका लुप्तत्वेन 'न लुमताङ्गस्य' (२६३) इति निषेधात् प्रत्ययलक्षणाप्रवृत्तेरितिचेत्? सत्यम्। अत्र लुकालुप्तेऽपि यङन्तस्य धातोरङ्गकार्यमधिकृत्य—निमित्तत्वं नास्त्येव। स्वयमनुभूतकार्यित्वादिति 'न लुमतेति' निषेधोऽत्र न प्रवर्त्तत इति विभाव्यम्। यङ्लुगन्तधातवस्तावत् परस्मैपदिन एव दृश्यन्ते न त्वात्मनेपदिनोऽपीत्येतत्प्रतिपिपादयिषन्नाह—शेषात् कर्त्तरीत्यादि। अनुदात्तङित इति तु नेति—इत्यस्मात् प्राप्तमात्मनेपदं तु नेति अभिप्रायः। तत्र युक्तिमाह—ङित्त्वञ्चेति। यङोऽन्यतरस्य वा प्रत्ययस्य ङकारलोपलक्ष्येत्यर्थः। प्रत्ययाप्रत्ययसाधारणत्वेन—यथा हि प्रत्ययङितो दृश्यन्ते तथा प्रत्ययव्यतिरिक्ता अपि। यङ्, ईयङ् (ऋतेरीयङ्) इत्यादौ प्रत्यये ङित्त्वम्। चिरङ् (नमोवरिवश्चित्रङः इत्यादावप्रत्ययेऽपि ङित्त्वम्)। ततश्च ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वम्। यश्च ङित्त्वादिरनुबन्धः प्रत्ययाप्रत्ययसाधारणो भवति तत्र नास्ति प्रत्ययलक्षणं व्यभिचारात्। ततश्चात्र यङ्लुगन्तधातुषु ङित्वविषये 'प्रत्ययलोपे—' इति न प्रवर्त्तते। ननु तर्हि 'प्रत्ययलोपे—' इत्यत्र विहितं प्रत्ययलक्षणं किंव्यर्थं नेत्याह—यत्तद्वीति। असाधारणमिति। अप्रत्ययनिर्विषयमित्यर्थः। न तु पूर्ववत् प्रत्ययाप्रत्ययासाधारणम्—यत्रानुबन्धाः प्रत्ययाप्रत्यय—मात्रगोचरा न तु तदितरविषयावगाहिन इति भावः। तदिति—ङित्त्वादि प्रत्ययलक्षणम्।

ननु किमयमभिनवः पन्था भवतापरिकल्पित उतास्य किञ्चिद्दर्शनमित्याशङ्क्याह्युक्तिं दार्ष्टान्तिकेन योजयति—अत एवेति। सुदृषत्प्रासाद इति। भाष्ये तु सुदृषद्ब्राह्मण इति दृश्यते। शोभनाः दृषदः अस्येति बहुव्रीहौ 'दृषदः' इति जसन्तस्य 'सुपो धातुप्रातिपदिकयो'रिति लोपे 'सुदृषत्' इति भवति। तादृशः प्रासादः इत्युत्तरेण समासः। तत्र 'प्रत्ययलोपे—' इति असन्त-जस्-प्रत्ययस्य लोपेऽपि प्रत्ययलक्षणमाश्रित्य 'अत्वसन्तस्य—' इति सूत्रेण 'सुदृषान्' इत्यत्र दीर्घो न भवति। यतोऽस् इत्यंशो न केवलं जश्शसभावे च दृश्यते किन्त्वन्यत्र वेधस्पयसित्यादौ प्रातिपदिकेऽपि। ततश्चायमनुबन्धो न असाधारणः किन्तु प्रत्ययाप्रत्यय—साधारण एव। अतश्चात्र जस् लोपात्पूर्वम् असन्तोऽयमिति नास्ति व्यवहारः। ततश्च दीर्घाप्रवृत्तिः। एवमिहापि ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेर्नास्ति ङिदयं धातुरिति व्यवहारः। ततश्च यङ्लुगन्तात् परस्मैपदमेव भवति नात्मनेपदमिति सिद्धम्। नन्वेवमपि न सम्यक्—तथा च स्पर्धादयोऽनुदात्तत्वेन शीङादयश्च ङित्त्वेनानुशिष्टाः। ततश्चैषां तत्तदनुबन्धसामर्थ्यात् 'अनुदात्तङित—' (२१५७) इत्यात्मनेपदं दुर्वारमेवेत्यत आह—इत्यनुबन्धनिर्देशात्। श्तिपा शपेति निषेधाच्चेति चेति। अयं भावः—ये तावद् धातवोऽनुबन्धेन निर्दिष्टास्तेषां तत्तदनुबन्धप्रयुक्तं कार्यं यङ्लुकि न प्रवर्तते इत्येतत्—श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत एकाज् ग्रहणं चेव पर्यतानि न यङ्लुकीत्यस्य व्याख्यानावसरे प्राग् (भ्वादौ) विशदीकृतमित्यलम्। श्यनादयो नेति। यङ्लुगन्तेभ्यः श्यन् श्नम् इत्यादयो विकरणा न प्रयुज्यन्त इत्यर्थः, दिवादिभ्यः श्यन्, रुधादिभ्यः श्नम् इत्यादिना। शबेवेति। 'कर्तरि शप्' इत्यस्मात् प्राप्त इति यावत्। तस्य श्तिपा शपेति निषेधाविषयत्वादिति भावः। चर्करीतं चेति—गणसूत्रमिदम्। व्याख्यातञ्च—'यङ्लुगन्तमदादौ बोध्य'मिति। एवञ्चादादिकत्वात् 'अदिप्रभृतिभ्यः शपः' इत्युक्तदिशा यङ्लुगन्तादपि शपो लुक् स्यात्। एवञ्च भूधातोर्यङि, तस्य लुकि, ततो द्वित्वाभ्यासकार्यादिना बोभू इति जाते तिपि शपो लुकि—बोभू ति इति स्थिते आह—

२६५२ । यङो वा ॥७।३।९४॥

दी— । यङन्तात् परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । 'भूसुवोः—' ( २२२४ ) इति गुणनिषेधो यङ्लुकि भाषायां न । '—बोभूतु—तेतिक्ते—( ३५९६ )' इति छन्दसि निपातनात् । अतएव यङ्—लुग् भाषायामपि सिद्धः न च यङ्लुक्यप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् । 'प्रकृति-ग्रहणे यङ्लुगन्तस्यापि ग्रहणात्' (परि— ) । 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात् । बोभवीति—बोभोति । बोभूतः । बोभुवति । बोभवाञ्चकार । बोभविता । अबोभवीत् —अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । 'गातिस्था—' ( २२२३ ) इति सिचो लुक् । 'यङो वा' ( २६५१ ) इतीट्पक्षे गुणं बाधित्वा नित्यत्वादुक् । अबोभूवीत्—अबोभोत् । अबोभूताम् । अभ्यस्ताश्रयो जुस् । नित्यत्वादुवुक् = अबोभूवुः । अबोभविष्यदित्यादि ॥ पास्पर्द्धीति—पास्पर्द्धि । पास्पर्धः । पास्पर्धति । पास्पर्त्सि । 'हुझल्भ्योर्हेर्धिः' ( २४२५ )—पास्पर्धि । लङ् = अपास्पर्त्— अपास्पर्द् । सिपि 'दश्च' (२४६८) इति रुत्वपक्षे 'रोरि' (१७३) । अपास्पाः ॥ जागाढि । जागाधीति । जागाद्धि । अजागात् । सिपि रुत्वपक्षे—अजागाः ॥ नाथृ = नानात्ति । नानात्तः । दध = दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादधुः । अदाधः— अदाधत् । लुङि = अदादाधीत्—अदादधीत् ॥ चोस्कुन्दीति— चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः ॥

मोमुदीति—मोमोत्ति। मोमोदाञ्चकार। मोमोदिता। अमोमुदीत्—अमोमोत्। अमोमुत्ताम्। अमोमुदुः। अमोमुदीः। अमोमोः—अमोमोत्। लुङि गुणः—अमोमोदीत्॥ चोकूर्ति—चोकूर्दीति। लङ्। तिप्=अचोकूर्त्। अचोकूर्दीत्। सिप्पक्षे—अचोकूः॥ अचोखूः॥ अजोगूः॥ वनीवञ्चीति—वनीवङ्क्ति। वनीवक्तः। वनीवचति। अवनीवञ्चीत्। अवनीवन्। जङ्गमीति—जङ्गन्ति। 'अनुदात्तोपदेश—' (२४२८) इत्यनुनासिकलोपः। जङ्गतः। जङ्ग्मति। 'म्वोश्च' (२३०८)। जङ्गन्मि। जङ्गन्वः। एकाग्रजङ्गणेनोत्रत्वान्नेण्निषेधः। जङ्गमिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्। जङ्गहि। 'मो नो धातोः' (३४१)—अजङ्गन्। अनुबन्धनिर्देशान्न चलेरङ्। 'ह्मयन्त—' (२२९८) इति न वृद्धिः अजङ्गमीत्। अजङ्गमिष्टाम्। हन्तेर्यङ्लुक्। 'अभ्यासाच्च' (२४३०) इति कुत्वं यद्यपि 'होहन्तेः—' (३५८) इत्यतो 'हन्ते'रित्यनुवर्त्य विहितं, तथापि यङ्लुकि भवत्येवेति न्यासकारः। 'श्तिपा शपा—' (परि—) इति निषेधस्त्वनित्यः। 'गुणो यङ्लुकोः' (२६३०) इति सामान्यापेक्षज्ञापकादिति भावः। जङ्घनीति। जङ्घन्ति। जङ्घतः। जङ्घ्नति। जङ्घनिता। श्तिपानिर्देशाज्जादेशो न। जङ्घहि। अजङ्घनीत्—अजङ्घन्। जङ्घन्यात्। आशिषि तु=वध्यात्। अवधीत्। अवधिष्टाम् इत्यादि। वधादेशस्य द्वित्वं तु न भवति। स्थानिवत्त्वेन 'अनभ्यासस्य' इति निषेधात्। तद्धि समानाधिकरणं धातोर्वि शे-

षणम्। बहुव्रीहिबलात्। आङ्पूर्वात्तु 'आङो यमहन' (२६९५) इत्यात्मनेपदम्। आजङ्घते इत्यादि। 'तपरस्य—' (२७२७) इति तपरत्वान्न गुणः। 'हलि च' (३५४) इति दीर्घस्तु स्यादेव। तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्। चञ्चुरोति—चञ्चूर्ति। चञ्चूर्तः। चञ्चुरति। अचञ्चुरोत्—अचञ्चूः॥ चङ्खनोति—चङ्खन्ति। 'जनसन—' (२५०४) इत्यात्त्वम्। चङ्खातः। 'गमहन—' (२३६२) इत्युपधालोपः। चङ्ख्नति। चङ्खाहि। चङ्खनानि। अचङ्खनीत्—अचङ्खन्। अचङ्खाताम। अचङ्खनुः। 'ये विभाषा' (२३१९)। चङ्खायात्—चङ्खन्यात्। अचङ्खनीत्—अचङ्खानीत्। 'उतो वृद्धिः—' (२४४३) इत्यत्र 'नाभ्यस्तस्य' इत्यनुवृत्तेरुतो वृद्धिर्न। योयोति—योयवीति। अयोयोत्—अयोयवीत्। योयुयात्। आशिषि दीर्घः। योयूयात्। अयोयावीत्। नोनोति—नोनवीति। जाहाति—जाहेति। 'ई हल्यघोः' (२४९७)। जाहीतः। इह 'जहातेश्च' (२४९८), 'आ च हौ' (२४९९) 'लोपो यि' (२५००), 'घुमास्था—' (२४६२), 'एर्लिङि' (२३७४) इत्येते पञ्चापि न भवन्ति, श्तिपा निर्देशात्। जाहति। जाहासि—जाहेषि। जाहीथः। जाहीथ। जाहीहि। अजाहात्। अजाहेत्। अजाहीताम्। अजाहुः। जाहीयात्। आशिषि जाहायात्। अजाहासीत्। अजाहासिष्टाम्। अजाहिष्यत्। लुकः लुप्ते प्रत्ययलक्षणाभावात् 'स्वपिस्यमि—' इत्युत्त्वं न। 'रुदादिभ्यः—' (२४७४) इति गण-

निर्दिष्टत्वादिट् न'—सास्वपीति—सास्वप्ति। सास्वप्तः। सास्वपति। असास्वपीत्—असास्वप्। सास्वप्यात्। आशिषि तु 'वचिस्वपि—' (२४०९) इतुग्रत्त्वम्। सासुप्यात्। असास्वापीत्, असास्वपीत्।

The augment ईट् is optionally prefixed to a सार्वधातुक affix which is पित् or प् eliding and at the same time हलादि or having a हल् at the outset when the said सार्वधातुक follows a यङन्त i. e. यङ्लुगन्त root. The prohibition of गुण, by the rule 'भूसुवोः—' (2224), does not apply to a यङ्लुगन्त root so far as classical language is concerned for the rule 'दाधर्ति—दर्धर्ति—दर्धर्षि—बोभूतु—तेतिक्ते—'teaches that the form 'बोभूतु' will undergo the prohibition of गुण in vedic language (only). Thereby we come to learn that यङ्लुक is sanctioned ( to be used ) in भाषा or classical sanskrit also. For. from the treatment of Panini ( shown above ), it is easy to see that 'भूसुवोः—' directs गुणनिषेध to यङ्लुगन्त roots concerned with छन्दः or वेद and not to those connected with भाषा also. If so, then there was no need of including 'बोभूतु' the यङ्लुगन्त लोट् form of भू in the list दाधर्ति etc, which ends in छन्दसि. Thus 'छन्दसि' suggests that यङ्लुक् is valid in भाषा or secular sanskrit also. न च etc.—Here it cannot be rejoined that, as the rule 'भूसुवोः—' ( 2224 ) prohibits गुण to भू ( primitive form ) it cannot at the same time extend the गुणनिषेध to बोभू ( यङ्लुगन्त form ) also, and it is for this reason that Painni reads 'बोभूतु' in the list दाधर्ति—दर्धर्ति etc. so as to show that the यङ्लु-

न्त form 'बोभू' may have गुणनिषेध by निपातन,—(such a rejoinder fails) because the परिभाषा 'प्रकृतिग्रहणे (or ग्रहणेन) यङ्लुगन्तस्यापि ग्रहणम्' suggests that what is enjoined for or forbidden to भू is also enjoined for or forbidden to बोभू—its यङ्लुगन्त form also. Also because, it has been concluded that, the duplication occurring in the sixth chapter ('एकाचो द्वे प्रथमस्य'—6.1.1.) is nothing but the twice application or placing side by side of the same thing. And the conclusion extends to 'सन्यङोः' (6. 1. 9) also. Thus (also) it is proved that the duplication effected in सन्, यङ् or यङ्लुक् does not render the root thus derived hetero-geneous to the original or primitive one. It is therefore, established that यङ्लुक् is valid in Bhasha also. Thus 'यङो वा' (2651) applies to बोभू and we have बोभवीति (ईट्गुण)—बोभोति (without ईट्)—गुण being due by 'भूसुवोः—' (2224); बोभूतः no guna due to ङित्त्व of तस्—cf. 'सार्वधातुकमपित्' । बोभुवति—because अन्त is replaced by अत्, cp. 'अदभ्यस्तात्' (2479), and गुण being out of place उवङ् comes in by 'अचिश्नु—' (271). बोभवाञ्चकार—आम् by 'कास्प्रत्ययादाम्—' (2306). अबोभवीत्—अबोभोत् (लङ् form due to option of ईट्) अबोभवुः—by 'सिजभ्यस्त—' (2226). अबोभूवीत् (लुङ् form with ईट्) सिच् elides by 'गातिस्था—' (2223) and when ईट् comes in by 'यङो वा' (2651), गुण is barred by वुक् ('भुवो वुग् लुङ्लिटोः'—2174) from the fact of its being नित्य or persistent. अबोभोत्—without ईट् etc. अबोभूवुः (बोभू+लुङ् झि)—' (2226) then being नित्य—वुक् comes in. In लृङ्=अबोभविष्यत् etc. पास्पर्धीति—पास्पर्द्धि—the root is स्पर्ध to challenge which becomes पास्पर्ध् in con. with यङ् by

'सन्यङोः—' ( 2295 ) 'शर्पूर्वाः खयः', ( 2259 ) and 'दीर्घोऽकितः' (2632) ; then ईट् in the former case. The तिप् in the latter case is replaced by धि by 'झषस्तथोर्धोऽधः' ( 2280 ) and the ध् of पस्पर्ध् becomes द् by 'झलांजश्—'। पास्पर्धैति—by 'अदभ्यास्तात्' ( 2419 ). पास्पर्त्सि—by 'खरि च' ( 121 ). पास्पर्धि—ध elides optionally by 'झरोझरि—' ( 71 ). अपास्पर्त्—द् by 'वाऽवसाने' ( 206 )etc. जागाद्धि—the root is 'गाधृप्रतिष्ठालिप्सयोर्ग्रन्थे च' as in पास्पर्द्धि ; जाघात्सि—ग is replaced by घ by 'एकाचो बशो भष्—' ( 326 ) and ध् by त् by 'खरि च' ( 121 ). अजाघात्—अजागाधीत् ( लङ् )—घ by एकाच:—etc. त् by खरि च। नानाद्धि— by 'खरि च' ( 121 ). दादद्धि—दीर्घ by 'दीर्घोऽकितः'—then like पास्पर्द्धि. अदाधत्—alt. of अदादधीत्. अदादध्+तिप्= अदादध्त् by 'इतश्च' ( 2207 ) = अदादध् by 'हल्ङ्याब्भ्यः—' ( 252 ) = अदाधध् by 'एकाचो—' = अदाधत् by 'वाऽवसाने' ( 206 ). अदाधुः etc.—see ante. अदादाधीत्—अदादधीत्—option of वृद्धि by 'अतो हलादेः—' (2284). चोस्कुन्दीति—चोस्कुन्ति of स्कुदि or स्कुन्द् आप्रवणे ( to prepare to rise ) Here नुम् ( न् ) being the result of इदित्, 'अनिदिताम—' ( 415 ) does not apply. चोस्कुन्ति—द् elides by 'झरोझरि—' ( 71 ). अचोस्कुन् ( चोस्कुन्द्+लङ् तिप् ) द् elides as before and त् by 'हल्ङ्याब्भ्यः—' ( 282 ). मोमुदीति—मोमोत्ति—the root is मुद to express delight. No guna of the उपधा in the former by 'नाभ्यस्तस्याचि पिति सार्वधातुके' ( 2503 )। लुकि गुण i. e. due to श्लु and therefore the prohibition 'नाभ्यस्तस्याचि—' does not apply. चोकूर्ति etc. कुर्द to play—दीर्घ by 'हलि च' ( 354 ). अचोखुः—खुर्द यङ्लुक् सिप् ( लङ् )। अजोगूः—of गुर्द as before. वनीवञ्चीति—The root is वञ्च to go. It gets यङ् in the sense of 'नित्यं कौटिल्ये—' (2634). After द्वित्व and अभ्यासकार्य,

the aug. नीक् comes in by 'नीग्वञ्चु—' ( 2642 ). The अभ्यास does not get दीर्घ for 'दीर्घोऽकितः' ( 2632 ) does not apply. In the portion—वञ्चीति there is no elision of the नकार by 'अनिदिताम्—' ( 415 ) in as much as यङ् elides through the injunction of लुक् ( लुग्विधि ) and also because तिप् is not ङित्. Optional ईट् as before. वनीवङ्क्ति—च is changed into क by 'चोः कुः' (378 ) and the preceding न is then changed into ङ by 'अनुस्वारस्य ययि—'( 124 ). वनीवक्तः—elision of न by 'अनिदिताम्—' for तस् is ङित्। वनीवचति—by 'अदभ्यस्तात्' (2479 ) etc. as before. अवनीवन्—In लङ् तिप् when ईट् is wanting. तिप् is dropped by हल्ङ्यादि and च is dropped by 'संयोगान्तस्य लोपः' (54). जङ्गमीति—Because the अभ्यास of गम् gets नुम् by 'नुगतोऽनु' (2643) which ( न् ) then turns similar to its posterior letter ( परसवर्ण ). जङ्गमति—अत् in place of अन्त् as before. एकाज्ग्रहणेन etc.—That which is enjoined or forbidden with the utterance of 'एकाच्' ( as in 'एकाच उपदेशे—' (2247) will not apply in the cases of यङ्लुक् of such ( एकाच् ) roots. Thus गम् though अनिट् ( cf—गन्ता ) gets इट् here giving जङ्गमिता। In जङ्गहि there will not take place the elision of हि by 'अतो हेः' ( 2202—6. 4. 104 ) after the elision of the अनुनासिक ( म् ) by the rule 'अनुदात्तोपदेश—' ( 2428—6. 4. 37 ) in as much as this disappearance of the अनुनासिक is असिद्ध or invalid due to the falling of 'अनुदात्तोपदेश—' ( 6. 4. 37 ) in the आभीय chapter ( 'असिद्धवत्— 6. 4. 22 ). अनुबन्धनिर्देशात्—i.e. the root being read as गम्लृ, च्लि is not replaced by अङ् by 'पुषादि—' (2343)

due to the prohibition 'श्तिपा शपानुबन्धेन—'। अजङ्घनीत्—सिच् elides by 'इट ईटि' (2266). यद्यपि etc.—The author of Nyasa (Jinendrabuddhi) holds that although the term 'हन्तेः' occuring in 'हो हन्तेः— (7. 3. 54) has been drawn to the rule 'अभ्यासाच्च' (7. 3. 55) to make the prediction thereof as—'अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात्,' yet the कुत्व of हन्ति applies in यङ्लुक् also in as much as the prohibition 'श्तिपानुबन्धेन—' is but provisional (अनित्य)। Thus the श्तिपानिर्देश in 'हन्ति' does not forbid the कुत्व in जङ्घनीति etc. The idea (of the author of Nayasa in asserting as above) is that the injunc-of 'गुणो यङ्लुकोः' is an indication in a general way ('गुणो यङ्लुकोः' teaches that the अभ्यास of a यङ्लुगन्त root is gunnated; but according to 'यदेकाजग्रहणं चैव'—this is no case of duplication. The former 'गुणो—' however, is an accepted truth in as much as the same applies in the cases of यङन्त or यङ्लुगन्त roots alike whether the latter 'यदेकाच्—' does or not, Thus 'गुणो—' is नित्य and 'यदेकाच्' is अनित्य. From this light of this single case it is infered here that not only 'यदेकाच्' is provisional—अनित्य, but all the five prohibitions श्तिपा शपा etc occuring in the verse are so). जङ्घन्ति—due to option of ईट्. जङ्घ्नति—by 'गमहन—' (2363). जङ्घनिता—no prohibition of इट् due to एकाच्ग्रहण in 'एकाच उप—' (2246). Similarly in जङ्घहि the substitute ज directed by 'हन्तेर्जः' (2431) does not apply as 'हन्तेः—' is a case of श्तिपा निर्देशः। अजङ्घनीत्—अजङ्घन् (लङ्)=in the latter तिप् elides by 'हल्ङ्याब्भ्यो—'

(254). आशिषि तु etc—by 'हनोवधलिङि' (2433) and 'लुङि च' (2434). In the cases of वध्यात् and अवधीत् etc there is no द्वित्व of the substitute वध (as it replaces हन् after it (हन्) has been duplicated and thus contains the अभ्यास in itself by स्थानिवद्भाव). Thus the prohibition 'अनभ्यासस्य' occuring in 'लिटिधातोरनभ्यासस्य' (2177) applies here. For by the force of बहुव्रीहि (अविद्यमान: अभ्यासो यस्य—तादृशो धातु: ). 'अनभ्यासस्य—' is a qualification or an adjective of the root in a 'collocative' (समानाधिकरण) way. आजङ्घ्नते—no ईट् because there is no पित् affix following. उत्परस्य—etc, are meant for चञ्चूरीति—चञ्चूर्ति etc. In both there comes in नुक् by 'चरफलोश्च' (2636) and उत् by 'उत्परस्य—' (2637). No दीर्घ of the अभ्यास by 'दीर्घोऽकित:' (2632) due to कित्त्व of नुक्. Here उ of उत् being तपर the rule 'पुगन्तलघूपधस्य—' (2189) does not apply. But दीर्घ by 'हलि च' (354—8. 2. 77.) does apply, for दीर्घादेश being असिद्ध (by पूर्वत्रासिद्धम्—8. 2. 1) cannot go back to 'उत्परस्य—' (7. 4. 88); and in this way the solution adhered to in the case of गुण (तपरत्वान्न गुण:) cannot be adopted here. Thus दीर्घ prevails and we have चञ्चूर्ति। अचञ्चूरीत्—अचञ्चू:—(लङ् तिप्)—In the latter case तिप् elides by 'हल्ङ्याब्भ्य:—(254) and दीर्घ as before. चङ्काहि—हि is अपित् or ङित् by 'सार्वधातुकमपित्' hence आत्व by 'जनसन—' (2504). अचङ्कनीत्—अचङ्कानीत् by 'अतो हलादे:—' (2284). 'नाभ्यासस्य'—i.e. due to अनुवृत्ति from 'नाभ्यास्तस्याचिपिति—' (2503—7. 3. 87). आशिषि दीर्घ i.e by 'अकृत्—' (2298). अयोयावीत्—लुङ् form, वृद्धि by 'सिचि वृद्धि:—' (2297). जाहेति

( with ईट् ) । इह etc.—Here in यङ्लुक्, the operations taught in the five rules 'जहातेश्च' ( 6. 4. 116 ), आ च हौ (6. 4. 117), 'लोपो यि' ( 6.4.118 ), 'घुमास्था गा. पा.जहाति—' ( 6. 4. 66 ) and 'एर्लिङि' ( 6. 4. 67 ) will not apply as we find 'हा' expressed with श्तिप् e.g.—जहाति. Thus in जाहीत: there is no ह्रस्वविकल्प by 'जहातेश्च', in जाहीहि no ह्रस्व and आत्त्व by 'आच हौ' ; in जाहीयात् no अल्लोप by 'लोपो यि' ; in जाहायात्—no ईत्व or एत्व by 'घुमास्था—' or 'एर्लिङि'। अजाहासीत्—with सक् इट् by 'यमरमनमातां सक् च' ( 2377 ) and the elision of सिच् by 'इट ईटि' ( २२६७ ). लुका लुप्ते i.e. the elision of यङ् being so. प्रत्ययलक्षणाभावात् by 'न लुमता—' ( २६३ )। इत्युरत्वम् न i.e. there is no उत्व by सम्प्रसारण ।

मित—। यङो वेति। 'नाभ्यस्तस्याचि पिति सार्व—' ( ७।३।८७ ) इत्यत: पितीति सार्वधातुक इति चानुवर्तते। 'उतो वृद्धिर्लुकि हलि' ( ७।३। ८९ ) इत्यतो हलीति। 'ब्रुव ईट्' ( ७।३।९३ ) इत्यत ईडिति च। हलीत्यस्य विशेषणत्वात्तदादिविधि:। किञ्च ईडागमस्य अङ्गापेक्षत्वात् पिति सार्व—इति षष्ठ्या विपरिणम्यते, यथा यङ् इति पञ्चम्यन्तं तदन्तत्वे लाक्षणिकम्। अत आह— यङन्तात् परस्येत्यादि। गुणनिषेधोयङ्लुकि भाषायां नेति—भाषायाम् (अपि) यो यङ्लुग्विधि: प्रवर्तते तत्र भूसुवोरित्यनुसारात् गुणनिषेधोन इत्यर्थ:। तस्य छन्दोगत-यङ्लुग्भावविषयत्वादतएव वक्ष्यते—बोभवीति—बोभोतीत्यादि। कुत इदमित्यत आह —'बोभूतु' इति निपातनात्। अतएवेति—अयमत्राभिप्राय:—'प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्' इति परिभाषया भूधातोरुत्तरं यद्विधीयते तद् यङ्लुगन्तादपि तस्माद विधीयत इत्यपि वक्तव्यम्। तथा सति 'भूसुवो:—' इत्यनेनैव छन्दसि गुणनिषेधसिद्धे पुन: 'दाधर्ति—दर्धर्ति—दर्धर्षि—बोभूतु—' ( ३५९६ ) इत्यत्र 'छन्दसि यङ्लुगन्तस्य भूधातोर्गुणो नास्ति' इति वचनमपार्थम् स्यात्। पूर्वेणैवेष्ट-सिद्धे:। ततश्च 'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यादि'ति

भाष्यवचनादस्यत्र 'छन्दसि'—ग्रहणसामर्थ्यम्। तेन हि विज्ञायते छन्दस्येव यङ्लुगन्तस्य भुवो गुणनिषेधो न तु भाषायामपि। ततश्च सिद्धं यद् यङ्लुक् भाषायामप्यस्तीति। अत एव भाष्यवृत्तिस्त्वाह— "इह चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति। तेन भाषायाम् अनच्यपि यङ् लुक्। लालपीति वावदीति इति जयादित्यः। चकारात् 'बहुलं छन्दसि' इति सर्वमनुवर्त्तते। तेन बहुलात् अनच्यपि छन्दस्येव यङ्लुक्। भाष्ये तु हुश्नुग्रहणज्ञापकबलात् (६।४।८७) बोभवीतीत्येवं पदं भाषायां साधु, नान्यदिति भागवृत्तिः। दृश्यन्ते च शिष्टप्रयोगाः—'यदि देवो वरीवर्ष्टि कोकिलो रोरवीति च। मयूरोपि मरीमर्ति मरीमर्ति तदा प्रिये'। तेजांसि शशमाञ्चक्रुरिति भट्टिः। "हरिणाक्ष सख्यं ते बोभूत्विति यद्ब्रवीः। न जाघटीति युक्तो तत् सिंहद्विरदयोरिव'—इति पाणिनेर्जाम्बवतीविजयकाव्यम्"॥ निपात्यताम् इति—सूत्रे चाप्राप्तत्वाच्छन्दसीत्येतत् निपातनार्थं गृह्यतामिति पूर्वपक्षः। तत्र सिद्धान्तमाह—प्रकृतिग्रहणे इति। द्विःप्रयोग इति च। प्रकृतावुक्तम्। द्विरित्यस्यायमर्थः—पाणिनेराचार्यस्य अष्टाध्याय्याः षष्ठेऽध्याये 'एकाचो द्वे—' इत्यादिना यद्द्विर्वचनं विहितं तत् शास्त्रम् (षष्ठे भवमित्यण्) द्विर्वचनम्। कस्यचिदेकाचोऽपि वा यः द्विः वारद्वयं प्रयोगः समुच्चारणं समुच्चार्य वा कथनं तदेव तस्य तस्य धातोर्द्विर्वचनम्। ततश्च कस्यैव द्विरुच्चारणाद्द्विर्वचनेन धातुर्न भिद्यते। किन्तु मूलतः स एव तिष्ठति। एवञ्च 'सन्यङो'रित्यस्यापि (६।१।९) तदध्यायगतत्वात्सनाद्यन्तस्य धातोस्तदवस्थत्वमेव। यतश्च प्रकृति-यङ्लुगन्तयोः साम्यं फलितम्। एष च न्यायो भाष्ये निबद्धः। तथाहि—"'एकाचो द्वे प्रथमस्य' इत्यत्र किमिदं द्विर्वचनम् एकाचः प्रथमस्य एकस्य स्थाने द्वितयात्मक आदेशः स्थान्यपेक्षया अन्यो विधीयते, उत स्थानिन एकस्य सतो द्विरुच्चारणं विधीयते, न तु तत्स्थानिनोऽतिरिच्यते' इति सन्दिह्य 'द्विःप्रयोगो द्विर्वचनम्' इति सिद्धान्तितम्। एवमायातं तर्हि यद् भाषायामपि यङ्लुक् सिध्यतीति। बोभवीति—बो भीति इति। द्वित्वादूर्ध्वं 'गुणो यङ्लुकोः' (२६३२) इत्यभ्यासस्य गुणः। ईडविकल्पः। भूसुवोरित्यस्याप्रवृत्तेः 'सार्वधातुकार्ध—'इति गुणश्च। बोभूत इति।

अपित्त्वेन ङित्त्वान्न गुणः। ईडभावश्च। बोभुवति—अपित्त्वेन ईड्गुणयोरप्राप्तयोः 'अचि श्नुधातुभ्रुवाम्—' (२७१) इत्युवङ्। अभ्यस्तत्वेन 'अदभ्यस्तात्'(२४७८) इति झेरदादेशः। बोभवाञ्चकारेति—'कास्प्रत्ययादाम्—' ( २३०६ ) इत्याम्। कास्य-नेकाजिति कश्चित्। तदसत्। प्रत्ययान्तमादाय सूत्रेणैव सिद्धे वार्तिके कासुसन्धान-क्लेशस्यानौचित्यात्। न च लुका लुप्तत्वेन—'न लुमते'ति निषेधोऽत्र शङ्क्यः। तस्य निमित्तत्वापगमादित्यलम्। बोभवितेति—लुटि इटिरूपम्। अपित्त्वेन ङित्त्वादी-डागमो न। भूसुवोरिति निषेधाप्रवृत्तेर्गुणः प्राग्वत्। अबोभवीत्—अबोभोदिति—लङि ईड्विकल्पाद् रूपद्वयम्। गुणादयः प्राग्वत्। सिप्यादौ अबोभवीः—अबो-भोरित्यादि। मिपि तु अमादेशेन अबोभवमिति। स्थान्यनुबन्धस्यादेशानुपस्थितेः पित्त्वमत्र न। लिङीयासुट् ङिच्चेति ङित्करणात् ज्ञापकादिति भ्वादावुक्तम्। अबोभवुरिति—'सिजभ्यस्त—' ( २२२६ ) इति झेर्जुसि गुणेनावादेशे च रूपम्। बोभूयादिति—लिङाशीर्लिङोः समानमत्ररूपम्। तसादौ तु पृथगिति दर्शयति। बोभूयातामित्यादिना। लुङि रूपं विवक्षुराह—गातिस्थे ति। गुणं बाधित्वेति। 'सार्वधातुकार्द्ध—' ( २१६८—७-३-८४ ) इति गुणं परमपीत्यर्थः। नित्यत्वाद् वुगिति। 'भुवो वुग् लुङ्लिटोः' ( २१७४—६-४-८८ ) इत्यनेन विहित इति भावः। कृतेऽ-कृतेऽपि वा गुणे वुक् प्राप्नोतीति वुको नित्यत्वं बोध्यम्। न चैवमपि 'असिद्धवदत्राभात्' ( ६-४-२२ ) इत्यनुसारेण वुकोऽसिद्धत्वादुवङ् प्राप्नोतीति वाच्यम्। 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ'इति वार्तिकात्तस्य सिद्धत्वात्। अबोभोदिति—अच्परत्वाभावान्न वुग् नाप्युवङ्। अबोभूतामिति। तसोऽपित्त्वेन ङित्त्वान्न गुणः। अभ्यस्ताच्च इति —'सिजभ्यस्त—' ( २२२६ ) इत्यनेनेत्यर्थः। एवञ्च सिचोऽत्र लुक्त्वेऽपि 'आतः' (२२२७) इति न प्रवर्तते। नित्यत्वाद् वुगिति।'जुसि च' (२४८१) इति गुणापेक्षयेत्यर्थः। इत्यादीति—एवञ्च लटि सिप्यादौ—बोभवीषि—बोभोषि।बोभूथः। बोभूथ। बोभवीमि बोभोमि। बोभवीतु बोभोतु—बोभूतात्। बोभूताम्। बोभुवतु। हेरपि-त्त्वेन ङित्त्वान्नापि गुणो नापीट्। बोभूहि—बोभूतात्। बोभूतम्। बोभूत। आटः पित्त्वेऽपि हलादित्वाभावान्नेट्। गुणः। बोभवानि। बोभवाव। बोभवाम। लङि

तिष्यादावुक्त' सूत्रे। सिष्यादौ तु अबोभवी:—अबोभोः। अबोभूतम्। अबोभूत। अबोभवम्। अबोभूव। अबोभूम। लिङि—बोभूयात्। बोभूयास्ताम् इत्यादि। अनुक्तानि स्वयं साधनीयानि। स्पर्ध संघर्षे इत्यस्य रूपं दर्शयितुमाह — पास्पर्धीति—पास्पर्द्धि इति। द्वित्वात्पूर्वं 'शर्पूर्वाः खयः' (२२५९) इत्यभ्यासे पकारमात्रं शिष्यते। तस्य 'दीर्घोऽकितः' (२६३२) इति दीर्घः। ततो यङो वेति ईट्। तदभावपक्षे पास्पर्ध् तिप् इति स्थिते 'झषस्तथोर्धोऽधः' (२२८०) इति तकारस्य धकारः। एवं पास्पर्ध् धि इति जाते पूर्वधकारस्य 'झलां जश्—' (५४) इति जश्त्वेन दकारः। एवमन्यत्र। पास्पर्द्धः इति—ङित्त्वान्न गुणो नापीट्। पास्पर्धति इति—'अदभ्यस्तात्' (२४७९) इति झेरदादेशः। पास्पर्त्सि इति—पास्पर्ध् सि इति स्थिते 'खरि च' (१२१) इति चर्त्वेन तकारः। ईडभावे इदम् ईटि तु पास्पर्धीषि इति। पास्पर्धि इति—। हेरपित्त्वान्ङिति भावः। लङि ईडभावपक्षे आह—अपास्पर्त्—अपास्पर्द् इति। 'हल्ङ्याब्भ्यः—' (२५४) इति तिलोपे धकारस्य 'वाऽवसाने' (२०६) इति चर्त्वविकल्पः। ईटि तु अपास्पर्धीदिति। सिपि ईट् पक्षे अपास्पर्धीरिति सिद्धवत्कृत्वा ईडभावे दर्शयति—सिपिदश्चेति। अपास्पर्द् स् इति स्थिते जश्त्वेन अपास्पर्द् स् इति जाते 'दश्चे'ति दकारस्य रुत्वम्। ततो अपास्पर् र स् इति जाते 'हल्ङ्याब्भ्यः—' इति सकारलोपः। ततो 'रोरि' (१७३) इति पूर्वरेफलोपः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (१७४) इति दीर्घः। विसर्गः। रुत्वाभावपक्षे तु अपास्पर्द् इति। 'गाधृ प्रतिष्ठालिप्सयो ग्रन्थे चे'त्यस्याह—जागाद्धि इति। ईडभावपक्षे इदम्। ईटि तु जागाधीति इति। जाघात्सि इति—अभ्यासकुत्वदीर्घचुत्वादिभिः जागाध् सि इति स्थिते 'एकाचो बशो भष्—' (३२६) इति भष्भावेन गस्य घः। चर्त्वम्। ईट्पक्षे तु जागाधीषि इति। अजाघादिति। ईडभावे तिलोपे चर्त्वे चेदम्। ईटि तु अजागाधीदिति। अजाघा इति— अजागाध् स् इति स्थिते 'एकाचोबशो भष्—' इति भष्भावः। अन्यत् अपास्पा इति—वत्। रुत्वपक्षे इदम्। दत्वपक्षे तु अजाघाद् इति। नानात्ति इति—। ईट्पक्षे तु—नानाथीति इति। नानाथति। नानाथिषि—नानात्सि। नानाथीमि—नानाथ्मि इत्यादि। लोटि नानाथीतु ननात्त इत्यादि।

लङि—अनानाथीत्—अनानात् इत्यादि। एवमन्ययोरूह्यम्। दादद्धीति—पास्पर्द्धि इतिवत् ईडभावे इदम्। ईटि तु दादधीति। दाधत्सि इति। भष्भावः। चर्त्वम्। ईटि दादधीषि इति। अदाधत् इति—लङि ईड-भावे अदादध् त् इति स्थिते हल्ङ्यादिलोपे भष्भावः। 'वाऽवसाने' (२०६) इति चर्त्वम्। ईट्पक्षे—अदादधीत् इति। अदादधुरिति—झेर्जुसि—पूर्ववत्। अदाधः—अदाधत् इति। सिपि रुत्वपक्षे पूर्वम्। दत्वपक्षे परम्। भष्भावादिः प्राग्वत्। अदादाधीत्—अदादधीत् इति—'अतो हलादेः—' (२२८४) इति वृद्धिविकल्पः। 'स्कुदि आप्रवणे' इत्यस्माद्—चोस्कुन्दीति—चोस्कुन्ति इति। अभ्यासस्य खय्शेषगुण-चुत्वानि। तिपः पित्त्वेन ङित्त्वाभावाद् धातोरिदित्वाद् यङो लुकः लुप्तत्वेऽपि प्रागुक्तदिशा प्रत्ययलक्षणत्वाभावाद् 'अनिदिताम्—' (४१५) इत्यस्याप्रवृत्तेर्नलोपो न। उत्तरत्र 'झरो झरि—' (७१) इति तकारलोपविकल्पः। लोटि—चोस्कुन्दीतु चोस्कुन्तु इत्यादि। लङि ईटि—अचोस्कुन्दीत् इति। तदभावे अचोस्कुन्निति। तकारस्य हल्ङ्यादिना लोपः। दकारस्य 'संयोगान्तस्य' (५४) इति लोपः। लुङि तु—अचोस्कुन्दीत् इत्यादि। 'अस्तिसिचः—' इति नित्यमिट्। मुद हर्षे इत्यस्माद्—मोमुदीति—मोमोत्ति इति। 'नाभ्यस्तस्याचि पिति—' (२५०१) इति ईट्पक्षे लघूपधगुणनिषेधः। मोमोदिता इति। 'न धातुलोप आर्द्धधातुके' (२६५६) इति गुणनिषेधस्तु न। बहुलग्रहणाद् यङोऽनैमित्तिकत्वेन धात्वंशलोपनिमित्तत्वा-भावादिति भावः। अमोमुदीत्—अमोमोत् इति—लङि एते। लुङि गुण इति। सिज्निमित्तक इति शेषः। 'न धातुलोपे—' इत्यस्य प्राग्वत् प्रवृत्त्यभावात्। चोकूर्त्ति—चोकूर्दीति इति—कुर्द क्रीडायाम्। 'उपधायाञ्च' (२२६५) इति दीर्घः। अचोकूर्त्—अचोकूर्दीत् इति। पूर्वत्र ईडभावे अचोकूर्द् तिप् इति स्थिते हल्ङ्यादि-लोपे 'रात्सस्य' (२८०) इति नियमान्न संयोगान्तस्य दस्य लोपः किन्तु 'वाऽवसाने' (२०६) इति चर्त्वमिति भावः। अचोकूरिति—ईडभावे इदम्। अचोकूर्द् सिप् इति स्थिते हल्ङ्यादिलोपे 'दश्च' (२४६८) इति दस्य रुत्वेन रेफादेशे 'रो रि' (१७२) इति पूर्वरेफस्य लोपे उत्तररेफस्य विसर्गे च रूपम्। दीर्घः प्राग्वत्। एवम् अचोकूः

( स्रुदँ धातुः )। असोसुदः ( सुदँ धातुः )। वनीवञ्चीति — वनीवङ्क्ति इति। वञ्चु गताविति धातुः। तस्य 'नित्यं कौटिल्ये गतौ' ( २६३४ ) इति यङ्लुकि द्वित्वादनन्तरं 'नीग्वञ्चु—' ( २६४२ ) इत्यभ्यासे नीगागमः। यङन्तेलुकालुप्तत्वात् तिपः पित्त्वेन अङित्त्वाच्च उत्तरखण्डे 'अनिदिताम्—' ( ४१५ ) इति नलोपो न। वनीवङ्क्ति इत्यत्र तु ईडभावे चस्य कुत्वं नकारस्य 'नश्चापदान्तस्य—' ( १२३ ) इत्यनुस्वारे जाते 'अनुस्वारस्य ययि—' इति परसवर्णः। वनीवञ्चः इति। ङित्त्वान्नलोपः। वनीवचति इति—भेरत्। अवनीवञ्चीत्—अवनीवन् इति। उत्तरत्र हल्ङ्यादिलोपः। चकारस्य संयोगान्तलोपश्च। अथ गमेराह — जङ्गमीति — जङ्गन्ति इति। 'नुगतोऽनुनासिकान्तस्य' ( २६४३ ) इति नुक्। क्ङित्त्वान्न दीर्घः। जङ्गमति इति। 'गमहन—' ( २३६३ ) इत्युपधालोपः। गमेरेकाच्त्वात् 'एकाच उपदेशे—' इति इड् निषेधे प्राप्ते ( 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि—' इति न्यायात् ) आह—एकाज्ग्रहणेनेत्यादि। 'श्तिपा शपा—' इति निषेधादिति भावः। ह्वौ 'जङ्गहि' इति साधयितुमाह—अनुनासिकलोपश्चेति। 'अनुदात्तोपदेश—' (६।४।३७) इत्याभीयत्वम्। ततश्च 'अतो हेः' ( ६।४।१०५ ) इति न प्रवर्तेत इत्यर्थः। लङस्तिपि ईटि—अजङ्गमीदिति सिद्धवत्कृत्वाह ईडभावे दर्शयितुमाह—मो नो धातुरिति। हल्ङ्यादिना तिलोपे कृतेऽनेन मस्य न इति बोध्यम्। अनुबन्ध—निर्देशादिति। गमॢ इति पाठादिति भावः। न च्लेरङ् इति—पुषादिसूत्रेणेत्यर्थः। हन्तेर्यङ्लुगित्यादि— 'हो हन्तेः—' (७।३।५४), 'अभ्यासाच्च' (७।३।५५) इति पाणिनिसूत्रक्रमः। तत्र हन्तेरिति श्तिपा निर्दिश्य कुत्वं विधीयते। ततश्च 'श्तिपा शपा—' इति निषेधाद् यङ्लुकि अभ्यासात् परस्य कुत्वं न भवतीत्युत्प्रेक्ष्य—न्यासकारसंवादेन समाधानमाह—भवत्येवेति इति—कुत्वमित्यर्थः। नन्वेवं श्तिपाशपेति निषेधस्य कागतिरित्याह—अनित्य इति। तत्र ज्ञापकमेव मानमित्याह—सामान्यापेक्षज्ञापकादितिभाव इति। न्यासकारस्येति शेषः न व्याख्यानः। अयमभिप्रायः—'एकाचो द्वे—' इत्येकाच्कस्य द्वित्वं विधीयते। यच्चैकाजित्युपाख्ये विधीयते तद्यङ्लुकि न प्रवर्तते। 'यत्रैकाज्ग्रहणं चैवेति

न्यायात्। एवञ्च यङ्लुकि द्वित्वमेव न भवति। किन्तु 'गुणो यङ्लुकोः' इत्यनेन यङ्लुकोरभ्यासस्य गुणउपदिश्यते। एवं तर्हि—पाणिनेराचार्य्यस्य आचारादेव विज्ञायते यदभवत्येव यङ्लुकीकाच्कस्यापि द्वित्वम्। अन्यथा क्लीभ्यासः। तथाच सति 'एकाज्ग्रहणं चेवे'ति क्वचित् क्वचित् नैव प्रवर्त्तते। ततश्च एकाज्ग्रहणशास्त्रमनित्यम्। तत्सामर्थ्यात् श्तिपा शपानुबन्धे नेति सर्वमप्यनित्यम्। ज्ञापकस्य सजातीयापेक्षत्वात्। नागेशस्तु उक्तश्तिपाश्पेति परिभाषाया भाष्ये अदर्शनादेव यथोक्तकार्य्यसिद्धिरिति कृत्वा ज्ञापकसिद्धत्वं प्रत्याचष्टे। एवञ्चानित्यत्वाद्वा असत्त्वाद्वा उभयथापि सिद्धमेवात्र कृत्वम्। अतएव जङ्गमीतीत्यादि। 'नुगतः—' (२६४३) इति नुक्। जङ्गत इति। 'अनुदात्तोपदेश—' (२४२८) इत्यनुनासिकलोपः। 'गमहन—' (२३६३) इत्युपधालोपः। प्राग्वत्। जङ्घनिता इति—एकाज्ग्रहणेनोक्तत्वान्नेण्निषेधः। श्तिपा निर्देशादिति। 'हन्तेर्जः' इत्यत्र हन्तेरिति शेषः। अजङ्घनीत् अजङ्घन् इति। उत्तरत्र हल्ङ्यादिलोपः। वधादेशस्य द्वित्वन्तु न भवतीति—लिङि लुङि च, 'हनो वध लिङि', 'लुङि च' इति विहितो वधादेशस्तत्र द्विर्वचने कृत एव प्रवर्त्तते न तु ततः प्राक्। ततश्च वधादेशः साभ्यासो भवति। अभ्यासोत्तरखण्डयोरुत्तरयोरेव स्थाने सन्निवेशितत्वात्। एवञ्च 'लिटि धातोरनभ्यासस्य' (६।१।८) इत्यस्या'दनभ्यासस्ये'त्यंशस्य 'सन्यङोः' (६।१।९) इत्यत्राप्यनुवृत्तेर्वधादेशस्यात्र (यङ्लुकि) पुनर्द्वित्वं न भवति—स्थानिवद्भावेन अभ्यासेन सह वर्त्तमानत्वात्। अत आह—स्थानिवत्त्वेनेति, न च 'अनभ्यासस्ये'ति नञ् समासः 'न अभ्यासः अनभ्यासः' तस्येति कृत्वा धातुना सह सामानाधिकरण्याभावाद् द्वित्वं भवत्येवेति आशङ्कितव्यमित्याह—तन्नि इति। 'अविद्यमानः अभ्यासः यस्य स तादृशः' तस्येत्येवं समानाधिकरणम्। तेन च धातुराक्षिप्यते बहुव्रीहिसामर्थ्यादत आह—'बहुव्रीहित्वादिति।' प्राक्पूर्वादिति। 'प्रकृतिग्रहणे—' इति न्यायादत्रापि यङ्लुगिति भावः। ततश्च—धातोर्विहितकार्य्यलाभः। अथ चरतेर्यङ्लुकि आह—इति तपरत्वान्न गुण इति उदुविशिष्टयोश्चरतेरुपधाया इति यावत्। मत्वेवं यथा लघूपधगुणोऽत्र न प्रवर्त्तते तथा

'हलिचे'ति दीर्घोऽपि न प्रवर्तिष्यते तत्राह—दीर्घस्तु स्यादेवेति। तत्र हेतुमाह—तस्यासिद्धत्वेनेति। अयं भाव:—'पुगन्तलघूपधस्य च' (७।३।८६), 'उत्परस्य—' (७।४।८८), 'हलि च' (८।२।७७) इति सूत्रत: सूत्रविन्यास:। चरतेर्यङ्लुकि द्वित्वं कुकि च उत्तरखण्डस्य 'उत् परस्य—' इत्युत्। एवं चचु र् ईट तिप् इति, चचु र् तिप् इति च स्थिते 'पुगन्त—' इति प्राप्नोति। तथात्र प्रतिषिध्यते। उकारस्य तपरत्वेन लघूपधत्वाभावात्। हलिचेति तु असिद्धकाण्डे (पूर्वत्रासिद्धम्—८।२।१) पठितम्। ततश्चास्य पूर्वत्र सप्तमाध्यायकार्येऽसिद्धत्वम्। एवञ्चास्य असिद्धत्वेन उदिति तपरत्वेन निर्देशादयं न भविष्यतीत्येवं निवारयितुं न युज्यते। तदाह—तपरत्वनियतत्वायोगादिति। शब्देन्दुशेखरे तु गुणस्यापि बहिरङ्गतया तपरत्वनियत्वं न भवतीति प्रपञ्चितमित्यास्तां विस्तर:। चङ्खाहि इति—खच अवदारणे इति धातु:। ईरपित्त्वेन ङित्वात् 'जनसन—' (२५०४) इत्यात्वम्। अचङ्खनीत् अचङ्खनात् इति। 'अतो हलादे:—' (२२८४) इति दीर्घ:। नाभ्यस्तस्येति। 'नाभ्यस्तस्याचि पिति—' (२५०२—७।३।८७) इत्यतस्तदनुवृत्तिरिति बोध्यम्। जाहाति—जाहेति इत्यादि। हाङ्-हाकोस्तुल्यानि रूपाणि इति तत्त्वबोधिन्यादौ स्पष्टम्। पत्वापि न भवतीति। तथाच 'जाहीत:' इत्यत्र 'जहातेश्च' इति ह्रस्वविकल्प:, 'जहीहि' इत्यत्र 'आच—' इत्यात्वविकल्प:, 'जाहीयात्' इत्यत्र 'लोपो यि' इत्यालोपश्च न प्रवर्तते। किन्तु 'ई हल्यघो'रिति ईत्वमेव। तथा आशिषि जाहायादित्यत्र 'घुमास्था—' इतीत्वम्। 'एर्लिङि' इत्येत्वमपि नेति विभावनीयम्। अजाहासीदिति—'यमरमनमाताम्—' (२३७७) इति सगिटौ। लुका लुप्ते इति 'सर्वविधिभ्यो लुग्विधिर्बलीयस्त्वादि'ति भाव:। इतुरत्व' नेति—'फलितार्थकथनमिदम्। सम्प्रसारणं नेति तदर्थ:। अन्यदन्यवत्, मूलञ्च सुप्रसन्नमित्यलम्।

२६५२। रुग्रिकौ च लुकि ॥७।४।९१॥

दी—। ऋदुपधस्य धातोरभ्यासस्य 'रुक्' 'रिक्', 'रीक्' एते आगमा: स्युर्यङ्लुकि।

Eng.—Easy.

मित— । रुगिति । स्पष्टम् । ऋदुपधस्येत्यादि । 'रीगृदुपधस्य च' (७।४।९०) इत्यतः, 'अत्र लोपः—' (७।४।५८) इत्यतश्चाभ्यासानुवृत्तिः ।

२६५३ । ऋतश्च ॥ ७।४।९२ ॥

दी— । ऋदन्तधातोरपि तथा । वर्वृतीति—वरिवृतीति—वरीवृतीति । वर्वर्ति—वरिवर्ति—वरीवर्ति । वर्वृतः—वरिवृतः—वरीवृतः । वर्वृतति—वरिवृतति—वरीवृतति । वर्वर्तामास—वरिवर्तामास—वरीवर्तामास । वर्वर्तिता—वरिवर्तिता वरीवर्तिता । गणनिर्दिष्टत्वात् 'न वृद्भ्यश्चतुर्भ्यः' (२३४८) इति न । वर्वर्तिष्यति—वरिवर्तिष्यति—वरीवर्तिष्यति । अवर्वृतीत्—अवरिवृतीत्—अवरीवृतीत् । अवर्वर्त्—अवरिवर्त्—अवरीवर्त् । सिपि 'दश्च' (२४६८) इति रुत्वपक्षे 'रो रि' (१७३) = अवर्वाः—अवरिवाः—अवरीवाः । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत्—अवरिवर्तीत्—अवरीवर्तीत् ॥ चर्करीति—चर्कर्ति—चरिकर्ति—चरीकर्ति । चर्कृतः । चर्क्रति । चर्कराञ्चकार । चर्करिता । अचर्करीत्—अचर्कः । चर्क्र्यात् । आशिषि रिङ् । चर्क्रियात् । अचर्कारीत् । 'ऋतश्च' (२६५३) इति तपरत्वान्नेह । 'कॄ विक्षेपे' = चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत्—अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि । अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्त्वं रपरत्वम् । 'हलादिः शेषः' (२१७९) । रुक् । रिग्रीकोस्तु

'अभ्यासस्यासवर्णे' (२३६०) इति इयङ्। अरर्ति—अरियर्ति। अररीति—अरियरीति। अरृतः—अरियृतः। भिभ्रत्। यण्। रुको 'रो रि' (१७३) इति लोपः। न च तस्मिन् कर्त्तव्ये यणः स्थानिवत्त्वम्। पूर्वत्रासिद्धे तन्निषेधात्। आरर्ति—अरियर्ति। लिङि श्तिपानिर्देशात् 'गुणोऽर्ति—' (२३८०) इति गुणो न। रिङ्। रलोपः। दीर्घः। आरियात्—अरियियात्। 'गृहू (१) ग्रहणे'। जर्गृहीति जर्गढि। जर्गृढः। जर्गृहति। अजर्घट्। गृह्णातेस्तु जाग्रहीति—जाग्राढि। तसादौ ङिन्निमित्तं सम्प्रसारणम्। तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः। जागृढः। जागृहति। जाग्रहीषि—जाग्रक्षि। लुटि जाग्रहिता। 'ग्रहोऽलिटि' (२५६२) इति दीर्घस्तु न। तत्र 'एकाचः' इत्यनुवृत्तेः। माधवस्तु दीर्घमाह। तद्भाष्यविरुद्धम्॥ जर्गृधीति—जर्गर्द्धि। जर्गृद्धः। जर्गृधति। जर्गृधीषि—जर्घर्त्सि। अजर्गृधीत्। ईडभावे गुणः। हल्ङ्यादिलोपः। भष्भावः। जश्त्वचर्त्वे। अजघर्त्। अजर्गृद्धाम्। सिपि 'दश्च' (२४६८) इति पक्षे रुत्वम्। अजर्घाः। अजर्गर्धीत्। अजर्गधिष्टाम्। पाप्रच्छीति—पाप्रष्टि। तसादौ 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणं न भवति, श्तिपा निर्देशात्। 'च्छ्वोः शूठ्—' (२५६१) इति शः। 'व्रश्च—' (२८४) इति षः। पाप्रष्टः। पाप्रच्छति। पाप्रश्मि। पाप्रच्छ्वः। पाप्रश्मः। 'यकारवकारान्तानां तु ऊठ्भाविनां यङ्लुङ् नास्ति' इति

'च्छ्वोः—' (२५६१) इति सूत्रे भाष्ये ध्वनितम्। कैयटेन च स्पष्टीकृतम्। इदं च 'च्छ्वोः—' (२५६२) इति यत्रोठ् तद्विषयकम्। 'ज्वरत्वर—' (२५६४) इत्यूठ्भाविनो स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम्। माधवादिसम्मतं च। 'मव्य बन्धने'। अयं यान्त ऊठ्भावो। 'तेव्ृ देवृ देवने' इत्यादयोवान्ताः। 'हय गतौ' = जाहयीति—जाहति। जाहतः। जाह्नयति। जाहयीषि—जाहसि। वलि लोपे यञादौ दीर्घः। जाहामि। जाहावः। जाहामः। 'हर्य्य —गतिकान्त्योः'। जाहर्यीति—जाहर्ति। जाहर्तः। जाहर्य्यति। लोटि—जाहर्हि। अजाहः। अजाहर्ताम्। अजाहर्युः। 'मव्व बन्धने'—

Like the अभ्यास of a ऋदुपधधातु, the अभ्यास of a ऋदन्त root too, takes the augments रुक् ( र् ), रिक् ( रि ) and रीक् ( री ) when यङ्-लुक् follows. Thus वर्हरीति etc in the इट्पक्ष and वर्वर्ति etc in the इडभावपक्ष ( In every case the root वृत् becomes 'वर्त्' by श्तिप, गुण, रपरत्व and हलादि शेष and then are attached रुक्, रिक and रीक् in order). The अभ्यास everywhere is gunnated by 'गुणो यङ्-लुकोः' ( 2632 ) but the उत्तरखण्ड is gunnated only where there is absence of ईट् due to the prohibition 'नाभ्यस्तस्याचि—' (2503 ). इति न etc i.e the prohibition of इट् does not follow. परत्वीरट् in accordance with the decision under 'यङोऽचि च' ( 2550 ). वर्वर्ताः etc. दीर्घ by 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (174). अङ् न i.e no अङ् in लुङ् by 'पुषादि-द्युतादि—' ( 2343 ) as वृत् is read under द्युतादि class. Thus

अवर्वर्तीत् etc. with ईट् by 'अस्तिसिचोऽपृक्ते' ( 2225 ) and सिच् which elides by 'इट ईटि' ( 2266 ). वृतु or वृत् serves as the model of ऋदुपध roots, whereas कृ ( डुकृञ् करणे ) in चर्करीति etc stands as the criterion for ऋदन्त roots. Also चरिकरीति and चरीकरीति in the ईट्पक्ष ; without ईट् चर्कर्ति etc. चर्कृतः—because तस् is ङित् । चर्करीति with यण्; अचर्करीत् etc लङ् । चर्कृयात्—लिङ् । चक्रियात्—without दीर्घ due by 'अकृत्—' ( 2298 ) as रिङ् is specially arranged for—see रिङ्विधिसामर्थ्याद दीर्घो न' under 'रिङ्शयक्—'(2363). अचर्कारीत्—by 'सिचि वृद्धिः—' ( 2297 ). नेह—i.e in the cases of दीर्घ ऋ like कॄ meaning to scatter etc. there do not come in the augs. रुक्, रिक etc. Thus चाकर्ति—चाकरीति etc, दीर्घ of the अभ्यास by 'दीर्घोऽकितः' ( 2932 ). तातीर्तः—by 'ऋत इत्—' ( 2390 ), 'उरण्रपरः' and 'उपधायाश्च' ( 2265 ). तानिरति by इत्व and रपरत्व only. अर्तेः i.e of ऋ to go read in भ्वादि—जुहोत्यादि । उरदत्वम् i.e अत् or अ in the place of ऋ in the अभ्यास by 'उरत्' ( 2244 ). रपरत्वम् by 'उरण्—' ( 70 ). रुक् or रेफ is to be added to the अभ्यास । रिकरीकोश्च i.e in the cases of रिक् and रीक् ( Here it is important to note ऋ though अजादि is itself duplicated by 'व्यपदेशिवद्भाव:' । Then उरदत्व etc. follow). अरर्ति—अरियर्ति—without ईट् and the latter is the result of both रिक् and रीक् due to इयङ् । अररीति—अरियरीति in the ईट्पक्ष । अरृतः—no गुण: due to ङित्त्व of तस्, अरियृतः in con. with इयङ् । भिअत् etc ie. by उरदत्व रपरत्व and रुक्, the form standing as अर् ऋ झि, झि is replaced by अत् by 'अदभ्यस्तात्' ( 2479 ). Then we have अर् ऋ अति = अर् र् अति by 'इको यण्—'(47) = आरति due to the elision of first रेफ by 'रो रि' ( 174 )and दीर्घ । न च तस्मिन् etc —The idea is this :

the second ऋ is replaced by यण् or र् and then the rule 'रो रि' applies. But how can it apply when the same यण् or (letter) र् is none but ऋ itself by स्थानिवत्त्व by 'अचः परस्मिन् पूर्वविधौ' (50) as the पूर्वविधि or the elision of the former र् has to be effected? The answer is that as स्थानिवत्त्व has been prohibited from having taken effect in respects of the rules or operations falling under 'पूर्वत्रासिद्धम्' (12—8.2.1), the former र (here) must disappear by 'रो रि' (8.3.14). चरिकृषि—with रिक् or रीक् where comes in इयङ् and the second ऋ is replaced by यण्। In चारियात् comes रिङ् i. e by 'रिङ्शयक्—' (2367). रलोप i.e by 'रो रि' (173). दीर्घ i. e by 'ढ्रलोपे—' (174)। चरिवृियात्—no दीर्घ because no elision of रेफ। The text reads 'गर्ह गर्हणे' but it should be गर्ह गर्हणे (to censure or blame)—see भ्वादि Root No. 650. जर्गर्हीति by 'नाभ्यस्ताचि—' (2503). जर्गर्ढि—by 'होढः', लघूपधगुण etc. घजर्घर्ढ्—by 'एकाचोबशोभष्—' (354) etc. गृह्णातेस्तु ie. of ग्रह उपादाने (to take) क्र्यादि। जाग्रहीति—by 'दीर्घोऽकितः' (2532). No सम्प्रसारण due to want of कित्त्वas यङ् elides by लुक् and तिप् is पित्। जाग्राढि—by 'होढः', 'झषस्तथोः—', 'ष्टुना ष्टुः', 'ढो ढे लोपः' and 'ढ्रलोपे पूर्वस्यदीर्घः—' (174). किग्निमित्तम्—i.e by 'ग्रहिज्या—' (2412). तस्य etc.—सम्प्र. being असिद्ध or invalid due to its बहिरङ्गत्व, the augs. रुक्, रिक् and रीक् do not follow taking advantage of the ऋकार effected by सम्प्र. Thus जाग्ृढ: and not जार्गृढः etc. जाग्रुक्षि—by 'षढोः कः सि' (295). In जाग्रहिता there is no दीर्घ of इट् by 'ग्रहोऽलिटि' (7. 2-37) as to it (ग्रहोऽलिटि) is drawn the word 'एकाचः' from the rule 'एकाचउपदेशे—' (7. 2. 10). But Madhava holds that

there will be दीर्घ which is against भाष्य ( This is curious indeed to note that according to Nagesha, Madhava is not against भाष्य and the above reflection of Bhattoji on him (Madhava) seems to be a matter of misconception on the part of Bhattoji himself —vide लघुशब्देन्दुशेखर P.P. 428—29 ). जर्गृधीति—of गृधु to hanker after. अजर्घ त्etc.—clear in the text. पाप्रच्छीति of प्रच्छ to ask. दीर्घ by 'दीर्घोऽकितः' ( 2632 ). पाप्रष्टि—by 'व्रश्च—' ( 294 ). पाप्रश्निः—by 'च्छ्वोः—' ( 2561 ). पाप्रच्छ्:—no श because व is out of the भल् प्रत्याहार । In the भाष्य under 'च्छ्वोः—' we find a hint that 'roots ending with वकार s or वकारs and having legitimate claims for having ऊठ् have no 'यङ् लुक्'—which has been made clear by Kaiyata. This prohibition of यङ्लुक् extends to cases of those roots which are liable to have ऊठ् by 'च्छ्वोः— ( only ) and thus it is proper ( we must say ) that स्निवि ( स्निवु ) and मवि ( मव्य ); however, shall have यङ्लुक् ( after them ) as they take ऊठ् from the rule 'ज्वरत्वर—' ( 256 ) and not from 'च्छ्वोः—'— and this ( our statement) is in agreement with that of Madhava and others. मव्य बन्धने etc. i.e they will not have यङ्लुक् after them being ऊठभावी by "च्छ्वोः—".But 'मव बन्धने' will have it by :—

मिथ—। ऋतश्चेति। अव्यवहितपरवर्ति सूत्रमिदम्। तदाह—ऋदन्तधातोरपि तदेवेति। अर्थात्—ऋदुपधस्येव ऋदन्तस्यापि धातोरभ्यासस्य 'रुग्रिरीक्' एते आगमाः स्युर्यङ्लुकि इति ईट्पक्षे वर्वर्तीतीत्यादि रूपम्। तदभावपक्षे तु वर्वर्तीत्यादि रूपम्। 'गुणो यङ्लुकोः' ( २६३० ) इति गुणेन रपरत्वेन हलादिशेषेण च 'वर्त्' इति स्थितिः। ईट्पक्षे 'नाभ्यस्तस्याचि पिति—' ( २५०३ ) इति गुणनिषेधः। अनीट्पक्षे तु लघूपधगुणः इति विशेषः। रुगित्यादीनां 'र्', रि, री इत्यर्थः ते शिष्यन्ते।

'वृतु वर्तने' इत्यं च ऋदुपधानां सामान्येनोदाहरणम्। लोके प्रयोगश्च यथा—श्रीधरस्वामिकृतश्रीमद्भागवतभावदीपिका-मङ्गलाचरणश्लोके—'वर्वर्ति सर्वोपरी'ति। ऋदन्तानामुदाहरणन्तु चर्करीति (कुकृञ् करणे) इत्यादि। इति नेति—पश्चात् प्राप्त इड्निषेधो नेत्यर्थः। अवर्वतीत् इति—लङि तिपि प्राग्वत्। अवर्वर्त् इति—हल्ङ्यादिना तिपो लोपः। 'रात्सस्य' (२८०) इति संयोगान्तलोपस्तु न। अवर्वा—'रो रि' इति भवति। दीर्घस्तु 'ढ्रलोपे पूर्वस्य—' (१८४) इत्यनेनेति शेषः। गणनिर्दिष्टत्वादिति—द्युता—दित्वादित्यर्थः। अङ् नेति—पुषादिसूत्रप्राप्त अङ् नेति भावः। अवर्वर्तीत् इति—सिच्, 'अस्तिसिचः—' (२२२५) इति नित्यमीट्। गुणः॥ चर्करीतीति। उत्तरखण्डस्य 'सार्वधातुकार्ध—' इति गुणः। अभ्यासस्य तु 'उरत्' (२२४५) इत्यनेन 'गुणो यङ्—' (२६३२) इत्यनेन वा गुणो रुक्। रिगीकोस्तु—चरिकरीति चरीकरीति इति। चर्कृतः। क्ङित्वान्न गुणः। चर्कृति। अत्। यण्। चर्करिता। एकाच्त्वान्नेण्निषेधः। अचर्करीत्। लङ्। अचर्कः—तिपो हल्ङ्यादिलोपाद्रेफस्य विसर्गः। चर्क्रियात् रिङ्विधिसामर्थ्याद् 'अकृत्—' (२२९८) इति दीर्घो नेति 'रिङ्शयक्—' (२२९७) इत्यत्रोक्तम्। अचर्कारीत्—सिचिवृद्धिः इति। तपरत्वान्नेति—न ऋगादय इत्यर्थः। चाकर्ति। कित्त्वाभावाद् 'दीर्घोऽकितः' (२६३२) इति दीर्घः। एवं तातर्ति। तातीर्तः—'ऋत इत्—' (२३६०) इतीत्। रपरत्वम्। 'उपधायाश्च' (२३६५) इत्युपधादीर्घः। तातिरति—अत्। अत्र हल्परत्वाभावान्नदीर्घः। अर्तेरिति—भौवादिक—जौहोत्यादिकयोरुभयोरेव ग्रहणमित्याहुः। यङ्लुकीति 'सूचिसूत्रि—' इति २६३० सूत्रस्थवार्तिकाद् यङ्। इयर्तीति—तेन रिगीकोस्तुल्यं रूपमिति बोध्यम्। अरियर्ति। अ ऋ इति यङ्लुकि स्थितम्—ततः स्पष्टं मूलम्। अररीति। ईडुकौ। अरियरीति—रिगीकोरियङ्। ईट्। गुणः। अर्यृतः—अरियृतः। क्ङित्वान्न गुणः। भि अदिति—भिरदादेशः। तस्मिन् कर्त्तव्ये इति—रेफलोपे कर्त्तव्ये इत्यर्थः। अयं भावः—रुकि अर् ऋ अति (अदभ्यस्तात्) इति स्थिते यणि अर् र् अति इति जाते 'रो रि' इति पूर्वरेफलोपो विधीयते। परन्तु यणि यो रेफो भवति स तावत् 'अचः परस्मिन्—' (५०) इत्यनेन स्थानिवद्भावेन ऋकारान्न विशिष्यते।

पूर्वविधौ रेफलोपस्यान कर्तव्यत्वात्, तत्त्व 'रो रि' (८।३।१४) इत्यस्यायमविषयो भवति। समाधानमाह—पूर्वत्रासिद्धे इति। पूर्वत्रासिद्धम् (८।२।१) इत्यसिद्धकाण्डान्तर्गत-कार्यं प्रति तस्य स्थानिवत्त्वस्य निषेधात् प्रसराशीकारादिति भावः। आरति इति—रेफलोपात् 'ढ्लोपे—' (१७४) इति दीर्घः। अरिकृति इति—इयङा अरिय् च अति इति स्थिते यण्। एवम् अरर्षि—अरियर्षि—अररीषि—अरियरीषि। अर्ऋतः—अरियृतः। अरर्मि—अरियर्मि—अररीमि—अरियरीमि। लिटि—अरराञ्चकार—अरियराञ्चकार। लुटि—अररिता—अरियरिता। लृटि—अरिरिष्यति—अरियरिष्यति। लोटि—अरर्तु—अरियर्तु—अर्ऋतात्—अरियृतात्। आरत्—अरियृत्। लङि—आरः—आरियः—आररीत्—आरीयरीत्—इत्यादि। अथाशीर्लिङि आह—रिक्रीति। आरियादिति—स्पष्टं मूले—तत्र दीर्घ इति ढ्लोपे इत्यनेन। रियीकोश्च इयङि—अरियृ यात् इति स्थिते रिङ्। बहिरङ्गत्वेन रिङोऽसिद्धत्वात् 'लोपो व्योर्वलि' (८७३) इति यलोपो न भवति। 'अचः परस्मिन्—' इति स्थानिवत्त्वादपि लोपाभावः। न च 'न पदान्त—' इति स्थानिवद्भाव-निषेधः शङ्क्यः। 'स्वरदीर्घयलोपेषु लोपरूपाजादेश एव स्थानिवत्' इति समाहित-त्वादिति दिक्। गर्ह ग्रहणे इति प्रामादिकम्। गर्हेति इत्यस्यौचित्यादभ्वादौ तथैव दर्शनाच्च। जर्गृहीति—जर्गर्ढि इति। पूर्वत्र—'नाभ्यस्तस्याचि—' (२५०२) इति गुण-निषेधः। उत्तरत्र—लघूपधगुणः। रपरत्वम्। ढत्वधत्वष्टुत्व—ढलोपाः। अजर्घट् इति—लङि ईडभावे हल्ङ्यादिना तिलोपे—ढत्व भष्भावादि। ईटि तु—अजर्गृहीत्—अजरिग्रहीदित्यादि। ग्रहुलेक्षिति। 'ग्रह उपादाने' इत्यस्य। जाग्रहीति—जाग्राढि इति। उभयत्र"ह्रीर्घोऽकितः"इति दीर्घः। यङो लुका लुप्तत्वात् सिपः पिन्नाङित्त्वाच्च 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणं न। उत्तरत्र ढत्वधत्वष्टुत्वढलोपदीर्घाः। सम्प्रेति—सम्प्रसारणस्य इति यावत्। तेन जारढः—जरिगृढ इत्यादि न भवति। जाघर्धि इति—भष्भावः। ढत्वकत्वषत्वानि। एकाच इत्यनुवृत्तेरिति—'एकाच उपदेशे—' (२२४६) इत्यस्मादिति भावः। एतत्त्वरदत्तानुरोधेन। माधवस्त्वि-त्वादि—चिन्त्यमिति नागेशः। तथाच तदुक्तिः—'वस्तुतोऽस्माद् यङ्लुगन्तेऽपि

दीर्घस्य प्राप्तिरेव नास्ति। भाष्यकृता द्वित्वेऽभ्यासविशिष्टस्यैव यङन्तत्वाङ्गीकारवत् प्रत्ययग्रहणे यस्मादिति न्यायेन विशिष्टस्यैव यङन्तत्वाद्धातुत्वाङ्गीकारो, न तु तस्य षष्ठित्वम्। ......एवञ्च माधवस्य भाष्यविरुद्धत्वमपि चिन्त्य'मिति दिक्। 'गृधु अभिकाङ्क्षायामित्यस्याह—जर्गृधीतीत्यादि। पूर्ववत् प्रक्रिया। पृच्छतेराह—पाप्रच्छतीति। 'दीर्घोऽकितः' (२६३२) इति दीर्घः। पाप्रष्टि इति— ईडभावे छस्य 'व्रश्चादिना' (२९४ सू) षत्वे तकारस्य ष्टुत्वम्। "च्छ्वोः"रिति (२५६१) शकारस्तु न भवति क्ङित्त्वाभावात्। इति शडति—तसो ङित्त्वादियमत्रप्रक्रिया। पाप्रग्धि इति—धत्वं प्राग्वत्। पाप्रच्छ्व इति—वसो झलादित्वाभावान्न शो नापि षः। पाप्रश्न इति—मसोऽनुनासिकादित्वात् 'च्छ्वोः—' इति शः। ऊठ्भाविनामिति। ऊठं भावयन्ति (भू प्राप्तौ चुरादिः) आत्मानं प्रापयन्तीति ऊठ्भाविनः। येषां वकारेभ्य ऊठ् उत्पद्यते तेषाम् इत्यर्थः। ध्वनितम्—सूचितमित्यर्थः। स्पष्टीकृतमिति। विस्तरभयादयमन्वयमपि नोक्तमित्याकरे द्रष्टव्यमिति। इदं चेति। यङ्लुङ्निषेधवचनमिति भावः। अयं वान्त ऊठ्भावी इति। अतएवास्माद् यङ्लुङ्नेति अभिप्रायः। एवं तेहदेह इत्यादेरपि। जाहयीति—जाहतीति। वान्तत्वेऽपि ऊठभावित्वाभावाद् यङ्लुक्। लोपोव्योर्वलीति यलोपः। एवमन्यत्रापि यथायथं प्रक्रिया स्वयमूहनीयेति दिक्। अवतेर्यङ्लुकं दर्शयितुमाह—अव रक्षणे इति—

२६५४। ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥६।४।२०॥

दी—। ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। अत्र क्ङितीति नानुवर्त्तते। अवतेस्तुनि (कृते?) 'ओतु'रिति दर्शनात्। अनुनासिकग्रहणं चानुवर्त्तते। अवतेर्मन्प्रत्यये तस्य टिलोपे 'ओमि'ति दर्शनात्। ईडभावे ऊठिपिति गुणः। मामोति—मामवीति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः।

मामोतु—मामूतात्। मामूहि। मामवानि। अमामोत्—अमामोः। अमामवम्। अमामाव। अमामूम। 'तुर्वी हिंसायाम्'। तोतूर्वीति।

Of ज्वर, त्वर, स्रिव, अव् and मव्, the उपधा and the वकार (simultaneously) get ऊठ when क्वि (क्विप् or क्विन्) and a झलादि or अनुनासिकादि affix follow. Here the term क्ङिति (occurring in 'अनुनासिकस्य क्विझलोः क्ङिति' (6.4.15) does not follow; for had it followed i.e. been carried down to this rule, we could not have ओतु (a cat) derived from अव् in connection with the उणादि affix तुन्—which is झलादि and not कित् or ङित्। But the term अनुनासिकस्य does necessarily follow as we witness the word ओम् derived as अव्+मन् where the टि (अन्) being dropped we get ऊम् and then ओम् by गुण। मामोति—मव्+यङ्लुक्+तिप्=मामव् तिप्=माम् ऊ तिप्=मामोति by गुण। (Here we have not attached शप् as it elides). मामवति—no ऊठ as अति is not झलादि. मामावः—मामव्+वस्=माम ० वस् by 'लोपोव्योः—' (873)= मामावः by 'अतो दीर्घोयञि' (2170). In लुङ् अमामवीत्—अमामावीत् etc. तोतूर्वीति—दीर्घ by 'उपधायाश्च' (2265):—

मित—। ज्वरेत्यादि। ज्वर त्वर स्रिवि अवि मवाम्+उपधायाः+च इति च्छेदः। 'च्छ्वोः शूठ्—' (६।४।१९) इत्यतो वकारस्य ऊठिति अनुवर्तते। अत उपधायाश्चेति वर्तते। तेन उपधासहितस्य वकारस्योठिति सूत्रार्थो लभ्यते। तदाह—ज्वरादीनामुपधावकारयोरिति। क्वाविति। 'अनुनासिकस्य क्विझलोः क्ङिति' (६।४।१५) इत्यतः क्ङितिवर्ज्जं सर्वमप्यनुवर्त्तते इत्याशयेनाह—अत

क्ङिति इति नानुवर्तत इति। तत्र निदर्शनमाह—अवतेस्तुनीति। ओतुर्बिङ्कास इति उणादावुक्तम्। यद्यत्र क्ङितीत्यप्यनुवर्तिष्यत तदा तुनेः क्ङित्त्वाभावादवतेरूठ् न स्यात्। ततश्च ऊठ्गुणयोरभावे ओतुरिति न स्यात्। अतो ज्ञायते क्ङितीत्यत्र नानुवर्तते। एतेन 'क्ङिति चे'ति व्याचक्षाणः काशिकाकारो नादर्तव्य इति ध्वनितम्। अनुनासिकस्येति तु अनुवर्तत एवेति सनिदर्शमाह—अवतेर्मन्प्रत्यय इति। टिलोपे इति—मन्प्रत्ययस्येत्यर्थः। 'अवतेष्टिलोपश्च'त्यौणादिकं सूत्रम्। एवम् ऊम् इति जाते गुणः। अनुनासिकस्येत्यननुवर्तमाने तु अवतेरत्र मनि परे ऊठ् न स्यादित्यभिप्रायः। ईडभावे इति। ईटि तु 'नाभ्यस्तस्याचि—' (२५०३) इति निषेध इति भावः। मामोतीति—मामव् इति जाते अव् इत्यस्य स्थाने ऊठ्। एवमन्यत्रापि एवंविधस्थलेबोध्यम्। मामाव इति—मामव् अस् इति स्थिते 'लोपोव्योर्वलि' (८७२) इति पूर्ववकारस्य लोपः। लुङि अमामवीत्—अमामावीत् इत्यादि। तोतूर्वीति इति—तुर्वतेरीटिपरे रूपम्। 'उपधायाश्च' (२२६५) इति दीर्घः गुणः प्राग्वत्। अथ ईडभावे 'छ्वोः शूठ्—' (२५६१) इत्यूठि प्राप्ते आह—

२६५५। राल्लोपः ॥६।४।२१॥

दो—। रेफात् परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः।

Easy—Thus of तोतुर्व् तिप्, the वकार elides and by 'पुगन्तलघूपधस्य च' (2189) we get तोतोर्ति as the लघूपधगुण is not barred by the following rule—

मित—। रादिति। अनुवृत्तिः प्राग्वत्। अव्यवहितपरवर्तित्वात् सूत्रस्य। वलोप इति। तुर्व् इत्यनेनेत्यर्थः। एवम् तोतुर् तिप् इति स्थिते पुगन्तेति लघूपधगुणेन तोतोर्ति इति सिध्यति। अत्र वकारलोपेन धात्वंशलोपे सत्यपि तिबादीनामनार्धधातुकत्वात् 'न धातुलोप—' (२६५६) इति गुणनिषेधोऽत्र न शङ्क्य इत्याह—

२६५६ । न धातुलोप आर्द्धधातुके ॥१।१।४॥

दी—। धात्वंशलोपनिमित्ते आर्द्धधातुके परे इकोगुणवृद्धी न स्तः। इति नेह निषेधः। तिबादीनामनार्द्धधातुकत्वात्। तोतोर्ति। 'हलि च' (३५४) इति दीर्घः। तोतूर्तः। तोतूर्वति। तोथोर्ति। दोदोर्ति। दोधोर्ति। 'मूर्च्छा'। मोमूर्च्छीति। मोमोर्ति। मोमूर्तः। मोमूर्च्छीत्यादि। आर्द्ध-धातुके इति विषयसप्तमी। तेन यङि विवक्षिते अजेर्वी। वेवीयते। अस्य यङ्लुङ नास्ति। लुकापहारे विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः।

इति तिङन्तयङ्लुक्प्रकरणम्।

The guna and the vriddhi of the इक् ( इ, उ, ऋ, लृ ) do not take effect when an आर्द्धधातुक ( affix ) which brings about the elision of the part of a root follows. Thus here ( in the case of तोतोर्ति ) there is no chance of the prohibition (of गुण ) as तिप् etc. are not आर्द्धधातुकs. तोतूर्वति—no elision of व as 'राल्लोप' ( 2655 ) does not apply. तोथोर्ति etc are derived from थुर्वी, दुर्वी and धुर्वी। Also तोथुर्वीति etc. मोमोर्ति —alt. of मोमूर्च्छीति, the यङ्लुगन्त form of the root मूर्च्छा—being मोमूर्च्छ्। The term 'आर्द्धधातुके', drawn back from 'आर्द्धधातुके' ( 2. 4. 35 ) to the rule 'अजेर्व्यघञपोः' ( २२९२—2. 4. 56), is an instance of विषयसप्तमी, meaning when the matter of आर्द्धधातुक is sought or intended, and not परसप्तमी i.e. when आर्द्धधातुक

follows. Thus when an intention of attaching यङ् is made अजि is replaced by वी so as to give वेवीयते in connection with यङ्. But in the latter expl. ( परमतनी ), यङ् would not appear at all after अजि as it is अजादि and not हलादि। अजि, however, has got no यङ्लुक् for here वी cannot replace अजि as the case ( विषय ) of यङ् ceases to have any consideration due to the elision of the same ( यङ् ) by the word लुक्।

Here ends the यङ्लुक् chapter of तिङन्त।

मित—। न धातुलोप इति—'इको गुणवृद्धी' ( १।१।३ ) इति पूर्वं सूत्रम्। तस्यायं निषेध आरभ्यते। धातुलोपे+आर्धधातुके इतिच्छेदः। धातुलोपे इति आर्धधातुके इत्यस्य विशेषणम्। 'धातोर्लोपो यस्मिन्निति' विग्रहः इति भाष्यम्। तेन आर्धधातुक इति धातुलोपस्य निमित्तमिति गम्यते। किञ्चात्र * दग्धपटन्यायेन धातुलोप इत्यनेन धात्वेकदेशस्यैव लोप इत्यवगम्यते। तदाह—धात्वंशलोपनिमित्ते इत्यादि। अत्र काशिका—"धात्वेकदेशो धातुस्तस्य लोपो यस्मिन्नार्धधातुके तदार्धधातुकं धातुलोपम्। तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः। लोलुवः। पोपुवः। मरीमृजः। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते 'यङोऽचि च' ( २।४।७४ ) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धीप्राप्ते तयोः प्रतिषेधः" इति—धातुलोपे सति इको गुणवृद्धी न ; आर्धधातुके परे' इत्येवं व्याख्याने तु—लोलुवः। पोपुवः (लोलूय्+अच् ; पोपूय+अच्—लुक् ) इत्यादौ गुणः स्यादेव। धातुलोपाभावात्। धात्वंशलोपे सतीत्येवमपि न व्याख्यातम्। तथा सति श्रीङो ङकारलोपेन शयितेति गुणो न स्यात्। तस्मात् 'धात्वंशलोपनिमित्ते' इति सुवचम्। धातुग्रहणं किम् ? लविता। उपदेशानुबन्धस्यैवाव धातुत्वं न तु सानुबन्धस्य। अतो न गुणनिषेधः। "आर्धधातुके किम् ? रोरवीति।

---

* पटे दग्धे यथा तदेकदेश एव दग्ध इति गम्यते तद्वत्।

लोलवीति इत्यादौ सार्वधातुके माभूत् । इक इत्येव । अभाजि । रागः" । प्रकृतमाह—इति नेटीति । तोतोर्ति इति—उक्तं प्राक् । तोतूर्वीति—झलादित्वाभावाद् 'रात् सस्य' (२६५५) इति वलोपो न । तोतोर्ति इत्यादौ क्रमेण तुर्वी, दुर्वी, धुर्वी इति हिंसायां वर्तमाना धातवः । तेषामीटि तु तोतूर्वीति इत्यादि । 'मूर्छा मोहसमुच्छ्राययोः' । मोमूर्छीति—मोमोर्ति इत्यादि । आर्धधातुके इति विषयसप्तमीति । 'अजेर्व्यघञपोः' ( २२९२—२।४।५६ ) इत्यत्र 'आर्धधातुके' ( २।४।३५ ) इत्यस्य सप्तम्यन्तस्यानुवृत्तिः । सा च विषयीकरणात् विवक्षितत्वाद्वा विषयसप्तमी न तु परसप्तमी । ततः किमित्यत आह—तेन यङि विवक्षिते इति । एवञ्च वीभावे जाते हलादित्वात् प्राप्तिः । परसप्तम्यां तु न स्यादजादित्वेनासम्भवात् । यङ्लुगभावे कारणमाह—लुकापहारे इति । लुकाऽयङोऽपहारे अदर्शने सति इति तदर्थः । विषयत्वासम्भवेनेति—प्रत्ययलक्षणाभावादिति भावः ।

॥ इति मितभाषिण्यां तिङन्तयङ्लुक्-प्रकरणम् ॥

अथ

# तिङन्तनामधातु-प्रकरणम्

२६५७। सुप आत्मनः क्यच् ॥३।१।८॥

टी—। इषिकर्मणः एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्। धात्ववयवत्वात् सुब्लुक्।

A सुबन्त base, which is the object of the root इष् and (at the same time) is related with the subject of that इष् or wish (in the sense of his own)—takes the affix क्यच् (य) optionally in the sense of wish. The affix सुप् of such bases elides as the same (सुप्) is considered to be a part of the root thus formed by 'सनाद्यन्ता धातवः' (2304).

मित—। अथ नामधातुप्रक्रियां व्याचचाणस्तदन्तर्गतसूत्रमवतारयति सुप आत्मन इति। पूर्वसूत्राद् 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३।१।७) इत्यस्मात् कर्मण इच्छायां वेत्यनुवर्तते। सूत्रे सुप इति च तदन्तस्य ग्राहकम्। 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणम्' इति न्यायात्। तेन सुबन्तात् क्यच् इति लभ्यम्। इच्छायामित्यस्यानुवर्तनात् तदर्थकधातोः कर्मण इत्यर्थलाभात् इषिकर्मण इति फलति। किञ्चात्मशब्दः स्वपर्यायः। स च लक्षणया तत्सम्बन्धी एव गृह्यते। केवलस्य सुप आत्मत्वाभावात्। तत्सम्बन्धी च इच्छायामित्यर्थसत्त्वेन एषितृसम्बन्धी एवेति फलितम्। अत आह—इषिकर्मण इत्यादि। धात्ववयवत्वादिति।

काजन्तस्य 'सनाद्यन्ताः—' (२३०४) इति धातुत्वात् 'सुपो धातुप्रातिपदिकयोः' (६५०) इति सुब्लुगित्यभिप्रायः।

२६५८। क्यचि च ॥७।४।३३॥

दी—। अस्य ईत् स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। 'वान्तो यिप्रत्यये' (६२) गव्यति। नाव्यति। 'लोपः शाकल्यस्य' (६७) इति तु न। अपदान्तत्वात्। तथाहि—

An अकार is replaced by ई when क्यच् follows. Thus he wishes (to have) a son—पुत्रम् क्यच्=पुत्र य by 'सुपोधातु—' (६५०)=पुत्रीय by this rule=पुत्रीयति in con.with शप् तिप् by 'अतो गुणे' (१९१), गव्यति—wishes a cow for himself—गो य=गव् य=गव्य by 'वान्तो यि—' (६२)=गव्यति with शप तिप् as before; similarly नाव्यति with आवादेश: I In the uses of गव्यति etc the rule 'लोपः शाकल्यस्य' (६७) does not apply as गो etc are not पद्s in con. with क्यच् and क्यङ्। Compare—

मित—। क्यचि चेति। 'अस्य च्वौ' (७।४।३२) इत्यव्यवहितपूर्वं सूत्रम्। ततोऽस्येत्यनुवर्तते। 'ई घ्राध्मोः' (७।४।३१) इत्यतश्च ई इति। तेन क्यचि परे अस्य (अकारस्य स्थाने) ईत् स्यादिति लभ्यते। तदाह—अस्येति। आत्मन इति। एवम्—पुत्रम्क्यच् इति स्थिते कचयोरितोः 'सुपोधातु—' (६५०) इति सुब्लुकि च पुत्रय इति तिष्ठति। तत ईत्वा पुत्रीय इति नामधातुः। शप्—तिपौ। 'अतो गुणे'— (१९१) पुत्रीयति। आत्मन इति किम्? राज्ञः पुत्रमिच्छतीत्यत्र माभूत्। पदविधित्वेन वाक्ये सामर्थ्याभावात् 'महान्तं पुत्रमिच्छति' इत्यादावपि नेत्याकारे स्पष्टमित्यलम्। गव्यतीत्यादि—अवावादेशयोः क्रमयोः प्राग्वत्। आत्मनो गामिच्छतीत्याद्यर्थः। अपदान्तत्वादिति—क्यचि क्यङि चेत्यर्थः। अपदान्तत्वमेव दर्शयति—तथाहीति—

२६५८। नः क्ये ॥ १।४।१५ ॥

टी—। क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत्। सन्निपातपरिभाषया क्यचो यस्य लोपो न। गव्यांचकार। गव्यिता। नाव्याञ्चकार। नाव्यिता। नलोपः। राजीयति। 'प्रत्ययोत्तरपदयोश्च' (१२७३) त्वद्यति। मद्यति। 'एकार्थयो'—रित्येव। युष्मद्यति। अस्मद्यति। 'हलि च (३५४)। गीर्यति। पूर्यति। 'धातो'रित्येव। नेह। दिवमिच्छति दिव्यति। इह पुरमिच्छति पुर्यतीति माधवनोक्तं प्रत्युदाहरणं चिन्त्यम्। पुर्गिरोः साम्यात्। दीव्यतीति दीर्घस्तु प्रायः प्रामादिक एव। अदस्यति। 'रीङृृतः,' (१२३४)। कर्त्रीयति। 'क्यच्व्योश्च' (२११६)—गार्गीयति। वात्सीयति। 'अकृत्सार्व—'(२२९८) इति दीर्घः। कवीयति। वाच्यति। समिध्यति।

No word save and except that which ends with a नकार only—is considered or designated as a पद when क्यच् and क्यङ् follow. By the परिभाषा 'सन्निपातलक्षणो विधिरनिमि त्तं तद्-विघातस्य—' or an injunction which is occasioned by the combination of two things (roots or words) is not the cause of destruction of that combination. Thus in गव्याञ्चकार etc. the वकार of अव् resulting from ओ (of गो) in connection with य (of क्यच्) cannot be the cause of destruction of the latter (य) due to the following of आम्—which being an आर्द्धधातुक paves the way for the elision of य by the rule 'यस्य हलः' (2631). Similarly गव्यिता and नाव्यञ्चकार etc. नलोप or elision of the

नकार of राजन् is effected by this rule 'न: क्ये' and नलोपः प्रातिपदिकस्य' ( 236 ) due to प्रातिपदिकत्व of राजन्। त्वाम् इच्छति माम् इच्छति give त्वद्यति, मद्यति by the rule 'प्रत्ययोत्तरपदयोश्च' ( 1373 ), युष्म of युष्मद् and अस्म of अस्मद् becoming त्व and म after the elision of सुप् when the affix क्यच् follows. But the above statement will not hold good in the cases of बहुवचन —Thus युष्मान् इच्छति etc will give युष्मद्यति etc. The words गिर् and पुर् are derived from गॄ शब्दे and पॄ पालनपूरणयोः in con. with क्विप् by 'ऋत इद्—' ( 2390 ), 'उदोष्ठ्यपूर्वस्य' (2494) respectively and 'उरण्—' ( 70 ). Hence by 'हलि च' ( 354 ) they give गीर्यति and पूर्यति in the senses गिरम् इच्छति, पुरम् इच्छति। But as दिव् is a primitive word or अव्युत्पन्न प्रातिपदिक it will give दिव्यति and not दीव्यति by 'हलि च', the counter instance— पुर्यति set forth by Madhava is objectionable as both पुर् and गिर् are similar from the fact of derivation. दीव्यति an instance forwarded by my ( Bhattoji's ) predecessor is veritably erroneous ( on the ground that the underived दिव् gives दिव्यति and that what is derived from it in con. with क्विप् or क्विन् gives द्यूयति or द्येयति—(See Tika ). अदस्यति—अमुम् आत्मन इच्छति। गार्गीयति गार्ग्यम् आत्मन इच्छति गार्ग्य क्यच्=गार्गीय by यलोप, cf 'क्यच्व्योश्च' ( 2119 ). वाच्यति—वाचमिच्छति वाच् य=वाच्य and not वाक्य as वाच् is not a पद here by the restriction 'नः क्ये' ( 2659 ) ; similarly no दकार in समिध्यति ; now in समिध्य इट्ला we look ahead—

मित—। न इति। नकारादकार उच्चारणार्थः। नकारेण च नान्तमिति विशेषणं लभ्यते 'सुप्तिङन्तं पदम्' ( १।४।१४ ) इत्यतः पदमित्यस्यानुवर्तनात् नान्त'

शब्दरूपं पदसंज्ञं स्यादित्यर्थलाभात्। यद्यपि 'क्यच्' इत्यनेन "क्यच्क्यङ्क्यषस्त्वच एव नलोपः" इति काशिका, तथापि 'लोहितादिडाज्भ्यः क्यष्'—'वा क्यषः'—२६६८-६९ इत्यत्र) इति प्रामाण्यादजन्तेभ्य एव क्यच औचित्यम्, न तु हलन्तेभ्योऽपि। अत आह—क्यचि क्यङि (चेति)। सन्निपातपरिभाषयेति—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्येतयेत्यर्थः। 'सन्निपातो द्वयोः सम्बन्धः—तन्निमित्तो विधिः, तं सन्निपातं यो विहन्ति तस्यानिमित्तम्'। उपजीव्यविरोधस्य अन्याय्यत्वादिति परिभाषेन्दुशेखरे व्याख्यातम्। एवञ्च गव्यामकार गव्यितेत्यादौ यलोपो न। क्यच्-सन्निधानेनैव अवादेशस्य वकारस्य प्रभवः। पुनस्तमेव वकारं निमित्तीकृत्य आर्धधातुके आमि परतः 'यस्य हलः' (२६३१) इति न प्रवर्तत इत्यर्थः। नलोप इति—'नः क्ये' इति नियमात् पदत्वे प्राप्ते 'नलोपः प्रातिपदिकान्तस्य' (२३६—८।२।७) इति नलोपः। न च पूर्वत्रासिद्धमिति (८।२।१) तस्यासिद्धत्वादोत्त्वं नेति वाच्यम्। 'नलोपः सुप्स्वर—' (३५३—८।२।२) इति नियमेनास्यासिद्धत्वाभावादिति तत्त्वबोधिन्यां विस्तरः। नियमश्चायं सिद्धे सत्यारम्भसामर्थ्यादिति काशिका। त्वामिच्छति मामिच्छतीत्यादौ सुब्लोपे युष्मद् य अति, अस्मद् य अति इति स्थिते 'प्रत्ययोत्तर—' (१३७२) इत्यनेन मपर्यन्तयोरेकार्थयोस्त्वमावादेशौ। एवं त्वद् य—, मद्य—इत्यादौ स्थिते रूपम्। एकार्थस्याभावे तु त्वमावादेशौ नेत्याह—एकार्थयोरित्य—वेति। युष्मान् इच्छति—युष्मद्यति। एवमस्मद्यति। गिरमिच्छति गीर्यति। पुरमिच्छति पूर्यति। 'गृ शब्दे' 'पॄ पालन पूरणयोः' इत्यनयोः क्विपि 'ऋत इद्—' (२३९०) 'उदोष्ठ्यपूर्वस्य' (२४९४) इत्येवं क्रमेण इत्त्वे उत्त्वे रपरत्वे च गिर्-पुर्शब्दौ। ततश्च क्यचि परे धातुत्वाद् धातुलभ्यस्यापि धातुत्वं पारम्पर्यात् 'हलि चे'ति दीर्घः सिध्यति, दिव्शब्दस्य तु दीर्घो न। तस्याव्युत्पन्नत्वात्। प्रत्युदाहरणमिति—धातुनिष्पन्नान्यस्य प्रदर्शनम्। साध्यादिति—उभयोरपि क्विबन्तत्वेन धातुनिष्पन्नत्वादिति भावः। प्राय इति। पूर्ववर्तिनः प्रयोगकौमुदीकारस्य इति बोध्यम्। प्रामादिकत्वं यथा—अव्युत्पन्नस्य दिव्शब्दस्य दिव्यतीत्य्वेति उक्तावपि दर्शितम्। 'दिवु क्रीडयामि'त्यस्मात् क्विपि 'च्छ्वोः—' (२५६१) इत्यूठि च द्यूः इति। तस्मा?

काम्यचि दूयतीति स्यात्। तस्मादेव विधि लघूपधगुणेन 'लोपो व्यो'रिति 'व'लोपे च देवशब्दात् देयतीत्येव स्यादित्यभिप्रायः। अदस्यतीति— अमुमात्मन इच्छतीत्यर्थे काम्यचि सुपो लुका लुप्तत्वेन विभक्तिपरकत्वाभावान्न त्यदाद्यत्वम्। 'अदसोऽसेः—' (४१९) इत्यसान्तत्वाभावान्नोत्वमत्वे। 'नः क्ये' इति नियमेन पदत्वाभावाच्च 'ससजुषोरुः' (१६२) इति रुत्वमपि न। गार्गीयतीति। गर्गस्यापत्यं पुमान्—गार्ग्यः। 'गर्गादिभ्यो यञ्' (११०७) इति यञ्। काम्यचि परे यञो यकारस्य 'क्यच्व्योश्चे'ति (२११९) लोपः। एवं वात्सीयति। वाच्यतीति। वाचमिच्छतीत्यर्थे वाच् य अति इति स्थिते 'वचिस्वपि—' (२४०७) इति सम्प्रसारणं न। 'धातोः कार्यमुच्यमानं धातुविहितप्रत्यय एवे'ति नियमात्। पदत्वाभावान्न कुत्वमपि। समिध्यति। पदत्वाभावान्नात्र जश्त्वमिति ध्येयम्। अथ समिध्यतेस्तृचि विशेषमाह—

**२६६० । क्यस्य विभाषा ॥ ६।४।५० ॥**

**दी—। हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। 'आदेः परस्य' (४४)। 'अतो लोपः' (२३०८)। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता—समिध्यिता। 'मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न' (वार्तिक)। किमिच्छति। इदमिच्छति। स्वरिच्छति।**

The affix क्यच् and क्यङ् coming after a हल् (consonant) disappear optionally when an आर्धधातुक follows. The यकार of क्यच् and क्यङ् disappears by 'आदेः परस्य' (४४) and the remaining अकार is dropped by 'अतो लोपः' (2308). And this अलोप or elision of अ being स्थानिवत्, गुण by 'पुगन्तलघूपधस्य च' (2189) cannot come in. Thus समिधिता—

समिध्यिता। 'मान्तप्रकृतिक—' This is the modified form of the Varttika 'मान्ताव्ययात् प्रतिषेधः' under 'सुप आत्मनः—' (काशिका). And the modification comes from the hands of Bhattoji who observed that original varttika would bar the application of काम्च् when the base is sing. such as पुत्रमिच्छति etc. But मान्त-प्रकृतिकसुबन्त will reserve the application of काम्च् for any सुबन्त word excepting what is मान्त or म्-ending by nature. Thus किमिच्छति etc only are without काम्च्। Similarly—उच्चैरिच्छति, नीचैरिच्छति etc.

मित—। काम्येति। 'क्य' इत्यनेन प्रागुक्त काम्च्काङोरेव ग्रहणं न तु काम्यः। 'यस्य हलः' (६।४।४९) इत्यतो हल इति पञ्चम्यन्तमनुवर्तते। 'आर्ध-धातुके' (६।४।४६) इति त्वधिकृतम्। तदाह—हलः परयोरित्यादि। एवम् समिध्य+इट् ता इति स्थिते यस्येति संघातग्रहणमित्युक्तत्वाद् आदेरित्यनेन यकारमात्रलोपः। अल्लोपस्तु परेण। तस्यस्थानिवत्त्वादिति—अल्लोपस्य स्थानिवत्त्वस्वीकारात्। मान्तेति—विकृतं वार्त्तिकमिदम्। वैकृत्यं च भट्टोजि-नैव घटितम्। मूलानुसरणे—पुत्रमिच्छति इत्यादावपि काम्चोऽभावात्। पुत्री पुत्रान् वेच्छतीत्यादावेव तत्सत्त्वाच्च। मान्तप्रकृतिकेत्येवं व्याख्याने तु किमिदमोरेव ग्रहणं स्यान्न तु पुत्रं क्वावमित्यादेरपि, तेषां प्रकृत्या मान्तत्वाभावात्। स्वरिच्छतीति—अव्ययमिदम्। उच्चैरिच्छति। नीचैरिच्छति। श्वःसैच्छतीत्यादेरपि बोध्यम्।

२६६१। **अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु** ॥७।४।३४॥

**दौ—। क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। 'बुभुक्षादौ' किम्? अशनीयति। उदकीयति। धनीयति।**

The क्यजन्त (formed with क्यच्) words अशनाय, उदन्य and धनाय are irregularly formed in the senses of excessive appetite,

thirst and greed respectively. Thus अशनायति (eagerly wishes to eat or feels much appetite for etc ) etc. Otherwise अशनीयति—he stores rice for future etc. In the former cases the want requires instantaneous supply, whereas in the latter ones future supply only is meant.

मित—। अशनायेति। अशन + क्यच् = अशनाय, उदक + क्यच् = उदन्य, धन् + क्यच् = धनाय। बुभुक्षाद्यर्थेषु अशनधनशब्दयोर्दीर्घः उदकस्य चोदन्नादेशः स्यात् क्यचि परतः। अशनायति इत्यादिः सद्योऽशनं भोक्तुम्, उदकञ्च पातुं धनञ्चाधिकमिच्छतीत्यर्थः। अशनीयतीत्यादिस्तु कालान्तरे व्यवहारार्थमिति तत्त्वबोधिनी।

## २६६२। अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥७।१।५१॥

दी—। एषां क्यचि असुगागमः स्यात्। 'अश्ववृषयोर्मैथुनेच्छायाम्' (वार्तिक)। अश्वस्यति वडवा। वृषस्यति गौः। 'क्षीरलवणयोर्लालसायाम्' (वार्तिक)। क्षीरस्यति बालः। लवणस्यत्युष्ट्रः। 'सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ' (वार्तिक)। दधिस्यति—दध्यस्यति। मधुस्यति—मध्वस्यति।

Eng.—Easy. The term आत्मप्रीतौ is not sanctioned by Katyayana and hence the modification मैथुनेच्छायाम् and लालसायाम् in his Varttikas. The mare wishes a horse and the she—cow a he—cow for conception. लालसा means excessive wish. 'सर्वप्रतिपदिकानाम्—' this is the third Varttika here. But some say that this Varttika does not belong to the authorship of Katyayan who, as a matter of fact, could not have then

spoken of 'क्षीरलवणयोः—' separately. Nagesha says that according to Madhava the scope of the third varttika is restricted to दधि and मधु only.

मित—। अर्थ ति। 'अश्वक्षीरसुक्' (७।१।५०) इत्यतोऽसुगित्यनुवर्तते। उकारावितौ। कित्त्वादन्त्यावयवः। आद्यप्रीताविति विशेषेऽविशेषास्त्री दोषः। तेनास्य ऋषावनुवादो न दृश्यते। 'अश्ववृषयो—' रिति, 'क्षीरलवणयो—' रिति च वार्त्तिकद्वयम्। अश्वस्यति—मैथुनार्थम् अश्वमिच्छति। एवं वृषस्यतीत्यत्र। 'वृषस्यन्ती तु कामुकी' इति कोशस्तु वृषशब्दस्य प्रकृत्यर्थपरित्यागेन मैथुनार्थलाभपर इति तत्त्वबोधिन्यादावुक्तम्। वस्तुतस्तु 'वृष शक्तिबन्धने' इति चौरादिको धातुस्तस्मा वृषः सेचनसमर्थ इति लभ्यते शक्तिबन्धनस्य प्रजननसामर्थ्यार्थकत्वात्। ततश्च वृषं सेचनसमर्थमिच्छती वृषस्यन्ती कामुकीति सङ्गच्छत एवेति विभाव्यम्। लालसा उत्कटेच्छा। सर्वप्रातिपदिकानामिति—इदमपि वार्त्तिकम्। इदन्तु अकात्यायनीयमेवेति केचित्। अन्यथा 'क्षीरलवणयोः—' इत्यस्यायौक्तिकत्वादित्याहुः। अत्र सर्वप्रातिपदिकानामित्युक्तत्वेऽपि 'इदं दधिमधुविषयकमेवेति माधवः' इति नागेशः। तथा सति इदमपि कात्यायनीयमेवेति स्वीकारे न क्षतिरिति द्रष्टव्यम्।

२६६३। काम्यच्च ॥७।२।४॥

**दो—। उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति पुत्रकाम्यति। इह 'यस्य हलः' (२६३१) इति यस्य लोपो न। अनर्थकत्वात्। यस्येति सङ्घातग्रहणमित्युक्तम्। यशस्काम्यति। सर्पिष्काम्यति। मान्ताव्ययेभ्योऽप्ययं स्यादेव किङ्काम्यति। स्वः काम्यति।**

काम्यच् ( also ) is added to a nominal base in the matter as expressed ( above—i. e in सुप आत्मनः क्यच्—3. 1. 8 ). Thus पुत्रकाम्यति। The क of काम्यच् like that of क्यच्, क्यङ् and क्यष् does

not disappear. The य of काम्य is meaningless and therefore it is not dropped by "यस्य हलः"—cf 'अर्थवद्ग्रहणे नानर्थकस्य'. य is meaningless here because it has no independent existence but it is a part of काम्य while in क्यच् etc. it has got its meaning as it stand independent after the elision of क, च etc. The affix काम्यच् is added to मान्तप्रकृतिकसुबन्तs and अव्ययs also as the varttika 'मान्ताव्ययेभ्यः—' prohibits the application of क्यच् only. Thus किङ्काम्यति etc.

मित—। काम्यचेति। 'सुप आत्मन—' इत्यतः परवर्ति सूत्रमिदम्। तदाह—इच्छाविषये इति। अनर्थकत्वादिति। काम्यचः ककारलोपाभावेन यस्य सम्भक्तया सत्त्वाभावादनर्थकत्वम्। क्यच्काङ्क्षायान्तु कचादिलोपेन यकाराकाररूपसङ्घात-स्थितिकत्वम्। अत एवां यकारस्यार्थवत्त्वम्। 'अर्थवद्ग्रहणे नानर्थकस्य' इति न्यायेन 'यस्य हलः' इत्यत्र यलोपो न। यशस्काम्यतीति। 'सोऽपदादौ' (१५९) इति सत्वम्। मान्ताव्ययेभ्योऽपीति। तस्य निषेधस्य क्यच्मात्रविषयकत्वादिति भावः।

२६६४। उपमानादाचारे ॥३।१।१०॥

दी—। उपमानात् कर्मणः सुबन्तादाचारार्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। 'अधिकरणाच्चेति वक्तव्यम्' (वार्तिक)। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे।

The affix क्यच्, in the sense of आचार or treatment, is attached (optionally) after a सुबन्त base which is an object (the root expressing treatment) and at the same time is the standard of comparison. Thus पुत्रीयति—he treats the pupil as his son. In विष्णूयति—दीर्घ is by 'अकृत्सार्व—' (2298).

अधिकरणाच्च (वार्तिक)—क्यच् in the above sense is attached (optionally) to a locative also. Thus प्रासादीयति—The mendicant in his hut behaves like one living in a palace. कुटीयति—(the king in the palace behaves like one in a hut.) The former indicates cheerfulness while the latter morbidity.

भित—। उपमानादिति। 'धातोः कर्मणः—' (३।१।७) इत्यतः कर्मण इत्यनुवर्त्तते। 'सुप आत्मनः क्यच्' (३।१।८) इत्यतस्तु सर्वमपि। तदाह—उपमानात् कर्मण इति। विष्णूयतीति। 'अकृत्सार्व—' (२२९८) इति दीर्घः। अधिकरणाच्चेति—वार्तिकम्। 'उपमानाभावेऽधिकरणाच्च'इत्येव सूचितव्यमित्यर्थः प्रासादीयति इत्यादि। 'क्यचि चे'ति (२५६८) इतीत्वम्। प्रासादे इव कुट्यां सुखं वर्त्तते इति। कुट्यामिव प्रासादे दुःखं वर्त्तते इति चार्थः। वेत्यनुवर्त्तनात् पूर्ववद्वाक्यमपि।

२६६५। कर्तुः क्यङ् सलोपश्च ॥३।१।११॥

दी—। उपमानात् कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्, सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङ् वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' (वार्तिक)। कृष्ण इवाचरति कृष्णायते। ओजःशब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते-यशस्यते। विद्वायते—विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु युष्मद्यते। 'क्यङ्मानिनोश्च' (८३७)। कुमारीवाचरति कुमारायते। हरिणीवाचरति। हरितायते। गुर्वीव गुरूयते। सपत्नीव=सपत्नायते—सपतीयते—सपत्नीयते। युवतिरिव

युवायते। पट्वीमृद्वाविव पट्वीमृदूयते। 'न कोपधायाः' (८३८)। पाचिकायते। 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब् वा' (वार्तिक)। वा—ग्रहणात् क्यङपि। अवगल्भादयः पचाद्यजन्ताः। क्विप् सन्नियोगेनानुदात्तमनुनासिकत्वं चाच्-प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम्। एतद्वार्तिकारम्भसामर्थ्यात्। न च अवगल्भते इत्यादिसिद्धिस्तत्फलम्। केवलानामेवाचारेऽपि वृत्तिसम्भवात्। धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। क्लीबाञ्चक्रे। होडाञ्चक्रे। वार्तिकेऽवेतुपसर्ग-विशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवा-दयः। तङ् नेति सूचितम्। 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' (वार्तिक)। पूर्ववार्तिकं तु अनुबन्धासङ्गार्थं, तत्र क्विबनूद्यते। प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते। तेन पदकार्य्यं न—कृष्ण इवाचरति कृष्णाति। 'अतो गुणे' (१९१) इति शपा सह पररूपम्। अ इवाचरति अति। अतः। अन्ति। प्रत्ययग्रहणमपनीय अनेकाच इत्युक्तेर्नाम्। औ। अतुः। उः। द्वित्वम्। 'अतो गुणे' (१९१)। 'अत आदेः' (२२४८) इति दीर्घः। णल् औ। वृद्धिः। अतुसादिषु तु 'आतो लोप इटि च' (२३७२) इत्याल्लोपः। मालेवाचरति मालाति। लिङ्गविशिष्टपरिभाषया (-षायाः ?) एकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालाञ्चकार। लङि। अमालात्। अत्र हल्ङ्याब्भ्यादिलोपो न। ङीप्साहचर्यादापोऽपि सोरेव लोप-विधा-

नात् । इट्सकौ । अमालासीत् । कविरिव कवयति । आशीर्लिङि कवीयात् । 'सिचि वृद्धिः—' ( २२९७ ) इत्यत्र 'धातो'रित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः । अकवयीत् । माधवस्तु नामधातोरपि वृद्धिमिच्छति । अकवायीत् । विरिव—वयति । विवाय । विव्यतुः । अवयीत्—अवायति । श्रीरिव—श्रयति । शिश्राय । शिश्रियतुः । पितेव पितरति । आशिषि रिङ् । पित्रियात् । भूरिव भवति । अत्र 'गातिस्था—' ( २२२३ ) इति, 'भुवो वुक्—' ( २१७४ ) इति, 'भवतेः—' ( २१८१ ) इति च न भवति । अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात् । अभावीत् । बुभाव । द्रुरिव—द्रवति । 'णिश्रि—' ( २३१२ ) इति चङ् न । अद्रावीत् ।

The affix क्यङ् in the sense of आचार or treatment, is attached optionally to a सुबन्त base which is the subject ( of the sentence ) and at the same time is the standard of comparison ( उपमान )—but ( the सकार of ) a base which is स-ending and expresses the sense of a subject elides optionally (in connection with the क्यङ् ). From the fact of 'क्यङ् वा', the very sentence will serve as an alternative. The elision ( of the स ) of the सान्त, however, is taught to take effect only when क्यङ् is made use of. And this elision again, has been thus handled under the varttika—'ओजसोऽप्सरसः—' which means—'( the स ) of ओजस् and अप्सरस् is dropped unalterably ( नित्य ) whereas that of other ( सान्त

bases ) alternatively ( विभाषा )'. Thus कर्तुः क्यङ्—कृष्णायते (दीर्घ by 'अकृत्सार्व—' ( 2298 ) and आत्मनेपद by 'अनुदात्तङित:—' ) and सलोप:—ओजायते etc where the term ओजस् signifies the sense of one possessed of ओजस् or force hence ओजस्वी or forcible—strong ( 'ओजायते' is here a वृत्ति for which see सर्वसमासशेषप्रकरणम् )। Similarly यशस् in यशायते—यशस्यते implies यशस्वी famous. त्वद्यते etc—the sense is त्वमिवाचरति etc—see ante, 'प्रत्ययोत्तर—' ( 1378 ) under 'न: क्ये'—2659. By 'क्यङ्मानिनोश्च' (837) which teaches पुंवद्भाव of feminine bases in क्यङ् we have कुमारी इव-चरति—कुमारायते with लोप of ङीप्। Similarly हरितायते—acts like one of yellow colour, cp. 'वर्णादनुदात्तात्तोपधात्तो नः' ( 496 ). दीर्घ everywhere by 'अकृत्सार्व ( 2298 ). The base सपत्नी is ambignous ; thus—(1) सपत्न ( a foe ) and ङीन् by शार्ङ्गरवाद्यञोङीन् ( 527)—? which by पुंवद्भाव and 'अकृत्—'in क्यङ् gives सपत्नायते। ( 2) समान: पतिर्यस्या इति सपत्नी by 'नित्यं सपत्न्यादिषु' ( 49 ) ङीप् and न by 'पत्युर्नो—' ( 490 ) whence by पुंवद्भाव etc we have —सपतीयते। ( 3 ) The word सपत्नी expressing conjugal connection is always feminine. Thus it has not the corresponding पुंवद्भाव and we therefore get सपत्नीयते। पट्वीमृद्व्यते—पट्वी has no पुंवद्भाव as it is intervened by मृद्वी and मृद्वी gets it ( पुंवत्व ) because it ( मृद्वी ) is invariably followed by क्यङ्। 'न कोप—' forbids पुंवत्व। 'आचारे—' ( वार्त्तिक)—क्विप् in the sense of आचार is optional after अवगल्भ ( daring ) etc. From the acceptance of वा in the वार्त्तिक we have क्यङ् also after them. अवगल्भ etc are derived with अच् directed by 'नन्दिग्रहिपचादिभ्यो ल्युणि-

ऽच:' ( 2896 ). अनुदात्तत्व and अनुनासिकत्व (of the अ) of the अच् are promised i.e. admitted in connection with the application of क्विप्. Hence we have तङ् or आत्मनेपद here (due to the elision of अ , which is अनुदात्त and thus the base falling under 'अनुदात्तङित:—' ). Thus अवगल्भते, क्लीवते acts like an eunuch etc. The Varttika 'कास्यनेकाज्ग्रहणं कर्त्तव्यम्' under 'कास्प्रत्ययादाम्—' ( 2306 ) enjoins आम् after what is अनेकाच् at that very moment. But here from the fact of the commencement or existence of this Varttika 'आचारेऽवगल्भ—' we have आम् after अवगल्भ etc. even though they were अनेकाच् previously i. e. before the elision of अ. ( It is important here to note that the root is separated from the उपसर्गs, if any, when an affix, which causes the धातुसंज्ञा of the same ( as क्यच्, क्यङ्, क्विप् etc ), follows. Thus अवगल्भ also like क्लीव etc. is एकाच् in reality ). Nor can it be argued that the above Varttika is only to achieve अवगल्भते etc. i.e to enjoin आत्मनेपदित्व of अवगल्भ etc. Because the bases stripped of the उपसर्गs or such other पूर्वपदs too, may bring out the sense of आचार also due to the dictum that roots are of multifarious meanings. Thus अवगल्भाञ्चक्रे etc. Madhava and others hold that on the score of the reading of अव in the above Varttika, the base गल्भ will take क्यङ् only ( and no other affix ) even when it stands by itself or is preceded by any other उपसर्ग. It is, how— ever, proper to state that it will not take तङ् or आत्मने. termi- nations ( In as much as it ( अवगल्भ ) may be followed by

क्विप् also by another varttika 'सर्वप्रातिपदिकेभ्यः—'। Thus it is clear that गल्भ without उपसर्गs or with उपसर्गs excepting अव will be परस्मै. when क्विप् follows—गल्भति प्रगल्भति)। 'सर्व—' varttika—easy. The former varttika is for the sake of attaching अनुबन्ध (अनुदात्त) in con.with क्विप् which is affixed after अच्. From the fact of प्रातिपदिकग्रहण in this varttika, सुप् ( from 'सुप आत्मनः—') is not drawn into here. Thus here ( in con. with क्विप् ) there will be no operation due in a पद ( e. g. राजानति ( राजा इवाचरति—राजन् + क्विप्—without नलोप ). इत्युक्तेः—i.e in 'कास्प्रत्ययात्—' ( 2306 ). Therefore णल् etc, come in अ + णल = अ अ णल् अ णल् (अतो गुणे) = आ णल् (अत आदेः) = आ औ ( 'आत औ—' 2371) = औ ( 'वृद्धिरेचि'—72 ). अतुसादिषु तु etc easy. Though by 'अर्थवदधातुर-प्रत्ययः प्रातिपदिकम्' ( 178 ) माला is not a प्रातिपदिक due to its con. with टाप्, yet क्विप् by the वार्त्तिक 'सर्वप्राति—' takes effect by the परि—'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'—anything taught by pronouncing प्रातिपदिक is to be understood to be taken in all its genders or—because the single substitute is ( naturally ) पूर्वान्त or what it was primarily—माल (the प्रातिपदिक). In अमालात् there is no chance of the elision of ति by 'हल्ङ्याब्भ्यः—'( 254 ) as it has been settled that सु only ( of सुबन्त affixes ) disappears coming after आप् or आबन्त bases also as it ( सु ) does after ङीप् or ङीबन्त bases due to its ( of आप् ) contact with ङीप् ( in 'हल्-ङ्याब्भ्यः— ). The idea is—तिप् and सिप् do not * invariably

* Thus गौरी + क्विप् = whence in लुङ् we have अगौरयीत् without लोप of ति as it does not invariably follow upon ङीप्।

follow upon an क्लीबन्त base as सु does. Thus the elision of सु only is effected by 'हल्ङ्याब्भ्यः—' and thence it is inferred or rather concluded that सु only and not तिप् and सिप् also will elide when coming after an ङ्याबन्त base, इट्सकौ—by 'यमरमन-मातां सक् च' (2377). अवीयात्—by 'अकृत्—' (2298). धातुरेव यो धातुः i. e a primary root and not a secondary one as नामधातु etc. माधवस्तु—because he does not draw the term 'धातोः' from 'ऋत इद्धातोः' (2390—7. 1. 100) to 'सिचि वृद्धिः—' (2297—7.2.1). विरिव i.e acts like a वि or bird: अभिव्यक्तत्वेन—i. e due to its being expressly mentioned.

मित—। कर्तुरिति। वाक्यद्वयविशिष्टं सूत्रम्। कर्तुः क्यङ् इत्येकं सलोप-श्चेत्यन्यत्। 'उपमानादाचारे' (३।१।१०) इत्यनुवर्तते। 'धातोः कर्मणः—' (३।१।८) इत्यतो वेति च। तदाह—उपमानादिति सान्तस्येति। उपमानभूतस्येत्य-स्याप्यध्याहारः क्यङ्सन्नियोगशिष्ट इति। शिष्टोऽनुशिष्टः। क्यङि परतः सलोप भवतीत्यर्थः। सूत्रद्वया सर्वत्रैव सान्तस्य लोपविकल्पे प्राप्ते आह—स च व्यवस्थित इति। ओजस इति श्लोकवार्तिकेनेति शेषः। इतरेषामिति—ओजोऽप्सरोवर्ज्यं सान्तानामित्यर्थः। अतएव यशायते—यशस्यते इत्यादौ पदद्वयं भवति। वृत्तिविषये—इति। नामधातुत्वादस्य वृत्तिः। तथा चोक्तमन्यत्र (सर्वसमासशेषप्रकरणे) कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः। परार्थाभिधानं वृत्तिरित्यादि। तद्वतीति—ओजस्विनि रूढ इति यावत्। तथा च ओजायत इति ओजस्वीवाच-रतीत्यर्थः अनेन सलोपे कृते 'अकृत्सार्व—' (२२९८) इति दीर्घः। ङित्त्वादात्मने—पदम्। त्वद्यत इति। त्वमिवाचरतीत्यर्थे क्यङ्। एकार्थस्य वाचकत्वात् 'प्रत्ययोत्तर-पदयोश्च' (१३७२) इति युष्मदो मपर्यन्तस्य त्वादेशः। कुमारायते इत्यादि—"क्यङ्-मानिनोश्चे"ति क्यङि पुंवद्भावः। हरिणीति नायं वर्णवाचकः शब्दः। किन्तु हरिणपर्यायक एव। एतद् 'वर्णादनुदात्तात्तोपधात्तो नः' (४९५) इत्यत्रोक्तम्।

अन्त्यस्य च दीर्घः प्राग्वत्। सपत्नायते इति शत्रुपर्यायात् सपत्नशब्दात् ङीन्-प्रत्यये सपत्नीति भवति। तस्य क्यङि क्यङ्मानिनोश्चेति पुंवद्भावे प्राग्वद्दीर्घे च रूपमिति वदन्ति। परन्तु सपत्नशब्दः शार्ङ्गरवादिगणे नोपलभ्यतेऽनाकृतिगणश्चायं शार्ङ्गरवादिरिति तत्त्वबोधिन्यां दृश्यते। तथा सति प्रत्ययान्तरमेव मृग्यमेव। सपत्नीयते इति—समानः पतिः स्वामी यस्याः इति बहुव्रीहिः 'पत्युर्नो यज्ञसंयोगे' (४९०) इति नकारे कृते 'ऋन्नेभ्यो ङीप्' (३०६) इति ङीपि च 'नित्यं सपत्न्यादिषु' (४९२) इति सपत्नीशब्दः सिद्धः। तस्य क्यङि परतः पदत्वेन नल-ङीत्वयोर्लोपे कृते यथोक्तरूपम्। सपत्नीयते इति—उक्तार्थे—विवाहनिबन्धनोऽयं सपत्नीशब्दः। स च नित्यस्त्र्यन्तः। तेन नात्र पुंवत्त्वम्। पट्वीमृदूयते इति—पूर्वपदस्योत्तरेण व्यवहितत्वान्न पुंवत्त्वम्। 'आचारेऽवगल्भ—' इति—वार्तिकमिदम्। अत्राप्युपमानादित्यध्याहारः। सूत्रादेव वाग्रहणानुवृत्त्या सिद्धेऽत्र वाग्रहणस्यावश्यकतामाह—वाग्रहणादिति। तेनावगल्भादिभ्यः कर्तृभ्य उपमानवाचकेभ्य आचारेऽर्थे क्विप् क्यङ् चेत्यर्थः। पचाद्यजन्ता इति—'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (२९९८) इति सूत्रेणेत्यर्थः। अच्प्रत्ययस्येति। तस्याकारस्येत्यर्थः। प्रतिज्ञायते इति—वार्तिकभाष्याभ्यां तथैव विधीयते इति भावः। तेन तङिति। तस्याकारस्य लोपेन 'अनुदात्तङित—' इत्यात्मनेपदमित्यर्थः। गल्भ धार्ष्ट्ये। क्लीबृ अधार्ष्ट्ये। होडृ अनादरे। भूतपूर्वादपीति—अयमर्थः—अवगल्भ इत्यादीनामजन्तत्वमादाय अनेकाच्कत्वम्। अजन्तसम्पन्नस्य अकारस्य च क्विपि परे 'अतो लोपः' (२३०८) इति लोपः। ततश्चैषामनेकाच्त्वं न भवति। तथा सति 'कास्यनेकाज्ग्रहणं कर्तव्यम्' इति न प्रवर्तते। अतः क्विबुत्पत्तेः प्रागेवाजिति। न च अवोपसर्गमादाय 'अवगल्भ' इत्यस्यानेकाच्त्वमिति वाच्यम्। 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति वक्ष्यमाणत्वात्। ननु 'भूतपूर्वादपी'ति चिन्त्यम् लिङ्गाद्यभावात्। तत्राह—एतद्वार्तिकेति। 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' इत्यनेनैव क्विब्ग्रहणं सिद्धे 'आचारेऽवगल्भ—' इत्येतद् व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ननु 'क्विप्सन्नियोगेन अनुदात्तत्वम्

अनुनासिकत्वं धातु प्रत्ययस्य' प्रतिज्ञानार्थमित्येतद्वार्तिकप्रवृत्तिरात्मनेपदसिद्धिश्च तत्फलमित्याशङ्क्य आह—न चेति। समाधानमाह—केवलानामेवेति। अवाद्युपसर्गानुपलक्षितानामित्यर्थः। नन्वेवम् अवादित्यागे धातोरर्थान्तरमापद्यते। तत्राह—धातूना-मिति। उपसर्गान्तरेति। अवव्यतिरिक्तोपसर्गविशिष्टादित्यर्थः। माधवादय इति—अक्षरयोद्भावनमिदम्। तद्ङ्निषेधरूपनियमस्यैवोचित्यादिति बोध्यम्। अतएवाह—तद्नेति। तथाच 'सर्वप्रातिपदिकेभ्यः—' इत्यागरवार्तिकेन सोपसर्गादनुपसर्गाच्च गल्भादिशब्दादपि क्विप् सिध्यति। ततश्च क्यङ् एवेति। नियमो व्यर्थ इति भावः। नन्वेवम् अत्र वाग्रहणात् क्यङपि भवति। ततश्च उत्तरेणैव सिद्धे पूर्ववार्तिकं व्यर्थम् इत्यत आह—पूर्ववार्तिकन्त्विति। अनुबन्धासञ्जार्थमिति। अनुदात्तार्थमित्यर्थः। क्विबनूद्यत इति। अनूद्यते पश्चात् सन्निवेश्यत इत्यर्थः। तथाच क्विप्सन्नियोगेनैव अच्प्रत्ययस्य अनुदात्तानुनासिकत्वे यथा स्यातामित्येतत् प्रतिज्ञानार्थं पूर्ववार्तिकं सप्रयोजनमिति भावः। तेन पद-कार्ये नेति—सुबन्तस्यैव तन्नियमात्। अतएव राजेवाचरतीत्यादौ क्विपि परे पदत्वाभावेन नलोपाभावात् राजानतीत्यादि सिध्यतीत्यभिप्रायः। पररूपमिति। 'अतो गुणे' (१९१) इत्यनेनेत्यर्थः। एतत्तु 'अत आदे'रित्यत्र (२२४८) उक्तेन 'पररूपापवाद' इति स्वग्रन्थेन विरुद्ध्यते इति तत्त्वबोधिनी। अ इवेति। अशब्देन विष्णुरुच्यते। स इवेत्यर्थः। अतीत्यादि। शपा सह पररूपेण प्राग्वत्। अत्र क्विप्प्रत्ययमादाय 'कास्प्रत्ययादाम्—' (२२०६) इत्याम् नेत्याह—प्रत्ययग्रहणमपनीयेति। 'कास्यनेकाच्—' इति वार्तिकव्याख्यानावसरे एतदुक्तम्। आमभावाद् णलादौ रूपमाह—औ। अतुरित्यादि। प्रक्रियामाह—द्वित्वमित्यादि। अ+णल्=अ अ णल्=अ णल् ('अतो—')=आ णल् ('अत आदेः')=आ औ ('आत औ—')=औ ('वृद्धिरेचि' ७२)। अन्यत् स्पष्टम्। 'अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्वा प्रत्ययान्तादित्याचोऽप्याम् भवत्येव। अ इवाचरतीत्याचारे क्विपि लिटि—आचकार—आचक्रतुरित्यादीत्याहुः'—तत्त्वबोधिनी। मालाशब्दस्य टाप्प्रत्ययान्तत्वेन 'सर्वप्रातिपदिकेभ्यः—' इति क्विपोऽनुत्पत्तिमाशङ्क्य

आह—लिङ्गविशिष्टपरिभाषयेति। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण-मि'त्यनयेत्यर्थः। पक्षान्तरमाह—एकादेशस्येति। एतत् 'अन्तादिवच्च' (७५) इत्यत्र स्पष्टीकृतम्। हल्ङ्यादिलोप इति। 'तिसि' इत्यनयोर्लोप इत्यर्थः। ङीप्-साहचर्यादिति—चाप इति शेषे षष्ठी। सोरिति। कर्त्तरि षष्ठीयम्। अयं भावः। क्विबन्तगौरीशब्दात् ङीबन्तात् लुङि अगौरयीत् इति इष्टम्। तथा चात्र ङीबन्तात् हल्ङ्यादिना तिलोपो न। एवञ्च यथा ङीबन्तात् हल्ङ्यादि-सूत्रेण तिलोपो न तथा ङीप्साहचर्यात् आबन्तादपि हल्ङ्यादिसूत्रेण तिलोपो न। एवं सिलोपेऽपि नेयम्। किन्तु हल्ङ्यादिसूत्रेण ङीबन्तादाबन्ताच्च परयोः सोरेव लोप इत्यर्थः। इट्सकाविति। 'यमरमनमातां सक् च' (२३७७) इत्यनेनेति बोध्यम्। धातुरेव यो धातुरिति—न तु प्रत्ययान्तो धातुरिति तदर्थः। 'सन् इद्धातोः' (७।१।१००) इत्यतः 'सिचि वृद्धिः' (७।२।१) इत्यत्रानुवृत्तिः। कैयटादय इति—यद्यपि कैयटेनैव गोशब्दादाचारक्विपि अगवयीत् इति 'इको गुणवृद्धी' इत्यत्रोक्तम् तथापि अक्षचिकरलघीतनार्थं आदिग्रहणम्। अतएव माधवमनुसृत्याह—अकवायीदिति। विरिवेति। विः पक्षी। अभिव्यक्तत्वेनेति—स्पष्टसुक्तत्वेनेत्यर्थः। सुभाव इति। न तु वुगितिभावः।

२६६६। अनुनासिकस्य क्विझलोः क्ङिति ॥ ६।४।१५ ॥

दी—। अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इदमिवाचरति—इदामति। राजेव राजानति पन्था इव पथीनति। मथीनति। ऋभुक्षीणति। द्यौरिव देवतीति माधवः। अत्र ऊठि द्यवतीतुरुचितम्। क इव कति। 'चकौ' इति हरदत्तः। माधवस्तु 'णलोपौ' इति वचनाण्णलि वृद्धिं बाधित्वा अतो लोपात्—'चक' इति रूप-

**माह। स्व इव स्वति। सखौ। सस्व। यत्तु सामौ सावकार इति। तदनाकरमेव।**

The penultimate or उपधा of (an अङ्ग or base ending with) अनुनासिक (म्, न् etc) becomes दीर्घ when क्वि (क्विप् or क्विन्) and झलादि क्ङित् affixes follow. Thus इदम्+क्विप्=इदाम्; then शप् तिप्—इदामति. Similarly राजानति, पथीनति etc. (But these instances, says Nagesha, are at variance with भाष्य which prohibits क्विप् from being added to हलन्त bases; cp. 'हलन्तेभ्य आचारक्विप् नास्ति')। In ऋभुक्षीयति the base is ऋभुक्षिन् (an appellation of इन्द्र)—षत्व due to ष। Some say that पथिनति is the correct form by गुण in con. with तिप्। देवति —दिव् (heaven)+क्विप्+शप् तिप्—लघूपधगुण। द्यवति—दिव्+ऊठ् etc= द्यूव् अति=द्यू अति ('लोपो व्योर्वलि' 875)=द्यो अति—द्यवति by गुण and अवादेश। क means ब्रह्मन्। चकौ—क (क्विबन्त)+णल्=चक णल्=चका णल् by 'अचो ञ्णिति' (254)=चकौ by 'आत औ—' (2371). Note that 'चकौ' derived thus by Haradatta is according to पाणिनि's परिभाषा 'विप्रतिषेधे परम्—' which has here necessitated the preference of 'अचो ञ्णिति' (7. 2. 115) to the exclusion of 'अतो लोपः' (6. 4. 48). But this is objectionable on the strength of 'मुनीनां यथोत्तरं प्रामाण्यम्' and we shall accordingly have recourse to कात्यायन according to whom, by पूर्वविप्रतिषेध, अल्लोप is to be preferred to वृद्धि here by the varttika 'णल्लोपावियङ्यण्गुणवृद्धि-दीर्घेभ्यः पूर्वविप्रतिषेधेन—as Madhava has done (and this is agreed to by Bhattoji also). Here, in the light of चक, it cannot be objected that as 'अतो लोप' (6. 4. 48) has barred

'अचो ञ्णिति '( 7. 2. 115 ) so it will bar 'अत आदेः' ( 7. 4. 70 ) so that you cannot have आौ, आतुः etc. For by 'अनन्तरस्य विधिर्वा प्रतिषेधो वा', 'अतो लोपः' bars 'अकृत्सार्व—' ( 7. 4. 25 ) only and not 'अत आदेः' also which has been intervened by other rules. अनाकरम् i. e. not in accordauce with the source which is evendently the भाष्य of Rev. Patanjali. But Nagesha holds that स्लामास etc. also are not at variance with the भाष्य as it does not say 'प्रत्ययग्रहणमपनीय' etc. as Bhattoji has done in 'कास्-प्रत्ययादाम्—' ( 2309 ). Thus प्रत्ययान्त एकाच् roots also may have आम् etc.

मित—। अनुनासिकस्येति। 'नोपधायाः' (६।४।७) इत्यत उपधाया इत्यनुवर्तते। 'ढ्लोपे—' (६।३।१११) इत्यतो दीर्घ इति च। अङ्गस्येत्यधिकृतम् (६।४।१)। तच्च विशेष्यम्। अत—अनुनासिकस्येति विशेषणम्। विशेषणत्वाच्च तदन्तविधिः। किञ्च 'यस्मिन् विधिस्तदादावल् ग्रहणे' इति भाषः प्रत्ययविशेषणत्वेन तदादिविधिः। तदाह—अनुनासिकान्तस्येति। इदामतीत्यादि। भाष्ये तु 'इलन्तेभ्य आचारक्विब् नास्ति' इति 'कृत्तद्धाप:—' (२०८—७।१।५४) इति सूत्रे स्पष्टमिति नागेशः। पथीनतीति। उपधादीर्घादिदं माधवानुरोधेन। वस्तुतस्तु पथिन् अति इति (पथिन् शब्दः क्विबन्तः) स्थिते 'इन्हन्पूषार्यम्णां शौ' (२५६) इति शाविव उपधाया दीर्घो नान्यत्रेति निषेधात् तिपि लघूपधगुणेन पथिनतीत्येव न्याय्यमित्याहुः। ऋभुक्षीणतीति। ऋभुक्षिनर्थं शब्द इन्द्रपर्याय इति कोशात्। दिवतीति। क्विबन्त-दिव्शब्दाल्लघूपधगुणेनेदम्। किन्त्वत्र ऊट् एव भाष्य इत्याह—द्यवतीति। ऊठि द्यूव् अति 'इति जाते 'लोपो व्योर्वलि' (८८२) इति वलोपे 'सार्वधातुकार्ध—' (२१६८) इति गुणेनावादेशे द्यवतीति स्यात्। चकाविति—क्विबन्तात् कशब्दस्य (ब्रह्मवाचिनः) आचि द्वित्वे चत्वादिना चक अत् इति स्थिते परत्वाद 'अतो लोपः' (६।४।४८) इति बाधित्वा 'अचो ञ्णिति' (२५४—७।२।११५) इति वृद्धौ चका

णल् इति जाते 'आत औ—' (२३७१) इति णल औत्वे रूपम्। एतद—रुचिकरमिति ज्ञापयन्नाह—माधवस्त्विति। 'यथोत्तरं मुनीनां प्रामाण्य'मिति न्यायेन सूत्रक्रममतं व्युदस्य वार्तिकक्रममतस्य उपादेयतया 'अल्लोपोपधालोपयण्गुण-वृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्तिकात् परविप्रतिषेधशास्त्रस्यात्र निरासः। ततश्च चक णल इति स्थिते वृद्धिं बाधित्वा अतो लोपे चक इति भवति। न चैवम् ऊ अतुरित्यादावपि 'अत आदेः' (७।४।७०) इति दीर्घं बाधित्वा 'अतो लोपः' (६।४।४८) इत्यस्य प्रवृत्त्या ऊ अतुरित्यादि न स्यादिति वाच्यम्। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायात् 'अतो लोपः' (६।४।४८) इति 'असिद्धवत्—' (६।४।२२) इत्यस्मात् प्राप्तमेव दीर्घं बाधते न तु व्यवहितात् 'अत आदेः' (७।४।७०) इत्यस्मात् प्राप्तमपीति माधवाशयादित्यलम्। अनाकरमिति—आकरो भाष्यम्। तद्विरुद्धमिति। वस्तुतस्तु भाष्ये 'प्रत्यय-ग्रहणमपनीये'त्यस्य रूपव्याख्यानाभावात् प्रत्ययान्तादेकाचोऽप्यामिति नागेशः।

२६६७। भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥३।१।१२॥

दी—। अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च। अभृशो भृशो भवति भृशायते। 'अच्वे'रिति पर्युदासबलात् 'अभूततद्भावे' इति लब्धम्। तेनेह न। क्व दिवा भृशा भवन्ति। ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। 'सुमनस्'—अस्य सलोपः। सुमनायते। चुरादौ 'संग्राम युद्धे' इति पठ्यते। तत्र 'संग्राम' इति प्रातिपदिकम्। तस्मात् 'तत्करोति—' इति णिच् सिद्धः। तत्सन्नियोगेनानुबन्ध आसज्यते। युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात् संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति

—* 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति। तेन मनःशब्दात् प्रागट्। सुमनायत। उन्मनायते। उदमनायत। एवं चावागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम्। ज्ञापकं सजातीयविषयम्। तेन यत्रोपसर्गस्वरूपं सकलं श्रूयते न त्वादेशिनापहृतं तत्रैव पृथक्कृतिः। एवं च 'आ ऊढः ओढः' स इवाचर्य्य ओढायित्वा। अत्र 'उन्मनाय्य, अवगल्भ्य' इतिवन्न ल्यप्। ज्ञापकस्य विशेषविषयत्वे षष्ठवार्तिकं तद्भाष्यञ्च प्रमाणम्। तथाहि—'उस्योमाङ्क्ष्वाटः प्रतिषेधः' (वार्त्तिक)। उस्योमाङोश्च परयोराटः पररूपं नेत्यर्थः। उस्रामैच्छत् औस्रीयत्। औङ्कारीयत्। औटीयत्। 'आटश्च' (२६८) इति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति षष्ठे स्थितम्।

The affix क्यङ् in the sense of 'to be' is attached to words of the भृशादि class—expressing the sense of अभूततद्भाव or becoming what it was not, and the final of the हलन्त or consonant-ending base of the list is dropped ( in con. with क्यङ् ). Thus भृशः etc. We have got 'अभूततद्भावे' from the पर्युदास or नञ्समास in 'अच्वेः' ( see वार्तिक 'अभूततद्भाव इति वक्तव्यम्' under 'कृभ्वस्तियोगे—' 2117—5. 4. 50 ). Hence here, in क्व दिवा etc there is no क्यङ्. भृश here means the star. तत्र i. e. in

---

* वाक्शब्दस्य धातुसंज्ञात्वाभावात् समित्वस्य उपसर्गसंज्ञाविरहत्वेन उपसर्गसमानाकारमित्युक्तम्। किञ्चात्र 'कुगतिप्रादयः' इति समास इष्ट इत्याह—पूर्वपदमिति।

'संग्राम युद्धे the word संग्राम is a प्रातिपदिक and not a root. After this word संग्राम we have णिच् by the गणसूत्र 'तत् करोति तदाचष्टे—'. And in conection with this णिच् the अनुबन्ध—अ is attached (after the म् of the base संग्राम so that by 'अतो लोपः' (2308) and 'णौ चङ्युपधाया:—' (2814) there is no उपधाह्रस्व in 'असंसंग्रामत' due to अग्लोपित्व. Thus for the sake of this अनुबन्ध the base संग्राम is read in चुरादि). Though it has been said that the base ग्राम alone can express the sense of war (युद्ध) and thus by implication we could have संग्राम as well yet the special reading 'संग्राम युद्धे' suggests that a preceding word looking like an उपसर्ग is segregated (as अव—गल्भ) when such an affix as conditions धातुसंज्ञा (of the base—as काच्, काक्र etc.) is intended (to attach). Hence the augment अट् is prefixed to the word मनस् (and not before सु of the base सुमनस्—a god). Thus it is to be understood that अव is set apart in अवागल्भत (लङ्) etc. And a suggestion or ज्ञापक being subject to a class (जाति) in general—the segregation (पृथक्कृति) takes place only when the उपसर्ग is heard in full i. e. stands unchanged, but not when it undergoes any change due to आदेश i. e. एकादेश. Thus like उन्मनाय्य etc. there is no ल्यप् in ओढायित्वा where the उपसर्ग आ has been changed to 'ओ' by एकादेश। As to the reference to a particular subject (as this—ओढायित्वा) on the part of a ज्ञापक we have for authority the varttika and its Bhasya in the sixth chapter (of अष्टाध्यायी). Compare (the varttika) 'उस्योमाङ्क्षु—' under the rule 'ओमाङोश्च' (50) which

( the varttika ) means that the aug. आट् does not get पररूप when उस्, ओम् and आङ् follow. Thus in उस्राम् etc. he wished a cow—औस्त्रीयत् etc. there is वृद्धि by 'आटश्च' ( 269 ). Besides, the सूत्रकार also is another authority to this विशेषविषयत्व in enunciating 'आटश्च' whereof the word 'च' has been explained by the Bhashyakara in the sixth chapter to be intended to effect वृद्धि for the second time so that पररूप cannot step in when अच् follows.

मित—। भृशादिभ्य इति। [ भृश, शीघ्र, चपल, मन्द, पण्डित, उत्सुक, सुमनस्, दुर्मनस्, अभिमनस्, उन्मनस् रहस् रोहत्, रेहत्, संश्रत्, तृपत्, शश्वत्, भमत्, वेहत्, शुचिस्, शुचिवर्चस् अण्डर वर्चस्, ओजस्, सुरजस्, अरजस् —एते भृशादयः ]। सूत्रे 'भुवि' इत्यस्य विवरणम्—भवत्यर्थे इति। भवनं भूः भावे क्विप्। तस्मिन्—भवने इत्यर्थः। 'कर्तुः क्यङ्—' ( ३।१।११ ) इत्यनुवर्त्तते। तदाह—क्यङ् इत्यादि। ननु अभूततद्भावविषयेभ्यः इति सूत्रे न दृश्यते। तत् कुत इदमित्यत आह—अर्चेरिति। 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' ( २११७ ) इत्यत्र पठितात् 'अभूततद्भाव इति वक्तव्यम्' इति वार्त्तिकादिति भावः। क्व दिवा भृशा इति—कैयटग्रन्थादिदम्। अभूततद्भाव इत्येव। भृशीभवति। सुमनायते इति—सलोपात् 'अकृत्—' ( २२९८ ) इति दीर्घः। तत्रेति। चुरादावित्यर्थः। प्रातिपदिकमिति। न तु धातुरिति भावः। तस्मादिति—संग्रामशब्दादित्यर्थः। नन्वेवं प्रातिपदिकत्वेनैव णिचि सिद्धे चुराद्यन्तर्गतकथादावस्य पाठो व्यर्थ इत्यत आह—तत्सन्नियोगेनेति। णिच्सन्नियोगेनेत्यर्थः। अनुबन्ध आसज्यत इति। मकाराद् योऽकार श्रूयते सोऽनुदात्त इत्येवं प्रतिज्ञायत इत्यर्थः। ततश्चानुदात्तानुबन्धासङ्गार्थोऽयं णिच्प्रत्यय इति फलितम्। एवञ्च अससङ्ग्रामत इत्यत्र णिचि परतः 'अतो लोपः' ( २३०८ ) इति सत्यपि 'णौ चङि—' ( २३१४ ) इत्युपधाह्रस्वो न प्रवर्त्तते। अग्लोपित्वात् 'नाग्लोपि-

—' (२५७२) इति निषेधात्। तत्त्वबोधिनीकारास्तु 'मकारादकाराद् भिन्नोऽयमकारानुबन्धः क्रियते' इति वदन्ति। तच्चिन्त्यम्, 'संग्राम युद्धे' इत्यस्य—व्याख्यानावसरोक्तसगुग्रन्थविरोधात् अधिककल्पने गौरवाच्चेत्यलम्। युद्धेऽप्ययं ग्राम-शब्द इति। अयमभिप्रायः—'ग्रसेरा च' इत्यौणादिकेन मन्प्रत्ययेन निष्पन्नस्य ग्रामशब्दस्य 'कृत्तद्धितसमासाश्च' (१७९) इति प्रातिपदिकत्वम्। अव्युत्पत्तिपक्षे च 'अर्थवदधातुरप्रत्ययः' (१७८) इति प्रातिपदिकत्वम्। तदेवं 'ग्राम युद्धे' इत्युक्तेऽपि केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाभावेन, सामर्थ्यात् संग्रामशब्दादेव णिजुत्पद्येत। एवं तर्हि 'संग्राम युद्धे' इति विशिष्टपाठोऽत्र ज्ञापक इत्याह—विशिष्टपाठो ज्ञापयतीति। धातुसंज्ञाप्रयोजक इति। क्रियादावित्यर्थः। तेनेत्यादि। सुगमम्। सजातीयविषयमिति। समानजातीयकमित्यर्थः। अत्र व्यावर्त्यकमाह—तेन यथेति। सकर्त्तृ श्रूयत इति। अपरिवर्त्तितं तिष्ठति विकारं न भजत इति-वेत्यर्थः। आदेशेनापहृतमिति। एकादेशेन पररूपरूपेण अपहृतं तिरोभावितम् इत्यर्थः। अतएव ओडाविति अत्र ध्यण् नेति दर्शयति। एवं चेति। ननु 'अत उपसर्गेरूपम्—' इत्यादिविशेषविषयज्ञापने किं मानमिताह आह—प्रवृत्तवार्त्तिकं तद्भाष्यञ्च प्रमाणमिति। 'ओमाङोश्च' (६।१।९५) इति षष्ठाध्यायस्य भाष्य-वार्त्तिकम् इत्यर्थः। उस्योमाङ्क्ष्विति वार्त्तिकम्। उसि + ओम् + आङ्षु + आट इति वार्त्तिकच्छेदः। अर्थमाह—उस्योमाङीर्येति। उसि परे, ओमाङोश्च पररूपिति तदर्थः। उस्रामिति—'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' त्यमरः। औस्रीयदिति। उक्तवार्त्तिकाभावे तु 'उस्रपदान्ता'दिति पररूपे उस्रीयदित्यनिष्टं स्यादिति ध्येयम्। न 'चार्थवद्ग्रहणे अनर्थकस्ये'ति न्यायादत्र पररूपं न स्यादिति वाच्यम्। तस्यानित्यत्वात्। 'काचि च' (२६५८) इति काजन्तस्य उस्राय-शब्दस्य आकारस्य ईत्वम्। एवमौङ्कारमात्मन इच्छतीति औङ्कारीयदित्यादि। उदाहरणत्रयमिदं भाष्याक्तम्। न केवलं वार्त्तिकं भाष्यं चात्र मानं किन्तु सूत्रमपीत्याह—आटश्चेति चशब्देनेति। एतच्च आटोऽचि परे वृद्धिरेव यथा स्यान्न तु पररूपमिति—ओमाङोश्च इति 'आटश्चे'ति सूत्रे भाष्ये स्थितमित्यलम्।

२६६८। लोहितादिडाज्भ्यः क्यष् ॥३।१।१३॥

टी—। लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्।

Eng.—Easy.

मित—। लोहितेति। परवर्तिं सूत्रमिदं तदाह—भवत्यर्थे इत्यादि। लोहितादयश्च—[ लोहित, चरित, नील, फेन, मद्र, हरित, दास, मन्द इति ]—लोहितादिराकृतिगणः।

२६६९। वा क्यषः ॥१।३।९०॥

टी—। क्यषन्तात् परस्मैपदं वा स्यात्। लोहितायति—लोहितायते। अत्र अच्वेरित्यनुवृत्त्या अभूततद्भावविषयत्वं लब्धम्। तच्च लोहितशब्दस्यैव विशेषणम्। न तु डाचोऽसम्भवात्। नाप्यादिशब्दग्राह्याणाम्। तस्य प्रत्याख्यानात्। तथाच वार्तिकम्—'लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि' इति। न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत। उच्चारणसामर्थ्यादिति वाच्यम्। तस्यापि भाष्ये प्रत्याख्यानात्। पटपटायति—पटपटायते। कृभ्वस्तियोगं विनापीह डाच्। डाजन्तात् क्यषो विधानसामर्थ्यात्। यत्तु—

लोहितश्यामदुःखानि हर्षगर्वसुखानि च।
मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति। तद् भाष्यवार्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेव। श्यामायते। दुःखादयो वृत्तिविषये—तद्वति वर्तन्ते। लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि—क्यष्। लोहिनीयति—लोहिनीयते।

Eng.—Easy. तत्र etc. i.e. the term 'अभूततद्भावविषये' qualifies the word लोहित only and none derived with डाच्—which is impossible डाच् being added to a base in the sense of imitating an inexplicable word. Nor does it qualify the words to be accepted by the term आदि in the rule. For it ( आदि ) has been rejected in the भाष्य. Compare the varttika—'लोहितडाज्भ्य:—' which does not contain the word आदि. The meaning of the varttika is this —'the statement of क्यष् ( is to be understood after ) लोहित and a डाजन्त words, and the other words as श्याम, दुःख, चरित, फेन etc. should be read under भृशादि class ( so that they may have क्यङ् only by 'भृशादिभ्य:—' 2697 ). Nor can it thus be agreed that the ककार of क्यष् like that of काम्यच् will be heard on the score of the pronunciation. For the ककार also of क्यष् has been set aside or left out in the भाष्य। In पटपटायति etc—here there is डाच् without the application of कृ, भू or अस् ( cp.—'कृभ्वस्तियोगे—' 2117 ) on the strength of the injunction of क्यष् after डाजन्त words. And that others reading the words लोहित, श्याम, दुःख etc. (enumerated in the following verse) illustrated both the पद्s i. e. परस्मै and आत्मने. in क्यष् coming after श्याम etc.—is at variance with भाष्य and वार्तिक. Thus after them (श्याम etc.) the affix क्यङ् only will take place (and not क्यष् also). The bases दुःख etc. ( enumerated in the above sloka ) imply one having them ( अदुःखो दुःखी भवति दुःखायते in the sense of अदुःखो दुःखी भवति etc ). By the परिभाषा 'प्रातिपदिकग्रहणे—' the affix क्यष् will be added to the feminine base लोहिनी also, लोहिनीयति—लोहिनीयते।

मित—। वेति। 'शेषात् कर्तरि परस्मैपदम्' (१।३।७८) इत्यतः परस्मैपदमित्यनुवर्तते। तदाह—क्यष्नन्तादित्यादि। च्वेर्थ इति, अभूततद्भावविषयत्वमित्यर्थः। न तु डाच इति। 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' (२१२८) इत्यव्यक्तानुकरण एव डाचो विधानादिति भावः। आदिशब्दग्राह्याणामिति। लोहितवर्जं लोहितगणपठितानां तथा लोहितादिराकृतिगणत्वादुत्तरश्लोकपठितानाञ्च शब्दानाम्। आदिशब्दप्रत्याख्यानपरं वार्तिकमाह—लोहितडाज्भ्य इति। 'लोहितादिडाज्भ्यः क्यष्' इति यः क्यष् विधीयते स लोहितशब्दादेव डाजन्तशब्दादेव च विधेयत इति बोद्धव्यम्। तथा लोहितादिगणे—लोहितशब्दवर्ज' ये पठ्यन्ते ते लोहितेतराः शब्दाः भृशादिगणे पठनीया इति वार्तिकार्थः। तत्र लोहितेतरेभ्यः श्यामादिभ्यो भृशादिपाठात् क्यङेव न तु क्यषपि इत्यनुपदमेव वक्ष्यते। वृत्तिकारस्तु "यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव। अपरिपठितेभ्यस्तु क्यषेव भवन्ति" इत्याह। तस्यापीति। आदिशब्दस्येव क्यषः ककारस्यापि भाष्ये प्रत्याख्यातत्वादित्यर्थः। पटपटायति इति। वा क्यष इति पदविकल्पः। पटत् इति शब्दः 'अव्यक्तानुकरणात्—' (२१२८) इति डाच्। 'डाचि विवक्षिते द्वे बहुलम्' (वार्तिक) इति द्वित्वम्। 'तस्य परमाम्रेडितम्' (सू—८७) इत्युत्तरस्याम्रेडितत्वम्। 'नित्यमाम्रेडिते डाचीति वक्तव्यम्'—वार्तिक—इति पूर्वपरयोर्वर्णयोः पररूपेण—तकारपकारयोः पकारः। डाचो डित्त्वात् उत्तरखण्डे टिलोपेन पटपटाय इति भवति। ततः शप्तिबादयः। क्यष्वचनसामर्थ्यात् कृभ्वस्तियोगाभावेऽपि डाजित्याह—कृभ्वस्तीत्यादि। यस्त्विति। अत्र पठितस्य यदित्यस्य तद्भाष्यवार्तिकविरुद्धमित्यन्तरेण तच्छब्देनान्वयः। लोहितश्यामेति। अत्र श्लोकेन लोहितादेराकृतिगणत्वात् केचिच्छब्दा एव समाक्रियन्ते। अतएवार्थः स्पष्टः। पदद्वयमिति—परस्मैपदमात्मनेपदमित्यर्थः। श्यामायते इति। श्यामादिभ्यः क्यषोऽभावात् परस्मैपदं नेति भावः। तद्वतीति। दुःखी, दर्पी, गर्वीत्याद्यर्थका इत्यर्थः। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययोऽत्र बोध्य इति भावः। लिङ्गविशिष्टपरिभाषयेति। 'प्रातिपदिकग्रहणे लिङ्ग—' इत्यनयेत्यर्थः। लोहिनीयति। 'वर्णादनुदात्तात्—' (४९६) इति तस्य नः।

२३७० । कष्टाय क्रमणे ॥३।१।१४॥

दी—। चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। सत्र-कक्ष-कष्ट-कृच्छ्र-गहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' (वार्तिक)। कण्वं पापम्। सत्रादयो वृत्तिविषये पापार्थाः। तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ्। पापं चिकीर्षतीत्यस्वपदविग्रहः—सत्रायते। कक्षायते इत्यादि।

The affix क्यङ् is used, in the sense of (showing) energy or effort, after the word कष्ट ending in dative. Thus कष्टाय etc. i.e. shows energy for committing sin. 'सत्रकक्ष etc—' वार्तिक— It has to be stated that क्यङ् takes place after सत्र, कक्ष, कष्ट, कृच्छ्र and गहन in the sense of having a mind for doing iniquity or sin. The words सत्र etc in the matter of वृत्ति or being formed as सत्रायते etc. mean iniquity. क्यङ् takes place after them ending in the accusative. And the विग्रह or the sentence explaining the वृत्ति such as चिकीर्षति is अस्वपदविग्रह or abnormal for the word सत्र steps into the room of पाप which was used to express the sense only.

मित—। कष्टायेति। चतुर्थीविभक्त्यन्तादेव कष्टशब्दात् क्यङ् यथा स्यादित्येवमर्थं चतुर्थ्या निर्देशः। 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदविधायकसूत्रे 'सर्ग' इति सर्वैरेव उत्साहार्थकत्वेन व्याख्यातम्। अतः क्रमणे इत्युत्साहे इत्यर्थः। 'स्वरितेनाधिकार' इति 'कर्तुः—' (३।१।११) इत्यतः क्यङेवानुवर्त्तते न तु 'लोहितादि—' (३।१।१३) इत्यतः क्यष् इत्यपि। तस्यास्वरितत्वात्। अत आह—चतुर्थ्यन्तादित्यादि। पापं कर्तुमिति। कष्टायेति क्रियार्थोपपद

चतुर्थीति भावः। अत्यल्पमिदमिति मन्वानो वार्तिककृदाह—'सत्रकक्ष—' इति। अर्थो मूले। वृत्तिविषये इति। तथाच सत्रायते, कक्षायते इत्यादिः पापं चिकीर्षतीत्यर्थः। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैव अन्वययोग्यत्वादेव-मुक्तम्। विग्रहान्तर्गतशब्दानां वृत्त्यभावादाह—पक्षपदविग्रह इति। कष्टकृच्छ्रशब्दौ अत्र पापार्थकावेव न तु दुःखार्थकौ। तेन 'अजः कृच्छ्रं कष्टं वा क्रामती'त्यत्र न वृत्तिः।

२६७१। कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥३।१।१५॥

दो—। रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्तयति रोमन्थायते। 'हनुचलन इति वक्तव्यम्' (वार्तिक)। चर्वितस्याकृष्य पुनश्चर्वणमित्यार्थः। नेह। कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः। तदश्नातीत्यर्थं इति कैयटः। वर्तुलं करोतीत्यर्थं इति न्यासकारहरदत्तौ। 'तपसः परस्मैपदं च' (वार्तिक)। तपश्चरति—तपस्यति।

The affix क्यङ् is used after the words रोमन्थ and तपस्—both ending in the accusative in the sense of वर्तन or to cause and चरण or performance respectively. हनुचलन etc वार्तिक which means that the above saying holds good only when हनुचलन or the movement of the jaws in order to chew again what has been chewed is meant. Thus here in कीटो रोमन्थम् etc there is no shortening. अपानप्रदेश means the anus. वर्तुलम् etc to shape it round. तपस्यति—क्यङ् yet परस्मैपदी।

मित—। कर्मण इति। रोमन्थतपोभ्यामिति पञ्चमी। तेन सामानाधिकरण्यात् कर्मण इत्यपि पञ्चमी। प्रत्येकसम्बन्धात् एकवचनम्। वर्तिरिति। हनु-

धातोरर्थान्तरनिपातने क्तिन्। यद्वा 'इक्श्तिपौ धातुनिर्देशे' इति वार्त्तिकादिक्। चर् इति चरतेः सम्पदादित्वात्भावे क्विप्। आवर्तनं निष्पादनमर्थः। क्यङ् इति वर्त्तते। तदाह—रोमन्थतपोभ्यामित्यादि। भाष्ये उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थ इत्युक्तम्। अवोद्गीर्णमिति कण्ठद्वारा निःसारणम् निगीर्णमिति तु अपानप्रदेशद्वारा ( गुह्यमार्गेण ) निःसरणम् इत्यर्थः। 'हनुचलन—' इति। वार्त्तिकमिदम्। अर्थः स्पष्टो मूले। वर्त्तुलमिति गोलाकारं पिण्डं करोतीत्यर्थः। 'तपसः—' एतेनैव वार्त्तिकेन क्यङि सत्यप्यत्र तङ् न।

## २६७२। बाष्पोष्मभ्यामुद्वमने ॥३।१।१६॥

दी—। आभ्यां कर्मभ्यां क्यङ् स्यात्। बाष्पमुद्वमति बाष्पायते। ऊष्मायते। 'फेनाच्चेति वाच्यम्' ( वार्तिक )। फेनायते।

Eng.—Easy.

मित—। स्पष्टेऽत्र सूत्रवृत्ती।

## २६७३। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥३।१।१७॥

दी—। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। पक्षे 'तत्करोति—' ( गणसूत्र ) इति णिजपीष्यत इति न्यासः। शब्दयति। 'सुदिनदुर्दिननीहारेभ्यश्च' ( वार्तिक )। सुदिनायते।

After these ( words ) ending in the accusative is used क्यङ् in the sense of 'to do'. शब्दायति may be taken as an alternative, says the Nyasa (of Jinendra buddhi) with णिच् coming in by the ganasutra 'तत्करोति—'. 'सुदिनदुर्दिन etc—' वार्त्तिक।

मित। शब्दवैरेति। 'कर्मणः' ( ३।१।१५ ) इत्यतः कर्मण इति वर्त्तते।

'कर्त्तुः क्यङ्—' ( ३।१।११ ) इत्यतः क्यङ् इति च। तथा 'करणे' इति क्रियायाः ग्रहणं न तु साधकतमार्थकस्य। तदाह—एभ्यः कर्मभ्यः इति। न्यास इति—न्यास इति नामग्राहमुच्चारणम् अनादरविज्ञापकम्। तद्बीजन्तु णिच्प्रत्ययस्य भाष्यानारूढत्वमिति नागेशः। 'सुदिनदुर्दिन—' इति—वार्त्तिकमिदम्। एभ्यः कर्मभ्यः करोत्यर्थे—क्यङित्यर्थः।

## २६७४। सुखादिभ्यः कर्त्तृवेदनायाम् ॥३।१।१८॥

दी—। एभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद् वेदनाकर्त्तुरेव चेत् सुखादीनि स्युः। सुखं वेदयते सुखायते। 'कर्तृग्रहणं' किम्? परस्य सुखं वेदयते।

After these ( सुख, दुःख etc) is used the affix क्यङ् in the sense of cognition—provided सुख, दुःख etc belong to the cogniser himself. Thus सुखं वेदयते—cognises or feels pleasure. परस्य etc—here the pleasure does not belong to the agent.

मित—। सुखादिभ्यः इति। [ सुख, दुःख, तृप्त ( तृप्र? ) गहन, कृच्छ्र, अस्र, अलीक, प्रतीप, करुण, कृपण, सोढ—एते सुखादयः ]। अनुवृत्तिः प्राग्वत्। कर्त्तृ इति पृथकपदम् लुप्तषष्ठीकम्। वेदना च तदपेक्षिणीत्याह—वेदनाकर्त्तुरेव चेदिति। वेदनेति—विद चेतनाख्याननिवासेष्विति चौरादिकात् युच्प्रत्यये निष्पन्नं ज्ञानस्य तदर्थः। वेदयत इति—जानातीत्यर्थः। परस्येति। इह यन्निष्ठं सुखं तद्भिन्नो वेदनाकर्त्तेति वाक्यमेव।

## २६७५। नमोवरिवश्चित्रङः क्यच् ॥३।१।१९॥

दी—। 'करणे' इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्य्यायामाश्चर्य्ये च। नमस्यति देवान्। पूजयतीत्यर्थः।

वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ।

The affix क्यच् is used (optionally) after the words नमस् वरिवस् and चित्रङ् respectively in the sense of particular affairs of worship, service or attendance and astonishment due to the अनुवृत्ति or presence of the term 'करणे' from the previous rule 'शब्दवैरे—' (2673). Thus नमस्यति देवान् etc चित्रीयते—it is आत्मनेपदी because चित्रङ् is ङित् and the ईकार is provided for by 'क्यचि च' (2658). इत्यन्ये e.g. in Bhatti we have 'ततश्चित्रीयमाणोऽसौ' where असौ refers to the ellusive stag (मायामृग) and चित्रीयमाण means causing astonishment (on the part of Rama).

मित—। नमोवरिव इति। नमस्, वरिवस्, चित्रङ् इत्येषां समाहारद्वन्द्वात् पञ्चम्येकवचनम्। करण इत्यनुवर्त्ततेरिति। 'शब्दवैर—' (३।१।१३) इत्यत इति भावः। करणं क्रिया। सा चात्र क्रियाविशेषस्य वाचिका। तदाह—क्रिया विशेषे इति। क्रियाविशेषे इति विशेषणम् पूजायामित्यादौ प्रत्येकमभिसम्बध्यते। तेन पूजात्मिकायाम्, परिचर्य्यात्मिकायाम्, आश्चर्य्यात्मिकायाञ्च क्रियायामित्यर्थः। एतच्च—'नमसः पूजायाम्'। 'वरिवसः परिचर्य्यायाम्'। 'चित्रङ आश्चर्य्ये' इति वार्त्तिकत्रयाल्लभ्यते। नमस्यतीति। नान्तमेव 'क्यचि' पदमित्युक्तत्वान्न रुत्वविसर्गौ। चित्रीयत इति। चित्रङो ङित्त्वात् तङ्। 'क्यचि च' (२६५८) इति ईत्त्वम्। विस्मापयत इत्यन्ये इति। तथा च भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति। 'असौ मायामृगश्चित्रीयमाणो विस्मयमुत्पादयन्नित्यर्थः' इति तत्त्वबोधिनी।

२६७६। पुच्छभाण्डचीवराण्णिङ् ॥३।१।२०॥

टी—। 'पुच्छादुदसने व्यसने पर्य्यसने च' (वार्तिक)।

विविधं विरुद्धं वोत्क्षिपणं व्यसनम्। उत्पुच्छयते। विपुच्छयते। परिपुच्छयते। 'भाण्डात् समाचयने' (वार्तिक)। संभाण्डयते। भाण्डानि समाचिनोति। राशीकरोतीत्यर्थः समवभाण्डत। 'चीवरादर्जने परिधाने च' (वार्तिक), सञ्चीवरयते भिक्षुः। चीवराण्यर्जयति परिधत्ते वेत्यर्थः।

The affix णिङ् is used after the words पुच्छ, भाण्ड and चीवर (a rag) under the particular senses expressed by the varttikas 'पुच्छात्—', 'भाण्डात्—' and 'चीवरात्—'. उत्पुच्छयते etc i.e. wags or moves the tail in various or objectionable ways. समवभाण्डत—सम्—भाण्ड+णिङ्+चङ् (लुङ्) +त, अट् comes in before भाण्ड by the saying 'उपसर्गसमानाकारम्—' see ante. आत्मनेपद due to ङित्त्व of णिङ् and चङ् due to the retension of णि which is the common name for णिच् and णिङ्. Thus 'णिश्रि—' (2312) and 'णेरनिटि' (2313) apply here.

मित—। पुच्छभाण्डेति। पूर्ववदत्र समासविभक्ती। 'करणे' इत्यत्राप्यनुवृत्तिः। एभ्यः कर्मभ्यः क्रियाविशेषेषु उदसनव्यसनपर्यसन—समाचयन—अर्जनपरिधानेषु णिङ् स्यादित्यर्थः। उत्पुच्छयत इति। पुच्छं विविधं विरुद्धं वोत्क्षिपतीत्यर्थः। एवमन्यत्र। 'पुच्छात्—', भाण्डात्—', 'चीवरात्—' इति वार्तिकत्रयम्। समवभाण्डत इति। सम्-पूर्वाद् णिङन्ताद् भाण्डशब्दात् 'णिश्रि—' (२३१२) इति चङ्। 'चङि' इति द्वित्वम्। ऋस्वादिति। 'णेरनिटि' (२३१३) इति णिलोपः। 'उपसर्गसमानाकारं पूर्वपदं धातु-संज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत' इत्युक्तात् संशब्दात् परमडागमः। कश्चित्तु 'उपसर्ग—' इत्युत्सृज्य संभाण्डशब्दात् कार्यमडपीत्याह। तदयुक्तम्। अडागम-भावं प्रति तस्यात्र निमित्तत्वात्। णिङ् इत्यनेनैवात्मनेपदसिद्धेश्च। ङकारोऽत्र—'णेरनिटि' इति णिङ्णिचोः सामान्यग्रहणार्थं इति तत्त्वबोधिनी। तद्भ्रमात्।

णकारस्यैव तत्र सामर्थ्यान्न तु ङकारस्य। तस्यात्मनेपदसिद्धिरेव फलमन्यथा णिचमेव विदधीतेत्यस्तमुपजीव्य-ङिद्राधि प्रकरणेन। 'चीवरादर्जने' इत्यपि वार्तिकमिति कश्चित्।

२६७७। मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥३।१।२१॥

टी—। कृञर्थे। मुण्डं करोति मुण्डयति। 'व्रताद्भोजनतन्निवृत्त्योः' (वार्तिक)। पयः शूद्रान्नं वा व्रतयति। 'वस्त्रात् समाच्छादने' (वार्तिक)। संवस्त्रयति। 'हस्त्यादिभ्यो ग्रहणे' (वार्तिक)। 'हलिकल्योरदन्तत्वं च' (वार्तिक)। हलिं कलिं वा गृह्णाति हलयति। कलयति। महद्धलं हलिः। परत्वाद् वृद्धौ सत्यामपीष्ठवद्भावेन अगेव लुप्यते। अतः सन्वद्भावदीर्घौ न। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति। तूस्तं केशा इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्यपरे। मुण्डादयः 'सत्यापपाश—' (२५६२) इत्यत्रैव पठितुं युक्ताः। 'प्रातिपदिकाद्धात्वर्थे—' (गणसूत्र) इत्येव सिद्धे केषाञ्चिद् ग्रहणं सापेक्षेभ्योऽपि णिजर्थम्। मुण्डयति माणवकम्। मिश्रयत्यन्नम्। श्लक्ष्णयति वस्त्रम्। लवणयति व्यञ्जनमिति। हलिकल्योरदन्तत्वार्थम्। सत्यस्यापुगर्थम्। केषाञ्चित्तु प्रपञ्चार्थम्। सत्यं करोत्याचष्टे वा सत्यापयति। 'अर्थवेदयोरप्यापुग् वक्तव्यः' (वार्तिक)। अर्थापयति। वेदापयति। पाशं विमुञ्चति

विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायत्युप-वीणयति। तूलेनानुकषात्यनुतूलयति। तृणाग्रं तूलेनानु-घट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाभियाति अभिषेणयति। 'उपसर्गात् सुनोति—' (२२७०) इति षः। अभ्यषेणयत्। 'प्राक्सितात्—' (२२७६) इति षः। अभिषिषेण-यिषति। 'स्थादिष्वभ्यासेन च—' (२२७७) इति षः। लोमान्यनुमार्ष्टि अनुलोमयति। 'त्वच संवरणे'—घः। त्वचं गृह्णाति त्वचयति। चर्मणा संनह्यति सञ्चर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसते = अवचूर्णयति। इष्टवदित्यतिदेशात् पुंवद्भावादयः। एनीमाचष्टे एतयति। दरदमाचष्टे दारदयति। पृथुं प्रथयति। इष्ठे सत्यां पूर्वं वा टिलोपः। अपिप्रथत्—अपप्रथत्। मृदुं म्रदयति। अमिम्रदत्—अमम्रदत्। भृशं कृशं दृढं भ्रशयति क्रशयति द्रढयति। अबभ्रशत्। अचक्रशत्। अदद्रढत्। परिव्रढयति। पर्यवव्रढत्। जढिमाख्यत्। औजिढत्। ढत्वादीनामसिद्धत्वाद् इतिशब्दस्य द्वित्वम्। 'पूर्वत्रासिद्धीय-मद्वित्वे' (परि—) इति त्वनित्यमित्युक्तम्। 'ढिशब्दस्य' द्वित्व मित्यन्ये—औडिढत्। जढमाख्यत् औजढत् औडढत्। 'ओः पुयण्—' (२५७७) इति वर्गप्रत्याहारजग्रहो लिङ्गं 'द्वित्वे कार्ये णावच आदेशो नेति' ज्ञनयतावुक्तम्॥ 'प्रकृत्यैकाच्' (२०१०)। इष्ठिपुकौ। स्थापयति। त्वां मां वा आचष्टे त्वापयति मापयति। मपर्यन्तस्य त्वमौ। पररूपात् पूर्वं नित्यत्वाट्टिलोपः।

ट्विपुकौ। त्वादयति मादयति इति तु न्याय्यम्। अन्तरङ्गत्वात् पररूपे कृते 'प्रकृत्यैकाच्' (२०१०) इति प्रकृतिभावात्। न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम्। भाष्यस्य प्रेष्ठादुग्रदाहरणविशेषेऽन्यथासिद्धिपरत्वात्। युवामावां वा युष्मयति अस्मयति। श्वानमाचष्टे श्वावयति। 'नस्तद्धिते' (६७९) इति टिलोपः। प्रकृतिभावस्तु न। येन नाप्राप्ति-न्यायेन 'टेः' (१७८६) इत्यस्यैव बाधको हि सः। भत्वात् सम्प्रसारणम्। अन्ये तु 'नस्तद्धिते' (६७९) इति नेहातिदिश्यते। इष्टनि तस्यादृष्टत्वात्। स्रग्विष्ठेत्यादौ परत्वात् 'टेः' (१७८६) इत्यस्यैव प्रवृत्तेः। तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे विद्वयति। अङ्गवृत्त-परिभाषया सम्प्रसारणं नेत्येके। सम्प्रसारणे वुहावावादेशे च विदावयतीत्यन्ये। नित्यत्वाट्टिलोपात् प्राक् सम्प्रसारणम्। अन्तरङ्गत्वात् पूर्वरूपं टिलोपः। विदयतीत्यपरे। उदञ्चमाचष्टे उदीचयति। उदैचिचत्। प्रत्यञ्चं प्रतीचयति। प्रत्यचिचत्। 'इकोऽसवर्णे—' (९१) इति प्रकृतिभावपक्षे—प्रति अचिचत्। सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्—समिअचिचत्। तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। 'असिद्धवदत्र—' (२१८२) इति चिणो लुङ्-न्यायेन प्रथमटिलोपोऽसिद्धः। अतः पुनष्टिलोपो न। अङ्गवृत्त-परिभाषया वा। चङ्यग्लोपित्वादुपधाह्रस्वो न। अतितिरायत्। सध्र्यञ्चमाचष्टे सध्राययति। अससध्रायत्। विष्वद्र्यञ्चम् अवि-

विष्वद्र्यायत्। देवद्र्यञ्चम् देवद्र्यययति, अदिदेवद्र्यायत्। अदद्र्यञ्चम् आददद्र्यायत्। अदमुयञ्चम् अदमुआययति। आददमुआयत्। अमुमुयञ्चम् अमुमुआययति। चङ्। आमुमुआयत्। भुवं भावयति। अबोभवत्। भ्रुवम् अबुभ्रवत्। श्रियम् अशिश्रयत्। गाम् अजूगवत्। रायम् अरीरयत्। नावम् अनूनवत्। स्वश्वं स्वाशश्वत्। स्वः। अव्ययानां भमात्रे टिलोपः=स्वयति। असस्वत्—असिस्वत्। बहून् भावयति। बह्वयतीत्यन्ये। विन्मतोरिति लुक् *। स्रग्विणं स्रजयति। संज्ञापूर्वकत्वान्न वृद्धिः। श्रीमतीं श्रीमन्तं वा श्रययति। अशिश्रयत्। पयस्विनीं पयसयति। इह टिलोपो न। तदपवादस्य लुकः प्रवृत्तत्वात्। स्थूलं स्थवयति। दूरं दवयति। कथं तर्हि 'दूरयत्यवनते विवस्वति' इति। दूरमतति अयते वा—दूरात्। दूरातं कुर्वतीत्यर्थः। युवानं यवयति—कनयति। 'युवाल्पयोः—' (२०१९) इति वा कन्। अन्तिकं नेदयति। बाढं साधयति। प्रशस्यं प्रशस्ययति। इह श्रज्यौ न। उपसर्गस्य पृथक्कृतेः। वृद्धं ज्यापयति। प्रियं प्रापयति। स्थिरं स्थापयति। स्फिरं स्फारयति। उरुं वरयति—वारयति। बहुलं बंहयति। गुरुं गरयति। वृद्धं वर्षयति। तृप्रं त्रपयति। दीर्घं द्राघयति। वृन्दारकं वृन्दयति।

इति तिङन्तनामधातु-प्रकरणम्।

---

* एतत् तत्त्वबोधिन्यां दृश्यते न तु बालमनोरमायाम्।

The words मुण्ड etc. take णिच् in the general sense of 'doing' attached after the special senses laid down in the following Varttikas. 'व्रतात्—' ( varttika )—णिच् is used after व्रत in the sense of eating and of refraining from the same. Thus पयः व्रतयति—takes the milk and शूद्रान्नं व्रतयति—refrains from taking the food prepared by a Sudra. 'वस्त्रात्—' ( varttika )—easy. संवस्त्रयति—covers with a cloth. 'हलादिभ्यः—'(varttika)—'हलिकल्योः —' (varttika)—णिच् is attached to हलि ( a big plough ) and कलि ( fight ) etc. in the sense of acceptance, and हलि and कलि are to be regarded as अकारान्त by निपातन. Although in अजहलत् ( हलि + णिच् + चङ् + तिप् ) etc. वृद्धि ( by 'अचो ञ्णिति' 7. 2. 115 ) due to its subsequence to टिलोप ( directed by णिच्—3. 1. 21. which has इष्टवत्त्व by 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च ( गण— ) under चुरादि ) takes effect prior to the latter ( टिलोप ), yet by इष्टवद्भाव—अक् ( i. e. आ after वृद्धि of हल etc. ) indeed elides. Consequently, due to अग्लोपित्व there is no सन्वत्त्व, cp—'सन्वल्लघुनि—' ( 2316 ) and दीर्घ by 'दीर्घो लघोः' ( 2318 ). But, on the contrary, had there been no अदन्तनिपातन, there would have been, after the वृद्धि of हलि etc, the elision of 'ऐ' ( by इष्टवद्भाव ) which is not an अक्—consequently, there would have been सन्वद्भाव and दीर्घ giving अजीहलत् etc, which are not sanctioned by usage. कृतं गृह्णाति i. e. admits the benefit derived. इत्यवैव पठितुं युक्ताः— because both the rules direct the same thing namely णिच्. Though the words मुण्ड etc. could have णिच् after them by the गणसूत्र 'प्रातिपदिकाद्धात्वर्थे—' and though these could have been included

आक्रोशे' इति भौवादिक आक्रोशार्थकः स्वरितेतोऽयं धातुः। पञ्चम्यन्तोऽत्र। तदाह—आक्रोशार्थादित्यादि। भ्वादौ कर्त्तृगेऽएव फलेऽयमात्मनेपदी। इह तु न तथेत्याह—अकर्त्तृगेऽपि फले इत्यादि। वक्तव्यमित्यर्थः इति। वार्त्तिकत्वद्योतनाय इदम्। अतएव 'आक्रोशार्थात्—' इत्यादिव्याख्यानं प्रत्युक्तमेव इति नागेशः। शपाय शपते इति। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (५७२) इति चतुर्थी। शपथेन स्वानुरागं प्रकाशयतीत्यर्थः। 'सत्यः शपामि यदि किञ्चिदपि स्मरामी'त्यत्र शपथमात्रमर्थः न तु स्वाभिप्रायाविष्करणमिपीति न तङ् इति नागेशः। एवं "सत्येन शपापि" इति स्वप्नवासवदत्ते च सङ्गच्छते।

२६८९। समवप्रविभ्यः स्थः ॥१।३।२२॥

टी—। सन्तिष्ठते। 'स्थाघ्वोरिच्च' (२३८९)—समस्थित। समस्थिषाताम् समस्थिषत। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। 'आङः प्रतिज्ञायामुपसंख्यानम्' (वार्तिक)। शब्दं नित्यमातिष्ठते। नित्यत्वेन प्रतिजानीते इत्यर्थः।

The root स्था coming after the उपसर्गs सम्, अव, प्र and वि becomes आत्मनेपदी e.g संतिष्ठते etc. समस्थिषाताम् etc. by इत्त्व and षत्व of सिच्. स्था=तिष्ठ by 'पाघ्राध्मास्था—' (2360). 'आङः—(varttika)—'It has to be said that स्था coming after आ also, in the sense of promise' or 'admission' is आत्मनेपदी. Thus 'शब्दम्—' i e admits permanent existence of words.

मित—। समेति। सम्अवप्रविपूर्वात्तिष्ठतेरात्मनेपदं स्यादित्यर्थः। सन्तिष्ठते इति। पाघ्राध्मेति तिष्ठादेशः। आङ इति—वार्त्तिकमिदम्। प्रतिज्ञायामिति। अभ्युपगमे इत्यर्थः।

२६९०। प्रकाशनस्थेयाख्ययोश्च ॥१।३।२३॥

टी—। गोपी कृष्णाय तिष्ठते। आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः।

आत्मनेपद takes place after the root स्था denoting 'expression of one's heart (specially internal desire)' and 'having recourse to one as a connoisseur or arbitrator (critical judge)'. Thus 'गोपी—' i.e. the cow-herdess expresses her heart or motive to Krishna, and 'संशय्य—' (भारवि—III. sl. 14) i.e who, in cases of doubt, have recourse to Karna and others.

मित—। प्रकाशनेति। प्रकाशनं ज्ञापनम्। स्थेयो विवादपदनिर्णेता। तिष्ठतेऽस्मिन्निर्णेतृत्वेनेति बाहुलकादधिकरणे 'अचो यत्' इति यत्। 'स्थेयोविवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। अत्र तु विवादनिर्णयरूपव्यवसायोऽर्थः। आख्या आख्यानम् आविष्करणमित्यर्थः। आख्या-शब्दस्य प्रत्येकंयोगः। पूर्वसूत्रात् 'स्थः' इति षष्ठ्यन्तमनुवर्तते। तेन प्रकाशनाख्यायां स्थेयाख्यायाञ्च वर्तमानात्तिष्ठतेरात्मनेपमित्यर्थः। कृष्णाय इति। 'श्लाघह्नुङ्—' इति सम्प्रदानत्वाच्चतुर्थी। संशय्येति—भारवेरयं श्लोकांशः।

२६८१। उदोऽनूर्ध्वकर्मणि ॥१।३।२४॥

टी—। 'मुक्तावुत्तिष्ठते'। 'अनूर्ध्व—' इति किम्। पीठादुत्तिष्ठति। 'ईहायामेव'—(वार्तिक)। नेह—ग्रामाच्छतमुत्तिष्ठति।

आत्मनेपद takes place after स्था, following उद्, in the sense of 'not-rising,' e.g. 'मुक्तौ—' i.e strives or makes effort for

emancipation. ( It is taken from Bharavi XI ). Why 'अनूर्ध्व—' in the sense of not-rising. Cp.—'पीठात्—' rises from the seat. 'ईहायामेव—' (varttika) i.e उद्+स्था is आत्मनेपदी in the sense of making effort only. Thus 'ग्रामात्—' a hundred ( coins ) are raised or realised from the village'.

मित—। उद इति। अनूर्ध्वकर्मणीति। अनुत्थाने इत्यर्थः। 'स्थः' इत्यनुवर्तते। उत्तिष्ठते इति=चेष्टत इत्यर्थः। पीठादित्यासनात्। ईहायामेवेति—वार्त्तिकम्। ईहा'कायपरिस्पन्दरूपो व्यापार' इति नागेशः। परिस्पन्दः प्रतियत्न इच्छापूर्विका चेष्टेत्यर्थः। तेन 'ग्रामात्—' इत्यत्र ऊर्ध्वदेशसंयोगरूपव्यापाराभावेऽपि न तङ्। उत्तिष्ठतीति=उत्पद्यत इत्यर्थः। एवम्—'यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्' इति शाकुन्तले।

२६८२। उपान्मन्त्रकरणे ॥१।३।२५॥

दी—। आग्नेय्याग्नीध्रमुपतिष्ठते। 'मन्त्रकरणे' किम? भर्तारमुपतिष्ठति यौवनेन। 'उपाद्देवपूजासंगतिकरण—मित्रकरणपथिष्विति वाच्यम्' ( वार्तिक )। आदित्यमुपतिष्ठते। कथं तर्हि 'स्तुत्य' स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती' इति। देवतात्वारोपात्। नृपस्य देवतांशत्वाद्वा। गङ्गायमुनामुपतिष्ठते। उपश्लिष्यतीत्यर्थः। रथिकानुपतिष्ठते। मित्रीकरोति इत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः। 'वा लिप्सायामिति वक्तव्यम्' ( वार्तिक )। भिक्षुकः प्रभुमुपतिष्ठते—उपतिष्ठति वा। लिप्सया उपगच्छतीत्यर्थः।

The root स्था coming after उप takes आत्मने. in the sense of

मन्त्रकरण or praise. Thus 'आग्नेय्या—' praises ( approaches near ) a particular fire ( आग्नीध्र ) with a Rik or hymn relating to Agni ) ( आग्नेयी ऋक् ). 'भर्तारम्—' approaches ( or pleases ) her husband with puberty. Thus it is evident that the rule is rather Vedic in character. Hence there runs the varttika—'उपाद्देवपूजा—' It has to be stated that आत्मने. takes place after स्था preceded by उप in senses of worshiping a God, embracing or union etc (संगतिकरण), making friends and leading ( to a spot ). Thus 'आदित्यम्—' worships the Sun-god. How then are we to defend 'स्तुत्यम्—' etc. Saraswati adored him ( Raghu ), fit for praise, with laudatory verses ( in Raghu—IV. 6 'परिकल्पितसान्निध्या काले काले च बन्दिषु ।' being the first half of the same ) where आत्मने. is objectionable on the ground that a king is not a God ? Well say that it is correct on the attribution of godliness or because a king is formed with the part of gods, cp. —

'इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्राभि र्निर्मितो नृप: ॥" Manu—7. 4.

रथिक =having or fighting on a chariot.

पन्था:—उपतिष्ठते—the road leads to. 'वा लिप्सायाम्—' is a varttika.

मित—। उपादिति। 'समवप्र—' इत्यत: स्थ इति वर्त्तते। उपोऽत्र सामीप्यवाची। मन्त्र: करणं यत्र मन्त्रकरणं स्तुति: तत्र वर्त्तमानादुपतिष्ठतेरात्मनेपमित्यर्थ:। यद्वा 'मन्त्रकरणेऽर्थे' इत्यादि। आग्नेय्येति—अग्निर्देवता अस्या: इत्याग्नेयी ऋक्। 'अग्नेर्ढक्' ( १२२६ ) इति ढक्। 'टिड्ढा णञ्—' इति ङीप्। तया ऋचा आग्नीध्रमग्निविशेषं अग्न्युपविशेषं वा उपतिष्ठते स्तौतीत्यर्थ:। यद्वा उपेत्य तिष्ठतीत्यर्थ:। भर्त्तारमिति—अत्र मन्त्रकरणत्वाभावान्न तत्। अत्र 'मन्त्रकरणे' इत्यनेन वैदिक-

विषयमात्रस्याक्षेपादव्यार्थं वार्तिकमुमन्यस्यति—उपाद् देवपूजेति। संगतिकरणमुप-गूहनम् मेलनमिति यावत्। मित्रकरणं मित्रीकरणं मैत्रीत्यर्थः। पथिष्विति—स्थान-प्रापणे इत्यर्थः। कथं तर्हीति—स्तुत्यमित्यत्र रघुर्वाच्या उपस्थीयते। तस्य च नरमात्रत्वेन देवतात्वाभावात् सरस्त्युपस्थानं न सङ्गच्छते। तदभावाच्च नात्मनेपदमपि। अतः समाधत्ते—देवतात्वारोपादिति। 'परिकल्पितसान्निध्या काले काले च वन्दिषु'। इति श्लोकपूर्वार्द्धम्। तेन 'नूनमयं देवतेव अन्यथा कथमियत्तेज इत्येवं देवतात्व-मारोप्य स्तुत्यं स्तुतियोग्यं तं (रघुमित्यर्थः) स्तुत्याभिः अर्थोपेताभिः स्तुतिभिः सर्वैरुपतस्थे देवताबुद्ध्या पूजितवतीत्यर्थः। समाधानान्तरमाह—नृपश्चेति। 'अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः', 'सुरेन्द्रमात्राश्रितगर्भगौरवात्' (रघु—३।११) 'महतीदेवता ह्येषा नररूपेण तिष्ठती'ति शास्त्र-कालिदास-मन्वाद्युक्तेः। रथिकानिति। 'रथिको रथिनो रथी'त्यमरः। 'वा लिप्सायामि'ति—वार्तिकम्।

२६८३। अकर्मकाच्च ॥१।३।२६॥

दो—। उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात्। भोजन-काले उपतिष्ठते। संनिहितो भवतीत्यर्थः।

Eng. Easy—This directs आत्मनेपद. when उप+स्था is intran-sitive. 'सन्निहितः—' presents himself or appears.

मित—। अकर्मकादिति। स्थ इति वर्त्तते। तथा च भारविः—"आत्मनीन-मुपतिष्ठते" (सन्निहितो भवति)। मल्लिनाथस्तु अत्र सङ्गतिकरणे आत्मनेपदमिच्छति—(मतो 'आत्मनीनं (वस्तु) जनमुपतिष्ठते' सङ्गच्छते—इति व्याख्यानेन)। तद्भ्रमात्। अन्यत् स्पष्टम्।

२६८४। उद्विभ्यां तपः ॥१।३।२७॥

दो—। 'अकर्मकात्' इत्येव। उत्तपते। वितपते। दीप्यते इत्यर्थः। 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्'। (वार्तिक)।

स्वमङ्गं स्वाङ्गं, न तु 'अद्रवम्—' इति परिभाषितम्। उत्तपते वितपते पाणिम्। नेह—सुवर्णमुत्तपति, सन्तापयति—विलापयति वेत्यर्थः। चैत्रो मैत्रस्य पाणिमुत्तपति। सन्तापयतीत्यर्थः।

आत्मनेपद takes place after the intransitive तप following उद् and वि। Thus उत्तपते सूर्यः i. e. shines. 'स्वाङ्गकर्म—' (varttika)—It has to be said that उद्+तप् or वि+तप् is आत्मने also when it has any limb ( of the speaker himself ) for its object e. g. उत्तपते etc. Here by स्वाङ्ग we should not mean the technichal one, cp. 'अद्रवम् मूर्तिमत् स्वाङ्गम्—etc', a varttika under 'स्वाङ्गाच्चोपसर्जनात्—' ( 510 ), Thus सुवर्णमुत्तपति etc. do not get तङ्।

मित—। उद्विभ्यामिति। अकर्मकादित्येवेति। भाष्यादिदम्। 'स्वाङ्गकर्मकाच्चेति—' वार्त्तिकम्। अद्रवमिति। एतदपि वार्त्तिकान्तरं भाष्यभाषणं वा श्लोकमयम् 'स्वाङ्गाच्चोपसर्जनात्—' (५१०) इत्यत्र निर्दिष्टमिति तत्रैव द्रष्टव्यम्। अतएव 'सुवर्णम्—'। चैत्रो मैत्रस्येत्यादौ उत्तपतेः परिभाषितस्वाङ्गकर्मसत्त्वेऽपिस्वकीयाङ्गकर्मविरहान्न तङित्यलम्।

२६६५। आङो यमहनः ॥१।३।२८॥

दी—। आयच्छते। आहते। अकर्मकात् स्वाङ्गकर्मकादित्येव। नेह। परस्य शिर आघ्नन्ति। कथं तर्हि 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः। 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च। प्रमाद एवायमिति भागवृत्तिः। प्राप्येत्यध्याहारो वा। ल्यब्लोपे पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयम्। भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वास्तु। समीपमेत्येति वा।

आ + यम् and आ + हन् take आत्मने. only when they are अकर्मक or have स्वाङ्ग for their objects. 'आहते स्वीयं शिरः'। Instances like 'आजघ्ने—' ( भारवि ) struck the breast of the odd-eyed god ( Siva ) and 'आहध्वम्—' भट्टि )—'don't strike the scion of the race of Raghu'—are erroneous according to भागवृत्ति. Or—we may supply the word प्राप्य—thus विषमविलोचनस्य वक्षः प्राप्य आजघ्ने and रघूत्तमम् प्राप्य मा आहध्वम्—in which cases we then have आ + हन् as intransitive. And it cannot be rejoined that वक्षः and रघूत्तमम् should have ५मी due to disappearance of प्राप्य by 'ल्यब्लोपे कर्मण्यधिकरणे च' ( वार्तिक ). For the varttika applies only where the sense of a ल्यबन्त word is evident without the ( actual ) use of the same whereas here the sense is obscure without it ( the ल्यबन्त word ). Or—let there be the supply of some such word as भेत्तुम् ( to pierce ) etc, ending in तुमुन् ; or—lastly we may take the expression समीपमित्य (approach-ing ) as understood. Thus विषमविलोचनस्य समीपम् एत्य ( स्वीयं ) वक्षः आजघ्ने and रघूत्तमम् एत्य ( स्वीयं वक्षः ) मा आहध्वम्—meaning struck his own breast ( by way of challenge ) after approach-ing Shiva, and 'don't strike your own breast after reaching Rama' etc.

मित—। आङ इति। आयच्छते। दीर्घीकरोतीत्यर्थः। अपेक्षितं पूरयति—अकर्मकादिति। आजघ्ने इति—आङ्पूर्वाद्धन्तेर्लिट्। विषमविलोचनः शिवः। वक्षः—कर्म। अत्राकर्मकत्वस्वाङ्गकर्मकत्वयोरुभयोरप्यभावात् कथमात्मनेपदमिति प्रश्नः। समाधत्ते—प्राप्येति। वेति। प्रमादस्यापि द्योतनार्थम्। ननु 'प्राप्य' इति ल्यबन्तं पदमध्याहृत्य व्याख्याने 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति वार्तिकात् 'वक्ष' इत्यत्र पञ्चमी स्यादित्याशङ्का

आह—ल्यब्लोपे पञ्चमीतिवेति। विनैवेति। अध्याहाराभावे एवेत्यर्थः। तदर्थाव-गतिरिति—अवन्तपदार्थस्य बोध इत्यर्थः। यतेति—वाक्यं। तथाच प्रासादात् प्रेक्षते इत्यत्र प्रासादमारुह्येति विनापि वाक्यार्थावगमः स्पष्ट एव। अत्र तु न तथेति भेदः। ततश्च नास्यत्र पञ्चमीशङ्का। एवञ्च 'विषमविलोचनस्य वक्षः प्राप्य आजघ्ने' इत्यकर्मकत्वादात्मनेपदम्। ननु तथापि हननक्रियां प्रत्यस्तिसकर्मकत्वमित्येतदपि न युक्तमिति मन्वान आह—भेत्तुमित्यादीति। एतत् पूर्वस्यैव परिष्करणार्थम्। 'विषम-विलोचनस्य वक्षः प्राप्य—भेत्तुम् आजघ्ने'। एवञ्च आजघ्ने इत्यत्र तद्दित्यादि कर्माकाङ्क्षा नास्त्येव। समाधानान्तरमाह—समीपमेत्येति। 'विषमविलोचनस्य समीपमेत्य (स्वं) वक्षः आजघ्ने' इत्यन्वय इति भावः। एवञ्च सति मल्ल इव स्वकीयशूरत्वाविष्करणार्थमास्फालनमित्यर्थः। अस्मिन् व्याख्याने स्वाङ्गकर्मकत्वादात्म-नेपदम्। एवम् आहध्वमित्यत्रापि यथायथमध्याहृत्य व्याख्येयम्। समीपमेत्येति 'आहध्वमि'त्यत्र कथमपि घटते इति बोध्यम्।

२६८६। आत्मनेपदेष्वन्यतरस्याम् ॥२।४।४४॥

दी—। हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु। आवधिष्ट, आवधिषाताम्।

Eng.—Easy. आवधिष्ट—आ + हन् + लुङ् सिच् त = आ + वध् इस् त etc.

मित—। आत्मनेपदेष्विति। 'हनो वध लिङि' (२।४।४२) इत्यतो हन इति। 'लुङि च' (२।४।४३) इत्यतो लुङि इति चानुवर्तते। तदाह—हनोवधादेशो वेत्यादि। आवधिष्टेति। वधादेशाभावपक्षे आह—

२६८७। हनः सिच् ॥१।२।१४॥

दी—। कित् स्यात्। अनुनासिकलोपः। आहत। आह-साताम्। आहसत।

The affix सिच् coming after हन् is treated as कित्। आहत etc.—alt. of आवधिष्ट etc. अनुनासिकलोप i. e. by 'अनुदात्तोपदेश—' (2428), the न of हन् disappears due to कित्त्व of सिच् and सिच् elides by 'ह्रस्वादङ्गात्' (2369).

मित—। हन इति। 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतः किदित्यनुवर्तते। तेनापेक्षितं पूरयन्नाह—कित् स्यादिति। अनुनासिकलोप इति। कित्त्वात् 'अनुदात्तोपदेश—' (२४२८) इति लोपः। ह्रस्वादङ्गादिति सिचो लोपः।

२६९८। यमो गन्धने ॥१।२।१५॥

दी—। सिच् कित् स्यात्। गन्धनं सूचनं परदोषाविष्करणम्। उदायत। गन्धने किम्? उदायंस्त पादम्। आकृष्टवानित्यर्थः।

Eng.—Easy—परदोषाविष्करणम्—To disclose other's defects. उदायत (उद्+आ—यम्+सिच् त)—म् elides by 'अनुदात्तोपदेश—' (2428) and स् by 'ह्रस्वादङ्गात्' (2369). उदायंस्त—no elision of म् and स् due to want of कित्त्व.

मित—। यम इति। उदायत इति। परदोषानाविरकरोदित्यर्थः। 'अनुदात्तोपदेश—' इति कित्त्वात् मलोपः। 'ह्रस्वादिति—' सिज्लोपः। उदायंस्तेति। अत्रानुनासिकलोपाद्यभावः।

२६९९। समो गम्यृच्छिभ्याम् ॥१।३।२९॥

दी—। 'अकर्मकाभ्याम्' इत्येव। सङ्गच्छते।

Eng.—Easy. सङ्गच्छते—goes.

मित—। सम इति। प्राग्वदात्मनेपदमित्याद्यनुवृत्तिः। एवम् समृच्छते। ऋच्छ इति तौदादिकः। गतीन्द्रियादौर्वर्तते।

२७०१। वा गमः ॥१।२।१३॥

दी—। गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः। सङ्गसीष्ट—सङ्गंसीष्ट। समगत—समगंस्त। समृच्छते। समृच्छिष्यते। अकर्मकाभ्यां किम्? ग्रामं सङ्गच्छति। 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्'—(वार्तिक)। वेत्तेरेव ग्रहणम्। संवित्ते। संविदाते।

A झलादि (having a झल letter at the outset) लिङ् and a झलादि सिच् coming after the root गम्, become कित् optionally. Thus सङ्गसीष्ट (झलादि लिङ्—कित्)—सङ्गंसीष्ट (झलादिलिङ्—अकित्). समगत (झलादि सिच्—कित्) समगंस्त (झलादि सिच्—अकित्). In the former cases of both लिङ् and सिच् अनुनासिक or म elides by 'अनुदात्तोपदेश—' (2428) and सिच् elides by 'झलादझात्' (2369). समृच्छिष्यते—This is to show that the root is 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' तुदादि and not the substitute 'ऋच्छ' of ऋ गतिप्रापणयोः' (भ्वादि). सङ्गच्छति—because it is सकर्मक। 'विदिप्रच्छि—' varttika—i. e. the roots विद (अदादि), प्रच्छ् and स्वृ become आत्मने. in connection with सम् when intransitive. Thus संवित्ते etc.

मित—। वेति। गम इति प्रमी। 'इको झल्' (१।२।८) इत्यतो झलिति। 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतो किदिति। 'लिङ्सिचावात्मनेपदेषु' (१।२।११) इत्यतो लिङ्सिचौ इति चानुवर्त्तते। तदाह—गमः पराविति। सङ्गसीष्ट—समगंसीष्टेति। लिङि उदाहरणम् आद्यं कित्पक्षे। 'अनुदात्तोपदेश—' (२४२८) इत्यनुनासिकलोपः उत्तरत्र कित्त्वाभावादनुस्वारः। समगत—समगंस्तेति—लुङि उदाहरणम्। पूर्वत्र कित्त्वादनुनासिकलोपादुत्तरं 'झलादाझात्'

(२६९८)। इति सिजदर्शनम्। उत्तरत्र क्त्वाभावात्तदुभयविधलोपाभावेन 'मोऽनुस्वार' इत्यनुस्वारः। ततसंयोगेन दीर्घत्वात् सिज्लोपाभावः। समच्छिष्यते इति। लटि उदाहरणम्। 'ऋच्छ' इति भ्वादिः ऋधातोर्गति—प्रापणार्थकस्य पाघ्रे ति ऋच्छादेशस्य न ग्रहणं किन्तु तौदादिकस्यैव ऋच्छतेर्गतीन्द्रियप्रलयमूर्त्ति-भावार्थकस्येति द्योतनार्थम्। समृच्छतीति। सकर्मकत्वान्न तङ्। विदिप्रच्छीति। वार्तिकमिदम् सम्पूर्वादकर्मकाद विदादेरात्मनेपदमित्यर्थः। वेत्तेरेवेति—लुग्-विकरणस्यैवेति भावः। व्याख्यानात्। संविते इति। सम्यगजानातीत्यर्थः।

२७०१। वेत्तेर्विभाषा ॥७।१।७॥

टी—। वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात्। संविद्रते—संविदते। समविद्रत—समविदत। सम्पृच्छते। संस्वरते। 'अर्तिश्रुदृशिभ्यश्चे ति वक्तव्यम्' (वार्तिक)। अर्तीति द्वयोर्ग्रहणम्। अङ्विधौ त्वियर्तेरेवेत्युक्तम्। मा समृत। मा समृषाताम्। मा समृषतेति। समार्त। समार्षाताम्। समार्षतेति च भ्वादेः। इयर्त्तेस्तु—मा समरत। मा समरेताम्। मा समरन्तेति। समारत। समारेताम्। समारन्तेति च। संशृणुते। सम्पश्यते। 'अकर्मकात्'इत्येव। अतएव 'रक्षांसीति पुरापि संशृणुमहे' इति मुरारिप्रयोगः प्रामादिक इत्याहुः। अध्याहारो वा 'इति कथयद्भ्यः' इति। अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत्। शृणु—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

वहति भारम्। नदी वहति। स्यन्दत इत्यर्थः। जीवति

न्त्स्यति। प्रसिद्धेर्यथा—मेघो वर्षति। कर्मणोऽविवक्षातो यथा—'हितान्न यः संशृणुते स किंप्रभुः'। 'उपसर्गादस्य-त्यूह्योर्वेति वाच्यम्' (वार्त्तिक)। 'अकर्मकात्' इति निवृत्तम्। वस्त्रं निरस्यति—निरस्यते। समूहति—समूहते।

The augment रुट् takes place optionally (before) अत्, the substitute of झ, coming after वेत्ति (विद्). Thus संविद्रते (with रुट् or र्) and संविदते (without रुट्). अत् by 'आत्मनेपदेष्वनतः' (2258). 'अर्त्तिश्रु—' varttika i. e ऋ श्रु and दृश् too, coming after सम् are आत्मनेपदी—समृच्छते (भ्वादि)—समर्ते (जुहोत्यादि)—संशृणुते and संपश्यते। [Note in this connection that वृत्तिकार reads the dictums 'विदिप्रच्छि—' and 'अर्तिश्रु—' along with 'समोगम्यृच्छिभ्याम्'; thus 'समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः'. But Bhashya reads them separately]. Here ऋ should be taken to belong to both भ्वादि and जुहोत्यादि. But it has been said (i. e. by himself under 'सर्तिशास्त्यर्तिभ्यश्च' 2382) that in the matter of अङ्, ऋ is of जुहोत्यादि class only. समृत no guna due to कित्त्व by 'उश्च' etc—These (up to समार्षत) are लुङ् forms of भ्वादि-ऋ—which gets सिच् only and not अङ् also. माङ् has been introduced to show the absence of guna due to कित्त्व and the absence of वृद्धि due to the absence of आट् and thus to put forth the distinct form at the exclusion of आट्. Thus समृत etc are nothing but समार्त etc without आट् and वृद्धि। Similarly मा समृत etc and समार्त etc. समार्त—सम्+आट् ऋ सिच् त। Here due to subsequence, elision of सिच् by 'ह्रस्वादङ्गात्'

(2369—8. 2. 27) will take effect prior to वृद्धि by 'आटश्च' (269—(6. 1. 90). But it cannot be objected that the elision of सिच् being असिद्ध or invalid by 'पूर्वत्रासिद्धम्' (8. 2. 1) वृद्धि will come in first and hence bar the application of 'ह्रस्वात्—' and will give 'समार्ष्ट' (as Nagesha and Tattwabodhini have). For there runs the varttika 'सिज्लोप एकादेशे सिद्धो वाच्यः' (see ante). Thus according to Bhattoji समार्त is the correct form with the elision of सिच्। दध्वर्तेस्तु i. e. of ऋ read in जुहोत्यादि। मा समरत—without आट्—but गुण with अङ्. गुण by 'ऋदृशोऽङि—' (2406). समारत—वृद्धि and सिज्लोप as before. अध्याहारो वा i. e the expression may be explained as correct by supplying the word कथयन्तः thus—'रक्षांसि इति कथयन्तः etc' in which case तङ् is right due to अकर्मकत्व of the root. Now, if you enjoin as to the intransitive use of हन् and गम् etc which are transitive under the roots but are now intransitive here, we request you to listen to (what we say below):—

A (transitive) verb becomes intransitive—(1) when the root denotes a different sense, when the object rests inherent in the sense of the root, when the object is known to be concomitantly present with the root and when the same (obj.) is not purposely mentioned.

Thus वहति etc. जीवति—lives, i, e. sustains life (प्राणधारणम्—where प्राण is the object of धारण). नृत्यति—dances i. e. moves the limbs (अङ्गविक्षेप). 'मेघः—' rains i.e pours water which is known to be concomitantly present with pouring

( But Nagesha is against this for which see in the मित—. ) 'हितात् न यः—' ( भारवि—1st canto )—'He is a bad master who does not pay heed to ( the advice of his well-wisher —lit. hear salutary advice ) etc. Here the object 'स्वहित' or 'his own good' is purposely left out. 'उपसर्गात्—' (varttika)— 'It has to be expressed that अस्यति ( असु क्षेपणे—दिवादि ) and ऊहि ( ऊह वितर्के भ्वादि) following any उपसर्ग is optionally आत्मनेपद। बन्धं निरस्यति etc.—unfastens ( loosens ) the knot or bandage—सकर्मक because the word 'अकर्मकात्' has no further अनुवृत्ति।

मित। वेत्तेरिति। वेत्तेरिति पञ्चमी। 'झोऽन्तः' (७।१।३) इत्यतो झ इत्यनुवर्तते। 'अदभ्यस्तात्' (७।१।४) इत्यतोऽनुवृत्तम् अदिति षष्ठ्या विपरिणम्यते। 'शीङो रुट्' (७।१।६) इत्यतो रुडिति चास्ति। तदाह—वेत्तेः परस्येत्यादि। संविद्रते इति रुट्पक्षे इदम्। 'अर्तिस्रु—' इति वार्तिकमिदम्—सम् पूर्वेभ्यः स्वृच्छ्योश्चाकर्मकेभ्य आत्मनेपदं स्यादित्यर्थः। द्वयोरिति। भौवादिकजौहोत्यादिक-योरित्यर्थः। तत्र भ्वादेर्मा समृतेत्यादीनि इयर्तेस्तु मा समरतेत्यादीनि। मा समृतेति। 'उश्च' (२३६८) इति किंत्वाद् गुणाभावः। 'न माङ्योगे' इत्याडभवान्न वृद्धिः। 'ह्रस्वादङ्गात्' (२३६९) इति सिज्लोपः। मा समृतेति तयः गुणवृद्ध्योरभावे रूप-प्रदर्शनार्थम्। तेन समार्तेत्यादि रूपविकम् भ्वादेः पक्षान्तरमिति न मन्तव्यम्। माङभावेनैव तेषामधिगमात्। एतत् सिचि रूपप्रदर्शनम्। अङि तु मा समरतेत्यादि। तत्राप्येवमेव बोध्यम्। अङ्विधाविति। 'सर्तिशास्त्यर्तिभ्यश्च' (२३८२) इति सूत्रे स्वयमेवोक्तमित्याह—इत्युक्तमिति। समार्तेति—सम+आट् ऋ सिच् त इति स्थिते 'उश्चे'ति किंत्वाद् गुणाभाव आटश्चेति (२६९—३।१।९०) वृद्ध्यपेक्षया परत्वात् 'ह्रस्वादङ्गात्' (२३६९—८।२।२७) इति सिज्लोपः। ततो वृद्धिः। न च 'पूर्वत्रा सिद्ध'मिति सिज्लोपस्यासिद्धत्वादादौ वृद्धिः। ततो 'ह्रस्वाद्—' इत्यस्याप्रवृत्त्या 'समार्ष्ट' इत्येव रूपम् इति वाच्यम्। 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकात् तस्य

निर्बाधत्वात्। ननु चैवम् 'सोऽर्च्छ्त वेदान्—' (भट्टिः) इत्यत्र 'अर्च्छ्त' इति न सिध्येत्। तत्राप्राप्तवीत्या पूर्वं सिज्लोपे पश्चात् तस्मै 'अर्च्छ्त' इत्येव हि स्यात् इति चेत्? न, तत्र 'वार्णादाङ्गं बलीयः' इति न्यायेन प्रागेव धातोः 'सार्व—' (२१६८) इति गुणे कृते झस्वत्वनिवृत्त्या सिज्लोपाप्रसक्तिरेवेत्य 'आटयेति' इष्टिरपि निर्बाधित्याहुः। 'समार्ष्ट' इत्येव न्याय्यमिति नागेशमतं प्रतीयते। तत्त्वबोधिनीकारास्तु—तथा च 'समार्ष्टेत्येव वक्तव्ये 'समार्तेति लेखकप्रमाद इत्याहुरिति तयोर्ग्रन्थयोरेव विस्तर इत्यलम्। ऋदादेरिति—ऋधातोरिति शेषः। इयर्त्तेरिति—जुहोत्यादेरित्यर्थः। मा समरतेति। 'ऋदृशोऽङि'— (२४०६) इति गुणः। अन्यत् प्राग्वत्। समारतेति—हलादि प्राग्वत्। समारन्तेति। 'समारन्त ममाभीष्टाः सङ्कल्पास्त्वयुपागते' इति भट्टिः। अकर्मकादित्येवेति। उक्तवार्त्तिकेन परामर्शः। वृत्तिकारस्तु 'समोगम्यृच्छिभ्याम्' इत्यादि पृथक्तया अपठित्वा 'समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति पपाठ। स त्वपपाठः। भाष्ये एवम्विधपाठादर्शनात्। अकर्मकादिति 'इति कथयन्तः' इति। 'रचांसीति कथयन्तः—' इत्येवं दिशा। तथात्वेऽकर्मकत्वादात्मनेपदं सङ्गच्छत इत्यर्थः। अथास्मिन्निति—हनि-गम्यादीनां सकर्मकाणामप्यकर्मकाधिकारेऽनुप्रवेशितत्वात् प्रश्नः। समाधानमाह—श्रृणिति। उच्यते मयेति शेषः—

धातोरिति। धातोः 'अर्थान्तरे' मूलार्थभिन्ने 'वृत्तेः' वर्त्तनात् भिन्नार्थप्रकाशनादित्यर्थः, तथा 'धात्वर्थेन' 'कर्मणः उपसंग्रहात्' तस्मिन्नन्तर्भावादित्यर्थः, तथा कर्मणः' प्रसिद्धेः क्रियायामनुक्तायामेव तत्क्रियासहचरकर्मणोऽनुक्तौऽपि प्रतीयमानत्वादित्यर्थः, तथा 'कर्मणः' 'अविवक्षातः' स्पष्टं निर्देष्टुं विवक्षाभावात् च क्रिया अकर्मिका भवतीति सान्वयोऽर्थः। क्रमेणोदाहरति—वहति भारमित्यादिना। वहतीति प्रापयतीत्यर्थः। जीवतीति। प्राणान् धारयतीत्यर्थः। जीव—प्राणधारणे इति धातुः। नृत्यतीति—अङ्गानि विक्षिपतीत्यर्थः। नृती गात्रविक्षेपे इति धातुः। अत्र प्राणाङ्गानां कर्मणां तत्र तत्रोपसंग्रह इति भावः। वर्षतीति अत्र वर्ष—कर्मणो जलस्य क्रियासहगामित्वेन प्रसिद्धेरेवाऽतोपस्थितिः। नागेशस्त्वेवं नमन्यते

इति तत्रैव द्रष्टव्यम्। विस्तरभयान्न विरम्यते। 'हिताद्वयः—' भारवेरयं श्लोकः प्रथमसर्गस्थः—'स किंसखा साधु न शास्ति योऽधिपम्' इति पूर्वपादः। हिता-दिति—'आख्यातोपयोगे' इति पञ्चमी। संशृणुते इत्यत्र। अत्र स्वहितमिति कर्मणोऽविवक्षावशादेवानुक्तिः। 'उपसर्गात्—' इति वार्त्तिकम्। असुचीपणे इति दिवादिः। ऊहवितर्के इति भ्वादिः। वत्समिति—अकर्मकत्वनिवृत्तेरिति भ्रेयम्। यादौ क्ङिति ऊहतेर्ह्रस्वः स्यादित्याह—

२७०२। उपसर्गाद्ध्रस्व ऊहतेः॥ ७।४।२३॥

टी—। यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्य।

The ऊ of ऊह coming after an उपसर्ग is ह्रस्व when a यकारादि क्ङित् follows. Thus 'ब्रह्म—' should hold debate on i.e. ascertain the Supreme soul. यासुट् (आशिर्लिङ्) is कित्;—समुह्य—' conjecturing about fire. Here ल्यप् is कित् being the substitute of क्त्वा, cp. 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (332).

मित—। उपसर्गादिति। 'अयङ् यि क्ङिति' (७।४।२२) इत्यतो 'यि क्ङिति' इत्यनुवर्त्तते। तदाह: यादाविति। समुह्यादिति। वितर्कयेत्—विचार्य निश्चिनुयादित्यर्थः। अत्र यासुटः कित्त्वाद्ध्रस्वः। समुह्येति—अत्राग्निरस्ति न वेति वितर्क्य इत्यर्थः। 'समासेऽनञ्पूर्व्वे—' (३३३२) इति क्त्वादेशत्वेन ल्यपः कित्त्वाद्ध्रस्वः। मन्ये—'व्यूह्य योधयेत्' इत्यत्र ह्रस्वाभावः आर्ष—इव प्रतिभाति, 'अमुग्रस्य गतः' इति-वत् दर्शनात्।

२७०३। निसमुपविभ्यो ह्वः॥ १।३।३०॥

टी—। निह्वयते। (एवं संह्वयते। विह्वयते)।

२७०४। स्पर्धायामाङः॥ १।३।३१॥

दो—। कृष्णश्चाणूरमाह्वयते। स्पर्धायाम् किम्? पुत्रमाह्वयति।

Krishna challenges (the demon) Chanura ( to a combat ).

मित—। स्पर्धायामिति। स्पर्धम्। आह्वयते इति। आस्फालनपूर्वकं—युद्धार्थं प्रवर्त्तयतीत्यर्थः।

२७०५। गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः॥ १।३।३२॥

दो—। गन्धनं हिंसा। उत्कुरुते, सूचयतीत्यर्थः। सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव। अवक्षेपणं भर्त्सनम्। श्येनोवर्त्तिकामुदाकुरुते, भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवते। परदारान् प्रकुरुते। तेषु सहसा प्रवर्त्तते। एधो—दकस्योपस्कुरुते, गुणमाधत्ते। गाथाः प्रकुरुते। प्रकथयति। शतं प्रकुरुते, धर्मार्थं विनियुङ्क्ते। एषु किम्? कटं करोति।

The root कृञ् or कृ with any or no उपसर्ग is आत्मनेपदी in the senses of गन्धन etc expressed below. The meaning of the terms is clear from what follows. उत्कुरुते etc. Because सूचन or disclosing others' defects is injury indeed as it may lead ultimately to death. वर्तिका—a small bird like patridge etc. परदारान् i.e. rashly takes to adultery. एधोदकस्य—i.e. fuel ( एधः ) purifies the water ( दक ), or read as 'एधोदकस्य'—a समाहार comp. ; in that case the meaning is—enhances the merit of or purifies both the fuel and the water i.e. makes one dry and the other sweet scented. शतं प्रकुरुते i.e.

invests or expends a hundred rupees for ( the practice of ) virtue or ( for the purpose of ) religion.

मित—। गन्धनेत्यादि। अकर्त्रभिप्राये अयात्मनेपदमिति प्राग्वद् बोध्यम्। गन्धनं हिंसेति। गन्ध अर्दने। अर्द हिंसायामित्युभयतस्तदर्थलाभात्। सूचनं परदोषाविष्करणम्। भर्त्सनमधिक्षेपः। वर्तिकामिति—क्षुद्रशकुन्तभेदः। साहसिक्ये उदाहरति। परदारान् इति। अत्र सहसा प्रवर्तनं न प्रकरोतेरर्थः किन्तु फलितार्थकथनमेव। अन्यथा तेषु ( परदारेषु ) इति सप्तमीत्वापत्तेः, अविचार्य्य प्रवर्तत इत्यर्थः। 'तान् वशीकरोतीत्यर्थः' इति केचित्)। सहसा वर्तते साहसिकः। 'ओजः सहोऽम्भसा—' इति ठक्। तस्य कर्म साहसिक्यम्। ब्राह्मणादित्वात् ष्यञ्। प्रतियत्नो गुणाधानम्, अत आह—गुणमाधत्ते इति। एध इति अकारान्त एधस् इति सकारान्तो वा शब्दः। आद्ये 'अचोदैधौघ—' ( २१८७ ) इति निपातितः। एधश्चोदकञ्चेति समाहारः। द्वितीये एधांसि च दकं चेति विग्रहः। 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन' इति श्रीगीता। 'प्रोक्तं प्राणं भुवनममृतं जीवनीयं दकञ्चे'ति हलायुधः। 'काष्ठं दार्विन्धनं त्वेधइध्ममेधस्समित् स्त्रियाम्' इत्यमरश्च। 'एधान् हुताशन—विधौ स मुनिर्ययाचे' इति रघुप्रयोगश्च। यद्वा—एधः दकस्येतिच्छेदः। तथात्वे एध इति कर्तृपदम्।

२७०६। अधेः प्रसहने ॥१।३।३३॥

दो—। प्रसहनं क्षमाभिभवश्च। 'षह मर्षणेऽभिभवे चे'ति पाठात्। शत्रुमधिकुरुते, क्षमत इत्यर्थः। अभिभवतीति वा।

मित—। अधेरिति। प्रसहने किम्? अधिकरोति पदम्। आत्मीयं करोतीत्यर्थः।

२७०७। वेः शब्दकर्मणः ॥१।३।३४॥

दी—। स्वरान् विकुरुते। उच्चारयतीत्यर्थः। शब्दकर्मणः किम्? चित्तं विकरोति कामः।

The root वि + कृ is आत्मनेपदी when it has a 'sound' for its object. Thus स्वरान् etc. विकरोति i.e. affects on etc.

मित—। वेरिति। 'शब्दः (कर्म) कर्मकारकं यस्य ततः कृञो विपूर्वादात्मनेपदमित्यर्थः' इति नागेशः। विकरोतीति। अन्यथा करोतीत्यर्थः।

२७०८। अकर्मकाच्च ॥१।३।३५॥

दी—। 'वेः कृञ' इत्येव। छात्रा विकुर्वते। विकारं लभन्ते।

२७०९। सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥१।३।३६॥

दी—। अत्रोत्सञ्जन—ज्ञानविगणनव्यया नयतेर्वाच्याः। इतरे प्रयोगोपाधयः। तथा हि—शास्त्रे नयते, शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसम्मानन फलितम्। उत्सञ्जने—दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवकमुपनयते। विधिनात्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेनाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने—तत्त्वं नयते, निश्चिनोतीत्यर्थः। कर्मकारानुपनयते, भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणनमृणादेर्निर्यातनम्। करं विनयते, राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते। धर्मार्थं विनियुङ्क्ते इत्यर्थः।

The root नी is आत्मनेपदी in the senses of leading one to

respect, throwing up, causing the designation of आचार्य or preceptor, ( acquiring ) wisdom, payment, repayment and expenditure. Here—throwing up, wisdom, repayment and expenditure are the connotations of नी and the other terms viz, सम्मानन, आचार्यकरण and भृति are प्रयोगोपधि i.e. they are not direct significances of the root ( नी ) but are inferred or understood from the application of the same ( by virtue of the term with which it has been used ; e.g. कर्मकरानुपनयते—makes payment of servants—here as elsewhere, नी means प्रापण or causing to come ( to himself ) which is possible only by clearing their salaries etc. Thus भृति or payment is not the sense of नी but a mere inference necessary to catch the connotation of the same. Hence Nagesha says मानसबोधविषयः or relating mental conception ( i.e. inference ). As for example शास्त्रे नयते i.e. leads the pupils to ( the understanding of ) the ideas expressed in the shastras as a consequeuce. 'दण्डम्—' throws up the stick. 'माणवकम्—' i.e. leads him to himself with ( proper ) ordination ( of investment of the sacred thread ), for आचार्यत्व or religious preceptorship is assigned to the leader '( उपनेता )' through his teaching ( a pupil ) after initiation. तत्त्वम्—' i.e. ascertains the nature of the soul or the elements. 'कर्मकरान्—' i.e. makes payment of the servants or leads to himself by payment of salaries. विगणन means repayment or clearance of debts etc. Thus 'करम्—i.e. repaid fined amount to the ktng. 'शतम्—' i.e. expends a hundred on a religious purpose.

मित—। सम्माननेति। नयतेर्ञित्त्वात् कर्त्रभिप्राये फले आत्मनेपदसिद्धेऽकर्त्रभिप्रायार्थमिदम्। सम्माननादीनामर्थाः सूत्रतः एव स्पष्टाः। वाच्या इति। यदा नयतिरुपसर्गवशात् स्वतन्त्रतया वा उत्सञ्जनादीन् चतुरोऽर्थानभिधत्ते तदात्मनेपदमित्यर्थः। इतरे प्रयोगोपाधय इति—सम्माननाचार्यकरणभृतयस्त्रयो न धात्वर्थाः किन्तु मानसबोधविषयिण्य इत्यर्थः। अर्थादनुमानवशात् फलितार्थकथनपरा इति भावः। प्रयोगः तत्र तत्रार्थे व्यवहार उपाधिर्भेदको येषां ते इति विग्रहः। शास्त्रे नयते इति—अत्र नयतेरकर्मकत्वम्। तत्र सिद्धान्तमित्यध्याहार्यं व्याख्येयमित्याह—शास्त्रस्य सिद्धान्तमिति। शास्त्रे स्थितमित्यर्थः। अतएव सिद्धान्तपदोपस्थित्यात्र शास्त्रे इति सप्तमी, तस्याधारत्वात्। प्रापयतीति। अत्र नयतेः तदर्थकत्वमिति भावः। आचार्यकरणभृत्योस्तु नयतेः समीपप्रापणार्थकत्वं द्रष्टव्यम्। प्रयोगोपाधित्वं दर्शयति—तेन चेति। सम्पूर्वान्मानयतेर्णिजन्ताद् भावे ल्युट्। माणवकमिति—अलब्धयज्ञोपवीतं बटुम्। अत्रोपनयतेरर्थमाह—विधिनेति। उपनयनविधिनेत्यर्थः। ननु तथापि आचार्यत्वं नास्ति। तद्धि स्वाध्यायाद्यध्यापनादिषूपजायते इत्याशङ्क्य आह—उपनयनपूर्वकेनेति। तथा च स्मृतिः 'उपनीय तु यः शिष्यं वेदमध्यापयेद् गुरुः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥' इति। कर्मकारानिति। अत्रोपनयतिर्भृतिं प्रापयतीत्यर्थः। अतएवाह—भृतिदानेनेति। भृतिर्वेतनम्। निर्यातनं परिष्करणम्।

२७१०। कर्तृस्थे चाशरीरे कर्मणि ॥१।३।३७॥

दी—। नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात्। सूत्रे शरीरशब्देन तदवयवो लक्ष्यते। क्रोधं विनयते, अपगमयति। तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात् 'स्वरितञितः—' (२१५८) इत्येव सिद्धे नियमार्थमिदम्। तेनेह न—गडुं विनयति। कथं तर्हि

'विगणय्य नयन्ति पौरुषम्' इति। कर्तृगामित्वाविवक्षायां भविष्यति।

By the word शरीर in the aphorism is meant its limb. Then the rule means that the आत्मनेपद, which is due after नी when the object is present with the agent, takes place only when theobject is different from any limbs of the body ( and not from the body itself ). Though what is diff. from a part of the body is diff. also from the body itself yet Bhattoji also काशिका ( तदेकदेशोऽपि शरीरम्—काशिका ) replace the term 'अशरीरे' in the rule by 'अशरीरावयवे' as the instance of more logicalness (?)—For the agent being directly one with or identified with the body itself, the object cannot at the same time be कर्तृस्थ yet अशरीरस्थ, though it may, to some extent, be कर्तृस्थ and अशरीरावयवस्थ as the agent is not at once one with the limb but with the limbs taken together. 'क्रोधम्—' i.e. pacifies or removes anger. This rule is for restriction—for the consequence of क्रोधापगम or removal of anger being the composure of the mind ( चित्तप्रसाद ) and thus having rested on the agent we could have आत्मनेपद here by 'स्वरितञितः—' ( 5158 ). गडु—a hump which is a part of the body. Thus we may explain, instances like 'विगणय्य नयन्ति पौरुषम्' ( भारवि 2135 ) as परस्मैपदी provided the the point of the action not accrues to the agent—not otherwise. [ But this explanation of Bhattoji is open to objection as the fruit of the action here does accrue to the agent. Nagesha says 'अन्ये तु विध्यर्थमिदं ( सूत्रम् ) अकर्तृगेऽपि फले नयन्ति पौरुषमिति तु प्रमाद

इत्याहुः'। This also however, leaves the point unexplained as Nagesha takes the rule to be permissive ( विध्यर्थं ) and not restrictive ( नियमार्थं ). Mallinatha's explanation too here seems to be untenable'. Thus we have no other alternative but to say that it is erroneous—according to Bhattoji, Nagesha and others. Haradatta, however, defends the case otherwise saying that नी takes आत्मनेपदी in the sense of अपगमन cp. 'क्रोधं विनयते' ( and that also in con. wiih the उपसर्ग वि ) whereas in this case we have नी in the sense of 'प्रापण' and there is no वि preceding ( for more detailed account. see our edition of 'किरात—' 2nd Sl. 35 ). The full verse is :—

'शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम्।
विगणय्य नयन्ति पौरुषम् विजितक्रोधरया जिगीषवः॥'

औपयिकम्=उपाय एव औपयिकम् विनयादित्वात् स्वार्थे ठक् (i.e. means); 'The seekers at victory having checked the force of their indignation engage their prowess on a beneficient basis or serviceable plan after considering ( so as to attain ) considerable achievement of a promising future ( पौरुषं शिवमौपयिकं नयन्तीत्यन्वयः )।

मित—। कर्तृस्थे इति+च+अशरीरे इतिच्छेदः। पूर्वसूत्रान्निय इति वर्तते। तदाह—नियः कर्तृस्थे कर्मणीत्यादि। नियमार्थं सूत्रं तदाह—तत् शरीरावयवभिन्ने एवेति। सूत्रे शरीरशब्देनेति। वृत्तिकृदप्येवम्—'शरीरं प्राणिकायस्तदेकदेशोऽपि शरीरम्' इति। अयं भावः—सामान्यतस्तावत् शरीरी कर्तेत्यभिधीयते। कर्मणा च कर्तृस्थेन अशरीरेण च भाव्यम्। तत्तु न घटते। कर्तृशरीरयोरैक्यसम्बन्धेन शरीरस्य कर्तृस्थत्वायोगात्। शरीरावयवानान्तु समवायरूपसम्बन्धविशेषेण

शरीरत्वाद् यस्य कस्यचिदेकस्यावयवस्य शरीराभिधेयत्वं नास्ति। अतः कर्तृस्थत्वं सम्भवत्येवेति। तथाच नागेशः—'शरीरत्वादात्मग्राप्यस्यैव कर्तृत्वेन शरीरस्य तत्स्थत्वासम्भवः। अवयवानान्तु संबन्धविशेषेण तत्स्थत्वसम्भवः' इति। विनयतेरर्थमाह—अपगमयतीति। अत्र क्रोधः कर्तृस्थः। तेनेह न—'राज्ञः क्रोधं विनयति.'। ननु एवं क्रोधापनमे चित्तप्रसादः फलति। स च कर्तारमेवाभिप्रैति। ततश्च 'स्वरितञितः—'(२१५८) इत्येव सिद्धे विधिरेव व्यर्थः इत्याशङ्का आह—तत्फलस्येति। क्रोधापगमफलस्येत्यर्थः। समाधानमाह—नियमार्थमिदम् इति—सूत्रमिति शेषः। नात्मनेपदं विधीयते किन्तु नियम्यत एवेति भावः। नियमश्चोक्तः प्रागेव। गडुमिति—कुब्जाङ्गविशेषमित्यर्थः। 'कुब्जो गडुल' इत्यमरः। विनयत्यपगमयति। कथं तर्हीति—एतद् व्याख्यानं न सम्यक्। क्रियाफलस्य कर्तृगामित्वविवक्षाया अतिस्फुटत्वात्। नागेशस्तु 'विध्यर्थं एतम्' इत्युक्त्वा 'नयन्ति 'पौरुषमि'ति प्रमाद एवेत्याह। तदपि नातीवरमणीयमित्युपरततमस्काण्डैः सुधीभिरेव विभावनीयम्। अत्र मल्लिनाथः "अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽपि उपायस्थत्वाभावात् 'क्रोधं विनयति' इत्यादिवत् 'कर्तृस्थे चाशरीरे—' इत्यात्मनेपदं न भवती"त्याह। तच्चिन्त्यम्। प्रधानकर्मण एव कर्तृस्थकर्मत्व-दर्शनात्। दुर्घटवृत्तौ तु "येरित्यनुवर्तते। तेन 'विगणय्य नयन्ति—' इत्यत्र न तङ्"। तदपि चिन्त्यमेव। तादृशानुवृत्तेरर्थवत्त्वस्याप्युपगतत्वात् मण्डूकप्लुतिन्यायस्य भाष्यानारूढत्वाच्चेति 'अभिनिविश' इति सूत्रे शब्देन्दुशेखरे स्पष्टम्। हरदत्तस्तु अपगमार्थकादेव नयतेरात्मनेपदनियमसत्त्वाद् कर्त्रभिप्रायेऽपि फले इति विचिन्त्य अत्र नयतेः प्रापणार्थकत्वात् भवत्येव परस्मैपदमिति व्याचष्टे इति। अत्रहरदत्तमतमेव न्याय्य इति ब्रूमः। इत्यधिकं जिज्ञासुभिरस्मत्संस्कृतकिरातार्जुनीयद्वितीयसर्गे एवंविधस्थले 'चर्चा' द्रष्टव्येत्यास्तां तावत्। श्लोकोऽयमाङ्गलव्याख्यायामुद्धृतः। अथमत्रान्वयमुखेनार्थः—

जिगीषवः (विजयकामाः) विजितक्रोधरयाः (निरुद्धोत्पन्नमर्षवेगाः सन्तः) गरीयसीम् (प्रवृद्धाम्) अदूषितायतीम् (च) (अबाधितपरिणामामित्यर्थः 'आयतिस्तूत्तरकालः स्यादि'त्यमरः) फलनिष्पत्तिम् (फलाधिगमम्) विगणय्य (विभाव्य

—धातूनामनेकार्थत्वात् ) पौरुषम् ( पुरुषत्वम् शक्तिम् ) शिवम् ( मङ्गलकरम् ) औपयिकम् ( उपायम्, उपाय एव औपयिकं, विनयादित्वात् स्वार्थे ठक् ) नयन्ति ( प्रापयन्तीत्यर्थः उपायापायौ विचिन्त्यैव कर्मकुर्वन्तीति तातपर्य्यम् ) ।

२७११ । वृत्तिसर्गतायनेषु क्रमः ॥ १।३।३८ ॥

दी—। वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः, न प्रतिहन्यते इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते उत्सहते । क्रमन्तेऽस्मिन् शास्त्राणि, स्फीतानि भवन्तीत्यर्थः ।

Eng.—Easy. वृत्ति—without stoppage or obstruction. सर्ग —to make effort. तायन—to accumulate or increase.

मित । इत्तीति—स्पष्टं मूले । अप्रतिबन्धो बाधाभावः । तायनं वृद्धिः । ताय्‌ सन्तानपालयोः ।

२७१२ । उपपराभ्याम् ॥ १।३।३९ ॥

दी—। वृत्त्यादिष्वाभ्यामेव क्रमेर्नैतूपसर्गान्तरपूर्वात् । उपक्रमते । पराक्रमते । नेह संक्रामति ।

The rule is restrictive. If in the senses of वृत्ति etc क्रम is आत्मनेपद due to the precedence of any उपसर्ग then it is so only if उप and परा precede and no other.

मित—। उपेति । 'वृत्तिसर्ग—' इति वर्त्तते । वृत्तीत्येव सिद्धे नियमार्थमिदमित्याह—वृत्त्यादिष्वाभ्यामेवेति परतः क्रमेरात्मनेपदमित्यर्थः ।

२७१३ । आङ उद्गमने ॥ १।३।४० ॥

दी—। आक्रमते सूर्य्यः, उदयते इत्यर्थः । 'ज्योतिरुद्गमने इति वाच्यम्' ( वार्त्तिक ) । नेह—आक्रामति धूमो हर्म्यतलात् ।

क्रम coming after आङ् is आत्मनेपद in the sense of rising. 'ज्योति:—' (varttika), आक्रामति because धूम ( smoke ) is not a luminary.

मित—। आङ इति। उद्गमने ऊर्द्ध्वगमने। स्पष्टम्।

२७१४। वेः पादविहरणे ॥ १।३।४१ ॥

टी—। साधु विक्रमते वाजी। 'पादविहरणे' किम्? विक्रामति सन्धि:—द्विधा भवति, स्फुटतीत्यर्थः।

वि+क्रम is आत्मनेपदी in the sense of 'trotting.' विक्रामति—splits into two, parts asunder etc,

मितं—। वेरिति। यद्यपि अनुपसर्गपूर्वस्यैव क्रमेरुक्तार्थेऽवृत्तिस्तथापि धातूनामनेकार्थत्वादुक्तार्थसिद्धिरिति साम्प्रदायिकाः। वस्तुतस्तु धातुपाठार्थस्य पाणिनीतरप्रणीतत्वादेवमुपन्यासः। यद्वात्रविक्रमे एवात्मनेपदं यथा स्यादित्येवमर्थमेवसूत्रम्।

२७१५। प्रोपाभ्यां समर्थाभ्याम् ॥ १।३।४२ ॥

टी—। समर्थौ तुल्यार्थौ। शकन्ध्वादित्वात् पररूपम्। प्रारम्भेऽनयोस्तुल्यार्थता। प्रक्रमते। उपक्रमते। 'समर्थाभ्याम्' किम्। प्रक्रामति। गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः।

Here समर्थ means similarity in sense ( समः अर्थः ययोस्तौ )—पररूप (अकार) predominates due to शकन्ध्वादि। In सम+अर्थ ('शकन्ध्वादिषु पररूपं वाच्यम्'—वार्तिक )। And they ( प्र+क्रम and उप+क्रम ) bear similarity in the sense of commencemet i,e when both of these mean—to commence,

प्रोपाभ्यामिति। क्रम आत्मनेपदमितिशेषः। समः अर्थायोस्तौ समर्थाविति विग्रहः। नन्वेवं समार्थाविति स्यादित्यत आह—शकन्ध्वादित्वादिति। 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्त्तिकोक्तशकन्ध्वादीनां परिगणितत्वेऽपि एतदुक्तार्थं नेयमिति भावः। प्रारम्भ इति स्पष्टम्।

२७१६। अनुपसर्गाद्वा ॥ १।३।४३ ॥

दी—। क्रामति—क्रमते। अप्राप्तविभाषेयम्। वृत्त्यादौ तु नित्यमेव।

अप्राप्तविभाषा—i.e. आत्मनेपद being never enjoined to क्रम used itself it is here अप्राप्तविभाषा or option of what was never enjoined. And आत्मनेपदी in 'वृत्तिसर्ग—' (2711) is नित्य or obligatory by पूर्वविप्रतिषेधः।

मित—। अन्विति। अप्राप्तविभाषेयमिति। उपसर्गपूर्वादेव क्रम आत्मनेपदं विहितं नत्वनुपसर्गात् अतोऽस्याप्राप्तमात्मनेपदं विभाष्यते विकल्प्यते। 'वृत्तिसर्ग—' (२७११) इत्यत्र तु पूर्वविप्रतिषेधान्नित्यमेवात्मनेपदमित्याह—वृत्त्यादाविति।

२७१७। अपह्नवे ज्ञः ॥ १।३।४४ ॥

दी—। शतमपजानीते। अपलपतीत्यर्थः।

मित—। अपह्नवोऽपह्नुतिरपलाप (denial) इत्यर्थः। भावेऽप्।

२७१८। अकर्मकाच्च ॥ १।३।४५ ॥

दी—। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः।

सर्पिषा—i.e. begins with ghee as a means.

मित—। अकर्मकादिति। 'अनुपसर्गाज्ज्ञः' (२७४२) इत्येव सिद्धं

सोपसर्गार्थमिदम्। अतएव सर्पिषोऽनुजानीते इत्यादिसिद्धिः। अत्र जानातेः प्रवृत्तिरर्थः, इत्याह—प्रवर्तत इति। 'ज्ञोऽविदर्थस्य करणे' (६१२) इति तृतीयार्थे षष्ठी।

२७१९। संप्रतिभ्यामनाध्याने ॥१।३।४६॥

टी—। शतं सञ्जानीते, अवेक्षते इत्यर्थः। शतं प्रतिजानीते। अङ्गीकरोतीत्यर्थः। 'अनाध्याने' इति योगो विभज्यते। तत्सामर्थ्यात् 'अकर्मकाच्च' (२७१८) इति प्राप्तिरपि बाध्यते—मातरं मातुर्वा सञ्जानाति। कर्मणः शेषत्वविवक्षायां षष्ठी।

आत्मनेपदी takes place after ज्ञा coming after सम् and प्रति in a sense other than 'anxious remembrance or thought' (आध्यान)। 'शतम्—' i.e. looks for hundred, 'शतं प्रति—' i.e. promises hundred. The योग or rule here is to be divided and अनाध्याने is to be separated so as to form two rules; thus 'संप्रतिभ्याम्' and 'अनाध्याने' of which the latter will not only regulate the former but also bar the आत्मनेपदी due by 'अकर्मकाच्च' (2718) on the score of this योगविभाग e.g. मातरं संजानाति and मातुः संजानाति (anxiously remembers). Without this योगविभाग we would have मातुः संजानीते by 'अकर्मकाच्च'। मातुः is षष्ठी by कर्मणः शेषत्वविवक्षा—intention of speaking of शेषत्व of कर्म i.e. by 'अधीगर्थदयेशां कर्मणि'। (613). [Note also that the परिभाषा 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' will not apply here due to the योगविभागसामर्थ्य।].

मित—। संप्रतिभ्यामिति। 'उत्कण्ठापूर्वकं स्मरणमाध्यानम्' इति नागेशः। इति योगो विभज्यते इति। तत्र 'संप्रतिभ्याम्' इत्येको योगः। 'अनाध्याने'

इत्यपरः। एवञ्च संप्रतिभ्यामिति नियम्यते। संप्रतिभ्यां परस्मात्मनेपदं प्राप्तं तदनाध्याने एव स्यादिति। तेनेोऽत्र। मातरं संजानाति। आध्यायतीत्यर्थः। नन्वेवं सतीऽपि योगविभागे संप्रतिभ्याम् जानातेर्यदा अकर्मकत्वं तदा—'अकर्मकाच्च' (२७१८) इत्येतेन आत्मनेपदं भवत्येव। 'अनन्तरस्य विधिर्वा प्रतिषेधो वे'ति न्यायेन हि संप्रतिभ्यामित्यस्यैव बाधो युक्तो न तु तदुत्तरस्याकर्मकाच्चेत्यस्यापीत्याशङ्का समाधत्ते—तत्सामर्थ्यादिति। योगविभागस्यैव सिद्धार्थत्वादेवम् एव सामर्थ्यमिति भावः। मातुरित्यत्र षष्ठीविभक्तिं व्याचष्टे कर्मेण इति—'षष्ठी शेषे' (२।३।५०) इत्यतः शेषे इत्यनुवर्त्य 'अधीगर्थदयेशां—' (२।३।५२) इत्यत्र 'कर्मणि शेषे षष्ठी स्या'दिति व्याख्यानादिति भावः।

२७२०। भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥१।३।४७॥

दी—। उपसम्भाषोपमन्त्रणे धातोर्वाच्ये। इतरे प्रयोगोपाधयः। शास्त्रे वदते। भासमानो ब्रवीतीत्यर्थः। उपसम्भाषा उपसान्त्वनम्। भृत्यानुपवदते, सान्त्वयतीत्यर्थः। ज्ञाने—शास्त्रे वदते। यत्ने—क्षेत्रे वदते। विमतौ—क्षेत्रे विवदन्ते। उपमन्त्रणमुपच्छन्दनम्। उपवदते। प्रार्थयते इत्यर्थः।

The root वद् is आत्मनेपदी signifying expressed or implied illumination or praise (भासन), pacification ( उपसम्भाषा ), clear conception ( ज्ञान ), effort or energy ( यत्न ), disagreement (विमति), and prayer in private ( उपमन्त्रण ). उपसम्भाषा and उपमन्त्रण are direct denotations of the root and others indirect i,e they are adduced as helps in bringing out the sense (with some other extra words ). Thus शास्त्रे—i.e. ( being praised ) explains energetically. 'शास्त्रे—' i.e. ( obtaining

proficiency in sastras )—speaks of them. क्षेत्रे—i.e, shows energy ( speaking highly ) about lands. क्षेत्रे विवदन्ते—i.c speak in various ways due to disagreement. प्रार्थयते—as परदारानुपवदते i. e. requests them to satisfy an evil intention i.e. seduces them.

मित—। भासनेति। भासनं दीप्तिरुत्साहोद्दीपनमित्यर्थः। तेनेदं न धात्वर्थः किन्तु फलितार्थकथनमेव। एवं ज्ञानयत्नविमतिषु। उपसम्भाषोपमन्त्रणे तु धात्वर्थावेव। तदाह—उपसम्भाषामन्त्रण इति। प्रयोगोपाधय इति—उक्तं स्यात्। भासमान इति—शिष्यावधानसम्पत्तिभ्यामुद्दीपितोत्साहः शास्त्रीयपदार्थान् प्रकुरुत इत्यर्थः। ज्ञानं सम्यगवबोधः। वदते इति—सम्यगवबुध्य ब्रवीतीत्यर्थः। 'जानाति वदितुमित्यर्थ' इति वृत्तिकृत्। यत्न 'उत्साहः'। क्षेत्रे इति। 'तद्विषय-मुत्साहमाविष्करोतीत्यर्थः'। विमतिर्भेदः। विवदन्ते इति। नानाविधं भाषन्त इत्यर्थः। उपमन्त्रणमुपच्छन्दनमिति। कुलभार्यामुपवदते। रहस्युपेत्य स्वच्छन्द-माविष्करोतीत्यर्थः।

## २७२१। व्यक्तवाचां समुच्चारणे ॥१।३।४८॥

**वृ—। मनुष्याणां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात्। सम्प्रवदन्ते ब्राह्मणाः। नेह। सम्प्रवदन्ति खगाः।**

आत्मनेपद takes place after वद् when a joint speech of mankind is meant.

मित—। व्यक्तवाचामिति। वद इति वर्तते। व्यक्ता विस्पष्टा वाग्येषां ते इति व्यक्तवाचो मनुष्याः। समुच्चारणं सहोच्चारणम्। अव्यक्तवाचां समुच्चारणे तु नेत्याह—सम्प्रवदन्ति खगा इति। व्यक्तवाचामपि समुच्चारणाभावे नेष्यते। ब्राह्मणो वदति।

२७२२ । अनोरकर्मकात् ॥१।३।४९॥

दी— । व्यक्तवाग्विषयादनुपूर्वाद्वदेरकर्मकादात्मनेपदं स्यात् । अनुवदते कठः कलापस्य । 'अकर्मकात्' किम् ? उक्तमनुवदति । 'व्यक्तवाचाम्' किम् ? अनुवदति वीणा ।

आत्मनेपद takes place after वद preceded by अनु when the speech comes from a human being. Thus 'अनुवदते—' i. e. Katha speaks as Kalapa does. Here अनु implies similarity. उक्तम् etc—reproduces what is uttered. Here उक्त is obj.—hence वद is परस्मैपदी ।

मित— । अनोरिति । वद इति वर्तते । व्यक्तवाचामिति च । तदाह— व्यक्तवाग्विषयादिति । अनुवदत इति । अनुः सादृश्ये । यथा कलापोऽधीयानो ब्रवीति तथा कठ इत्यर्थः । 'तुल्यार्थैरतुलोपमाभ्याम्' इति षष्ठी । 'शेषे' इति केचित् । उक्तमिति—अत्र उक्तमिति कर्म ।

२७२३ । विभाषा विप्रलापे ॥१।३।५०॥

दी— । विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्याः ।

( N. B.—'युगपत् परस्परविरोधेन कथनं विप्रलापः' इति नागेशः । )

२७२४ । अवाद्ग्रः ॥१।३।५१॥

दी— । अवगिरते । 'गृणातिस्त्ववपूर्वो न प्रयुज्यत एव' इति भाष्यम् ।

N.B.—भाष्य says that गृणाति i.e. गॄ क्र्यादि ( गॄ १४९९ शब्दे ) is not

used along with अव preceding—whence it appears that by 'गः'—गॄ १४११ निगरणे of तुदादि class is meant here.

मित—अवादिति। इति भाष्यमिति। तेन गॄ शब्दे इति क्र्यादिकस्य न ग्रहणं किन्तु गॄ निगरणे इति तौदादिकस्यैव। ऋत इदितीत्त्वम्। रपरत्वम्। शप्रत्ययस्य ङित्त्वाद्गुणाभावः।

२७२५। समः प्रतिज्ञाने ॥१।३।५२॥

टी—। शब्दं नित्यं सङ्गिरते। प्रतिजानीत इत्यर्थः। प्रतिज्ञाने किम्? सङ्गिरति ग्रासम्।

( N. B.—'गः' इति वर्त्तते। संपूर्वात् गिरतेः प्रतिज्ञाने वर्त्तमानादात्मनेपदं स्यात्)।

२७२६। उदश्चरः सकर्मकात् ॥१।३।५३॥

टी—। धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः। 'सकर्मकात्' किम्। वाष्पमुच्चरति। उपरिष्टाद्गच्छतीत्यर्थः।

'धर्मम्—' etc i.e. transgresses. 'वाष्पम्—' etc i.e. rises upward.

मित—। उदश्चर इति। उत्पूर्वात् सकर्मकात् चरतेः प्राग्वदित्यर्थः।

२७२७। समस्तृतीयायुक्तात् ॥१।३।५४॥

टी—। रथेन सञ्चरते।

चर, preceded by सम् and having contiguity with a तृतीयान्त word, takes आत्मनेपद. Thus रथेन etc travels with (or by) chariot.

मित—। समः इति। तृतीयान्तपदसमभिव्याहारोच्चारितात् सम्पूर्वाच्चरतेः प्राग्वत्। तृतीयेति किम्। 'उभौ लोकौ सञ्चरसीमञ्चामुञ्च लोकम्' इति भाष्यम्।

२७२८। दाणश्च सा चेच्चतुर्थ्यर्थे ॥१।३।५५॥

दी—। सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् सा च तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते। पूर्वसूत्रे समः इति षष्ठी—। तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते। रथेन समुदाचरते। दास्या संप्रयच्छते।

What is stated ( that is आत्मनेपद ) is directed to सम्+दाण् used along with a तृतीयान्त base—provided that तृतीया (instrumental ) conveys the sense of चतुर्थी ( dative ). As 'दास्या—' i.e. ( an amorous person ) gives much money to the maid-servant. (To further explain this rule we are to take) 'समः' occurring in the previous rule as ending in षष्ठी so that both the rules will take effect even when सम् and चर् etc are intervened by any other उपसर्ग. Thus रथेन—etc.

मित—। दाणश्चेति। चर इति वर्तते। 'समः—' इति सूत्रञ्च। सेति तृतीया परामृश्यते। तदाह—सम्पूर्वादित्यादि। काशिकायान्तु 'अशिष्टव्यवहारे—' इति वार्त्तिकमत्र योजयित्वा व्याख्यातम्। दास्येति। कामुकः सन् दास्यै बहु ददातीत्यर्थः। 'पाघ्रा—' (२३६०) इति यच्छादेशः। चतुर्थ्यर्थे किम्? पाणिना संप्रयच्छति। इति षष्ठीति—विशेषणे षष्ठीति काशिका। तेनेति—षष्ठीसमाश्रयणेनेत्यर्थः। पञ्चम्याश्रयणे हि 'तस्मादित्युत्तरस्ये'ति न्यायात् सम इत्यस्मादव्यवहितपरस्य चरतिना भवितव्यम्। षष्ठ्याश्रयणे तु पौर्वापर्यत्वमेव प्रयोजनं नत्वव्यवहितपरत्वमिति भावः। अतएव समुदाचरते संप्रयच्छते इत्यादौ एकत्र उदाङ्व्यवधानादन्यत्र प्रव्यवधानाच्च नात्मनेपदनिषेधः। सूत्रद्वयमिति—'समः—' इति पूर्वसूत्रापेक्षया इदमपि।

२७२९। उपाद्यमः स्वकरणे ।।१।३।५६।।

टी—। स्वकरणं स्वीकारः। भार्य्यामुपयच्छते।

स्वकरण means स्वीकार i.e acceptance of a wife.

मित—। स्वकरणं स्वीकार इति। भार्य्यास्वीकार इत्यर्थः। स्वकार इत्यत्रानुपन्नं प्रातिपदिकम्। अतएव स्वकरण इत्यत्र चिन्तांतीति न यम्। भट्टिस्त स्वीकारमात्रे प्रायुङ्क्त 'उपायंस्त महास्त्राणि' इति।

२७३०। विभाषोपयमने ।।१।२।१६।।

टी—। यमः सिच् किद्वा स्यादिवाहे। रामः सीतामुपायत—उपायंस्त वा। उदवोढ़ेत्यर्थः। गन्धनाङ्ग उपयमे तु पूर्वविप्रतिषेधान्नित्यं कित्त्वम्।

सिच् is optionally कित् coming after यम् signifying marriage. Thus 'रामः—' Rama married Sita. उपायत—उप+यम्+सिच् (लुङ्) त—here म् elides due to कित्त्व of सिच् by 'अनुदात्तोपदेश—' (2428) and सिच् elides by 'झलादझल्' (2359). The alt. form is by अनुस्वार etc—(see ante). But if the उपयम or marriage is connected with गन्धन or injury i.e. in the sense of 'राक्षसविवाह,' etc whereof injury is the main characteristic, the सिच् after उप+यम् is unavoidably (नित्य) कित् by पूर्वविप्रतिषेध i.e. by the former rule—यमो गन्धने (2698—1. 2. 15). Thus—उपायत कृष्णो रुक्मिणीम्।

मित—। विभाषेति। 'यमः गन्धने' (१।२।१५) इत्यतो यम इति, 'इनः सिच्' (१।२।१४) इत्यतः सिजिति, 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतः किदिति चानुवर्तते। तदाह—यमः सिजित्यादि। उपायतेति। कित्त्वात् 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः। 'झलादझल्' (२३५९) इति सिज्लोपश्च। उत्तरत्र

ऋत्वाभावेन सिज्लोपविरहः। गन्धनार्थे इति। गन्धनः सूचनं (हिंसा) भङ्गं यस्य तथाभूते उपादु यमो इत्यर्थः। राक्षसविवाहे इति यावत्, तत्रैव हिंसाया अपरिहार्यत्वादिति भावः। तथाच स्मृतिः— 'हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदतो हरेत्, स राक्षसो विवाहः—' इति। पूर्वविप्रतिषेधेनेति। 'यमो गन्धने' (२६९८—१।२।१५) इति पूर्वसूत्रेणेत्यर्थः। एवञ्च उपायतार्जुनः सुभद्रामित्याद्युदाहरणम्।

२७३१। ज्ञाश्रुस्मृदृशां सनः ॥१।३।५७॥

दी—। सन्नन्तानामेषां प्रागवत्। धर्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

Here 'सनः' stands for 'सन्नन्तानां' in view of 'ज्ञाश्रु—' by तदन्तविधि।

मित—। ज्ञेति। सन इति तदन्ते लाक्षणिकम्। तदाह—सन्नन्तानामिति। 'अपह्नवे ज्ञः' (२७१२), 'अकर्मकाच्च' (२७१८), 'संप्रतिभ्याम्—' (२७१९) इत्यादिभिस्त्रिभिः सूत्रैः 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्' (२७०१) इति वार्तिकेन च ज्ञाश्रुदृशिभ्य आत्मनेपदविधानात् 'पूर्ववत् सनः' (२७३४) इत्येव सिद्धेऽपह्नवाद्यभावेऽपि यथा स्यादित्येवमर्थं सूत्रम्। स्मरतेस्त्वप्राप्तात्मनेपदविधानार्थम्।

२७३२। नानोर्ज्ञः ॥१।३।५८॥

दी—। पुत्रमनुजिज्ञासति। पूर्वसूत्रस्यैवायं निषेधः। 'अनन्तरस्य—' (परि—६२) इति न्यायात्। तेनेह न। सर्पिषोऽनुजिज्ञासते। सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः। 'पूर्ववत् सनः' (२७३४) इति तङ्। 'अकर्मकाच्च' (२७१८) इति केवलाद्विधानात्।

This prohibition refers to the former rule ( 'ज्ञाश्रु—' ) by the परिभाषा 'अनन्तरस्य विधिर्वा प्रतिषेधो वा—' An enjoining or prohibiting rule enjoins or prohibits that ( rule ) which is nearest to it—and not to 'अकर्मकाच्च'। Thus here we cannot have परस्मै. in 'सर्पिषो—' i.e wishes to fall to food with ghee. Here we have तङ् or आत्मने by 'पूर्ववत्—' ( 2734 ) due to the injunction of तङ् to ज्ञा bereft of सन्, by 'अकर्मकाच्च'।

मित—। नेति। न+अनोः+ज्ञ इतिच्छेदः। अनन्तरस्येति। एवञ्च 'अकर्मकाच्चे'त्यस्यान्तरितत्वान्ननिषेधः। अत आह—नेति। सकर्मकस्यैव निषेधादिति भावः। पूर्व्ववदिति। अयंभाव। 'अकर्मकाच्च' ( २७१८ ) इत्यनेन सन्प्रत्ययविहीना—द्देव जानातेरात्मनेपदं विधीयते। ततश्च 'पूर्ववत्—' ( २७३४ ) इत्यात्मनेपदं भवत्येवेति।

## २७३३। प्रत्याङ्भ्यां श्रुवः ॥१।३।५९॥

टी—। आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात्। प्रतिशुश्रूषति। आशुश्रूषति। कर्मप्रवचनीयात् स्यादेव। देवदत्तं प्रति शुश्रूषते। 'शदेः शितः' ( २३६१ ), 'म्रियतेर्लुङ्लिङोश्च' ( २५३८ ) ( इति ? ) व्याख्यातम्।

What is said i.e. आत्मनेपद is not enjoined after the सन्नन्त ( ending in सन् ) श्रु coming after प्रति and आङ्—प्रतिशुश्रूषति etc i. e wishes to promise. But when प्रति ceases to be an उपसर्ग and is used as a कर्मप्रवचनीय, श्रु must have आत्मने. Thus 'देवदत्तं प्रति—' i.e wishes to promise to or stands security on behalf of Devadatta. 'शदेः शितः—' etc i.e these two rules which fall under आत्मनेपद-प्रकरण have already been explained.

मित—। प्रतीति। सन् इति वर्त्तते। तदाह—आभ्यां सन्नन्तादिति। कर्म-प्रवचनीयादिति। 'लक्षणेत्थं' इति यदा 'प्रति' कर्मप्रवचनीयस्तदास्य क्रियायोगाभावेन तद्द्योतकत्वाभावान्नोक्तनियमः सम्भवति। उपसर्गत्वादेव तदर्थसिद्धेः। कर्मप्रवचनीयानां सम्बन्धमात्रभेदकत्वात्, तथाचोक्तं भर्तृहरिणा— 'क्रियाया द्योतकोनायं संबन्धस्य तु भेदकः॥' इति। व्याख्यातमिति। आत्मनेपदोऽयं सूत्रद्वयमेतदन्यत (पूर्वमेव) व्याख्यातमित्यर्थः।

२७३४। पूर्ववत् सनः ॥१।३।६२॥

दी—। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते। शिशयिषते। निविविक्षते। 'पूर्ववत्' किम्? बुभूषति। 'शदेः—' (२३६२), (२५३८) इति सूत्रद्वये 'सनो न' इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेनेह न—शिशत्सति। मुमूर्षति। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' (२२४०)—एधांचक्रे।

आत्मनेपद is enjoined in the same manner after a root ending in सन् as it (आत्मनेपद) was done after it (the root) before सन् was added to (the root). निविविक्षते——आत्मने comes in by 'नेर्विशः' (2687) and by this rule. But शिशत्सति etc., however, will have परस्मै, due to the explanation in two different ways of the rules 'शदेः—' (1. 3. 60) and 'म्रियतेः—' (1. 3. 61) viz—(1) शद will have तङ् in the matter of श-eliding affixes only (2) but not when सन् follows, and (1) म्र will have तङ् in con. with शित् affixes and in लुङ् and लिङ् only (2) but not when सन् follows. 'आम्प्रत्ययवत्—' (1. 3. 63) is explained.

मित— । पूर्ववदिति । 'तेन तुल्यं क्रिया चेत्—' ( १७७८ ) इति वतिप्रत्ययः । सन इति तदन्तस्य ग्रहणम् । तदाह—सनः पूर्वो यो धातुरित्यादि । निविविक्षत इति—'नेर्विशः' इति आत्मनेपदे सिद्धे 'पूर्ववत्—' इति सन्नन्तात्तङ् । ननु 'शदेः—' ( १।३।६० ) इत्यनेन शदेः, म्रियतेः—' ( १।३।६१ ) इत्यनेन म्रियते— आत्मनेपदं विधीयते । तत्र 'पूर्व—' इति सन्नन्तयोरप्यनयोरात्मनेपदित्वनियमात् शिशत्सति, 'मुमूर्षति' इति कथमित्याशङ्क्याह—वाक्यभेदेनेति । द्विविध-वाक्येनेत्यर्थः । तथा च (१) 'शिद्भाविनो शदेः ( १ ) शित्प्रकृतिभूतात्तथा लुङ्लिङ्प्रकृतिभूताम्म्रियतेश्चात्मनेपदं स्यादित्येकं वाक्यम् । ततो 'ज्ञाश्र—' ( १।३।५७ ) इत्यतः सनः इति, 'नानोर्ज्ञः' ( १।३।५८ ) इत्यतो नेति चानुवर्त्य शदेर्म्रियतेश्च सन्नन्तात्मनेपदमित्यपरम् । 'आमप्रत्ययवत्—' इति व्याख्यातं प्राक् ।

## २७३५ । प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥१।३।६४॥

दी— । प्रयुङ्क्ते । उपयुङ्क्ते । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' ( वार्तिक ) । उद्युङ्क्ते । नियुङ्क्ते । 'अयज्ञपात्रेषु' किम् ? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

युज् preceded by प्र and उप takes तङ् in the matter of ( expressing ) pots not relating to sacrifice. 'स्वराद्यन्त—' varttika —i.e. after such उपसर्ग's as must be led and followed by a स्वर ( vowel ). Thus 'द्वन्द्वम्—' places the ( sacrificial ) pots having hollows below ( न्यञ्चि ) by two ( द्वन्द्वम् ).

मित— । प्रोपाभ्यामिति । स्वराद्यन्तेति वार्त्तिकम् । स्वरः अच् आदावन्ते च यस्य तथाभूतादुपसर्गादित्यर्थः । द्वन्द्वमिति—द्विशः । न्यञ्चि न्यग्भूतानि 'अधोबिलानि' इत्यर्थः ।

## २७३६ । समः क्ष्णुवः ॥१।३।६५॥

दी—। संक्ष्णुते (तीक्ष्णीकरोतीत्यर्थः) शस्त्रम्।

२७३७। भुजोऽनवने ॥१।३।६६॥

दी—। ओदनं भुङ्क्ते। अभ्यवहरतीत्यर्थः। 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्'। 'वृद्धो जनो दुःखशतानि भुङ्क्ते'—इह उपभोगो भुजेरर्थः। 'अनवने' किम्। महीं भुनक्ति।

मित—। भुज इति। अवनं रक्षणं (protection). केवलामिव सकलामेवेत्यर्थः;—इत्येवकारो भिन्नक्रमः। इहेति—उभयत्रैवेत्यर्थः। भुज पालनाभ्यवहारयोरिति सर्व्वेऽपि धातूनामनेकार्थत्वादित्यर्थः। भुनक्तीति—अवति पालयतीत्यर्थः।

२७३८। णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने ॥१।३।६७॥

दी—। ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते। अणौ यत् कर्मकारकं स चेण्णौ कर्ता स्यादनाध्याने। 'णिचश्च' (२५२४) इति सिद्धेऽकर्त्रभिप्रायार्थमिदम्। कर्त्रभिप्राये तु 'विभाषोपपदेन—' (२२४४) इति विकल्पे 'अणावकर्मकात्—' (२७५४) इति परस्मैपदे च परत्वात् प्राप्ते 'पूर्वविप्रतिषेधेनेदमेवेष्यते'। कर्त्तृस्थभावकाः कर्त्तृस्थक्रियाश्चोदाहरणम्। तथाहि—पश्यन्ति भवं भक्ताः। चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। प्रेरणांशत्यागे—पश्यति भवः। विषयो भवतीत्यर्थः। ततो हेतुमण्णिच्—दर्शयन्ति भवं भक्ताः। पश्यन्तीत्यर्थः। पुनर्णार्थस्याविवक्षायां—दर्शयते भवः। इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः। तत्र तृतीयकक्षायां न तङ्। क्रियासाम्येऽप्यणौ कर्मकारकस्य

नौ कर्तृत्वाभावात्। चतुर्थ्यां तु तङ्। द्वितीयामादाय क्रियासाम्यात्। प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च। एवमारोहयते हस्तीत्युदाहरणम्। आरोहन्ति हस्तिनं हस्तिपकाः। न्यग्भावयन्तीत्यर्थः। तत आरोहयति हस्ती। न्यग्भवतीत्यर्थः। ततो णिच्। आरोहयन्ति। अरोहन्तीत्यर्थः। तत आरोहयते। न्यग्भवतीत्यर्थः। यदा पश्यन्त्यारोहन्तीति प्रथमकक्षा प्राग्वत्। ततः कर्मण एव हेतुत्वारोपाण्णिच्। दर्शयति भवः। आरोहयति हस्ती। पश्यत आरोहतश्च प्रेरयतीत्यर्थः। ततो णिजभ्यां तत्प्रकृतिभूताभ्यां च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे दर्शयते आरोहयते इत्युदाहरणम्। अर्थः प्राग्वत्। अस्मिन् पक्षे द्वितीकक्षायां न तङ्। समानक्रियात्वाभावाण्णिजर्थस्याधिक्यात्। 'अनाध्याने' किम्? स्मरति वनगुल्मं कोकिलः। स्मरयति वनगुल्मः; उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः॥ 'भीस्म्योर्हेतुभये' (२५६४) (इति?) व्याख्यातम्।

## EXPLANATION OF THE RULE

The rule is a compound sentence consisting of four clauses viz, ( i ) 'णेः'—a ण्यन्त root takes आत्मनेपद—(principal sentence), ( ii ) 'अणौ यत् कर्म णौ चेत्'—provided the action of the non-causal form is reproduced by the causal. [ It is important to note that here the term कर्म in the rule implies क्रिया action—and not necessarily the objective case. This expl. of कर्म

however is refuted by Nagesha who urges that it is, acc. to भाष्य, कारक indeed and not क्रिया ].

( iii ) 'स कर्ता'—provided that which is कर्म of the non-causal stage is a subject in the causal one ( 'अणौ यत् कर्म णौ चेत्'—is carried on here and the word कर्म here means the objective case ).

(iv) 'अनाध्याने'—but not (i.e. what is said above does not take effect ) if anxious remembrance is meant [ If, however, 'अनाध्याने' is taken as a पर्युदासविधि and not प्रसज्यप्रतिषेध then there are three clauses or sentences in all. For more detailed account see मितमाविषौ—below ]—

## TRANSLATION OF THE VRITTI HERE.

A causal root takes आत्मनेपदी, provided the very action ( क्रिया ) expressed by the non-causal form is reproduced by the causal one and provided the object of the non-causal form figures as a subject in the causal stage—but not ( so ) when anxious remembrance or thought is implied therein. आत्मनेपदी ( in this sense ) being enjoined by 'णिचश्च' ( 2564 ), this rule is to take effectwhen the action does not benefit the agent, when, however, the action benefits the agent then although we had, in point of subsequence, the option of आत्मनेपदी by 'विभाषोपपदेन—' ( 2744—1. 3. 77 ) as also परस्मैपदी for the same reason ( of subsequence ) by 'अणावकर्मकात्—' (2754—1. 3. 88. ), yet this very rule ( 'णेरणौ—' ) will apply on the ground of

पूर्वविप्रतिषेध ( i. e. the परिभाषा—'विप्रतिषेधे परं कार्यम्' is here to be replaced by the dictum 'विप्रतिषेधे पूर्वं कार्यम्' ( of Katyayana )—which is resorted to in some special cases only ). Illustrations are such roots as have their भावs and क्रियाs dependent on कर्म । By भाव we mean the sense of a root expressed by a साधन or कारक without exertion on its part i.e. automatically e.g. seeing, hearing etc ; whereas by क्रिया ( action ) we mean the sense of a root arrived at by a साधन or कारक with exertion e.g. boiling rice, felling a tree etc. ( cp.—'अपरिस्पन्दनसाधनसाध्यो भावः । सपरिस्पन्दनसाधनसाध्या तु क्रिया'—see मितभाषिणी ) । As for example :—( 1 ) 'पश्यन्ति—' etc i.e. make an object of or bring under the purview of eye-perception. If, however, we leave the part of प्रेरणा ( sending ) etc i. e. take out the sense of making or bringing then we have ( 2 ) 'पश्यति—' i.e. becomes an object ( of perception ). Then by causal णिच्—( 3 ) 'दर्शयन्ति—' etc i.e.

---

( 1 ) (i) In 'पश्यन्ति भवं भक्ताः',—भक्ताः or devotees cause the the présence of 'भव' or Shiva before their eyes of fancy or mind's eye, while in 'पश्यति भवः', भव out of his own accord as it were, appears before his devotees. Thus here there is no sense of causality ( प्रेरण ) ।

( ii ) We have हेतुमण्णिच् both in 'दर्शयन्ति भवम्—' and 'दर्शयते भवः' where दर्शयन्ति and दर्शयते repeat respectively the senses of पश्यन्ति ( 1 ) and पश्यति ( 2 ).

( iii ) In 'दर्शयते भवः' there is indeed णिच् ( दृश् + णिच् ),

the devotees view ( the Lord ) Bhava. Again if there is no intention of bringing out the sense or implication of causal or हेतुमत् णिच्, we have 'दृश्यते—' becomes an object of perception. [ For clear conception see note under 'तत आरोहयते' and 'यदा—' below]. Here the sense of the first stage and the third as well as that of the 2nd and the 4th is the same ( cp. 'या क्रिया सैव चेत—' etc) ; of these the third stage is bereft of तङ् or आत्मनेपदी—for although there is similarity in action ( or sense between the 1st. and the 3rd. ) yet that which was object in the non-causal form has not been made the subject in the causal one. The fourth stage however gets तङ् due to its similarity in sense with the 2nd and because भव which was object in the 1st has been the subject here ( in the 4th ). Similarly ( i. e. like 'दर्शयते भवः' where the root is a कर्तृस्थभावक ) 'आरोहयते हस्ती' also may serve as an instance of कर्तृस्थ क्रिया and we give here the stages it has passed through—viz, ( 1 ) 'आरोहन्ति—' etc

---

but the fact is that this णिच् has nothing to do with the sense of the sentence which but repeats the implication of 'पश्यन्ति भवः' (2). Thus there is no प्रेरण or causality. Here णिच्, therefore, has lost its preliminary ( आभिधानिक ) sense and is employed secondarily ( लाक्षणिकतया ) just as we have by the use of टाप् in 'गङ्गायां घोषः'—the hamlet of herds lies on the ( bank of the ) Ganges—where टाप् implies तीर ( bank ) by लक्षणा.

i. e. the elephant—drivers making law or bidding to bend the elephant. Then leaving the प्रेरणांश we have (2) आरोहति हस्ती—i.e. the elephant leads. Then by णिच् ( हेतुमत् )— ( 3 ) 'आरोहयन्ति हस्तिनम्—' meaning the same thing as the 1st. Then ( 4 ) 'आरोहयते—' expressing again the sense of 2nd stage. यत्र etc—[ Note carefully that, as Kaiyata and Vrittikara have, दर्शयते भवो भक्तान् and आरोहयते हस्ती हस्तिपकान् there are, in fact, the instances in order of कर्तृस्थभावक and कर्तृस्थक्रिय roots which only are intended to serve as means of examples proper of the rule 'णेरणौ—' ( 2738 ), for कर्मस्थभावक and कर्मस्थक्रिय roots fall under the rule 'कर्मवत् कर्मणा—' ( 2766 ) in कर्म-कर्तृ chapter ]. The rule 'णेरणौ—', again, has two particular पक्षs or classes of division viz. ( 1 ) निवृत्तप्रेषणपक्ष and ( 2 ) अध्यारोपितप्रेषणपक्ष. The former signifies that हेतुमत् णिच् is attached after a root, no matter if the प्रेषण or causal part ( प्रेरणांश ) is left out ; cp.—भर्तृहरि's karika :—'निवृत्तप्रेषणाद्धातो: प्राकृतेऽर्थे णिजिष्यते'—explained at the close of णिचप्रकरणम् under 'प्रार्थयन्ति शयनोत्थितं प्रिया: ।' Hence it is that Bhattoji says (1) 'तत: प्रेरणांशत्यागे' and (2) 'ततो हेतुमण्णिच्' and (3) पुन-र्णिजर्थस्याविवक्षायाम्. In these cases ( i.e, 2nd & 4th stages) भव and हस्ती are taken as direct प्रयोजकs of perception and ascension although the causal part is left out. The latter case ( अध्यारोपित-प्रेषणपक्ष ), on the other hand, signifies that हेतुमण्णिच् is employed after a root if the casuality ( प्रेरण ) is ascribed to the कर्म i. e. भव and हस्ती and not altogether left out as it was done in the

former case. Mark also that in the णिजन्तप्रपञ्च, the illustrations —first, second and third—are not the illustrations in reality of the rule 'गतिबुद्धि—' but are mere so many steps leading to the example proper (the 4th in each case) which fully satisfies the condition laid down therein, whereas in the अध्यारोपितप्रपञ्च which is being laid down here under यदा etc, there are three illustrations whereof the third is the illustration proper and the 1st and the second are but its imperfect phases helping to arrive at the same. यदा पश्यन्ति etc—. Or पश्यन्ति भवं भक्ताः and आरोहन्ति हस्तिनम् हस्तिपकाः—make the first stage as before. Then on account of the हेतुत्व or casuality being attributed to the कर्म i.e. भव and हस्ती being regarded as हेतुs or प्रयोजकs, णिच् i.e हेतुमण्णिच् appears giving दर्शयति भवः भक्तान् and आरोहयति हस्ती हस्तिपकान् i.e causing the seers and the mounters to see and mount. Then dispensing with even both the causal parts accepted i. e expressed by the two णिच्प्रत्ययs and the two प्रकृतिs (i.e primitive, or अणिजन्त roots.) of them, we have दर्शयते भवः and आरोहयते हस्ती. The drift is—Both रुहि (non-causal) and रोहि —रुह+णिच् (causal) mean the same thing viz नम्रभावन or cause to bend—comp. the first stage ('आरोहन्ति हस्तिनम्—') and the third ('आरोहयन्ति हस्ती—) which with णिच् added repeats the sense of the first. In the 2nd stage —आरोहति हस्ती—, however, there is the sense of नम्रभवन or (voluntary) bending and not नम्रभावन. Thus both रुहि and णिच् lose

their import. Consequently in the third also they ( हृञ् primitive ) and णिच् have nothing to do with causality or प्रैषण ; for here the third ('आरोहयन्ति') is but the representation in another form ( i.e with णिच् )—of the first ( 'आरोहन्ति— )'. Cp. भर्तृहरि—

"न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥"—वाक्यपदीयम् ।

Similarly in the case of 'दर्शयते भवः—'. In this पक्ष or division ( अध्यारोपितप्रैषण ) तङ् or आत्मनेपद is not used in the 2nd कक्ष्या or कक्षा i.e. stage. For there is no similarity in action i.e the sense of the 2nd does not comply with the 1st—as the former ( 2nd 'दर्शयति' etc ) has णिच् in addition to the latter ( 1st—'पश्यन्ति etc )—whereas the last ( दर्शयते—etc ) gets तङ् as it has no such additional sense but it only reproduces the second. Why अनाध्याने—except in anxious remembrance? Witness—स्मरति वनगुल्मम्—etc. This is the 1st stage in both the पक्षs. 'स्मरयति—etc' the grove becomes the object of anxious remembrance—This is the 4th stage in निष्प्रत्तप्रैषणपक्ष and the third stage in the अध्यारोपितप्रैषणपक्ष—but without तङ् ॥

'भीस्म्योर्हेतुभये' (2594—1.3.68)—Explained under णिच्प्रकरण (ante).

मित—। णेरिति। आत्मनेपदमित्यधिकृतं वर्तते। इह सूत्रे चत्वारि वाक्यानीति दीक्षिताशयः प्रतीयते। तथाहि—'णेः' इत्येकं वाक्यम्। 'अणौ यत् कर्म णौ चेद्'ति द्वितीयम्। 'स कर्ते'ति तृतीयम्। 'अनाध्याने' इति चतुर्थम्। तत्र प्रथमं व्याचष्टे—णेरात्मनेपदं स्यादिति। णेरिति पञ्चमी। द्वितीयं व्याकरोति—

'अर्थो या क्रिया सैव चेष्टात्वेनोच्यते' इति। अत्र कर्मशब्दः * क्रियापरः कारकपरश्च व्याख्यायते। तत्र क्रियापरत्वं द्वितीये, कारकपरत्वं तु तृतीये। अत आह—'अर्थो' अवयवावस्थायां या क्रियेत्यादि। अत्र यत्तदोर्नित्यसम्बन्धात् यच्छब्देन तच्छब्द आक्षिप्यते। अत आह—सैव चेदिति। यदि सा एव क्रियेति तदर्थः। अत्र क्रियान्तरव्यवच्छेदार्थमेवकारोऽध्याहृतः। एवं तृतीये कर्मान्तरव्युदासोऽपि बोध्यः। स कर्तेति तृतीयं व्याचष्टे—अर्थौ यत् कर्म कारकमित्यादि। 'अर्थो यत् कर्म णौ चेदि'ति द्वितीयवाक्यादनुवर्तते। कर्मशब्दश्चात्र कारकपर इत्युक्तम्। स इति—विधेयप्राधान्यात् 'शैत्यं हि यत् सा प्रकृतिर्जलस्ये'त्यादिवत् पुंलिङ्गनिर्देशः। नागेशस्तु कर्मशब्दस्य क्रियापरत्वेन व्याख्यानमयुक्तमित्याह—तथाहि—"अपरे तु 'कर्तरि कर्मव्यतिहारे' इति सूत्रे क्रियाग्रहणं कर्तव्यमिति सूत्रकारशिक्षां कुर्वतो वार्तिककृतः कर्मपदस्य क्रियापरत्वं नाभिप्रेतमित्यर्थौ यत् कर्म यदा ण्यन्ते तदेव कर्म भवति तदैवेत्युपक्रम्य 'उभयत्रापि कर्मशब्दः कारकपर एवे'ति निगमितम्"। चतुर्थं व्याचष्टे—न तु आध्याने इति। आध्यानमुत्कण्ठापूर्वकं स्मरणमित्युक्तम्। तत्रायमर्थो यथा—नेति भावः। वस्तुतस्तु अनाध्याने इति पर्युदास एव न प्रसज्यप्रतिषेध इति वृत्तिकृत्कैयटादयः। तेनाध्यानभिन्नार्थे वर्तमानार्थैरिति व्याख्येयम्। ततश्चात्र तौल्यं वाक्यान्तरवाक्यानि न चत्वारीति बोध्यम्। ननु 'णिचश्च' इत्येवसिद्धे किमर्थमिदमित्याशङ्का आह—अकर्त्रभिप्रायार्थमिति। अकर्तृगामिन्यपि फले यथा स्यादित्येवमर्थमिति भावः। नन्वेवमपि कर्त्रभिप्राये, 'विप्रतिषेधे परं कार्यम्' इति न्यायात् 'विभाषोपपदेन—( २७४४—१।३।७७ ) इत्यनेन—स्वं यज्ञं यजति—यजते वा इतिवत्—पदविकल्पः स्यात्। यद्वा 'अणावकर्मकात्—' (२७५४—१।३।८८ ) इत्यनेन 'शेते कृष्णः। तं गोपी शाययति' इतिवत् परस्मैपदमपि स्यादिति चेत् ? तत्रसमाधानमाह—'कर्त्रभिप्राये'त्यादिना पूर्व-

---

* 'आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्।
उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः॥' इत्यमरः।

विप्रतिषेधेनेदमेवेष्यते' इत्यन्तेन। 'णेरणौ—' (२७३८—१।३।६७) इत्यस्य उक्तशास्त्रद्वयापेक्षया पूर्वत्वात् 'पूर्वविप्रतिषेधेने'ति वार्त्तिकात् इदमेवात्र औपयिकं युक्तञ्चेति भावः। ततश्च परविप्रतिषेधन्यायोऽत्र नाश्रयणीय इति फलितम्। नागेशस्तु "एवं पूर्वविप्रतिषेधोऽपि चिन्त्यः। भाष्येऽनुक्ते"रित्याह। विस्तरस्तु शब्देन्दुशेखरे। भाष्ये तावत् 'अनाध्याने'इति प्रतिषेधबलादत्रात्मनेपदं विहितम्। ततश्च 'दर्शयते भवः—' इति 'आरोहयते हस्ती—' इति च णेरणावित्यस्य उदाहरणं भवति। तथा च भाष्यम्—"एवं तर्हि सिद्धे सति यदनाध्याने इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः भवत्येवंजातीयकानामात्मनेपदमिति। किमेतस्य ज्ञापने प्रयोजनम्। पश्यन्ति भृत्या राजानम्। दर्शयते भृत्यान् राजा। अत्रात्मनेपदं सिद्धं भवति—" इति। अत्र कैयटः—'दर्शयते भृत्यान् राजेति। ननु कर्मान्तरसद्भावादत्र आत्मनेपदेन न भाव्यम्। उच्यते। अस्मादेवोदाहरणाद् भाष्यकारस्यायमभिप्राय उन्नीयते—अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति। यथा—स्थलमारोहयति मनुष्यानिति। इह त्वण्यन्तावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति' इति। एवञ्च 'दर्शयते भृत्यान् राजे'त्यत्र—भाष्यमेवात्र मानमिति दीक्षितपक्ष एव न्याय्य इति ब्रूमः। ननु 'अणावकर्मकात्—' (२७५४) इत्यस्य अण्यन्तावस्थायां ये अकर्मकास्तत्रैव प्रवृत्तिः। यथा—शेते कृष्णः। तं गोपीत्यादि। णेरणावित्यस्य तु अण्यन्तावस्थायां ये सकर्मकास्तत्रैव प्रवृत्तिः। यथा "पश्यन्ति भृत्याः—, दर्शयते राजे"त्यादि। ततश्च णेरणावित्यनेन तस्य बाधो न युक्तः। सकर्मके अप्रवृत्तत्वात् प्रवृत्तस्यैव च बाधौचित्यात्। किञ्च 'विभाषोपपदेन—' इति विकल्पबाधोऽपि न युक्तः मानाभावात्। अपरञ्च 'पूर्वोक्तभाष्यस्य परगामिनि क्रियाफले चरितार्थत्वात् कर्तृगामिनि क्रियाफले परत्वात् 'अणावकर्मकात्—' इत्यस्य प्रवृत्तौ न किञ्चिद्बाधकमिति चिन्त्यमेवात्र पूर्वविप्रतिषेधाश्रयणमिति'चेत् ? व्याख्यानमेवात्र शरणमिति शब्दरत्न—शब्देन्दुशेखर—तत्त्वबोधिन्योऽनुसन्धेयाऽत्यलम्।

कर्तृस्वभावक इति—एतदपि भाष्यादेव। 'अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः। साधनं कारकं तत्साध्यत्वात्धात्वर्थस्य'। परिस्पन्दनं चेष्टा। तत्राऽपरि-

स्पन्दनसाधनसाध्या दर्शनश्रवणादयः। तेषां स्वाभाविकत्वेन कर्तृव्यापारानभ्युपगम—इति भावः। कर्तृस्थो भावो येषाम् इति विग्रहः। एवं कर्तृस्था क्रिया येषामिति। सपरिस्पन्दनसाधनसाध्यो धात्वर्थः क्रिया। यथा पाकादिः। क्रिया नाम व्यापारः। सा चाधिश्रयणफुत्काराधःसन्तापनाश्रयणादिरूपा। एवमारोहणादयः। कर्मस्थभावकाः कर्मस्थक्रियास्तु 'कर्मवत् कर्मणा—' (२७६६) इत्यस्य विषया इति तत्रैवोदाहरिष्यते। कर्तृस्थभावकमुदाहरति—धन्यन्तावस्थेयम्। अर्थस्तु स्पष्ट-यदित्याह—चाक्षुषज्ञानविषयं कुर्वन्तीति। आपादयन्तीत्यर्थः। तत्रयावत्प्रेषणार्थ-सद्भावोऽन्तर्भावित इति बोध्यम्। अतएवाह—प्रेरणांशत्यागे इति कुर्वन्तीत्यापादनांशत्यागे इत्यर्थः। स च सौकर्यविवक्षयेति भावः। अतएवात निवृत्तप्रेषणपक्ष इत्युपरिष्टाद् वक्ष्यति। न चात्र सौकर्यसद्भावात् 'कर्मवत्—' (२७६६) इत्यनेन यक् आत्मनेपदञ्च स्यातां न तु शबादिरिति वाच्यम्। दर्शनस्य कर्मस्थभावकत्वाभावात्॥ ततो हेतुमण्णिच् इति—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजि'त्यर्थः। दर्शयन्तीति—अत णिजन्तस्यापि दृशेः प्राकृतेन तुल्यार्थत्वमित्याह—पश्यन्तीत्यर्थ इति। चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। पुनर्ण्यर्थस्याविवक्षायामिति—णिचि सत्यपि प्रेषणांशस्य तदर्थस्याविवक्षणादितिभावः। न चैवं प्रेषणार्थनिवृत्तौ णिजपि निवर्तेतेति शङ्काम्—'उपायनिवृत्तावपि उपेयानिवर्त्तनादि'ति प्रदीपे स्पष्टम्। यथा 'गङ्गायां घोष' इतिवदत्र लक्षणा। तत्र हि टाप्-प्रत्ययेन स्वार्थं विहाय तीरं प्रत्याय्यते 'गङ्गातीरे घोष' इत्यस्यैव विवक्षितत्वात्। तद्वदत्रापि णिचा प्रेषणरूपं स्वार्थं विहाय प्राकृतोऽर्थः पर्य्यवसीयत इति बोध्यम्। दर्शयते भव इति—भक्तानिति शेषः। इदानीं पश्यन्ति भवमित्यादीनां चतुर्णां वाक्यानां प्रकृत-सूत्रप्रवृत्त्यनुकूलत्वा-ननुकूलत्वे दर्शयितुमाह—इहेति। उक्तवाक्यचतुष्टये इत्यर्थः। प्रथमा च तृतीया च प्रथमतृतीये। तयोरवस्थयोरिति विग्रहः। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वार्तिक—'तद्धितार्थोत्तरपद—' ९२८) इति प्रथमाशब्दस्य पुंवद्भावः। अवस्था नाम कालविशेषेऽवस्थानविशेषः। 'विशेषः कालिकोऽवस्थे'त्यमरः। इह तु विशिष्टपदसन्निवेशरूपः। सैव चेह मूले * 'कक्ष्या' इत्युपाध्यते। 'कक्ष्या (कथा) प्रकोष्ठ

* तत्त्वबोधिन्यां मूले 'कक्षा' इति यकाररहितोऽयं शब्द उपलभ्यते।

हर्म्यादि'रिति तु नार्थः किन्तु प्रकोष्ठवदवयवसंस्थानविशेषः। अतएव नागेशः 'यावतीषु सोपानस्थानीयावयवविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी भूमिः प्राप्यते ता भूमयः कक्ष्ये त्युच्यन्ते अवस्था इति चे'त्याह। प्रथमतृतीययोरिति। 'पश्यन्ति भवम्—' इति प्रथमावस्थायां णिजभावे यावानर्थः 'दर्शयन्ति भवम्—' इति तृतीया-वस्थायां णिचि सत्यपि तावानेवार्थः। प्रेषणांशस्योभयत्रैव असत्त्वादितिभावः। तथा 'पश्यति भवः' इति द्वितीयकक्ष्यायां शुद्धस्य दृशेः प्रेषणांशपरिहारेण यावानर्थः 'दर्शयते भवः' इति तुर्यकक्ष्यायां ण्यन्तस्यापि दृशेः प्रेरणांशानुपादाने तावानेवार्थः। अत आह तुल्योऽयं इति। न्यूनाधिकत्वरहित इत्यर्थः। तत्र तृतीयकक्ष्यायामिति। द्वितीयकक्ष्यायान्तु तङः प्रसक्तिरेव नास्ति। ण्यन्तत्वाभावादिति भावः। ननु तृतीयायां कुतो न तङ् इत्यत आह—क्रियासाम्येऽपीति। उभयत्रैव चाक्षुषज्ञानविषयत्वापादान-रूपक्रियैककत्वेऽपीतिभावः। 'कर्मणि या क्रिया सैव चेत्कर्त्रोच्यते' इत्याश्रित्येदमुक्तमिति बोध्यम्। कर्मकारकस्य 'भवस्य' इत्यर्थः। णौ कर्तृत्वाभावादिति। इदन्तु 'कर्मणि यत् कर्मकारकं स चेण्णौ कर्तेत्याश्रित्योक्तम्। चतुर्थ्यान्तु तङिति—तदेवोपपादयति। द्वितीयामादायेति—तस्या एवार्थस्य इह पुनरुपादानादित्युक्तम्। नियमान्तर-मुपपादयति। प्रथमायां कर्मण इति। ततश्च वस्तुगत्या चतुर्थकक्ष्या ('दर्शयते—') एव प्रकृतसूत्रोदाहरणभूता इत्यवगन्तव्यमिति नागेशादौ विस्तरः। एवं निवृत्त-प्रेषणपक्षे कर्तृस्थभावक उदाहृतः। इदानीं तस्मिन्नेव पक्षे कर्तृस्थक्रियाकमुदाहरति। एवमिति—अत्रापि कक्ष्याचतुष्टयं क्रमेण दर्शयति—'आरोहन्ति—' इत्यादिना। न्यग्भावयतीत्यर्थ इति। तथाच वाक्यपदीयम्—

न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते।
न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते॥
अवस्थां पञ्चमीं प्राहुर्ण्यन्ते तां कर्मकर्तरि।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते॥ इति।

'अत्र पञ्चमीत्वं यथा कथञ्चिदुपपाद्यमि'ति नागेशः। तुर्याधिकावस्थाया इह दुर्लभत्वादिति भावः। वस्तुतस्तु, तेनैव 'एवञ्च हर्म्योक्तपञ्चमकक्ष्यात्वं स्वरसत उपपद्यते

ह्युपरिष्टात् प्रपञ्चितमिति तत्रैव द्रष्टव्यम्। न्यग्भावनं कार्यांशविशेषस्य वक्तापादानम्। न्यग्भवनन्तु स्वत एव तादृशीभवनमिति विशेषः। एवं निष्ठत्यप्रेषणपक्षमुपपाद्य इदानीमध्यारोपितप्रेषणपक्षमाह—यद्वेति। एष च पक्षः 'अपरः कल्पः......' इत्यादिना प्रदीपेऽप्युपात्तः। पश्यन्ति भवं भक्ताः, आरोहन्ति हस्तिनं हस्तिपका इत्युभयत्र प्रथमकक्ष्या समाना। द्वितीयकक्ष्यामाह—ततः कर्मण एवेति। भवस्य हस्तिनश्चेत्यर्थः न तु कर्तॄणां भक्तानां हस्तिनाञ्च। हेतुत्वारोपादिति—प्रयोजकत्वारोपादित्यर्थः। अत्रापि सौकर्यविवक्षा बीजम्। णिच्—हेतुमति च। एवञ्चात्र प्रयोजकत्वरूपः अण्यन्तकक्ष्यायाः कर्तृव्यापारो ण्यन्तकक्ष्यायां कर्मणि अध्यारोप्यते। तदुक्तं हरिणा—

"केषाञ्चिद् देवदत्तादेर्व्यापारो यः सकर्मके।
स विना देवदत्तादेः कटादिषु विवक्ष्यते॥" इति।

स देवदत्तादिनिष्ठो व्यापारो यदा देवदत्तादि—प्रयोजककर्तॄनपहाय कटादिरूपे कर्मणि विवक्ष्यते तदेति कारिकार्थः। दर्शयतीत्यनयोरर्थमाह—पश्यत आरोहतश्चेति। पश्यतो भक्तान्, आरोहतश्च हस्तिपकानित्यर्थः। प्रेरयतीति। हेतुत्वारोपादिति भावः। अतएवायं निष्ठत्यप्रेषणपक्षाद् भिद्यते। ततो णिज्भ्यामिति। तथाहि—अत्र पक्षे दर्शयति भव इत्यत्र आरोहयति हस्ती इत्यत्र च णिच्प्रत्ययद्वयेन क्रमेण दर्शनविषयकमारोहणविषयकञ्च प्रेरणं विवक्ष्यते। पश्यन्त्यारोहन्तीति प्रथमकक्ष्यायाञ्च शुद्धेन दृशिनारुहिणा क्रमेण चाक्षुषज्ञानविषयत्वापादनरूपं न्यग्भावनरूपञ्च प्रेषणं विवक्ष्यते। तत्प्रकृतिभ्यामिति—तस्य णिचः प्रकृती आविर्भवनधर्मौ तत्प्रतिस्थानी इति यावत्। ताभ्याम् शुद्धाभ्यां दृशिरुहिभ्यामित्यर्थः। दर्शयते इति—भवो भक्तानिति शेषः। आरोहयते इति—हस्ती हस्तिपकानिति शेषः। प्राग्वदिति। विषयो भवतीति। आरोहतीति चार्थ इत्यर्थः। नन्वत्र द्वितीयकक्ष्यायां कुतो न तङ्—तत्र धातोर्ण्यन्तत्वात् कर्मणो भवस्य हस्तिनश्चेह कर्तृत्वाच्चेति चेदत्राह—अस्मिन् पक्षे इति। हेतुमाह—समानक्रियात्वाभावादिति। 'अणौ या क्रिया—' इति नियमविरहादित्यर्थः। तदेवोपपादयति—णिजर्थस्य आधिक्यादिति। अयमभिप्रायः।

पश्यन्तीति आरोहन्तीति च प्रथमकक्ष्यायामिव दर्शयतीति आरोहयतीति द्वितीय-कक्ष्यायामपि प्रेषणमेवार्थः। परं पूर्वत्र णिज् न विद्यते उत्तरत्र त्वस्तीत्र। अत आधिक्यम्। ननु समानक्रियात्वं नाम न्यूनाधिकभावविरहः। तद् यथा आधिक्ये न भवति तथा न्यूनत्वेऽपि न भवेत्। तथा सति दर्शयते आरोहयत इति तृतीयायामपि तङ् न स्यात्तथ पक्षोऽयं निर्विषयः स्यात्—तत्र प्रकृत्युपात्ते प्रेषणांशस्य त्यागेन न्यूनत्वस्य सत्त्वादिति चेत्। उच्यते। अत्राधिक्यमात्रं व्यवच्छिद्यते न तु न्यूनत्व-मपीत्याहुः। एवमत्राध्यारोपितपक्षे कक्ष्याद्वयेनैवार्थ—सिद्धिरित्यन्यत्र विस्तरः। 'स सन्ततं दर्शयते गतस्मयः' (भारवि—१म.) 'करेणुरारोहयते निषा—दिनम्' (माघ) इत्यादि तु 'णिचश्च' इत्यस्यैव विषय इति प्रौढमनोरमायां स्पष्टम्। [मल्लिनाथस्य किराते आह—"भाष्ये तु णेरणादिसूत्रविषयत्वमपि अस्तीतम्"। अस्माकं किरातचर्चापि द्रष्टव्या]। स्मरति वनगुल्मिति। भाष्ये वनगुल्मस्येति षष्ठी तु कर्मत्वस्यैवोपलक्षिकेति कैयटे स्पष्टम्। पक्षद्वयेऽपीयं प्रथमकक्ष्या। निवृत्तप्रेषण-पक्षे द्वितीयतृतीययोरध्यारोपि तपक्षे द्वितीयायायोपलक्षिका। स्मरयतीति—स्मृ आध्याने घटादिः। मित्त्वाद्ध्रस्वः। निवृत्तप्रेषणपक्षे चतुर्थकक्ष्येयम् अध्यारोपितप्रेषणपक्षे तु तृतीयकक्ष्येति बोध्यम्। एवञ्च इयमेवोभयपक्षे प्रत्युदाहरणभूतेति निगमनीयम्। अत 'अनाध्याने' इति प्रतिषेधान्न तङित्युक्तम्।

२७२८। गृधिवञ्च्योः प्रलम्भने ॥ १।३।६९ ॥

टी—। प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत्। माणवकं गर्धयते—वञ्चयते वा। 'प्रलम्भने' किम्? श्वानं गर्धयति। अभिकाङ्क्षामस्योत्पादयतीत्यर्थः। अहिं वञ्चयति। वर्जयतीत्यर्थः। 'लियः सम्माननशालिनीकरणयोश्च' (२५९२) व्याख्यातम्।

गर्धयते—deceives. श्वानम् etc—i.e induces his temptation. अहिम् etc i.e abandons.

मित—। ग्रधिवञ्चोरिति। णेरणाविल्यत: णेरिति वर्त्तते। उभावपि प्रतारणार्थकावित्याह—प्रतारणेऽर्थे इति। शिव इति। जटाभिर्लापयते—श्लेषो बालिकामुल्लापयते इति णिच्प्रकरणे गतम्।

२७४०। मिथ्योपपदात्कृञोऽभ्यासे ॥१।३।७१॥

टी—। णेरित्येव। पदं मिथ्या कारयते। स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। 'मिथ्योपपदात्' किम्। पदं सुष्ठु कारयति। 'अभ्यासे' किम्। सकृत् पदं मिथ्या कारयति॥ 'स्वरितञित: कर्त्रभिप्राये क्रियाफले' (२१५८)। यजते। सुनुते। 'कर्त्रभिप्राये' किम ? ऋत्विजोयजन्ति। सुन्वन्ति।

आत्मनेपद is employed after कृ, having the word मिथ्या in close contiguity and expressing the sense of frequent utterance (अभ्यास). 'पदम्—' i.e. utters the word repeatedly with the pitch of the same badly pronounced.

मित। मिथ्येति। 'णेरणा'विति वर्त्तते। उप 'समीपे' उच्चारितं पदमुपपदम्। कृञोऽत्र उच्चारणे वृत्तिः। धातूनामनेकार्थत्वात्। अभ्यासो नैरन्तर्येणाचरणं तदाह—णेरित्यादि।

२७४१। अपाद्वद: ॥१।३।७३॥

टी—। न्यायमपवदते। कर्त्रभिप्राये इत्येव। अपवदति॥ 'णिचश्च' (२५६४)—कारयते।

न्यायम्—' etc i.e. vitiates or rejects reason i. e a reasonable speech.

मित—। अपादिति। सुगमम्। अस्मात् प्रभृति णेरिति निवृत्तमत आह—अपवदते इत्यादि।

२७४२ । समुदाङ्भ्यो यमोऽग्रन्थे ॥१।३।७५॥

दी—। अग्रन्थे इतिच्छेदः। व्रीहीन् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। 'अग्रन्थे' किम्। उद्यच्छति वेदम्। अधिगन्तुमुद्यमं करोतीत्यर्थः। कर्त्रभिप्राये इत्येव। व्रीहीन् संयच्छति।

आत्मनेपद is appointed after यम् following सम्, उद् and आङ् provided anything (obj—) except books (ग्रन्थ) is concerned. Thus व्रीहीन्—i.e collects paddy. 'भारम्—' i.e. lifts up the burden. 'वस्त्रम्—' i.e girds up the loins. उद्यच्छति etc—i.e tries to master the Vedas—परस्मै. because books are concerned.

मित—। समिति। ग्रन्थो वेदः शास्त्रान्तरं च ततोऽन्यत्र विषये इत्यर्थः। संयच्छते—संगृह्णाति। उद्यच्छते—उद्धरति। आयच्छते—कटिदेशं बध्नाति। शास्त्रविषये तङनेत्याह—अग्रन्थे किमिति। "आङो यमहनः" इत्यत्र तु 'अकर्मकात्' 'स्वाङ्गकर्मकात्' इति वर्तते, अत्र 'आ+यच्छ' न तथा इति; पुनश्चात्र 'कर्त्रभिप्राये' इत्येव—इति भेदः।

२७४३ । अनुपसर्गाज्ज्ञः ॥१।३।७६॥

दी—। गां जानीते। अनुपसर्गात् किम्। 'स्वर्गं लोकं न प्रजानाति'। कथं तर्हि भट्टिः—इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य इति। कर्मणि लिट्। नृपेणेति विपरिणामः।

Eng.—Easy. How then Bhatti has—'इत्थं नृपः—' The king thought thus at first and then the departure of his son was sanctioned (by him)? Well—take it (अनुजज्ञे) as कर्मणि लिट् and supply the word 'नृपेण' (अनुज्ञाकर्त्ता) by changing the विभक्ति of नृपः (कर्त्ता) [illegible]

मित—। अनुपसर्गादिति। 'अकर्मकाच्च' (२७१८) इत्येवसिद्धे सकर्मकार्थमयमारम्भः। कर्मणि लिङिति—ततश्च 'अनुजज्ञे' इत्यत्र 'भावकर्मणोः' (२६७९) इत्यात्मनेपदम्। विपरिणाम इति। विभक्तिव्यत्यय इत्यर्थः। तथा च प्रथमवाक्यान्वितं 'नृपः' इति प्रथमान्तं तृतीयान्तं विधाय 'ततो नृपेण सुतस्य गमनमनुजज्ञे' इति पठनीयमित्यवदातमिति भावः।

२७४४। विभाषोपपदेन प्रतीयमाने ॥१।३।७७॥

टी—। 'स्वरितञितः' इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत् समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति—यजते वा। स्वं कटं करोति—कुरुते वा। स्वं पुत्रमपवदति—अपवदते वा। स्वं यज्ञं कारयति—कारयते वा। स्वं व्रीहिं संयच्छति—संयच्छते वा। स्वां गां जानाति जानीते वा।

The atmanepada that is ordained by the five rules led by or beginning with 'स्वरितञितः—(1.3.72) takes place optionally if the fruit of the action is implied to concern the agent by a word pronounced in close proximity. The five rules are as follows—(i) स्वरितञितः—(१।३।७२)। (ii) अपाद्वदः (१।३।७३)। (iii) णिचश्च (१।३।७४)। (iv) समुदाङ्भ्यः—(१।३।७५) and (v) अनुपसर्गाज्ज्ञः (१।३।७६). Thus 'स्वं यज्ञं—' etc enumerate them in order.

मित—। विभाषेति। आत्मनेपदमिति वर्तते। 'उपपदेन प्रतीयमाने' इत्यस्यार्थमाह——समीपोच्चारितेन पदेनेत्यादि। तदित्यस्य स्यादित्यनेनान्वयः। पञ्चसूत्र्या इति। अतएव पदविकल्पं प्रत्येकं क्रमेणोदाहृत्य दर्शयति। स्वं यज्ञमित्यादिना। अत्र 'स्व' इत्यनेन क्रियाफलस्य कर्तृगामित्वं प्रतीयते। पञ्चसूत्रीतु प्राक्तनव्याख्यायामुपनिबद्धा इत्यलम्।

इति मितभाषिण्यां तिङन्तात्मनेपद-प्रकरणम्।

अथ

# तिङन्तपरस्मैपद-प्रकरणम्

दी—। 'शेषात् कर्तरि परस्मैपदम्' ( २१५८ )। अस्ति।

२६४५। अनुपराभ्यां कृञः ॥१।३।७९॥

दी—। कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम्। अनुकरोति। पराकरोति। कर्तरीत्येव। भावकर्मणोर्मा भूत्। न चैवमपि कर्मकर्तरि प्रसङ्गः। कार्यातिदेशपक्षस्य मुख्यतया तत्र 'कर्मवत्कर्मणा—' ( २७६६ ) इत्यात्मनेपदेन परेणास्य बाधात्। शास्त्रातिदेशपक्षे तु 'कर्तरि शप्' ( २१६७ ) इत्यतः 'शेषात्—' ( २१५८ ) इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्यं कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम्।

परस्मैपद takes place after कृ following अनु and परा. This rule is enunciated with a view to enjoin परस्मैपद even when the fruit of the action benefits the agent and गन्धन or injury etc. (cp. 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः'—2705—1. 3. 32.) are expressed—where आत्मनेपद was previously established. This ( परस्मैपद ), however, is limited to the active voice only and has no scope in the passive ( भाव and कर्म ).

'Admitting this we can argue that परस्मैपद will then appear in the कर्मकर्तृ वाच्य'—but no such rejoinder can arise here. For, as the कार्यातिदेशपक्ष or the view of transference of operation ( from the original sphere to somewhere else ) predominates, so this परस्मैपद ( of अनुपराभ्यां कृञः ) is barred by the rule 'कर्मवत्—' ( 3. 1. 87 ) which is posterior to 'अनुपरा—' ( 1. 3. 79 ). The drift is this :—Here there are two पक्षs.—( 1 ) शास्त्रातिदेशपक्ष ( Transferance of injunction ) and ( 2 ) कार्यातिदेशपक्ष ( Transference of operation ). The rule 'भावकर्मणोः' ( 2679—1. 3. 13 ) belongs to the former school as the आत्मनेपद enjoined here is transferred to 'कर्मवत् कर्मणा—' ( 2766—3. 1. 87 ) which again is an instance of the latter ( कार्यातिदेश ) school for the operations enjoined for the कर्मवाच्य are transferred to the कर्म-कर्तृ वाच्य। Now the कार्यातिदेश school is suprerior to शास्त्रातिदेश in as much as the शास्त्र or the injunction of आत्मनेपद is meant for the कार्यातिदेश school where आत्मनेपद is one of the said operations. As such the rule 'कर्मवत् कर्मणा—' ( 3. 1. 87 ) therefore wields greater force than भावकर्मणोः ( 1. 3. 14 ). consequently the आत्मनेपद we have in it by way of transferance of operation bars the परस्मैपद due by 'अनुपराभ्याम्—' ( 1. 3. 79 ) due to its (of 'कर्मवत्—') subsequence. Thus in the कर्मकर्तृ वाच्य we have आत्मनेपद—'अनुक्रियते शब्दः स्वयमेव etc. and not परस्मैपद—अनुक्रियति etc. शास्त्रातिदेशपक्षे तु etc.—If, however, you adopt 'कर्मवत् कर्मणा—' as an instance of the शास्त्रातिदेश school then you are to drag down the two 'कर्तरि's one occurring in कर्तरि शप् ( 3. 1. 68— )

better say 'कर्तरि कर्मव्यतिहारे—' 1. 3. 14 ) and the other in 'शेषात् कर्तरि—' ( 1. 3. 78 ) and to explain the परस्मैपद of 'अनुपराभ्याम्—' to be due in such an active voice where the agent ( कर्ता ) is the selfsame कर्ता and not the कर्मकर्ता।

[ For "कर्त्तरि शप्" the reading should be "कर्त्तरि कर्म—" ].

मित—। अथ परस्मैपदसूत्राणि व्याचिख्यासुराह—शेषादिति। ततः परसूत्रे 'कर्तरि परस्मैपदम्' इत्यनुवर्तत इति भावः। अनुपराभ्यामिति। तद्व्याचष्टे—कर्तृगेऽपिफले इति। न तु 'स्वरितञितः—' इत्यनेन अकर्तृगामिन्येवफले परस्मैपदमित्यनुमन्तव्यमित्याकूतम्। गन्धनादौ चेति—वाच्ये प्रतीयमाने चेति शेषः। गन्धनादयश्च 'गन्धनावक्षेपणसेवनसाहसिकाप्रतियत्नप्रकथनोपयोगेषु कृञः' ( २७०७ ) इत्यवो—दाहृताः। तेन तेष्वर्थेषु कर्त्तरि परस्मैपदमिति भावः। नन्वेवं भावे कर्मण्यपि च स्यादित्याशङ्का तद्वारयन्नाह—कर्तरीत्येवेत्यादि। भावेकर्मणि च आत्मनेपदस्यैव नियमादिति भावः। ननु तर्हीदं कर्मकर्तरि भवेदित्यप्याशङ्कां वारयितुमाह—न चेवमपीति। सिद्धान्तमाह—कार्य्यातिदेशपक्षेति। अत्र शास्त्रे पक्षद्वयं वर्तते—शास्त्रातिदेशपक्ष इत्येकः, कार्य्यातिदेशपक्ष इत्यपरः। तत्र पूर्वापेक्षया परस्य बलीयस्त्वं, तदधीनत्वात् पूर्वस्य। न हि कार्यमतिक्रम्य किमपि शास्त्रमतिदेष्टुं शक्यते। 'भावकर्मणोः' ( २६७९—१, ३, १३ ) इति शास्त्रातिदेशः। ततश्चास्य आत्मनेपदशास्त्रस्य 'कर्मवत् कर्मणा—' ( २७६६—३।१।८७ ) इत्यत्रातिदेशात्। 'कर्मवत्—' इति तु कार्य्यातिदेशः। तत्र ( कर्मकर्तरि ) कर्मवाच्योक्तयगात्मनेपदरूपकार्य्याणामतिदिष्टत्वात्। एवञ्च 'अनुपराभ्याम्—' इत्यपेक्षया 'कर्मवत्—' इत्यस्य परत्वात् तत्रातिदिष्टेणात्मनेपदरूपकार्य्येण पूर्वतस्य परस्मैपदं बाध्यते। ततश्च कर्मकर्तरि 'अनुक्रियते शब्दः' स्वयमेवेत्यात्मनेपदमेवेति फलितम्। ननु 'कर्मवत् कर्मणा—' इति न कार्य्यातिदेशः किन्तु शास्त्रातिदेश एवेति चेत्। तत्राह—शास्त्रातिदेशपक्षे त्विति। * 'कर्तरि शप्' ( ३।१।६८ ) इति। अत्र 'कर्तरि कर्मव्यतिहारे' (१।३।१४) इति वक्तव्यम्। "कर्त्तरि शप्" इत्यस्य परवर्त्तित्वेन ततः 'कर्त्तरि' इत्यस्यानुवृत्तेरभावात्। अतोऽत्र

"कर्त्तरि शप्' इत्यत:" इति प्रामादिक: पाठ:। "कर्त्तरि कर्म—' इत्यत:" इति हि युक्त: पाठ:। अन्यत् स्पष्टम्।

२७४६। अभिप्रत्यतिभ्य: क्षिप: ॥१।३।८०॥

दी—। 'क्षिप प्रेरणे'—स्वरितेत्। अभिक्षिपति।

मित—। अभीति। क्षिप्धातुस्तौदादिको गृह्यते न दैवादिक:। स्वरितेदिति। अतश्चोभयपदित्वेन कर्त्तृगेफले आत्मनेपदे प्राप्तेऽनेन तत्रापि परस्मैपदमिति भाव:। एवं प्रतिक्षिपति। अतिक्षिपति।

२७४७। प्राद्वह: ॥१।३।८१॥

दी—। प्रवहति।

मित—। प्रादिति। वह स्वरितेत्।

२७४८। परेर्मृष: ॥१।३।८२॥

दी—। परिमृष्यति। भौवादिकस्य तु परिमर्षति। इह परेरिति योगं विभज्य वहेरपीति केचित्।

मित—। परेरिति। दैवादिकस्य मृषे: स्वरितेत्त्वात्तस्यैवात्र ग्रहणं न तु भौवादिकस्य। तदाह—परिमृष्यतीत्यादि। भौवादिकस्य परस्मैपदित्वात्। योगं विभज्येति। तेन 'परेर्वह:' इति 'परेर्मृष:' इति च योगद्वयं लभ्यते। वहेरपीति। तेन परिवहतीत्यपि प्राप्तम्। केचिदिति—भाष्यानारूढत्वादिदमुक्तम्।

२७४९। व्याङ्परिभ्यो रम: ॥१।३।८३॥

दी—। विरमति।

मित—। वीति। रमेरनुदात्तेत्त्वादिदं शास्त्रम्। आरमति। परिरमति।

२७५०। उपाच्च ॥१।३।८४॥

दी—यज्ञदत्तमुपरमति। उपरमयतीत्यर्थ:। अन्तर्भावितण्यर्थोऽयम्।

N. B.—उप-रम् does not mean same as विरम् does. In that case it would have been safer to enunciate 'व्याङ्परिभ्योरमः' उप + रम् has got a causal sense within and so it is सकर्मक whereas विरम etc. are अकर्मक ।

मित—। उपादिति। ननु 'व्याङ्पर्युपेभ्यो रमः' इत्येवास्तु सूत्रम्। लाघवादिति. ततः फलमत्र योगविभागेनेति चेत्। नैवम्। योगविभागस्येष्टसिद्ध्यर्थत्वात्। तथाहि—'उप—रम्' इत्यन्तर्भावितण्यर्थः: वि-आ-परि-रम् इति तु न तथा। किञ्चायं (उप-रम्) सकर्मकश्च। ततश्चार्हति योगान्तरम्। अत आह—यञ्चदत्तमिति।

२७५१। विभाषाऽकर्मकात् ॥ १।३।८५ ॥

दी—। उपाद्रमेरकर्मकात् परस्मैपदं वा। उपरमति—उपरमते वा। निवर्त्तते इत्यर्थः।

The root रम when अकर्मक takes परस्मैपद optionally (and means 'to cease' 'to expire' etc ).

मित—। विभाषेति। विशदम्।

२७५२। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ १।३।८६ ॥

दी—। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात्। 'णिचश्च' (२५६४) इत्यस्यापवादः। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। अध्यापयति। प्रावयति। प्रापयतीत्यर्थः। द्रावयति, विलापयतीत्यर्थः। स्रावयति, स्यन्दयतीत्यर्थः।

These roots, when ण्यन्त i.e. when these take णिच् after them, will have परस्मै. terminations added to them. This supersedes 'णिचश्च' ( 2564 ). बोधयति पद्मम् i.e ( the sun ) causes the lotus to blossom. In the non-causal form it was बुध्यते or बोधते पद्मम्. The root बुध अवगमने ( भ्वादि or दिवादि ); but here it means विकसन. Bhattoji selects पद्म an indiscriminating object as the accusative case observing that a discriminating one falls under the purview of the rule 'अणावकर्मकात्—'(2754) the application whereof is restricted to चित्तवत्कर्तृकs or conscienciate (?) beings. Hence it is that he says योधयति काष्ठानि—makes the pieces of wood to fight ( as it were ) ! And not योधयति सैनिकम् because सैनिक, a conscienciate being, being the subj. in the non-casual stage will not satisfy the case herein. Similarly नाशयति दुःखम् etc.

मित—। बुधेति। बुध, युध, नश, जन, इङ्, प्रु, द्रु, स्रु इत्यष्टौ धातवः। 'णिचश्च' इत्यस्यापवाद इति—तेन कर्तृगेऽपि फले परस्मैपदमित्यर्थः। बुध्यते बोधतीति दैवादिकभौवादिकयोरवगमनार्थकत्वेऽपि क्वचिद्विकसनार्थकत्वमपि धातूनामनेकार्थत्वादिति मत्वाह—बोधयति पद्ममिति। बुध्यते बोधति वा पद्मम् इत्यणौ स्थितिः। अत्र पद्मम् इति अचित्तवत्कर्ता। तेन 'अणावकर्मकात्—' ( २७५४ ) इत्यस्य नावकाशः। तस्य चित्तवत्कर्तृकेष्वेव प्रवृत्तेरिति भावः। अतएव 'बोधयति बटुम्' इति नोक्तम्। योधयति काष्ठानीति। युध्यन्ते काष्ठानि स्वयमेव। तानि योधयति ( विष्णुमित्रः )। अत्रापि प्रागुक्तहेतुना योधयति। रामो रावणमिति नोक्तम्। एवमन्यत्र। नश्यति दुःखम्। जायते सुखम्। अधीते ( छात्रः )। प्रवति ( प्लवङ्गमः ), द्रवति ( घृतम् )। स्रवति पानीयम् इति नाशयतीत्यादेरण्यन्तावस्थायां क्रमेण रूपाणि।

२७५३ । निगरणचलनार्थेभ्यश्च ॥१।३।८७॥

दी— । निगारयति । आशयति । भोजयति । चलयति । कम्पयति । 'अदेः प्रतिषेधः' ( वार्तिक )—आदयते देवदत्तेन । 'गतिबुद्धि—' ( ५४० ) इति कर्मत्वम्, 'आदिखाद्योर्न' ( वार्तिक ) इति प्रतिषिद्धम् । 'निगरणचलन—' ( २७५६ ) इति सूत्रेण प्राप्तस्यैवायं निषेधः । शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । अदयत्यन्नं वटुना ।

परस्मैपद takes place after roots denoting 'eating' and 'agitation' ( even if the result benefits the agent ). But it has to be stated that परस्मैपद is not allowed to अद् 'to eat' ( varttika )— e.g. आदयते देवदत्तेन—causes Devadatta to eat. In Devadatta we have the instrumental, as the accusative is disallowed due to the prohibition 'आदि—' ( varttika ). This prohibition ( of the परस्मै. by the varttika 'अदेः प्रतिषेधः' ) holds good with reference to the rule 'निगरण—' ( २७५३ ) by the maxim 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' so that here we have परस्मैपद also in the sense of 'अकर्त्रभिप्राय' by the rule 'शेषात् कर्त्तरि—' ( २१५८ ) । Thus 'आदयति—' causes the child to eat rice.

मित— । निगरणेति । निगरणं भक्षणम् । चलनं कम्पनम् । तदाह—आशयतीति, कम्पयतीति च । अदेरिति वार्तिकम् । प्रतिषेध इति—परस्मैपदस्येति शेषः । ननु देवदत्तेनेत्यत्र कथं तृतीया । आदयतेः प्रत्यवसानार्थत्वात् 'गतिबुद्धिप्रत्यवसानार्थ—' इति कर्मत्वस्य प्राप्तेर्द्वितीयाया एव औचित्यादिति चेदत्राह—'आदिखाद्योः—' इति एतेन वार्तिकेन द्वितीयायाः प्रतिषेध इत्यर्थः । अयं निषेध इति—'अदेः प्रतिषेधः'

परस्मैपदनिषेधः परास्यते। अयं भावः—'अनन्तरस्य विधिर्वा—' इति न्यायात् 'अदेः प्रतिषेधः' इति वार्तिकम् 'निगरण—' इत्यनन्तरस्यैव परस्मैपदस्य बाधकम् न त्वतिदूरवर्तिनः 'शेषात् कर्तरि—' इत्यस्यापि। एवञ्च तेन (शेषादित्यनेन) अदा— कर्त्रगे फले परस्मैपदमपि प्राप्तमिति दर्शयति—अदयत्यन्नमिति।

२७५४। अणावकर्मकाच्चित्तवत् कर्तृकात् ॥१।३।८८॥

टी—। ण्यन्तात् परस्मैपदं स्यात्। शेते कृष्णस्तं गोपी शाययति।

परस्मैपद takes place in the causal stage after a root that is अकर्मक as also has a consciencialte (?) being (चित्तवत्) for its subject—in the non—causal stage. Thus शेते कृष्णः—etc. Why अकर्मकात्? कटं कारयते। Why चित्तवत्कर्तृकात्? Witness —सूर्यो जलं शोषयते।

मित—। अणाविति। अणौ+अकर्मकात्+चित्तवत् इतिच्छेदः। अणौ अण्यन्तावस्थायां यो धातुरकर्मकचित्तवत्कर्तृकः 'प्रयावत्कर्तृकश्च' तस्माण्ण्यन्तावस्थायां परस्मैपदं भवतीति सूत्रार्थः—। कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदापवादः परस्मैपदं विधीयते। उदाहरति—शेते कृष्ण इति। अत्र कृष्णस्य चित्तवत्कर्तृकत्वम्। अकर्मकात् किम्? कटं करोति। तं प्रयुङ्क्ते— कटं कारयते। चित्तवत्—किम्? जलं शुष्यति। सूर्यो जलं शोषयते। सूत्रमिदं हेतुमण्णिचो विधिः।

२७५५। न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥१।३।८९॥

टी—। एभ्यो ण्यन्तेभ्यः परस्मैपदं न। पिबतिर्निगरणार्थः।

इतरे चित्तवत्कर्तृकाश्चाकर्मकाः। रुतिश्चलनार्थोऽपि। तेन सूत्र-द्वयेन प्राप्तिः। पाययते। दमयते। आयामयते। आयास-यते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते। 'धेट उपसङ्ख्यानम्' (वार्तिक) 'धापयते शिशुमेकं समीचीं'। अकर्त्रभिप्राये 'शेषात्—' (२१५८) इति परस्मैपदं स्यादेव। वत्सान् पाययति पयः। 'दमयन्ती कमनीयतामदम्'। भिक्षां वासयति। 'वा क्यषः' (२६६८)= लोहितायति—लोहि-तायते। 'द्युद्भ्यो लुङि' (२३४५)—अद्युतत्—अद्योतिष्ट। 'वृद्भ्यः स्यसनोः' (२३४७)—वर्त्स्यति—वर्तिष्यते। विवृत्-सति— विवर्तिषते। 'लुटि च क्लृपः' (२३५१) कल्प्ता। कल्प्तासि। कल्प्तासे। कल्पितासे। कल्प्स्यति, कल्पिष्यते—कल्प्स्यते। चिक्लृप्सति—चिकल्पिषते—चिक्लृप्सते।

इति तिङन्त-परस्मैपद-प्रकरणम्।

परस्मैपद is forbidden to these roots—viz, पा (to drink), दमि, आ-यम्, आ-यस्, परि-मुह, रुचि, नृति, वद and वस्—ending in णिच्। पा denotes निगरण (भक्षण) and all excepting नृति which implies चलन (cp.—नृती गात्रविक्षेपे) are चित्तवत्कर्तृकs and अकर्मकs. Thus this prohibition is concerned with the two rules (enjoining परस्मैपद) viz. 'निगरण—' (2753) and 'अणावकर्मकात्—' (2754). पाययते—'पिबत्यसौ पाययते च सिन्धूः' (रघु)—here there is no scope of पुक् but युक् comes in by the special rule 'शाच्छासाह्वाव्यावेपां युक्' (२५८४). दमयते—ह्रस्व of उपधा due to मित्त्व by 'जनीजॄष्क्नसुरञ्जोऽ-

मनाय' ( गणसूत्र ). आयामयते—उपधावृद्धि due to the prohibition 'यमोऽपरिवेषणे' ( गणसूत्र ). वासयते—this वस is भ्वादि and not अदादि, cp.—the परिभाषा 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव—'. 'धेट—' ( varttika ). 'धापयते—this a portion of a मन्त्र, meaning is easy. अकर्त्रभिप्राये etc—i.e. according to the maxim—'अनन्तरस्य—,' the rule 'न पादम्—' ( 2755 ) and the varttika 'धेटः—' forbids the परस्मैपद enjoined by 'णिचश्च—' and 'अणा-वकर्मकात्—' only, and not what is ordained by 'शेषात्—' also. The rule 'शेषात्—' enjoins परस्मैपद in अकर्त्रभिप्राय. Thus वत्सान् etc, are correct in the sense of अकर्त्रभिप्राय। 'दमयन्ती—' a portion of औत्कर्ष meaning—overpowering or subduing the pride of charmingness—दम + शतृ + ङीप्, १मा १व। भिक्षाम्—etc (easy). 'वा कषः' ( 2669 ) etc are explained before.

मित—। नेति। पा, दमि, आङ्-यम, आङ्-यस, परिमुह, रुचि, नृति, वद, वस् इत्येषां नवानां समाहारद्वन्द्वात् पञ्चम्येकवचनम्। तदाह—एभ्य इति। 'न धयुध—' ( २०५२ ) इत्यतो णेरिति वर्तते। तदाह—ण्यन्तेभ्य इति। 'णिचश्च—' ( २०५३ ), 'अणावकर्मकात्—' ( २७५५ ) इति सूत्रद्वयविषय-परस्मैपदप्राप्तिरनेन बाध्यते। तथा च काशिका—"पूर्वेण योगद्वयेन कर्त्रभिप्राय क्रियाफलविवक्षायाम् आत्मनेपदापवादः परस्मैपदं विहितं, तस्य प्रतिषेधो-ऽयमुच्यते।" अतस्तां प्राप्तिमेव प्रतिपादयति—पिबतिर्निगरणार्थं इत्यादिना। पाययते इति—'शाच्छासाह्वाव्यावेपां युक्' ( २५८५ ) इति पुग-पवादो युक्। 'पिबत्यसौ पाययते च सिन्धू'रिति रघुवंशे। दमयते—'जनी-जृष्क्नसुरञ्जोऽमन्ताश्च' ( गण— ) इत्यमन्तत्वेन मित्त्वात्'मितां ह्रस्वः' ( २५६८ ) इति ह्रस्वः। आयामयते—'यमोऽपरिवेषणे' ( गण—) इति मित्त्वाभावान्न ह्रस्वः। वादयते—'नामसमेतं कृतसङ्केतं वादयते मृदुवेणुम्' ( जयदेव )। वास-

यते—'लुग्विकरणालुग्विकरणयोः—' इति भौवादिकस्यैव निवासार्थकस्य वसेर्ग्रहणं न तु आच्छादनार्थकस्य आदादिकस्येति ज्ञेयम्। 'वेटः—' इति वार्त्तिकम्। श्रापयेते इति मत्वमिदम्। 'आदेच:—' इत्यात्त्वेकृते 'अर्तिह्री—' इति पुकि रूपम्। 'समीची' इति कर्तृपदम्। अकर्त्रभिप्राये इति—अनन्तरस्येतिन्यायेन, णिचश्चेत्यादिसूत्रद्वयस्यैव प्रतिषिद्धत्वादिति भावः। दमयन्तीति—नैषधीयश्लोकांशोऽयम्; कमनीयताधाधारत्वस्य मदं गर्वं दमयन्ती निवारयन्तीति तदर्थः। 'वा क्यषः' (२६६९) इत्यादि व्याख्यातं प्राक्।

इति मितभाषिण्यां तिङन्तपरस्मैपद-प्रकरणम्।

अथ

# भावकर्म-तिङ्-प्रकरणम्

दी—। अथ भावकर्मणोर्लडादयः। 'भावकर्मणोः' (२६७८) इति तङ्—।

२७५६। सार्वधातुके यक् ॥३।१।६७॥

दी—। धातोर्यक्प्रत्ययः स्याद् भावकर्मवाचिनि सार्वधातुके परे। भावो भावना उत्पादना क्रिया। सा च धातुत्वेन सकलधातुवाच्या भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमपुरुषः। तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किन्त्वेकवचनमेव। तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात्मनभिहिते कर्तरि तृतीया। त्वया मया अन्यैश्च भूयते बभूवे।

The affix यक् is employed after a root when a सार्वधातुक expressing भाव or कर्म follows. The word भाव [ भावि (भू+णिच्) +अच् ] implies भावना—'the state of being caused' or उत्पादना—'the state of being engendered' i.e. क्रिया—'the state of being done or performed'; cp. देवदत्तः पचति is equally expressed by कृ also देवदत्तः पाकं करोति, similarly देवदत्तेन पच्यते

—देवदत्तेन पाकः क्रियते etc. And thus this भावना or क्रिया, which is expressed as a root by all roots, is only expressed again (reproduced) by a लकार—लट्, लिट्, etc—signifying the sense of भाव; cp—किं कृतम्?—भुक्तम्। किं कृतवान्?—पक्वान्।—where the sense of one root is expressed by the other (and not by कृत् or तिङ् affixes which view is held by the मीमांसकs). Thus Bhattoji here refutes the standard opinion—'भावना तिङ्प्रत्ययवाच्या'—of the मीमांसा school. Hence it it said elsewhere also—

"तस्मात् करोतिर्धातोः स्याद्व्याख्यानं न लपो तिङा।
पक्वान् कृतवान् पाकं किं कृतं पक्वमित्यपि॥" वैयाकरणभूषणसार—१।८।

युष्मदस्मद्भ्याम्—etc. In the भाववाच्य we have verbs of प्रथमपुरुष only for here they (verbs) have no समानाधिकरणत्व—similarity in basis or in point of पुरुष—with अस्मद् and युष्मद् both of which (समानाधिकरणत्व) fall in the purview of कर्तृवाच्य and कर्मवाच्य; thus—

| | |
|---|---|
| युष्मद् | त्वं करोषि—कर्तृवाच्ये |
| | त्वं क्रियसे—कर्मवाच्य |
| | त्वया क्रियते—भाववाच्य |

Similarly अहं करोमि—अहं क्रिये—मया क्रियते etc. As the भाव or भावना expressed by a तिङ्प्रत्यय is other than सत्त्व (or existence—hence matter or substance) here (in the भाववाच्य) there is no scope of dual or plural due to the want of conception of duality or plurality; for a non-material object

cannot have distinct numbers but it is taken as one whole. This is inferred from भाष्य—'कृदभिहितो भावो द्रव्यवत् प्रकाशते' ; सत्त्व signifies द्रव्य matter. Thus here we have the sing. number only. This एकवचन being general (उत्सर्ग) or complete by itself it therefore requires no other numbers (द्वि. or बहु) ; the subject will have तृतीया here by "अनभिहिते" (or not being voiced), for the subject is not expressed by the verb of the भाववाच्य etc—e. g. त्वया मया—etc. बभूवे—no यक् because लिट् is आर्धधातुक and does not come within the purview of the rule "सार्वधातुके यक्" ।

मित—। एवं पदव्यवस्थां विधाय भावकर्मप्रकरणं दर्शयिष्यन्नाह—अथेति। तत्र भावे तङ् स्यादिति स्मारयति—भावकर्मणोरिति। सार्वधातुकेयगिति। 'धातोरेकाचः—' (३।१।२२) इत्यतो धातोरिति। 'चिण् भावकर्मणोः' (३।१।६६) इत्यतो भावकर्मणोरिति चानुवर्तते। तदाह—धातोरित्यादि। अथ भावपदार्थमाह—भावो भावनेति। भूधातोर्ण्यन्ताद् 'एरजि'ति अच् प्रत्यये णिलोपे भावशब्दः। भावनाशब्दश्च 'ण्यासश्रन्थो युच्' इति युचि तस्य अनादेशे टापि च सिध्यति। अतएवानयोस्तुल्यार्थत्वम्। किञ्च भूःसत्तायामित्युक्तिः। सा चानुत्पन्नस्य न घटते। ततश्च भवतेरुत्पत्तिरर्थः। भावयतेश्च उत्पादना अर्थ इति फलितम्। अत आह—उत्पादनेति। सा चाक्रियमाणस्य न सम्भवति। तदाह—क्रियेति। एतेन भावयतेर्ण्यन्तस्य करोतिना शब्देन तुल्योऽर्थ इति दर्शितम्। उक्तञ्चान्यत्र 'व्यापारो भावना सैवोत्पादना सैव च क्रिये'ति। सा चेति—क्रिया परामृश्यते। क्रिया नाम धात्वर्थः। यथा पचधातोः पाकोऽर्थः। स चाधिश्रयणाद्य—फुत्कारत्वाधःसन्तापना-वाश्रयणत्वादिसाध्यो व्यापारविशेषः। न च साध्यत्वेन मानाभावः। पचति, पाकः, करोति, कृतिरित्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षाविरहस्यैव मानत्वात्। उक्तञ्च वाक्यपदीये—

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति ।

स्पष्टं चैतत् सर्वम् वैयाकरणभूषणसारे । तत्र सिद्धा—यथा पाकः । असिद्धा ( साध्या )—यथा पचति । उक्तञ्च तत्रैव—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्या सघञादिनिबन्धनः ॥ इति ।

सा च क्रिया सिद्धा साध्या वा धातुनैव वाच्या न तु तिङ्प्रत्ययवाच्य इति मत्वाह—धातुत्वेन सकलधातुवाच्येति—

एतेन 'भावना तिङ्प्रत्ययवाच्या' इति मीमांसकमतं प्रत्युक्तं वेदितव्यम् । तथाच—पक्तव्यं भक्तव्यमित्यादौ तिङ्प्रत्ययाभावेऽपि भावनायाः बोधः सम्पद्यते भवति च कारकापेक्षा । करोतिना समानाधिकरण्यात् । तथाहि—किं कर्तव्यम् । पक्तव्यम् । किं कृतवान् । भुक्तवान् इति । किञ्च ( भावनाया तिङ्वाच्यत्वे ) भावयति घटम् इतिवत् भवति घटमित्यत्रापि द्वितीया स्यात् । व्यापारस्य एकत्र णिचा अन्यत्र तिङा अभिहितत्वात् । अपरंच—धातूनां सकर्मकाकर्मकत्वविभागो नोपपद्येत । फल-व्यापारयोः सामानाधिकरण्ये अकर्मकत्वस्य लाभः । तयोर्वैयधिकरण्ये तु सकर्मकत्वस्य इति स्थितिः ।

तदुक्तम्—'फलव्यापारयोरेकनिष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥' इति ।

तदेतन्मतं व्युदस्य भावना धातुवाच्येत्येवाभ्युपगन्तव्यमिति प्रौढमनोरमायां प्रतिपादितम् । स्पष्टञ्च क्रियाया धातुवाच्यत्वं भट्टौ अपि—

'विभज्यसेनां परमार्थकर्मा सेनापतींश्चापि पुरन्दरोऽथ । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥" ननु क्रियाया धातुवाच्यत्वे 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे भावे लकारविधिर्व्यर्थः । धातुनैव तदर्थस्य लाभादित्याशङ्क्य आह—'भावार्थकलकारेण अनूद्यते' इति—पुनरुक्ता इत्यर्थः ।

युष्मदस्मद्भ्यामिति। कर्तृकर्माभिधायिन एव लकारस्य ताभ्यां सामानाधिकरण्यम्। क्रमेण यथा त्वं खादसि—खाद्यसे वा त्वमसीति। अहं खादामि—खाद्ये वा त्वमसीति च। भावाभिधायिनस्तु लकारस्य तन्न घटते। ततश्च मध्यमोत्तमयोरविषयत्वात् 'शेषे प्रथमः' इति प्रथमपुरुष एवेत्यभिप्रायः। तिङ्वाच्यभावनाया इति—असत्त्वरूपत्वेनेति। 'क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं' साध्यत्वमित्यर्थः। ततश्च द्रव्यभिन्नत्वमित्यर्थ इति बोध्यम्। सिद्धत्वस्य द्रव्यरूपत्वात् तथाच भाष्यम्—

'कृदभिहितो भावो द्रव्यवत् प्रकाशते।'—इति द्रव्यधर्मान् लिङ्गसंख्याकारकादीन् गृह्णातीत्यर्थः। अतएव पाकं पाकावित्यादौ यथायथं द्वितीयादयः। असत्त्वभूतस्य तु न तथात्वमिति 'संख्यावगमाभावान्न द्विबहुवचने प्राप्नुतः' अत आह—किन्त्वेक वचनमेवेति। प्रायोवादोऽयम्। भाष्ये—'उष्ट्रासिका आस्यन्ते', 'हतशायिकाः शय्यन्ते' इत्यत्र बहुवचनस्य स्वीकारात्। तस्यौत्सर्गिकत्वेनेति। "द्व्येकयोर्द्विवचनैक-वचने', 'बहुषु बहुवचनम्' इति सूत्रन्यासं भङ्क्त्वा एकवचनद्विबहुवचनेषु द्विबहुवचने इति सूत्रन्यासः कर्त्तव्यः। तत्र द्वित्वबहुत्वयोर्द्विबहुवचननियमे सति तयोरविषये एकवचनमिति लभ्यते" इति भाष्ये स्पष्टम्। 'एवञ्च एकवचनस्य एकत्वमुत्सृज्य द्विबहुवचनान्यविषये विहितत्वेन औत्सर्गिकतया एकत्वसंख्यानपेक्षत्वात् भावलकारस्य असत्त्वरूपभाववाचित्वेऽपि एकवचनमेवेत्याहुः। अनभिहिते इति। भावलकारे कर्त्तुस्तिङ्वाच्यत्वं नास्तीति प्रागुक्तम्। अतस्त्वनभिहितमिति द्रष्टव्यम्। अनुक्तत्वाच्च तृतीया, न प्रथमेति दर्शयति—त्वया मयेत्यादिना। बभूवे—लिट आर्द्धधातुकत्वादत्र यगन्।

२७५७। स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च ॥६।४।६२॥

टी—। उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्य्यं वा स्यात् स्यादिषु परेषु भावकर्मणोर्गम्य-

मानयोः, स्यादीनामिडागमश्च। अयमिट्—चिण्वद्भाव-सन्नियोगशिष्टत्वात्तदभावे न। इहार्धधातुके इत्यधिकृतं सीयुटो विशेषणं नेतरेषामव्यभिचारात्। चिण्वद्भावाद् वृद्धिः। * नित्यश्चायं वल्निमित्तो विघाती *। भाविता—भविता। भाविष्यते—भविष्यते। भूयताम्। अभूयत। भूयेत। भाविषीष्ट—भविषीष्ट।

When भाव and कर्म are implied i. e. in भाववाच्य and कर्मवाच्य the same basal operation as is recognised in the case of चिण् will take effect optionally in connection with roots ending in अच् which are directly pronounced ( as भू, इ, उ etc at the outset of the treatise ) and three other roots हन्, ग्रह्, and दृश्, when स्य ( लृङ्+लृट् ), सिच् ( लुङ् ), सीयुट् ( आशीः ) and तासि ( लुट् ) follow—and the aug. इट् is prefixed to स्य, सिच्, सीयुट् and तासि। This इट् being instructed ( शिष्ट ) i. e. directed to take place in connection with the application of चिण्वद्भाव ( the state of being चिण्वत् ), will not appear where चिण्वद्भाव is wanting. Here the term 'आर्धधातुके' (carried down from 'आर्धधातुके' 6.4.46 ) qualifies सीयुट् only and not स्य, सिच् and तासि, for the former may be सार्वधातुक or आर्धधातुक ; cp. लिङः सीयुट् ( 2255 ) whereas the latter ones ( स्य etc. ) are always आर्धधातुक and not otherwise ( अव्यभिचारात् ). Here in स्य etc. there will appear वृद्धि ( with

---

* तारकाचिह्नद्वयमध्यस्थोंऽशस्तत्त्वबोधिन्यां न दृश्यते। वचनमिदं तद् वार्तिकत्वं इति मितभाषिण्यां दर्शयिष्यते।

ref. to such roots ) due to चिण्वद्भाव as चिण् being णित् necessitates the same by 'अचो ञ्णिति' ( 254 ). नित्यश्चायम्—This is the last foot of the श्लोकवार्त्तिक which see in the मित— below। The construction is this—अयम् च ( i.e. चिण्वदिट् is ) नित्यः ( persistent ) वलनिमित्तः ( तु ) i.e. वलादिलक्षण इट् ( cp. 'आर्धधातुकस्येड् वलादेः' ) is विघाती [ विघातः ( वि—हन् + भावेघञ् ) विनाशः i.e. disappearance विद्यते अस्य इति विघात + इनि—विघाती ) hence provisional or अनित्य। The idea is—चिण्वदिट् must apply whether the वलादीट् ( due to सेट्कत्व or अनिट्कत्व of the root or affix ) applies or not, whereas the वलनिमित्त इट् ( वलादीट् ) is not so as it is forbidden by the former which thus is नित्य and the latter अनित्य। Thus भाविता—भविता in तासि. The former gets वृद्धि due to चिण्वद्भाव and also चिण्वदिट्, whereas the latter gets गुण and वलादि इट्— ; similarly—भाविष्यते—भविष्यते and अभाविष्यत—अभविष्यत ( लृट् and लृङ् ) and भाविषीष्ट—भविषीष्ट ( सीयुट् )।

मित—। स्यसिजिति। स्य, सिच्, सीयुट्, तासि इत्येते चत्वारः प्रत्ययाः। तत्र 'स्य' इत्यनेन लृङ्लृटोर्ग्रहणम् 'स्यतासी लृलुटो'रित्यत्र दर्शनात्। अत्र 'स्यसिच्—षु' इत्युपमेयम्। 'चिण्' इत्युपमानम्। तेनोपमेयस्य सप्तम्यन्तत्वात् उपमानस्यापि तदन्तत्वं प्राप्तम् ततश्च चिणवदिति 'तत्र तस्येव' ( १७३९ ) इति सप्तम्यन्ताद्वतिः। चिणि इव चिण्वत्। भावकर्मणोरिति विषयसप्तमीद्विवचनम्। अजझनग्रहदृशामिति। द्वन्द्वाद्बहुवचनम्, क्तेऽपि हन्ते उपदेशे इति 'अच्' इत्यस्य विशेषणम् नेतरेषाम् असम्भवादाह—उपदेशे योऽजिति। ननु तथापि उपदेशे अजन्तानामित्येवोच्यतामिति चेत्। नैवम्। तथाहि उक्ते सति ग्रहस्य न स्यात्। तस्य उपदेशाभावात्। उपदेशस्तावत् साक्षादुच्चारणम्। न च ग्रहस्य तदस्ति। अतः सूक्तम्—उपदेशे योऽजिति। अङ्गकार्य्यमिति। 'अङ्गस्य' इत्यासप्तमाध्यायपरि-

समासे रधिकारादिति भावः। स्यादीनामिडागमश्चेति। अत्र इडनुरोधेन समन्वयनमपि स्यसिजित्यादि षष्ठ्या विपरिणम्य व्याख्येयमित्यभिप्रायः, न च स्यादिषु परेषु अङ्गस्येडित्येवो-च्यतामिति वाच्यम्। 'भाष्ये' आर्द्धधातुकस्येतियोगं विभज्य यावान्विट् स आर्द्धधातुक-स्यैवेति परिभाषणात् लब्धानुरोधाच्चे'ति शब्देन्दुशेखरे स्पष्टम्। अयमिडिति। अत्र यो निर्दिष्ट स इत्यर्थः। चिण्वद्भावसन्नियोगशिष्ट इति। चिण्वद्भावस्यादत्र प्राधान्यं नोपदिश्यते। इट् तु चिण्कार्ये सत्येव प्रवर्तते नान्यथेति चकारबलादनुमीयते। अतश्चायं चिण्वद्भावसन्नियोगशिष्ट इत्यभिधीयते। भिन्नश्चायमतो वलादिलक्षणादिटः। तदभावे इति। चिण्वद्भावाभावे नायमिट् प्राप्नोतीत्यर्थः। आर्धधातुके इति। 'आर्धधातुके' (६।४।४६) इत्यतस्तदनुवर्तनादिति भावः। सीयुट इति। सीयुडिति हि सार्वधातुकार्द्धधातुकोभयसामान्यः प्रत्ययः। 'लिङः सीयुट्' (२२२५) इत्यत्र दर्शनात्। तत्रार्द्धधातुकत्वव्यभिचारसम्भिन्नं वोपपद्यते नेतरेषु। तेषां सर्वदेव आर्द्धधातुकत्वनियमात् चिण्वद्भावादिति। चिणस्तावच्चित्त्वेन 'अचो ञ्णिति' (२५४) इति वृद्धिः प्राप्ता। तच्चैवातिदेशबलादिहापि प्राप्नोति। नित्यश्चायमिति। श्लोक-वार्तिकशेषांशोऽयम्। तथाहि—

> 'चिण्वद्वृद्धियुक् च हन्तेश्च घत्वं
>
> 　　दीर्घश्चोक्तो यो मितां वा चिणीति।
>
> इट् चासिद्धस्तेन मे लुप्यते णि-
>
> 　　र्नित्यश्चायं वल्निमित्तो विघाती॥ इति।

तत्र चिणि वृद्धि यथा—'अघारि पर्श्वेषु तदङ्ग्रिणा घृणा' (श्रीहर्षः)। चिण्वद्-भावे—भाविलेत्यादि। अत्र अचो ञ्णितीति वृद्धिः युक्—आदायि। 'आतो युक् चिण्कृतो'रिति युक्। चिण्वद्भावे—दायितेत्यादि। हन्तेर्घत्वं—अघानि। चिण्वद्भावे —'घानिष्यते तेन महान् विपक्षः स्थायिष्यते येन रणे पुरस्तात्' (भट्टिः)। 'हो हन्ते—' इति कुत्वेन घः। दीर्घः—शामिता—शमिता 'चिण्णमुलो—' इति दीर्घविकल्पः। इट् चासिद्ध इति अत्रोपदिष्ट' इडसिद्धः। कुतः?—आभीयत्वात्। ततः किम?

तत्र 'अनिटी'ति निषेधाभावात् णिलोपः इति भावः। नित्यत्वादयमिति—अयमिति चणोपदिष्टचिण्वदिट्। स च नित्यः। कृताकृतप्रसङ्गित्वात्। कृताकृतप्रसङ्गित्वञ्चात्र प्राप्तेऽप्राप्तेऽपि वा वलादीटि प्रवृत्तत्वम्। तथाच भाविष्यते इत्यादौ भू स्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति। तत्र चिण्वदिट् नित्यः। वलादिलक्षणस्त्वनित्यः—'यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्' इति न्यायात्। विघातः विनाशः विपूर्वाद्धन्तेर्भावे घञ्। सोऽस्यास्तीति इनिः। विघातीत्यनेन 'आर्धधातुकस्येड् वलादे'रिति वलादिलक्षण इट् परामृश्यते। भावितेति। चिण्वद्भावाद् वृद्धीटौ। भवितेति—अत्र गुणो वलादीट् च। एवमन्यत्र।

२७५८। चिण् भावकर्मणोः ॥३।१।६६॥

टी—। च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत—अभविष्यत। तिङोक्तत्वात् कर्मणि न द्वितीया। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभाविषाताम् अन्वभविषाताम्। णिलोपः। भाव्यते। भावयाञ्चक्रे। भावयांबभूवे। भावयामासे। इह तशब्दस्य एशि, इट एत्त्वे च कृते 'ह एति' (२२५०) इति हत्वं न। तासि साहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एति हत्वप्रवृत्तेरित्याहुः। भाविता। चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः। पक्षे—भावयिता। भाविष्यते—भावयिष्यते। भाव्यताम्। अभाव्यत। भाव्येत। भाविषीष्ट—भावयिषीष्ट। अभावि—अभाविषाताम्—अभावयिषाताम्। बुभूष्यते। बुभूषाञ्चक्रे। बुभूषिता। बुभूषिष्यते। बोभूय्यते। यङ्लुकान्तात्—बोभूयते।

बोभवाञ्चक्रे। बोभाविता—बोभविता। 'अकृत्सार्व—' (२२९८) इति दीर्घः। स्तूयते विष्णुः। तुष्टुवे। स्ताविता—(स्तोता)। स्ताविष्यते—(स्तोष्यते)। अस्तावि। अस्ताविषाताम्—अस्तोषाताम्। 'गुणोर्ति—(२३८०) इति गुणः। अर्य्यते। स्मर्य्यते। सस्मार। परत्वान्नित्यत्वाच्च गुणे रपरे कृते अजन्तत्वा—भावेऽप्युपदेशग्रहणात् चिण्वदिट्। आरिता—अर्ता। स्मारिता—स्मर्ता। 'गुणोऽर्ति—' (२३८०) इति नित्यग्रहणानुवृत्तेरुक्तत्वान्नेह गुणः। संस्क्रियते। 'अनिदिताम—' (४१५) इति नलोपः। स्रस्यते। इदितान्तु—नन्द्यते। सम्प्रसारणम्—इज्यते। 'अयङ्यि क्ङिति' (२६४८)—शय्यते।

चिण् secures the room of च्लि when in the passive voice (भाव and कर्म) the word त follows. Thus अभावि (अट्—भू+च्लि+त=अ भाव् इ त=अभावि the word त being dropped by 'चिणो लुक्' (2329). वृद्धि by 'अचो ञ्णिति' (254). अभाविष्यत—अभविष्यत by 'स्यसिच्—' (2757). The root भू becomes transitive in con. with उपसर्गs. Thus अनुभूयते—etc. Here the कर्म—आनन्द being expressed by the तिङ् affix कर्म takes प्रथमा and not द्वितीया, and the कर्त्ता चैत्रेण not being so expressed takes तृतीया। त्वमनुभूयसे—the verb is 2nd per. as it expresses त्वम्. अन्वभाविषाताम्—अन्वभविषाताम्—instance of सिच् under 'स्यसिच्—' (2757). णिलोप—i. e in भाव्यते—भू+णिच्+कर्मणि यक् लट् ते. Here णि elides by 'णेरनिटि' (2313). भावयाञ्चक्रे—by 'कास्प्रत्ययात्—' (2806) because भावि (भू+णिच्) is प्रत्ययान्त। भावया-

अभूवि—by 'आम्प्रत्ययवत्—' (2240). Here in भावयामासे—भावि+आम्—अस्+लिट् त (or इट्—1st per.), when त is replaced by एश् ('लिटस्तझयोरेशिरेच्') or इट् makes room for ए (by 'टित आत्मनेपदानां—'), ह by 'ह एति' (2250) will not come in and replace the स् of अस्. For Grammarians assert that as अस् is pronounced in connection with तासि which is an affix so if the स् of अस् is to be replaced at all by ह due to the following of एत् or ए then it will be replaced in the cases like व्यतिहे etc. where अस् follows व्यति (वि—अति) and thus looks like an affix bearing thereby similarity with तासि; भाविता—भावि—इट् (चिण्वदिट्) तासि—Here णि elides by 'णेरनिटि' (2313) as चिण्वदिट् is असिद्ध or invalid due to its आभीयत्व or falling in the purview of 'असिद्धवदत्राभात्' (6. 4. 22). Here you cannot question the appearance of चिण्वदिट् on the ground that 'स्यसिच्सीयुट्—' (2753) cannot apply here as अच् only are to be found in the उपदेश or माहेश्वर sutras and not अजन्त roots also. True, and it is therefore that Bhattoji explained as 'उपदेशे योऽच्—' etc and not 'उपदेशेऽजन्तानाम्—' etc. Thus चिण्वदिट् also has its access here. पक्षे i.e alternatively we have भावयिता—where we have वलादि इट् cp—'आर्द्धधातुकस्येट्—' and consequently णिलोप does not take place. Thus by गुण we have भावयिता। Similarly भाविष्यते—भावयिष्यते etc. बुभूष्यते—(भू+सन्+यक् लट् ते)—Here we have सन्नन्ताद् यक्. अ of स elides by 'अतो लोपः' (2308) and षत्व by 'इण्कोः' etc. बोभूय्यते—Here we have यङन्ताद् यक् 'अ of यङ्

elides as before by 'अतो लोपः'। यङ्लुगन्तात् चोक्षूयते—because here यङ् elides by लुक् and thus one यकार (यक्) only remains. इति दीर्घः—this refers to स्तूयते. स्तोता—when चिण्वदिट् is wanting there is no वलादि इट् because the root is अनिट्. Similarly elsewhere. अर्यते—ऋ+कर्मणि यक्। गुणरपरत्व etc take place. सस्मरे—कर्मणि लिट्। How to proceed in आरिता—ऋ+णिच्+तासि? The difficulty—that गुण, by 'गुणोऽर्ति—' (2380—7. 4. 29) being subsequent (पर) to चिण्वदिट् (by 'स्यसिच्—' 2757—6. 4. 62) and also नित्य in comparison with the same, takes place first, and that this taking place of गुण necessitates रपरत्व which coming in there is no अजन्तत्व or ending in अच्—is solved on the score of our explanation 'उपदेशे योऽच्—' etc. Thus चिण्वदिट् does appear giving आरिता—वृद्धि and णिलोप as before. But वलादिलक्षण इट् ('आर्धधातुकस्येट्—' 2184—7. 2. 35) is indeed barred by this गुण consequently we have अर्ता. Similarly आरिता—अर्ता। As it has been explained that the term नित्य from the rule 'नित्यं छन्दसि' is to be carried down to 'गुणोऽर्ति—' (2380) so here in संस्क्रियते, there is no गुण but we have रिङ् here by 'रिङ् शयग्लिङ्क्षु' (2367) सुट् coming in by 'सम्परिभ्याम् करोतौ भूषणे' (2550). सम्प्रसारणम् in इज्यते—i.e by 'वचिस्वपियजादीनां किति'।

भित—। चिणिति। 'च्लेः सिच्' (३।१।४४) इत्यतः 'च्ले'रित्यनुवर्तते। 'चिण् ते पदः' (३।१।६०) इत्यतः 'ते' इति च, तदाह—च्लेश्चिण् स्यादित्यादि। अभावीति। चिणि कृते 'अचो ञ्णिति' (२५४) इति वृद्धिः। 'चिणो लुक्' (२३२८) इति लुक्। अभाविष्यत—अभविष्यतेति—'स्यसिच्— (२७५७)

इत्यनेन चिण्वत्त्वात् लुङि वृद्धिविकल्पः। तिङाउक्तत्वादिति—आनन्द इत्यस्य उक्ते कर्मणि प्रथमेत्यर्थः। चैत्रेणेत्यादौ तु प्रागवदनुक्ते कर्तरि तृतीयैव। अनुभूयेते—सुखदुःखे इति शेषः। अनुभूयन्ते इति—सुखानीति शेषः। त्वमिति। अत्र मध्यमपुरुषस्य युष्मदुक्तत्वेन सामानाधिकरण्यात् तिङोऽपि मध्यमपुरुषत्वम्, एवमहमित्यत्र। उपसर्गवशादत्र भवतेः सकर्मकत्वेन कर्मणीदमुदाहरणजातमिति द्रष्टव्यम्। अन्वभाविषाताम्—अन्वभविषाताम्—'स्यसिच्—' इत्यत्रोक्तस्य सिच उदाहरणमेतत्। एवम् अभाविषाताम्—अभविषातामित्यादि। णिलोप इति—भाव्यते इत्यत्र भावि (भू+णिच्)+यक् (कर्मणि) लट् ते इति स्थिते प्रत्ययस्यानिट्त्वाण्णिलोप इत्यर्थः। भावयाञ्चक्रे इत्यादि—'कास्प्रत्ययात्—' (२३०६) इति णिच्प्रत्ययान्तत्वेनाम्। 'आम्प्रत्ययवत्—' (२२४०) इत्यामन्तात्लिट्परकृञ-स्यनुप्रयोगश्च। इडिति—भावयामासे इत्यत्रेत्यर्थः। तशब्दस्य—एशत्वं यथा—'लिटस्त-झयोरेशिरेच्' इति। 'इट एत्वे च कृते' इति—'टित आत्मनेपदानाम्—' इत्यने-नेत्यर्थः। उत्तमपुरुषेऽपि लिटि रूपस्य तुल्यत्वादेवमुक्तम्। तासिभाक्षण्र्यादिति—तासि तावत् प्रत्ययमात्रमपेक्षते च एव हन्ताविल्यादीन् धातून्। यथा एधिताहे इति। अस् तु धातुमात्रं न प्रत्ययः। परं तासिना सहोक्तत्वादसुक्तोऽयं पश्चादुपवेशनादीन् प्रत्ययगुणान्। ततश्च एतिपरे अस्तेः सस्यचेद्धकारादेशश्चापि व्यतिहे इत्यादावेव, नान्यत्र। व्यतिहेइत्यादौहि—व्यति (वि+अति) इत्यस्मात् परमस्तेरुपवेशनं तेनैवं-विधस्थले एवोक्तनियमः प्रवर्तत इति भावः। भावितेति—भावि (भू+णिच्) +चिण्वदिट् ता। णिलोप इति 'णेरनिटि' इत्यनेन। अत्र यदवक्तव्यन्तद 'चिण्-वद्वृद्धिर्युक्चेति—' वार्तिकव्याख्यानावसरे पूर्वमुक्तम्। 'उपदेशे योऽच्—' इति व्याख्यानात् एतस्योपदेशाभावेऽपि चिण्वदिडत्र प्राप्नोत्येवेत्यपि तत्रैवोक्तम्। पक्षे भावयितेति। अत्र वलादिलक्षण इट्। तेन णिलोपाप्रवृत्तेर्गुणायादेशौ। एवम् भाविष्यते—भविष्यते इत्यादौ। बुभूष्यते—अत्र सन्नन्ताद्भावे कर्मणि वा यक्। 'अतो लोपः' (२३०८) इति सनोऽकारलोपः। एवं बोभूय्यते इत्यत्र यङन्त-विषये। बोभूयते इति—यङ्लुगन्तादयक्। यक्ो लुकालुप्तत्वेनैकयकारकं रूप-

मिति भावः। "अकृत्—" इति दीर्घ इति—स्मर्यत इत्यत्रेत्यर्थः। स्मारिता—स्मर्तेति। पूर्वं प्रागवत्। उत्तरस्य तु धातोरनिट्कत्वाद्वलादौ इडपि नेति भावः। एवमग्रे। अर्यत इति। ऋधातोर्यक्। गुणः। रपरत्वम्। सस्मरे इति—स्मृधातोः कर्मणि लिट्। परत्वादिति—आरिता इत्यत्र चिण्वदिटोऽप्राप्तिमाशङ्क्य समाधीयते। अयमर्थः—ऋ+तासि इति स्थिते 'स्यसिच्—' (२७५७—६।४।६२) इति चिण्वदिट' बाधित्वा परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च 'गुणोऽर्ति—' (२३८०—७।४।२९) इति गुणः प्राप्नोति। ततश्च रपरत्वेन अजन्ताभावाच्चिण्वदिट् न प्राप्नोति। एवं स्थिते आह—उपदेशग्रहणादिति। 'उपदेशे योऽच्' इति व्याख्यानादिति भावः। यद्वा भूतपूर्वगत्यैतत् सिद्धमिति द्रष्टव्यम्। अर्तेति। अनिट्कत्वाद् वलादिलक्षणे इडभावे इदम्। एवं आरिता—अर्तेति। नित्यग्रहणानुवृत्तिरिति—'नित्यं छन्दसी'त्यत इति भावः। नेङिति—'संस्क्रियते' इत्यस्य परामर्शः। किन्त्वत्र 'रिङ् शयग्लिङ्क्षु' (२३२९) इत्यनेन रिङेवेति भावः। 'सम्परिभ्यां करोतौ भूषणे,' 'समवाये च' इति सुडागमः। इदितामिति। टुनदि समृद्धौ इतीदित्त्वम्। सम्प्रसारणमिति—'वचिस्वपि यजादीनां किति' (२४०९) इत्यनेनेति भावः। 'अयङ् यि क्ङिती'ति—शी+यक् ते इति स्थिते अनेन अयङ्। ङित्त्वात् 'ङिच्च' (४३) इत्यन्त्यावयवः।

२७५९। तनोतेर्यकि ॥६।४।४४॥

दी—। आकारोऽन्तादेशो वा स्यात्। तायते—तन्यते। 'ये विभाषा' (२३१९)-जायते—जन्यते।

सित—। तनोतेरिति। 'विड्वनोरनुनासिकस्यात्' (६।४।४१) इत्यत आदित्यनुवर्तते। तदाह—आकार अन्तादेशः स्यात् यकि परे इति। स्पष्टम्।

२७६०। तपोऽनुतापे च ॥३।१।६५॥

दी—। तपश्च्लेश्चिण्न स्यात् कर्मकर्तर्यनुतापे च।

अन्वतप्त पापेन। पापं कर्तृ। तेनाभ्याहत इत्यर्थः। कर्मणि लुङ्। यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः। 'घुमास्था—' (२४६२) इतीत्त्वम्=दीयते। धीयते। 'आदेचः—' (२३७०) इत्यत्र अशितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः। एश आदिशित्त्वाभावात्तस्मिन् आत्वम्। जग्ले।

च्लि coming after तप् is not replaced by चिण् in कर्मकर्तृवाच्य and in the sense of अनुताप—repentance. Thus अन्वतप्त ( and not अन्वतापि ) पापेन। Here पाप is the subject i.e. अनुतप्कर्तृ and the meaning is—( he ) was smitten by sin—thus here we have लुङ् in the कर्मवाच्य। Or we may take it as an instance of भाववाच्य thus—it was repented by the sinful man ( पाप+अच्=पापः—vicious person )—i.e. he repented after committing sinful actions. In दीयते etc. we have इत् by 'घुमास्था—'। In the case of लिट् where एश् follows there we will have आत्त्व of the root followed, for एश् is not आदिशित्—having a शकार at the beginning ; for the prohibition अशिति in ( 'आदेचः—' ) which ( अशित् ) is composed of the कर्मधा [comp. ( श आदौ इत् च ) ] applies where in the affixes following we find indicatory ( इत्संज्ञक ) शकार at the outset ( आदि )।

मित—। तप इति। 'च्लेः सिच्' इत्यतः च्लेरित्यनुवर्तते। 'चिण् ते पदः' इत्यतश्चिण इति। 'न रुधः' इत्यतो नेति च। तथा चकारेण 'अचः कर्मकर्तरि' इत्यतः कर्मकर्तरीति। तदनुकृष्यते, तदाह—तपश्चलेरित्यादि। कर्मकर्तर्येनुपदमेव तत्प्रकरणे उदाहरिष्यते। अनुतापे कर्मप्रकारे आह—अन्वतप्त पापेनेति। चिणभावात् अन्वतापीति न। पापेनेत्यनुक्ते कर्तरि तृतीया। तदाह—पापं कर्त्रेति।

अत्र अनुपूर्वस्य तपेरभिद्दननमर्थः। भावलकारं मत्वाह—ग्लै इति। अत्र अर्थ आदित्वादच्। पापभागित्यर्थः अशोचीति। पापं (कर्म) कृत्वा पश्चादशोचीत्यर्थः। अत्रानुपूर्वतपेःपश्चात्तापोऽर्थः। कर्मधारयादिति—अर् चासाविचेत्याश्रयणादित्यर्थः। इत्-संज्ञकेति—इत्संज्ञकः शकार आदिर्यस्य तस्मिन्नित्यर्थः। एशो इति तु आदिरिश भवति। ततश्च ग्लै + लिट् ए ( भावे ) जग्ला ए = जग्ल् ए 'आतो लोप इटि च' ( २३७२ )= जग्ले।

२७६१। आतो युक् चिण्कृतोः ॥७।३।३३॥

दी—। आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च। दायिता—दाता। दायिषीष्ट—दासीष्ट। अदायि। अदायिषाताम्। "स्याध्वोरिच्च" अदिषाताम्। अधायिषाताम्—अधिषाताम्। अग्लायिषाताम्—अग्लासाताम्। हन्यते। 'अचिस्वलोः—'(२५७४) इतुरात्तो हंनस्तो न। 'हो हन्तेः—'(२५८) इति कुत्वम्। घानिता—हन्ता। घानिष्यते—हनिष्यते। आशी-र्लिङि वधादेशस्यापवादश्चिण्वद्भावः। आर्धधातुके सीयुटि विशेषविहितत्वात्। घानिषीष्ट। पक्षे—वधिषीष्ट। अघानि। अघानिषाताम—अहसाताम्। पक्षे वधादेशः। अवधि। अवधिषाताम्। अघानिष्यत—अहनिष्यत। न च स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम्। 'अङ्गस्य' (२००) इत्यङ्गाधिकारादाङ्गस्यैवातिदेशात्॥ गृह्यते। चिण्वदिटो न दीर्घ-त्वम्। प्रकृतस्य वलादिलक्षणस्येवेटो 'ग्रहोऽलिटि—' ( २५६२ ) इति दीर्घविधानात्। ग्राहिता—ग्रहीता। ग्राहिष्यते—ग्रही-ष्यते। ग्राहिषीष्ट—ग्रहीषीष्ट। अग्राहि। अग्राहिषाताम्—

अग्रहीषाताम् ॥ हृस्वति । अदर्शि । अदर्शिषाताम् । सिचः किस्वादम् । अहृषाताम् ॥ गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथा हि—चिण्वदिटो दीर्घो नेत्युक्तम् । अगारिध्वम् । द्वितीये ल्विटि 'वृतो वा' (२३८१) इति वा दीर्घः । अगरीध्वम्—अगरिध्वम् । एषां त्रयाणां लत्व ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि । इत्थं पञ्चवतिः । 'लिङ्सिचोः—' (२५२८) इति विकल्पादिडभावे 'उश्च' (२३६८) इति कित्त्वम् । इत्वं रपरत्वं 'हलि च' (३५४) इति दीर्घश्च । 'इणः षीध्वम्—' (२२४७) इति नित्यं ढत्वम् । अगीढ्वम् । ढवमानां द्वित्वविकल्पेऽष्टौ । उक्तषण्णवत्यासह सङ्कलने उक्ता संख्येति ।

इड् दीर्घश्चिण्वदिट् लत्वढत्वे द्वित्वत्रिकं तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

हेतुमण्णन्तात् कर्मणि लः । यक् । णिलोपः । शम्यते मोहो मुकुन्देन ।

The augment युक् is affixed to roots ending in आ when चिण, and ञ-eliding and ण-eliding कृत् ( affixes ) follow. Thus दा + चिण्वदिट् + ता = दाय् इता = दायिता, otherwise दाता । अदायिषाताम्—Here चिण्वदिट् bars 'स्थाघ्वोरिच्च' ( 2389 ) and thus दा becoming अदायइट् सिच आताम् ; the rule, घुमास्था—(2462) does not apply for although सिच् is कित् by 'लिङ् सिचोः—' ( 2300 ) yet it is अजादि in con. with चिण्वदिट् and not हलादि । अदिषाताम्—by 'स्थाघ्वो—।' अग्लायिषाताम्—आत् by 'आदेचः—' ( 2370 ) then युक् and चिण्वदिट् । अग्लासाताम्—

by आत्व only. ❁ हन्+यक् कर्मणि लट् ते हन्यते। In घानिता (हन्+चिण्वदिट्+ता), घानिष्यते etc, there is no chance of न् of हन् becoming ण् by 'हनस:—' (2574) due to the prohibition 'अचिण्णलोः' found therein; कुत्व i.e. घत्व of ह however takes place by 'हो हन्ते—'।

In आशीर्लिङ्, वधादेश or the substitute वध for हन् is superseded by चिण्वदिट् on the score of the maxim † 'येन नाप्राप्तिन्याय'—for although वधादेश has its scope both in लिङ् (आशीः) and लुङ् by 'हनोवध लिङि' and 'लुङि च,' yet in लुङ् it is optional, cp 'आत्मनेपदेष्वन्यतरस्याम्' (2696) whereas in लिङ् it is invariably present. Moreover चिण्वदिट् must have application in आर्द्धधातुक सीयुट् (आशीः) where it has been specially enjoined. Thus वधादेश in आशीर्लिङ् only is superseded by चिण्वदिट् and not in लुङ्। Thus घानिषीष्ट (हन्+चिण्वदिट्+षीष्ट—वृद्धि etc. as before) in the चिण्वद्भावपक्ष, and वधिषीष्ट in its absence. अघानि—चलेश्चिण्—वृद्धि, कुत्व etc as before. अघानिषाताम्—अहसाताम्—the former is in the चिण्वद्भावपक्ष when वधादेश is wanting. The latter is by 'हनः सिच्' (2697) and 'अनुदात्तोपदेश—' (2428). पक्षेवधादेश i. e. by 'आत्मनेपदेष्वन्यतरस्याम्'

---

* N. B.—In the rule 'स्यसिच्सीयुट्तासिषु—' (2757) we find 'उपदेशेऽज्झनग्रहदृशाम' whereof उपदेशे अच् have hereby been completely instanced. Now the author begins to instance हन, ग्रह etc. one by one in स्य, सिच्, सीयुट् and तासि—which are common to all roots here.

† This is otherwise known as 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ; cp. 'पुगन्तलघूपधस्य च' (2189).

(2695). अवधि—अवधिषाताम्—by चिण्वद्भाव: । अघानिष्यत—अहनिष्यत by the optional चिण्वद्भाव: । Here in 'स्य' etc. you cannot expect to have अवधिष्यत' etc. also by this optional चिण्वद्भाव—due to the अतिदेश of 'चिण्वत्'. For here there being 'अङ्गाधिकार' present by 'अङ्गस्य' (200), the अङ्ग—operation only is transferred ( अतिदिश्यते ) where as (अङ्गाधिकारे) वधादेश being but a substituteand not original has nothing to do with अतिदेश । ग्रहयते—Here ग्रह is taken up—. चिण्वदिट् etc.—Here in ग्राहिता—ग्रहीता etc. the former which exemplify the चिण्वद्भावपक्ष there we will not have दीर्घत्व of the चिण्वदिट् for the दीर्घ enjoined by 'ग्रहोऽलिटि—' ( 2562 ) refers to वलादिलक्षण इट् which is meant to the इट् in general. अदर्शि—चिण् and लघूपधगुण, अदर्शिषाताम्—अदृक्षाताम्—the former is चिण्वद्भावि ; in the alt. case there being no चिण्वदिट्—सिच् becomes कित् by 'लिङ्सिचौ—' (2528) and as such 'अम्' does not appear due to the prohibition 'सृजिदृशोर्झल्यमकिति' । Now explaining infull the rule 'स्यसिच्—' the author now proceeds to instance the कर्मवाच्य forms of गॄ which in लुङ् ध्वम् contains hundred and four ( 104) forms in all ( e. g. )—

चिण्वदिट्—(1)—अगारिध्वम् : It has been remarked already that ( any ) दीर्घ of इट् is concerned with वलादि इट and not with चिण्वदिट् ।

वलादीट्—(2)—(a) अगरीध्वम्

(b) अगरिध्वम्—no वृद्धि due to the absence of चिण्वद्भाव—but दीर्घविकल्प by 'वृतो वा' ।

Each of these three forms again will have to undergo

five other phases or varieties due to 'लत्व' of रेफ by 'अचि विभाषा' (2541) due to 'ढत्व' of ध (of ध्वम्) by 'विभाषेटः' (2325) and due to three kinds of duplications or 'द्वित्व's —viz the द्वित्व of 'ध' and its स्थानी 'ढ' (these two द्वित्वs have been regarded as one) by 'अनचि च' (48), that of the 'व' (of ध्वम् and ढ्वम्) by the varttika 'यणो मयो द्वे वाच्ये' under 'संयोगान्तस्य लोपः' (54) and that of 'म' by the same 'अनचि च' (48). In this process we get ninety-six (96) varieties. Thus in the चिण्वादिट्पक्ष we have :—(1) अगारिध्वम् (2) अगारिढ्वम् (3) अगालिध्वम् (4) अगालिढ्वम्। (5) अगारिध्ध्वम् (6) अगारिढ्ढ्वम् (7) अगालिध्ध्वम् (8) अगालिढ्ढ्वम्। (9) अगारिध्व्वम् (10) अगारिढ्व्वम् (11) अगालिध्व्वम् (12) अगालिढ्व्वम्। (13) अगारिध्ध्व्वम्। (14) अगारिढ्ढ्व्वम् (15) अगालिध्ध्व्वम् (16) अगालिढ्ढ्व्वम्। These sixteen again admit of sixteen other varieties due to the duplication of final म् in each case. In this way in the चिण्वदिट्पक्ष we have thirty-two (32) forms and therefore in the वलादि इट्पक्ष which has two sets—दीर्घ and ह्रस्व we have sixty-four (64) of them. Consequently by addition we have ninety-six (96) in all here.

Now the वलादिलक्षण इट् is optional by 'लिङ्सिचोरात्मनेपदेषु' (2528). The इट्पक्ष has been illustrated above. In the इडभावपक्ष सिच् is कित् by 'उश्च' (2368); consequently गुण is barred due to कित्त्व, and इत्व by 'ऋत इद्—' (2390) comes in, then 'उरण्—' and 'हलि च' appear. Then by 'इणः षीध्वम् —' (2247) ढत्व is नित्य (obligatory) and not optional whence

we have अजीढ्वम् which again due to द्वित्व of ढ्, व् and म् admits of eight (8) other varieties. Thus—by द्वित्व of 'ढ' by 'अचोरहाभ्याम्—' (59) we have two (2), by द्वित्व of 'व' in each case by 'यणो मय:—' we have four (4) and finally by that of 'म्' of each by 'अनचि च' (48) we have eight in this section. Adding these eight forms with the former ninety-six we have hundred and four (104) in total.

इड् दीर्घश्चिण्वदिट्—etc Bhattoji sums up in a single verse what has been shown above. We have कर्मवाच्य and not भाववाच्य which is absurd in the case of causal णिच्. यक्—i.e. by 'सार्व—'. णिलोप:—i. e. by 'णेरनिटि' (2313). शम्यते etc—delusion is dispelled by (the emancipator) मुकुन्द। शम्—is मित् due to 'अमन्तत्व' by 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू.); hence the उपधा is ह्रस्व by 'मितां ह्रस्व:' (2568).

मित—। आत इति। चिण्णमुलोरिति। चिणि णमुलि चेत्यर्थ:। 'अचो ञ्णिति' (७।२।११५) इत्यतो ञ्णिति इत्यनुवर्तते। तच्च णमुलीत्यस्यैव विशेषणं न तु चिणि इत्यस्य। तस्य णित्त्वेनाव्यभिचारादनर्थक्यापत्ते:। तदाह—ञिति णिति णमुलि चेति। चिणि—अदायीत्युदाहरणम्। दायिता इति तु 'स्यसिच्—' इत्यनेन चिण्वद्भावे। ञिति णमुलि—दायं दायम् इति। णिति णमुलि—पायं पायम् इति (णमुलि)। अदायिषाताम् इति। अत्र (सिचि) 'स्याध्वोरिच्च' (२३८९) इत्येतद्बाधित्वा परत्वात् चिण्वदिट्। 'घुमास्था—' (२४६२) इति ईत्त्वं तु न। अत्र सिचष्ट्साहचर्यादजादित्वात्। न च 'स्याध्वो:—' इत्यस्य पुन: प्रसङ्ग:। अझलादित्वात्। तत्र हि 'इको झल्' (२६१२) इत्यनुवर्तते। तथा च झलादिरेव सिच् किद्भवतु इडादिरिति फलितम् इति व्याख्यातारो वदन्ति। वस्तुतस्तु 'सत्यपि तस्मिन् (स्याध्वोरित्त्वे) नेह काचित् क्षति:। सिच: कित्त्वेऽपि अनिगन्तत्वाद्गुणस्य प्रवृत्त्या

('अचो ञ्णिति' इत्यनया) रूपनिष्पत्तेरिति मनोरमायां स्पष्टम्। अदिषातामिति। स्थाघ्वोरितीत्वम्। अस्नासाताम् इति—'आदेचः—' (२३७०) इत्यात्त्वम्। चिण्वत्त्वाभावादयुगभावः। अनिट्त्वाद् वलादीड् विरहः। हन्यत इति—'स्यसिच —' इति सूत्रे उपात्तानाम् अञ्जनग्रहदृशां मध्ये अजन्ता उदाहृताः। अधुना हनादय उदाह्रियन्ते। एषु कर्मणि यक् प्रत्ययः। ननु घानिता घानिष्यत इत्यादौ 'हनस्तः—' (२५७४) इति तकारान्तादेशः स्यादत आह—अचिण्णलोरिति। इति पर्युदासान्नेत्यर्थः। आशीर्लिङीति—न तु लुङि। येन नाप्राप्तिन्यायेन आशिषि एव तस्य बाधौचित्यात्। लुङि तु यथा चिण्वद्भावो वैकल्पिकस्तथा 'आत्मनेपदेष्वन्यतरस्याम्' (२४१९) इति वधादेशोऽपि। तथा सति उभयोरपि तुल्यत्वाद् येन नाप्राप्तिन्यायाभावः। आशिषि तावत् चिण्वद्भावो विशेषेण विधीयते तथाच आत्मनेपदे एव तत्रापि सीयुटि एव नान्यत्रेति। वधादेशस्तु वध्यादित्यादौ परस्मैपदेऽपि चरितार्थ इति स एवानेनात्र बाध्यते, न लुङ्युपदिष्टो वधादेशः इति पुनरप्याह—विशेषविहितत्वादिति। अघानिषाताम्—अहसाताम् इति। चिण्वद्भावाद् वृद्धि हत्वादिना पूर्वम्। उत्तरस्तु चिण्वदिड्भावे 'हनः सिच्' (२६९७) इति सिचः कित्त्वात् 'अनुदात्तोपदेश—' (२४२८) इत्यनुनासिकलोपः। पक्षे वधादेश इति—'आत्मनेपदेष्वन्य—' इत्यनेन। अवधिषाताम् इति। चिण्वदिट्सिचौ। अकारस्योपधात्वाभावान्न वृद्धिः। ननु यथा चिणि वधादेशो विहितस्तथा चिण्वदित्यतिदेशात् (चिणि यद् यत् कार्यमुपदिष्टं तत्तत् चिण्वद्भावेऽपीति न्यायात्) स्य इत्यादिषु परेषु हन्तेर्वधादेशः स्यादित्याशङ्क्य परिहरति—न चेत्यादिना आङ्गस्यैवातिदेशादिति। यस्मात् प्रत्ययो विधीयते तदङ्गम्। यथा चिणिपरे हनादयः। वधादेशस्तु न तथा। तस्यादेशत्वेन साक्षादुपदेशाभावात्। अत एवात्र तस्यातिदेशो न॥ ननु ग्राहिता, ग्राहिष्यते इत्यादौ चिण्वद्भावपक्षे चिण्वदिटो दीर्घः स्यादित्याशङ्क्याह—प्रकृतस्य वलादिलक्षणस्यैवेति। अदर्शि—चिण्। गुणः। अदर्शिषाताम्। चिण्वदिट्पक्षे इदम्। 'न दृशः' (२४०७) इति क्सस्य निषेधात् सिच्। सिचः कित्त्वादिति—'लिङ्सिचौ—' (२५२८) इत्यनेन। अम् नेति—'सृजिदृशोर्झल्यमकिति' इति पर्युदासादितिभावः।

अद्धचाताम् इति—एतत् क्सपक्षे इति न भ्रमितव्यम्। चिण्वदिड्भाविनधातोरनिट्त्वेन वलादित्वाभावेन च कत्वषत्वाभ्यां यथोक्तरूपसिद्धेः। गिरते लुङि ध्वमीति। अत्र यत्वेटो दीर्घो विहितस्तत्र वलादिलक्षणस्यैवेटः स इति बोध्यव्यमित्याह। चिण्वदिट इति। विकल्पाभावं दर्शयति—अगारिध्वमिति। वलादिलक्षणेटि तु—अगरीध्वम्—अगरिध्वम्। चिण्वत्त्वाभावात्तद्वृद्धिः। एवं व्रयाणामिति। लत्वमिति। 'अचि विभाषा' (२५४१) इति रेफस्य लत्वविकल्पात् अगालिध्वम् इत्यादीनि त्रीणि इत्येवं षट्। ढत्वमिति—'विभाषेटः' (३३४५) इति ध्वमो धकारस्य ढत्वविकल्पात् धत्वपक्षे षट्, ढत्वपक्षे च षडित्येव सङ्कलने द्वादश। द्वित्वयन्तेति। यद्यपि अढवमानां द्वित्वादत्र द्वित्वचतुष्टयमित्येव वाच्यं तथापि ढकारस्य धकारस्थानिकत्वेन उभयोरैकत्वविवक्षया त्रयमित्युक्तमिति विभाव्यम्। तदेवमुक्तद्वादशानां मध्ये 'अनचि च' (४८) इति षण्णां धस्य षण्णां ढस्य च द्वित्वे चतुर्विंशतिः। ततो 'यणो मयो द्वे वाच्ये' इति वार्तिकात् मय इति पञ्चमी यण इति षष्ठीतिपक्षे वकारस्य प्रत्येकं द्वित्वे अष्टचत्वारिंशत्। पुनर् 'अनचि च' (४८) इति मकारस्यापि प्रत्येकं द्वित्वे षण्णवतिः। तदाह—इत्थं षण्णवतिरिति। अवशिष्टाष्टप्रतिपादनार्थमाह—लिङ्सिचोरिति। अनेनेड्विकल्पादिट्पक्षे 'वृतो वे'ति दीर्घविकल्पाद चतुःषष्टिरिति दर्शितम्। इडभावपक्षे तु अट् गृ सिच् ध्वम् इति स्थिते 'उश्च' (२३६८) इति कित्त्वं गुणाभावात् 'ऋत इद्धातो'रिति इत्वम् रपरत्वम्। 'हलि चे'ति दीर्घश्च। 'इणः षीध्वम्—' इति ढत्वविकल्पाभावाद् ढत्वमित्यम्। अगीढ्ढ्वम्। 'धि च' (२२४९) इति सिज्लोपः। ढवमानामिति—'अचो रहाभ्याम्—' (५९) इति ढस्य द्वित्वे द्वौ। ढूमित्यस्य वकारस्य 'यणो मयः—' इति प्रत्येकं द्वित्वे चत्वारि। चतुर्णामपि 'अनचि' (४८) इति मकारस्य प्रत्येकं द्वित्वेऽष्टौ। एवमुक्तषण्णवत्या सह अष्टानां सङ्कलने चतुरधिकं शतं सम्पद्यत इत्याह—उक्तेति। उक्तानां संग्रहार्थं श्लोकेन संगृह्णाति। इड् दीर्घ इति। अर्थः स्पष्टः। हेतुमण्ण्यन्ते भावलकारासम्भवादाह—कर्मणि ल इति। लकारा इत्यर्थः। तिलोप इति 'णेरनिटी'त्यनेन (२३१३)। शम्यत इति। 'जनीजृष्क्नसु—' इत्यमन्तत्वेन मित्त्वस्य पक्षोक्त्या:।

२७६२। चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥६।४।९३॥

दी—। चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्। प्रकृतो 'मितां ह्रस्वः' (२५६८) एव तु न विकल्पितः। ण्यन्तात्मो ह्रस्वविकल्पासिद्धेः। दीर्घविधौ हि णिचो लोपो न स्थानिवत् इति दीर्घः सिध्यति। ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम्। भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः। णाविति जातिपरो निर्देशः। दीर्घग्रहणं चेदं मास्त्विति तदाशयः। शामिता—शमिता—शमयिता। शामिष्यते—शमिष्यते—शमयिष्यते। यङन्तात्सिच्। शंशम्यते। शंशामिता—शंशमिता—शंशमयिता। यङ्लुगन्तात्सिच्यप्येवम्। भाष्यमते तु—यङन्तात्चिण्वदिटि दीर्घो नास्तीति विशेषः। ण्यन्तत्वाभावे—शम्यते मुनिना।

The उपधा or penultimate of मित् roots becomes दीर्घ or lengthened optionally in णिच् followed by चिण् or followed by णमुल्। [Thus अशमि—अशामि (चिण्), and शमं शमम्—शामं शामम् (णमुल्)] प्रकृत: etc—The previous rule is 'मितां ह्रस्वः' (६।४।९२) so that the Sutrakara could have ennunciated as 'चिण्णमुलोरन्यतरस्याम्' whereby also there would appear दीर्घ as an alternative through the option of ह्रस्व, for अन्यतरस्याम् following upon 'मिताम्—।' But he (the Sutraka'ra) has purposely not ennunciated in that way i. e. has not made the ह्रस्व of 'मिताम् ह्रस्वः' in cases of चिण्पर and णमुल्पर णि—for this ह्रस्वविकल्प fails to serve the purpose

( viz, of ह्रस्वविकल्प )—when णिच follows a ग्लन्त root. Take for instance श्रमि ( श्रम्+णिच् )+णिच्+ता। Here if the ह्रस्वविधि is made optional then the elision of first णिच् will be considered by 'अचः परस्मिन्—' ( ५० ) as स्थानिवत् so that the operation due to the 2nd. णिच् is impeded due to this intervention of स्थानिवत्व—for the 2nd. णिच् which is followed by चिण्वद्भाव ( ता ) does not in this case invariably follows on the root. In the use of दीर्घविधि ( i.e. दीर्घविकल्पविधि ) however, the elision of णिच् is not स्थानिवत् due to the prohibition 'न पदान्त द्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घ-जश्चर्विधिषु' ( ५१ )। Thus दीर्घ has scope here and not ह्रस्व where स्थानिवत्त्व ( of—णि ) is unavoidable. In भाष्य, however we find that having recourse to * 'पूर्वत्रासिद्धे न स्थानिवत्' or स्थानिवद्भाव

---

* The rule 'पूर्वत्रासिद्धम्' ( ८।२।१ ) instructs us that what has been enjoined in the last three sections or पाद्s is invalid towards all the previous rules or operations ( सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा )। If so then the prohibition of स्थानिवद्भाव with reference to द्विर्वचनपरसवर्णानुस्वार etc under 'न पदान्त—'(५१—१।१।५८) has no importance. For where do they apply ? They (द्विर्वचन etc) apply in order towards 'अनचि च' ( ८।४।४७ ), 'अनुस्वारस्य ययि—' (८।४।५८), 'नश्चापदान्तस्य—' ( ८।३।२४ ), 'हलि च' ( ८।२।७७ ), 'झलां जश्—' ( ८।४।५३ ) and 'खरि च' ( ८।४।५५ )। But these are invalid towards 'न पदान्त—' ( १।१।५८ ) as they are instructed under 'पूर्वत्रासिद्धम्' ( ८।२।१ )। Therefore the statement of द्विर्वचन, सवर्ण, अनुस्वार, जश् and चर् is superfluous. In this connection it is important to note that rules falling under 'पूर्वत्रासिद्धम्' are called पूर्वत्रासिद्धीय rules—पूर्वत्रासिद्धे भव ( i.e. पूर्वत्रासिद्धत्वमस्त्येषामिति ) पूर्वत्रासिद्ध+छ ( ईय )।

does not apply to rules and operation under 'पूर्वत्रासिद्धम्' (८।२।१),—द्विर्वचन, सवर्ण, अनुस्वार, दीर्घ, जश् and चर् have been rejected by Patanjali. Well, the rule 'चिण्णमुलोः—' (६।४।९३) not being पूर्वत्रासिद्धीय, the दीर्घविधि hereof also fails as the elision of the first णि becomes स्थानिवत् or existent like the original and thus intervenes as it did in the case of ह्रस्वविधि। Then what to do here. So to answer this Bhattoji says णाविति—etc. णिच् is here considered to form a जाति—genus or general class so that the two णिच् will not be taken separately but as a class in general. Thus the स्थानिवत्त्व of the first णिलोप shall not in the least affect the operation. The intention of the भाष्यकार therefore is 'let not here (in 'चिण्णमुलोः—') be taken the term दीर्घ'। शामिता (शम्+णिच्+णिच्+चिण्वदिट्, ता) दीर्घपक्षे—शमिता (शम्+णिच्+चिण्वदिट्, ता) ह्रस्वपक्षे—शमयिता (शम्+णिच्+वलादि इट्, ता गुण). Similarly in the remaining instances. According to भाष्य, however, in the case of चिण्वदिट् of a यङन्त root, there is no दीर्घ as it rejects the same. Thus there we have two forms only—शंशमिता—शंशमयिता. यङन्तत्वाभावे etc—easy.

मित—। चिण्णमुलोरिति। 'दोषो णौ' (६।४।९०) इत्यतो णाविति वर्तते। तच्च विशेष्यम्। तदाह—चिण्परे णमुल्परे च णाविति। 'ऊदुपधाया गोहः' (६।४।८९) इत्यत उपधाया इति, 'मिताम्—' (६।४।९२) इत्यनेन मितामिति च वर्तते। तदाह—उपधाया इत्यादि। ननु 'मितां ह्रस्वः' (६।४।९२) इत्यतो 'ह्रस्व' इत्यप्यनुवर्त्यताम्। तथा च 'चिण्णमुलोरन्यतरस्याम्' (६।४।९३) इत्येव सूत्रमस्तु। मास्तु दीर्घग्रहणम्। अन्यतरस्यांग्रहणसामर्थ्यादिपक्षे दीर्घस्यापि सिद्धेरित्याशङ्क्य आह—णावित्यादिना। अयमभिप्रायः। 'न पदान्तद्विर्वचनवरे-यलोप-

स्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु' (५१—१।१।५८) इत्यत्र पदस्यान्तावयवे द्वित्वादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवदित्युक्तम्। ततश्च ह्रस्वविधौ स्थानिवद्भावः प्राप्नोति दीर्घविधावेव तन्निषेधात्। एवञ्च ('ह्रस्वविकल्पविधौ'—शम धातोर्ण्यन्तात् (शम्+णिच्)+णिच्+लुट्, ता इत्यत्र प्रथमणिज्लोपे तस्य (णिलोपस्य) 'अचः परस्मिन् पूर्वविधौ' (९०—१।१।५७) इति स्थानिवत्त्वाद् व्यवधानादत्र णिप्परकणिच्परकत्वं नास्ति। तथा सति शमिता—शामितेति न सिध्यति। दीर्घविधौ तु सिध्यत्येव तत्र 'न पदान्ते'ति स्थानिवद्भावप्रतिषेधादत आह—दीर्घविधावेवेति। ह्रस्वविधौत्विति—व्यवस्थान्तराभावादिति भावः। भाष्ये-त्विति। न पदान्तसूत्रस्थभाष्ये इत्यर्थः। पूर्वत्रासिद्धे इति—पूर्वत्रासिद्धमस्यास्तीति पूर्वत्रासिद्ध+अच् (अर्शआदिभ्योऽच्)—पूर्वत्रासिद्धीये इत्यर्थः। न स्थानिवदिति—स्थानिवद्भावो न प्रसरति असिद्धत्वादिति भावः। इत्यवष्टभ्येति—इत्याश्रित्येत्यर्थः। प्रत्याख्याता इति। निष्प्रयोजनत्वेन परित्यक्ताः। तथा च 'अनचि च' (८।४।४७) इति द्विर्वचनं शास्ति—यथा मध्वरि (मधु+अरि) इत्यादौ। तच्च—पूर्वत्रासिद्धम्। तथा सति 'नपदान्त—' इत्यत्र द्विर्वचनस्य स्थानिवद्भावनिषेधो व्यर्थः। एवम् 'अनुस्वारस्य—' (८।४।५८) इत्यत्र सवर्णस्य, 'नश्चापदान्तस्य—' (८।३।२४) इत्यत्रानुस्वारस्य, 'हलि च' (८।२।७७) इति दीर्घस्य, 'झलां जश्—' (८।४।५३) इति जश्त्वस्य, तथा 'खरि च' (८।४।५५) इति चर्त्वस्य च पूर्वत्रासिद्धीयत्वात् 'नपदान्त—' इत्यत्र ग्रहणं न कर्त्तव्यमिति प्रत्याख्यानपरभाष्यस्याशयः। ननु पूर्वत्रासिद्धीयदीर्घविषयेऽस्तु एवम्। 'णिचश्चुलोदीर्घः—' इत्यत्र, तु दीर्घग्रहणं न प्रत्याख्यातव्यम्। तस्य पूर्वत्रासिद्धीयत्वाभावेन स्थानिवद्भावः प्राप्नोति। एवञ्च तत्स्थानिवद्भावनिरासाय—अत्र दीर्घग्रहणमावश्यकमेव इत्याशङ्क्य आह—णाविति जातिपर इति। तथाच प्रथमणिज्लोपस्य स्थानिवद्भावे सत्यपि व्यवधानं नास्ति। णित्वस्य व्यक्तिकल्पने हि तत्। णित्वजातिकल्पनायान्तूभयोरप्येकत्वान्नास्ति व्यवधानमिति भावः। एवञ्च ह्रस्वविकल्प एव भाष्याशयः स्थानिवद्भावेऽपि जातित्वाश्रयणाद-भीष्टसिद्धेरितीदमपि ('णिण्यसुलोदीर्घः—' इति) दीर्घग्रहणं प्रत्याख्यात-

मेवेत्याह—दीर्घग्रहणं चेदमिति। तदाशय इति—प्रत्याख्यानपरभाष्याशय इत्यर्थः। "वस्तुतस्तु 'चिण्णमुलोः—' इति सूत्रे दीर्घग्रहणं कर्तव्यमेव। अन्यथा हिडु अनादरे इत्यस्य चिणि अहिडि—अहीडि इत्येव स्यात्, नत्विष्टम् अहिडि—अहीडि इति कैयटे स्पष्टमि"ति तत्त्वबोधिनी। शमिता—शामिता इति—चिण्वदिटि दीर्घविकल्पः। शमयिता इति—वलादिलक्षणेड् गुणश्च। शंशम्यते इति—यङो अकारस्य 'अतो लोपः' इति लोपः। ततो यक्। शंशामितेति—द्वित्वादिर्विशेषः। चिणि—अशंशमि—अशंशामि। णमुलि—शंशमंशमम्—शंशामंशंशामम्मिति। भाष्यमते त्विति—'यङोऽल्लोपस्य स्थानिवत्त्वेन चिण्परत्वाभावादुपधादीर्घस्योपधाऽवृद्धेश्चाप्रवृत्तेः'। एवञ्च दीर्घग्रहण-प्रत्याख्यानं न युज्यते इति दीक्षिताशयः। अन्तत्वाभावे इति—एवञ्च अकर्मकत्वाद् भावे ल इत्यर्थः।

२७६२। नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥७।३।३४॥

दी—। उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च। अशमि। अदमि। 'उदात्तोपदेशस्य' इति किम्? अगामि। 'मान्तस्य' किम्? अवादि। 'अनाचमेः' किम्? आचामि। 'अनाचमिकमिवमीनामिति वक्तव्यम्' (वार्तिक)। चिणि 'आयादयः—' (२३०५) इति णिङभावे—अकामि। णिङ्णि-चोरप्येवम्। अवामि। 'वध हिंसायाम्'। हलन्तः। 'जनिवध्योश्च' (२५१२) इति न वृद्धिः। अवधि। 'जागोऽविचिण्णल्ङित्सु' (२४८०) इतुरक्तेर्न गुणः। अजागारि।

The penultimate of a root which is instructed or enunciated to be उदात्त and ends in म् but not of चम् preceded by आङ् is not lengthened when चिण् and ञ-eliding and ण-eliding कृत् affixes follow. अगामि—because गम् is मान्त but not उदात्त.

अवादि—because वद is उदात्त but not मान्त. 'अनाचमि—' etc—( varttika ) i.e वृद्धि is not forbidden to the उपधा of these three roots. अकामि—This is the common form in चिण् whether णिङ् is wanting or there is णिङ् or णिच्, this is due to णिलोप by 'णेरनिटि' ( 2313.). वध etc i.e. this is diff. from वधादेश which is अदन्त. Thus अवधि also is common in both cases. Comp—'यत् क्रौञ्चमिथुनयोरेकमवधि काममोहितम्' ( रामायण )।

मित—। नोदात्तोपदेशस्येति। न+उदात्तोपदेशस्येतिच्छेदः। 'मृजेर्वृद्धिः' (७।२।११४) इत्यतो वृद्धिरित्यनुवर्तते। 'अत उपधायाः' (७।२।११६) इत्यत उपधाया इति। 'अचोञ्णिति' (७।२।११५) इत्यतो ञ्णिति इति। 'आतो युक् चिण्कृतोः' (७।३।३३) इत्यतश्चिण्कृतोरिति च; तदाह—उपधाया इत्यादि। शेषपूरणमिदम्। तेन 'उदात्तोपदेशस्य माङ्पूर्वचमिवर्ज्यस्य मान्तस्य च धातोरुपधायाः—' इति योजनीयम्। चिणि आह—अशमीत्यादि। ञिति कृति—शमः। दमः ( घञ् )। णिति कृति—शमकः। दमकः ( ण्वुल् )। 'कथं तर्हि —'हरेर्यदक्रामि पदैककेन खमि'ति श्रीहर्षः। प्रमाद एवायम्। यदि समाधियमेवेत्याग्रहस्तर्हि निवृत्तप्रेषणात् प्राकृतेऽर्थे णिचि व्यवस्थितविभाषाश्रयणात् तत्रणिच् बोध्यः। कथमुद्यमः, उपरम इति ? संज्ञापूर्वकविधेरनित्यत्वादिति प्रौढमनोरमायां स्थितम्। घञर्थे कविधानमिति तत्त्वबोधिनी। उद्पूर्वयोर्यमरमोरुदात्तत्वं वा कल्प्यमिति केचित्। णिङ्णिचोरप्यर्थमिति। यथा णिङभावे चिणि—'अकामि' इति रूपं भवति। णिङन्ताण्णिजन्ताच्च कर्मणि चिणि तदेव रूपमिति भावः। वध हिंसायामिति। भिन्नोऽयमदन्ताद् वधादेशात्तेनाह—हलन्त इति। णिचि चिणि रूपं तु तुल्यमेवेत्याह—अवधीति।

२७६४। भञ्जेश्च चिणि ।६।४।३३॥

टी—। नलोपो वा स्यात्। अभाजि—अभञ्जि।

मित—। 'श्नान्नलोपः' (६।४।२४) इत्यतो नलोप इति, 'जान्तनशां विभाषा' (६।४।३२) इत्यतो विभाषेति चानुवर्तते तदाह—नलोपो वेति। अभाजीति। नलोपपक्षे उपधावृद्धाविदम्।

२७३५। विभाषा चिण्णमुलोः ॥७।१।६९॥

टी—। लभेर्नुमागमो वा स्यात्। अलम्भि—अलाभि। व्यवस्थितविकल्पत्वात् प्रादेर्नित्यं नुम्। प्रालम्भि॥ द्विकर्मकाणां तु—

गौणे कर्मणि दुह्यादेः प्रधाने नी-हृ-कृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां च निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

(वार्तिकार्थः *)। गौर्दुह्यते पयः। अजा ग्रामं नीयते। ह्रियते। कृष्यते। उह्यते। बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा। भोज्यते माणवकमोदनः, माणवक ओदनं वा। देवदत्तो ग्रामं गम्यते। 'अकर्मकाणां कालादिकर्मकाणां कर्मणिभावे च लकार इष्यते'। मासो मासे वा आस्यते देवदत्तेन। णिजन्तात्तु प्रयोज्ये प्रत्ययः। मासमास्यते माणवकः।

The augment नुम् is optionally prefixed to the root लभ् when चिण् and णमुल् follow. In णमुल् we get लम्भं लम्भम्—लाभं लाभम्. But प्रलम्भं प्रलम्भम्—because it is ordained that नुम् is optional

* एतद्बालमनोरमायां दृष्टं न तत्त्वबोधिन्याम्।

—only when लभ् is without उपसर्ग so that it will have नित्य नुम् when preceded by उपसर्ग's प्र etc. As to which of the two कर्मs of द्विकर्मक roots will have लादय: i. e. ल, कृत्य, क्त and खलर्थ प्रत्ययs—i.e. सामानाधिकरण्य or प्रथमा in con. with लकारs, कृत्य affixes etc., we summarise the injunction below :—

लादय: are said to be due to or apply on the Indirect Object ( गौणकर्म ) of the * दुहादि class, the direct object or प्रधान कर्म of the roots of न्यादि class, any one object—according to the intention ( of the speaker )—of roots expressing 'knowledge' ( बुद्धि ) and 'eating' and of such roots as have शब्दs ( e.g. वेद, शास्त्र etc ) for their objects, and on the प्रयोज्य कर्म of other roots viz. causal ones—i.e. the गौण कर्म etc, will have प्रथमा in connection with these ल etc. in the कर्मवाच्य। Thus गौ: दुह्यते etc. cp, also 'मनोषितं द्यौरपि येन दुग्धा'— ( रघु ). बोध्यते—instance of बुद्ध्यर्थ. भोज्यते—instance of भक्षार्थ. शब्दकर्म—शिष्योऽवेदमध्याप्यते or शिष्यं वेदोऽध्याप्यते। 'देवदत्त:—' instance of प्रयोज्य-कर्म. If analysed it will stand thus :—

देवदत्तो ग्रामं गच्छति ( अणिजन्त )।

यज्ञदत्तो देवदत्तं ग्रामं गमयति ( णिजन्त )।

यज्ञदत्तेन देवदत्तो ग्रामं गम्यते ( कर्मणि लकार )।

It is intended that लकार is due to कर्म and भाव also of such अकर्मक roots as have काल ( time ) etc i.e भाव, देश

---

* "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥"

and अध्वन् for their objects, cp—'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' ( वार्तिक )—Thus—

मासः आस्यते देवदत्तेन ( कर्मणि लकार )

मासे आस्यते ... ( भावे लकार )

But in the causative forms of them we will have the प्रत्यय i. e 'लकार, कृत्य क्त etc in the प्रयोज्य e.g. 'मासम् आस्यते माणवकः ( कर्मणि लकार ). The non-causal and the causal forms of this were—मासम् आस्ते माणवकः—मासम् आसयति माणवकं देवदत्तः। Then मासमास्यते—as in the text.

Here ends भावकर्मतिङ्प्रकरणम्।

मिल—। विभाषेति। 'लभेश्च' (७।१।६४) इत्यतो लभेरिति। 'इदितो नुम् धातोः' (७।१।५८) इत्यतो नुमिति चानुवर्तते। तेनापेक्षितं पूरयन्नाह—लभेरित्यादिना। चिणि णमुलिचेति शेषः। चिणि दर्शितं मूले। णमुलि तु लम्भं लम्भम्—लाभंलाभम्। व्यवस्थितविकल्पत्वादिति। इयमत्र व्यवस्था—अनुपसर्गादेव लभेर्नुम् विकल्प्यते, न तूपसर्गात् परस्येति। तेन प्रादावस्य नित्यं नुम् प्राप्त इत्याह—प्रालम्भि इति; न तु प्रालाभि इत्यपि। एवं णमुलि—प्रलम्भं प्रलम्भम् इति॥ इयता एककर्मकाणां कर्मणि लकारा दर्शिता इदानीं द्विकर्मकाणां ( धातूनां ) कर्मणि लकारव्यवस्थां दर्शयिष्यन्नाह—द्विकर्मकाणान्त्विति।

दुहादेर्गौणे कर्मणि लादयो मताः नीहृकृष्वहाम् प्रधाने कर्मणि लादयो मताः, तथा बुद्धिभक्षार्थयोः शब्दकर्मकाणां च निजेच्छया—स्वेच्छया कर्त्रिच्छयेत्यर्थः—( द्वयोरेकतरे कर्मणि ) लादयो मताः—अन्येषां ण्यन्तानां प्रयोज्यकर्मणीत्यन्वयः। लादय इति। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति कर्मणि लकारा विहिताः। तथा 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि भावे च कृत्यादयो वक्ष्यन्ते ( कृदन्त-प्रकरणे )। तेनात्र लादय इत्यनेन लकारकृत्यादयः परामृश्यन्ते। गौणे इत्र इति।

कर्मण्यत्र लकारः। कर्मणस्तिङा अभिहितत्वात् प्रथमा। एवमन्यत्र। निजेच्छयैवेत्युदाहरति—बोध्यते माणवकमिति द्वाभ्याम्। शब्दकर्मकाणान्तु—शिष्यो वेदम् अध्याप्यते, शिष्यं वेदोऽध्याप्यते गुरुणा वेत्युदाहरणम्। सकर्मकाणां ण्यन्तानां प्रयोज्यकर्मण्याह—देवदत्त इति। यज्ञदत्तेनेति शेषः। अकर्मकाणामाह—अकर्मकाणां कालादिकर्मकाणामिति। नेदं वार्त्तिकं, भाष्यादावनुपलम्भात्। किन्तु 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक' इति वार्त्तिकाशयवर्णनमेतदित्याहुः। मासो मासं वेति। तत्र आद्ये कर्मणि लकारः। द्वितीये तु भावे इति बोध्यम्। णिजन्तास्त्विति। एवम्विधानामकर्मकाणां णिजन्तादित्यर्थः। मासमास्यते इति देवदत्तेनेति शेषः। अण्यन्तावस्थायामिदम्—मासमास्ते माणवक इत्यासीत्। ण्यन्तावस्थायां तु—मासमासयति माणवकं देवदत्त इति। एतेन अकर्मकाणां ण्यन्तानां प्रयोज्यं विहाय कर्मान्तराभावाद् द्विकर्मकव्यवस्थायामेषामन्तर्भावो व्यर्थ इति निरस्तम्।

इति मितभाषिण्यां भावकर्मतिङ्-प्रकरणम्।

अथ

# कर्मकर्तृ-तिङ्-प्रकरणम्



दो—। यदा सौकर्य्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यति तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्व्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात् कर्तरि लकारः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः। तेभ्यो भावे कर्तरि च लकाराः। पच्यते ओदनेन, भिद्यते काष्ठेन। कर्तरि तु—

When the part ( or—exertion on the part ) of the agent is not intended ( to mention ) in order to indicate extreme facility of performance, other कारकs too, such as कर्म, करण etc. get the designation of कर्त्ता—because they are ( now ) independent ( of the agent ) with reference to their respective actions ( cp—'स्वतन्त्र: कर्त्ता'—569, or a karaka when independent is designated as कर्त्ता )। So although they were formerly करण, अधिकरण etc, yet they will now have कर्तरि लकार i.e. verbs of active conjugation—for they are now कर्तृसंज्ञकs. As for example—'साध्वसि:—' The sword cuts well. Here we have कर्तृसंज्ञा of

करण। Though the man holding the sword cuts the tree etc, at ease with the help of the same yet, the effort on the part of him being too little in comparison with the sharpness of the of the instrument, the कर्तृत्व of the action is attributed to the same instrument. Similarly 'काष्ठानि—'The fuels cook. 'स्थाली—' the pot (for cooking) boils—Here we have कर्तृसंज्ञा of अधिकरण। But when there is any intention of ascribing कर्तृत्व to कर्म, roots which where previously सकर्मक or transitive will now become almost अकर्मक or intransitive—i.e. roots having single object only will now look like अकर्मक e.g. 'पच्यते ओदनः' whereas roots having double objects will remain as सकर्मकः e. g. 'मथ्नाति सागरोऽमृतम्'। It is therefore that Bhattoji says 'प्रायेण' in the वृत्ति of these two classes of roots ( now termed as अकर्मक and सकर्मक ) the former will have भावे लकार and the latter कर्तरि i. e. these will be regarded to form भाववाच्य and कर्तृवाच्य respectively. Thus पच्यते ओदनेन etc, illustrates भावे लकार ; for कर्तरि लकार, however, we look forward :—(N. B.—This कर्तरि लकार thus paves the way for कर्मकर्तरि लकार by—)

मित—। अथैवं भावकर्मप्रक्रियां प्रदर्श्य कर्मकर्तृप्रक्रियां प्रदर्शयिष्यन् प्रस्तौति—यदेति। सौकर्यातिशयमिति अतिशयेन सुकरत्वमित्यर्थः। अनायासातिशयसाध्यत्वमिति यावत्, कर्तृप्रयत्नाविवक्षायामित्यर्थः। उक्तं हि धेरणाविति सूत्रे—'फलव्यापारयोर्धातुः। तत्र फलाश्रयं कर्म व्यापाराश्रयस्तु कर्तेति। एवं सति यत्स्वातन्त्र्य' व्यापारस्य स एव कर्तेति संभाव्यते। कुत इत्यत आह—स्वव्यापारे इति। 'स्वतन्त्रः कर्ता' (५६९) इति सूत्रादिति भावः। साध्वसिरिति—साधु इति क्रियाविशेषणम्। अत करणस्यासेः कर्तृसंज्ञा। कर्तृव्यापारे सत्त्वेऽपि तस्यातिस्वल्पत्वादनुक्तिः,

करणस्य तु तैक्ष्ण्यातिशयसत्त्वादस तस्यैव व्यापाराश्रयत्वमुक्तमेवं काष्ठानीत्यत्र। स्थालीति। रन्धनसाधनम् [ 'पिठरः स्थाल्युखा कुण्डमि'त्यमरः ]। अत्राधिकरणस्य कर्तृसंज्ञा। कर्मण्यस्मिन्निति। सौकर्यातिशयं द्योतयितुमित्यध्याहारः। प्रायेणाकर्मका इति—अयं भावः। ये तावद् भिदिच्छिदिप्रभृतय एककर्मकास्ते कर्मणः कर्तृत्वविवक्षायामकर्मका इत्युच्यते। यथा वृक्षश्छिनत्ति। येतु द्विकर्मकास्ते सकर्मका इत्युच्यते। यथा—सुधां क्षीरसागरो मथ्नाति। इति एवं व्यवस्था अकर्मकेभ्यो भावे कर्तरि च लकारः। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रादितिभावः; तत्रभावे आह—पच्यते ओदनेन। यद्यपि पचेरपि द्विकर्मकत्वमस्त्येव तथापि तण्डुलानामविवक्षयाएककर्मकत्वमुक्तम्। एककर्मकाणां कर्मकर्तरि साधर्म्यं दर्शयितुमाह—कर्तरित्विति।

२७६६। कर्मवत् कर्मणा तुल्यक्रियः ॥३।१।८७॥

टी—। कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपद—चिण्-चिण्वदिटः स्युः। कर्तुरभिहितत्वात् प्रथमा। पच्यते ओदनः। भिद्यते काष्ठम्। अपाचि। अभेदि। ननुभावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न। लकारवाच्य एवहि कर्ता कर्मवत्। 'लिङ्याशिष्यङ्' (३४३४) इति द्विलकारकात् 'लः' इत्यनुवृत्तेः, भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति। किन्तु भाव एव। भेत्तव्यं कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च। सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यम्। कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरण-क्रियाया भेदमाश्रित्य व्यवहारः। 'कर्मणा' इति किम्?

करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साधुवसिरित्यादौ मा भूत्। किञ्च कर्तृस्थक्रियेभ्यो मा भूत्=गच्छति ग्रामः। आरोहति हस्ती। 'अधिगच्छति शास्त्रार्थः', स्मरति श्रद्दधाति वा। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया, नेतरत्र। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते॥ करोतिरुत्पादनार्थः। उत्पत्तिश्च कर्मस्था। तेन कारिष्यते घट इत्यादि। यत्नार्थत्वे तु नैतत् सिद्धेत्। ज्ञानेच्छादिवद् यत्नस्य कर्तृस्थत्वात्। एतेन—अनुव्यवस्यमानेऽर्थे इति व्याख्यातम्। कर्तृस्थत्वेन यगभावाच्छ्रनि कृते आलोपे च रूपसिद्धेः। ताच्छील्यादावयं चानश् न त्वात्मनेपदम्॥ 'सकर्मकाणां प्रतिषेधो वक्तव्यः' (वार्तिक)। अन्योऽन्यं स्पृशतः। अजा ग्रामं नयति। 'दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्'—(वार्तिक)।

An agent (कर्ता) becomes like an object (कर्म) (i.e obtains the operations laid down for a कर्म) when the action concerning the same कर्ता bears similarity with that lying within (the concern of) the कर्म. Thus this is a matter of transference of operations *(कार्यातिदेश), hence (as in

---

* Though there is no hard and fast distinction between कार्यातिदेश and शास्त्रातिदेश, yet the author insists on the former observing that the latter ultimately leads to the same. See also 'वेरणौ—' (2758) etc.

the case of कर्म or कर्मलकार i.e. कर्मवाच्य ) the operations such as यक् ( by 'सार्वधातुके यक्' —2756 ), आत्मनेपद ( by 'भावकर्मणोः'—2679 ), चिण् ( by 'चिण् भावकर्मणोः' 2758 ), चिण्वत् i.e चिणुद्भाव and इट् ( by 'स्यसिच—' 2757 ) will take effect in the case of कर्ता ( of कर्मकर्तृवाच्य ). As the कर्म of a कर्मलकार is in collocative connection ( सामानाधिकरण्य ) with the root and as it is expressed by तिङ् affix so also appears as the कर्त्ता—and therefore it ( कर्त्ता ) takes प्रथमा. Thus 'पच्यते—' The rice boils ( itself ) and 'भिद्यते—' the wood splits ( itself ). These are the cases of यक्. [ The meaning being 'the rice is being boiled' and 'the wood is being split'—these expressions are analogous to English ones viz—The house is building, the book is printing etc.—quasi-passive verbs ( passive in sense but active in use )]. अपाचि, अभेदि—चिण्. वृद्धि by 'अचो ञ्णिति' ( 254 ). ननु etc.—Here you cannot rejoin that as in the भाववाच्य the कर्त्ता is not expressed, so it will have द्वितीया on the strength of this अतिदेश ( 'कर्मवत्—' ) and not तृतीया. For such कर्त्ता as is expressed by the लकार ( verb ) is like कर्म. This is obtained from the अनुवृत्ति or carrying down of the letter लृ, which is elliptical for 'लः', out of the द्विलकारक ( having two लकारs ) rule—'लिङ्याशिष्यङ्'. The meaning is this :—Panini reads 'व्यत्ययो बहुलम्' ( 3. 1. 85 ), 'लिङ्याशिष्यङ्' ( 3. 1. 86 ) and 'कर्मवत् कर्मणा—' ( 3. 1. 87 ) of these combine the first two "व्यत्ययो बहुलम् लिङ्याशिष्यङ्", whence by 'अनुस्वारस्य ययि—' or 'झलो यमाम्—' ( 60 ) you get two लकारs in the second

rule which thus becomes two लकार-existing ( 'ल्लिङि—' ). Of these two लकारs ( ) one forms the rule 'लिङि—' and the other ( ल् ) is taken to be elliptical for 'लः' a genitive which is carried down to the next rule 'कर्मवत्—' so as to form the exposition 'लः कर्त्ता कर्मवत्'—or a कर्त्ता of ल् or लकार i.e. expressed by लकार is regarded like कर्म. Thus in the matter of भाव or affixes ( कृत्य etc) the presence of कर्तृ is not concerned. Hence it is that the application of कृत्य, क्त and खलर्थ affixes is wanting in the कर्मकर्तृवाच्य. But they apply in the case of भाव only, e.g. 'भेत्तव्यम्—'—It is to be split by । ननु etc— Well the कर्मस्थ क्रिया of पचि and भिदि are respectively the state of being boiled and the state of being split up into two ( on the part of ओदन—rice, and काष्ठ in order ) ; and this ( कर्मस्थक्रिया ) has now become कर्तृस्थ (पच्यते ओदनः—भिद्यते काष्ठम् ) and how analogous to that. True (i.e what you object is not shallow ) ; but the idea of analogy or similarity of action ( क्रियातुल्यत्वव्यवहारः ) proceeds ( प्रवर्त्तते) on the assumption of the difference between कर्मत्वसामानाधिकरण्य and कर्तृत्वसामानाधिकरण्य ( of the same i.e. action or क्रिया ) due to the distinction lying between the two stages ( अवस्था ) viz कर्मत्वावस्था and कर्तृत्वावस्था. The plain meaning is this ;—Granted that the क्रिया or action which was कर्मस्थ is now कर्तृस्थ and is therefore one with the same. But still it is also admitted on all hands, that the distinction between a कर्तृस्थ क्रिया and a कर्मस्थ क्रिया—is a distinction of appellation ( उपाधि ) ।

Thus although the action existing in the obj. is the same when transferred to the subj., yet the one differs from the other in respect of appellation or title. Hence the term 'तुल्यक्रियः' in the rule is indeed significant. Why say 'कर्मणा' तुल्यक्रियः—( bearing similarity with कर्मस्थ क्रिया )? This is to forbid कर्मवत्त्व of कर्ता in the cases of करण and अधिकरण where also similarity of action is expressed as in the previous examples, साध्वसिश्छिनत्ति etc. Moreover, this is also to forbid कर्मवत्त्व of कर्ता where the action exists in the कर्ता ( and not in the कर्म )। Thus in instances like 'गच्छति ग्रामः'—the village goes i.e. the village is arrived at with ease due to want of inconvenience or troubles such as thorns, roughness of the path etc., 'आरोहति हस्ती'—the elephant mounts i. e. is easily mounted and 'अधिगच्छति शास्त्रार्थः—'the sense of thesastras understands, remembers or esteems i.e the same is easily understood, remembered or esteemed ; here गमन, आरोहण etc exist in the कर्ता and not in the कर्मs—ग्राम, हस्ती etc. For the action is said to be existing in the obj. ( कर्मस्था क्रिया ) only where speciality i.e. a change effected by the action is perceived in the obj. as in the 'boiled rice' or in 'the split up wood' and not elsewhere i.e in the village reached or the elephant mounted etc. Because no change however is noticed to exist between a village reached and not reached as between rice boiled and not boiled. करोति or कृ means production ( and not effort or यत्न ), for production lies in the obj. ( and not effort ). Thus कारिष्यते घटः—

the pot will be produced—etc, are obtained. If however करोति would imply effort (as in Nyayasastra) we could not have forms like this ; as effort, like knowledge, wish etc—lies in the subj. and therefore cannot be the cause of transference of (यगाद्यतिदेश) यक्, आत्मनेपद etc sanctioned to a root in the कर्मवाच्य। करिष्यते is alt. of कारिष्यते ; similarly अकरिष्यत—अकारिष्यत etc, by 'स्यसिच्सीयुट्तासिषु—' (२७५७)। By this i.e—by the fact that ज्ञान exists in the कर्ता—we have explained the expression 'अनुव्यवस्यमानेऽर्थे' (of the author of खण्डन ?)—the subject i.e knowledge coming to a conclusion (hence the right significance is—the subject, due to absence of complexity etc) ; कर्तृस्थत्वेन etc—i.e अनुव्यवसायः or conclusion being existent in the कर्तृ (there is no chance of कर्मवद्भाव and thus) there is want of यक्, but यकार in 'स्य' is in connection with श्यन् (for षोऽन्तकर्मणि is दिवादि) which applying the ओकार (of षो or सो) elides by 'ओतः श्यनि' (२५१०) [cp. "ओलोपे रूपसिद्धिः"], and the form (अनुव्यवस्यति) is obtained. Then चानश् (directed by 'ताच्छील्य-वयोवचनशक्तिषु चानश्'—३१०९) comes in (in the sense of ताच्छील्य or it is his own nature) and the root is not आत्मनेपद so that शानच् may be added. The form if broken up stands thus—

(i) अर्थोऽनुव्यवस्यति।

(ii) अर्थेऽनुव्यवस्यमाने (भावे सप्तमी)।

Had there been यक् and आत्मनेपद the form would figure as 'अनुव्यवसीयमान' by 'घुमास्था—' (२४६२) due to कित्त्व of यक् and शानच् coming in due to आत्मनेपद by 'भावकर्मणोः' (२६७९)। This

'अनुव्यवस्यमानेद्र्यौ' is an instance of कर्मकर्तृवाच्य without कर्मवद्भाव। [ Here it is important to note that the rule 'कर्मवत्—' provides कर्मवत् for specially एककर्मक roots and not सकर्मक or द्विकर्मक roots. Hence Katyayana comes forward and enunciates a number of restrictive varttikas here and hereafter ]. 'सकर्मका-—णाम्—' ( varttika ). 'This has to be said that कर्मवद्भाव is wanting in the cases of सकर्मक roots ( i.e so far as some special cases are concerned ). For by 'सकर्मकाणाम्' is here meant the roots having as before double objects whereof (as previously said under 'प्राचेय' in the वृत्ति ) one becomes the subj. and the other remains. These द्विकर्मक or सकर्मक roots again do not always admit of कर्मवद्भाव of कर्ता। Thus 'अन्योऽन्यं स्पृशतः' supply the subj. देवदत्त: यज्ञदत्त: 'touch each other' i.e देवदत्त touches यज्ञदत्त who again touches the former. In this way the action of touchng on the part of देवदत्त is transferred to यज्ञदत्त in 'यज्ञदत्त: देवदत्तं स्पृशति'—where देवदत्त is कर्म and thus the act of देवदत्त's touching ( स्पर्शक्रिया ) is now कर्मस्थ for देवदत्त is a कर्म here ( in the second sentence ). Similarly when यज्ञदत्त first becomes the subj.—यज्ञदत्त: देवदत्तं स्पृशति and 'देवदत्त: यज्ञदत्तम्—' । Hence the कर्मस्थाक्रिया being transferred to कर्ता there appears कर्मवद्भाव by the rule 'कर्मवत् कर्मणा—' and this is barred here. This is the implication of the varttika here. 'अजा ग्रामम्—' The she—goat ( out of herself i.e easily ) leads herself to the village. This instance, however, as Nagesh obseves, is objectionable on the face of its and so to say being contrary to his own saying, cp'यत्र

कर्मणि...उपलभ्यते' (here)। For, althouth नयन or leading is dependent upon अजा ( she-goat ) which was previously obj. and is therefore कर्मस्थ, yet there does not follow any change on the part of the village ( also see Nagesha on the point ). 'दुहिपच्योः' —' ( varttika ). This is an exception to the former varttika 'सकर्मकाणाम्—', 'It has to be laid that कर्मवत्त्व of दुहि and पचि which are सकर्मक ( or द्विकर्मक ) is irregularly effected.'

मित—। कर्मवदिति। कर्मणेत्यनेन कर्मकारकस्था क्रिया लक्ष्यते। तदाह—कर्मस्थया क्रिययेति। 'कर्तरि शप्' (३।१।६८) इत्यतः कर्तरीत्यनुवर्तते। तच्च प्रथमार्थां विपरिणमय्य कर्तेति विशेष्योऽलभ्यते। तदाह—तुल्यक्रियः कर्तेति। कार्य्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशकार्य्यातिदेशयोः फलसाम्यात् शास्त्रातिदेशेनापि लक्ष्यं सिध्यति तथापि शास्त्रातिदेशस्यापि कार्य्यार्थत्वात् कार्य्यस्यैव मुख्यत्वेन कार्य्यातिदेश एवाश्रितः। कर्मवत्स्यादिति। सौकर्य्यातिशयं द्योतयितुमिति भावः। अतिदेशस्य फलमाह—तेनेति। 'सार्वधातुके यक्' (२७५६) इति यक्। 'भावकर्मणोः' (२६७८) इत्यात्मनेपदम्। 'स्यसिच्सीयुट्तासिषु—' (२७५७) इति स्यादौ चिण्वद्भावः, चिण्वद्भावसन्नियोगशिष्ट इट् चेति कर्मकार्य्याण्यत्र कर्मकर्तरि अतिदिश्यन्ते। कर्तुरभिहितत्वादिति—लिङा इति भावः। पच्यते ओदन इति फुत्कारप्रदानसन्तापनादिकर्तृव्यापारविशेषं विनापि विक्लित्तिरूपफलाश्रयो भवतीत्यर्थः। भिद्यते काष्ठमिति—कुठारघातादि पुरुषप्रयत्नातिशयं विनैव द्विधा भवतीत्यर्थः। अत्र यगात्मनेपदाद्युदाहर्तो। चिणि त्वाह—अपाचीति। एवमभेदीति। तत्करणाभावे तु 'पच्यते ओदनेन' 'भिद्यते काष्ठेने'ति भावे लकारो न स्यादिति सूत्रे कर्मवदित्युक्तम् इति विभावनीयम्। नन्विति—अयंभाव। कर्मवत्त्वं तावद् कर्मकर्तरि च कर्तुरतिदिश्यते। तत्र कर्मकर्त्तरि कर्त्तुरभिहितत्वात् प्रथमेत्युक्तम्। भावे त्वभिधानाभावाद् द्वितीयैवस्यात् कर्मवत्त्वान्न तृतीयेति। अस्मादतिदेशादिति—कर्मवद्-भावातिदेशादित्यर्थः। समाधिमाह—नेति। नायमाक्षेपः प्रसरतीत्यर्थः।

कुत इत्यत आह—लकारवाच्य इति। लकारेणोपस्थापित इत्यर्थः। तत्र प्रमाणमाह—'लिङ्याशिष्यङ्' (३४३४) इति द्विलकारकादिति। स्पष्टेयं रीतिः प्रकृतसूत्रे भाष्ये। अयमत्त्वचरार्थः। 'कर्मवत्—' (३।१।८७) इत्यतः प्राक् 'व्यत्ययो बहुलम्' (३।१।८५) 'लिङ्याशिष्यङ्' (३।१।८६) इति सूत्रद्वयं पठ्यते। तत्र संहितया पाठे सति 'व्यत्ययो बहुलंल्लिङ्याशिष्यङ्' इति भवति। अत्र 'अनुस्वारस्य ययि—' इति परसवर्णत्वलकारोपरिलद्वयं सम्पद्यते। असत्यामप्यसंहितायाम् अयरार्थावगमः सुलभ इति भाष्यम्। एवञ्च 'लिङ्याशिषि—' इति सूत्रं द्विलकारकं सम्पद्यते—द्वौ लकारौ यत्रेति विग्रहात्। तथा सति एको 'ल्' 'लिङि—' इत्यत्रान्वीयतेऽपरस्तु ल्, 'लः' इति षष्ठ्यर्थसम्पादकः। स एवेह 'कर्मवत्—' इत्यत्रानुवर्तिष्यते। ततश्च 'लः कर्ता कर्मवदि'त्यर्थः प्राप्तः। अत्र ल इत्यत्र वाच्यत्वं षष्ठ्या अर्थः। एवञ्च लवाच्यः अर्थात् 'लकारवाच्यः' कर्ता कर्मवदिति फलितमिति। नन्वस्त्वेवं तथापि प्रकृते किमायातमित्याशङ्क्याह—भावे प्रत्यये चेति। कर्तुरित्यि कर्तरि षष्ठी, अनुपस्थितेरित्यत्रान्वयः। तत्र भावस्यैव लकारवाच्यत्वं न तु कर्तुरिति भावः। एवमत्र निगमनमाह—अतएवेति। यद्यपि 'तयोरेव कृत्यक्तखलर्थाः' (२८३३) इति सूत्रेण च भावे कर्मणि कृत्यादिप्रत्यया भवन्ति तथापि 'लकारवाच्यस्यैव कर्मकर्तुः कर्मवद्विधानात् कर्मणि विहिता अपि कृत्यक्तखलर्था कर्मकर्तरि न भवन्ति'। तेषां लकारसंज्ञाविरहात्। भाष्ये तु 'भिन्नो घासः स्वयमेवे'ति क्तप्रत्ययेऽपि कर्मकर्ता न उदाहृतः। किन्तु भाव एवेति। एतेन कर्मणि विधानाभावो दर्शित इति न भ्रमितव्यम्। किन्तु तेषां लकारवाच्यत्वाभावादतिदेशोऽयं तत्र न प्रवर्तत इति बोध्यम्। भेत्तव्याः कुसूलाः, पाठ्यानीमानि पुस्तकानि लब्धव्यं फलमित्यादि प्रयोगदर्शनादित्यलम्। ननु पचिभिद्योरिति—क्रियानाम धात्वर्थः। तथाच फलनिष्पत्तिर्विक्लित्तिर्वा पाक इति यावत् पचेरर्थः। एवं द्विधाभवनं द्वैधीभावो भिदेरर्थः। सैवेति—कर्मस्था क्रियेति परामृश्यते। तत्तुल्येति—कर्मस्थक्रियातुल्येत्यर्थः। सत्यमिति। यद्यपि वास्तवभेदोऽत्र न विद्यते तस्या एव तत्रोपचारात् तथापि कर्मस्थक्रियत्व—कर्तृस्थक्रियत्वरूपोपाधिगत—

भेदोऽस्तीति दर्शयति—कर्मत्वकर्तृत्वे ते एव ये द्वे अवस्थे संस्थानविशेषौ धर्मविशेषौ वा तयोर्भेदः स एवोपाधिर्हेतुर्यस्य तादृशं तत्समानाधिकरणक्रियायाः कर्मत्वकर्तृत्वसमानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः क्रियातुल्यत्वव्यवहारः प्रवर्तत इत्यर्थः। एवञ्चावस्थाभेदेन क्रियाभेदात् कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति फलितमितिभावः। 'कर्मणा' इति किमिति—कर्मस्थक्रियया' इति किमिति तदर्थः। करणाधिकरणाभ्यामिति। करणेन तुल्यक्रिये कर्तरि 'साध्वसिश्छिनत्ति' इत्यत्र अधिकरणेन तुल्यक्रिये कर्तरि 'स्थाली पचति' इत्यत्र च कर्मवद्भावो यथा न स्यादित्येवमर्थं सूत्रे कर्मणेति पदमुपन्यस्तमिति भावः। कर्तृकरणाभ्यामिति 'तुल्यार्थैरतुलोपमाभ्या'मिति तृतीया, कर्मणेतिवत् करणस्थया अधिकरणस्थया क्रियया इति तु नार्थः। असिस्थालीस्थतादृशक्रियाकृतवैलक्षण्याभावात्। अत एवान्तरमाह—क्रिये'ति। तेनैतदतिव्याप्तिवारणाय कर्मणेति इति भावः। कर्तृस्थक्रियमुदाहरति—गच्छतीत्यादि कर्मवत्त्वाभावाद् यगात्मनेपदादयोऽत्र नेति बोध्यम्। अत्र क्रमेण सूत्रेण प्राप्त्याश्रयः, आरोहणाश्रयः, अधिगमविषयः, स्मृतिविषयः, श्रद्धाविषयश्च भवतीत्यर्थः। अधिगच्छतीत्यस्य उत्तरार्द्धं तु—'यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदे'ति। ननु ग्रामादीनां कर्मकर्तृत्वाद् गम्यादीनां च प्रापणार्थकत्वेन कर्मस्थक्रियत्वादत्र कथं शबादिरेव विहितो न तु यगादयः कर्मवद्भावात् तेषामेवात्र न्याय्यत्वादित्याशङ्का—कर्मवद्भावोऽत्र नास्तीति दर्शयिष्यन् कर्मस्थक्रिययोः शैलीमाह—यत्र कर्मणीति। क्रियाकृत इति। पचिभिद्यादिकृत इत्यर्थः। नेतरत्रेति। नान्यत्र विषये इत्यर्थः। वैलक्षण्यं वैसादृश्यम्, तच्च विकार उत्पत्तिर्वा। अत्रेदमवधेयम्—कर्म तावत् सप्तविधम्। तत्र ईप्सिततमम् कर्म त्रिविधम् अनीप्सितादि तु चतुर्विधम्। तथाचोक्तं हरिणा—

"निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्॥
औदासीन्येन यत् प्राप्तं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातम् यद्यच्चाप्यन्यपूर्वकम्॥" इति

एषां विवृतिश्च तत्रैवोक्ता। तथाहि—

"सदसज्जायते यद्वा जन्मना यत् प्रकाश्यते।
तन्निर्वर्त्यं विकार्यन्तु द्विधा कर्म व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते॥" इति।

घटं करोतीति निर्वर्त्यम् घटस्य प्रागसद्भूतत्वात्। काष्ठं भस्म करोतीति प्रकृत्युच्छेदसम्भूतम्, सुवर्णं कुण्डलं करोतीति गुणान्तरोत्पत्तिसम्भूतम् इति द्विविधं विकार्यम्। ग्रामं गच्छतीति प्राप्यम्। घटं पश्यतीति उदासीनम्। विषं भुङ्क्ते इति अनीप्सितम्। गां दोग्धीति संज्ञान्तरैरनाख्यातम्। क्रूरमभिक्रुध्यतीति अन्यपूर्वकम। एवं स्थिते निर्वर्त्ये विकार्ये चैव कर्मणि कर्मवद्भाव इष्यते, न तु प्राप्येऽन्यत्र वा कर्मणि; पूर्वत्र क्रियाकृतविशेषस्योपलम्भादुत्तरत्र तस्यानुपलभ्यत्वाच्चेति व्यवस्थितम्। क्रियाकृतविशेषाणामनुपलभ्यमाने प्राप्यत्वस्य सिद्धिरिति सिद्धान्तात्। न हि 'दृश्यते घटः स्वयमेव' तथा 'गम्यते ग्रामः स्वयमेव' इत्यत्र च घटोऽयं केनचिद् दृष्टस्तथा ग्रामोऽयं केनचिद्गत इति शक्यं कर्मदर्शनेन क्रियाकृतविशेषमवगन्तुम्। तथाचोक्तम्—

"निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणीति सिद्धान्तोऽत्र व्यवस्थितः॥"

इत्यास्तां तावत्। प्रकृतमनुसरामः। अथेदानीं नैयायिकसम्मतं करोतेर्यत्नार्थत्वं निराकरोति—'करोति रुत्पादनार्थ' इत्यादिना। एतच्च 'भूवादयो धातवः' इति सूत्रे भाष्ये स्पष्टम्। उत्पत्तिश्च कर्मस्थेति। उत्पत्तौ कर्मणो घटस्यैवोपलभ्यमानत्वादनुत्पत्तौ तस्यैवानुपलभ्यमानत्वाच्चेति भावः। उदाहरति—तेनेति। कर्मवद्भावाद् 'स्यसिच—' (२७५७) इति स्ये चिण्वदिड्भावपक्षे इदम्। 'ऋद्धनोः स्ये' (२३६६) इतीट्। चिण्वदिटि तु कारिष्यत इति। यकि—क्रियते घटः स्वयमेव। तासि—कारिता—

कर्ता। सिचि—अकारिष्ट—अकृत। सीयुटि—कारिषीष्ट—कृषीष्ट। लृङि—अकारिष्यत—अकारिष्यतेति। नैतदिति—कर्मवत्त्वमित्यर्थः। कर्तृस्थत्वादिति। कर्तृस्थक्रियेभ्यः कर्मवत्त्वनिषेधादितिभावः। एतेनेति—शानस्य कर्तृस्थत्वाभ्युपगमेनेत्यर्थः। अनुव्यवस्यमानेऽर्थे इति—खण्डनकारवचनमेतत्। अर्थे ज्ञानरूपविषये अनुव्यवस्यमाने (स्वयमेव) निश्चयविषयतामापद्यमाने इत्यर्थः। व्याख्यातमिति—प्रतिपादितमित्यर्थः। अयमभिप्रायः—कर्तृस्थक्रियेभ्यः कर्मवद्भावाभ्युपगमे सति अत्र 'अनुव्यवसीयमाने' इत्येव स्यादुयगात्मनेपदयोः कर्मकार्ययोर्दुर्वारत्वात् ('अनुव्यवसीयतेऽर्थः' (कर्मकर्तरि लटि) ततः क्रियान्तरलक्षणविवक्षायाम् शानच्प्रत्यये—'अनुव्यवसीयमानेऽर्थे इति स्यात् यकः किन्तु न 'दुमास्था—' (२४६२) इति ईत्वस्यापिसत्त्वात्)। कर्मवत्त्वाभावं दर्शयितुम् 'अनुव्यवस्यमाने' इति स्वयमेव साधयति—यगभावाच्छानि कृते इति। षोऽन्तकर्मणि इति दैवादिको धातुः। ततः कर्तृस्थत्वेन यगभावाच्छान्। ओलोपे इति—'ओतः श्यनि' (२५१०) इत्यनेनेत्यर्थः—[ अत्रास्माकं मूले "आलोपे" इति मुद्रणप्रमादः ]। 'एवश्चानुव्यवस्यति अर्थः' इति लटि रूपम्। 'ततो 'यस्य च भावेन—' इति सप्तमीविवक्षायाम् 'ताच्छील्यवयोवचनशक्तिषु चानश्' (२१०९) इति परस्मैपदिभ्योऽपि चानश् विधानात् तस्य मुगागमे 'अनुव्यवस्यमाने' इति लभ्यते। न त्वात्मनेपदमिति—अतो नापि शानजित्यर्थः। अत्र कर्मकर्तरि सत्यपि कर्मवद्भावो नास्तीति दर्शितमिति भावः। तथाहि अनुव्यवसायो निश्चयोऽध्यवसाय इत्यर्थः। तत्र कर्मकर्ता='अर्थः'। तस्यैव निश्चीयमानत्वात् तस्मिंस्तु अर्थेऽपि कर्मकर्तरि अनुव्यवसायरूपक्रियाकृतं वैलक्षण्यम् नोपलभ्यते। न हि ज्ञातेऽज्ञाते वा विषये केनचित् कदाचिद् भेदोलक्षितः किन्तु तादवस्थ्यमेव। एवञ्च अनुव्यवसायस्य कर्तृस्थत्वमेव न तु कर्मस्थत्वम्। ततश्च कर्तुः कर्मस्थक्रियातुल्यक्रियत्वाभावान्नात्र यगादयः प्राप्नुवन्ति किन्तु शबादय एवेति। सकर्मकाणामिति—वार्तिकमिदम्। सकर्मकाणां धातूनां कर्मकर्तरि कर्मवद्भावप्रतिषेधो वक्तव्य इत्यर्थः। सकर्मकाणामित्यनेन द्विकर्मकधातूनां ग्रहणमित्युक्तम्—'कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः' इत्यत।

द्विकर्मकाणां हि एकस्य कर्मणः कर्तृत्वसंज्ञायाम् अन्यस्य कर्मणस्तादवस्थ्ये च सकर्मकत्वसिद्धेः। उदाहरति—अन्योऽन्यमिति—अत्र माधवहरदत्ताविति ( यज्ञदत्तदेवदत्तप्रभृति च) कर्तृपदं योजनीयम्। वाक्यविन्यासे तावदयमर्थः। माधवो हरदत्तं स्पृशति। हरदत्तश्च माधवम्। एवम् कर्तृविपर्यासेऽपि स एवार्थः। उभयथापि उभावप्यत्र कर्तारौ कर्मभूतौ च। स्पृशिश्च संयोगार्थकः संयोगानुकूलव्यापारार्थको वा। स चोभयत्र समानः। ननु च क्रियाभेदे सत्येव कर्मवद्भाव इष्यते। अत्र तु नास्ति सः। स्पर्शनक्रियाया एकत्वादिति चेत्। सत्यम्। स्पर्शनक्रियाया एकत्वेऽपि—व्यक्तिभेदाद् भेदमाश्रित्य व्यवहारः। एवञ्च माधवनिष्ठां स्पर्शक्रियां प्रति हरदत्तस्य कर्मत्वम्। तथा हरदत्तनिष्ठामपि स्पर्शक्रियां प्रति माधवस्य कर्मत्वम्। एवं हरदत्तसंयोगानुकूलव्यापारं प्रति माधवस्य कर्तृत्वम्। माधवसंयोगानुकूलव्यापारं प्रति हरदत्तस्य कर्तृत्वम्। एवञ्च उभयोः कर्मत्वकर्तृत्वसद्भावादेकस्मिन् कर्मणि कर्तरि वा या स्पर्शक्रिया सैव अपरस्मिन् कर्मणि कर्तरि चोपचर्य्यते। ततश्च कर्मवद्भावः प्राप्नोत्येव। व्यक्तिभेदाद् भेदमाश्रित्य व्यवहारात् क्रियातुल्यत्वाच्चतेरिति यगादौ प्राप्तेऽयं प्रतिषेध इति बोध्यम्। एतेनापरितुष्यन्नुदाहरणान्तरमाह—अजायामिति। नयतिः प्रापणार्थकः। स्वयमेव प्राप्नोतीत्यर्थः। वस्तुतस्तु प्राप्तेऽप्राप्ते वा यामे कर्मणि क्रियाकृतविशेषानुपलम्भादेतच्चिन्त्यम्। अतएव भाष्ये 'अन्योऽन्यमाश्लिष्यतः, अन्योऽन्यं स्पृशतः' इत्याद्येव उदाहृतम् इति शब्देन्दुशेखरे स्पष्टम्। दुहिपच्योरिति—वार्तिकान्तरम्। दुहिपच्योः पूर्वोक्तदिशा एकस्य कर्मणः कर्तृत्वविवक्षायाम् अन्येन कर्मणा सकर्मकत्वात् पूर्ववार्तिकेन कर्मवद्भावनिषेधे प्राप्ते बहुलं विध्यर्थमयमारम्भः।

२७६७। न दुहस्नुनमां यक्चिणौ ॥३।१।८९॥

दी—। एषां कर्मकर्तरि यक्चिणौ न स्तः। दुहेरनेन यक एव निषेधः। चिण्तु विकल्पिष्यते। शप्, लुक्। गौः पयो दुग्धे।

यक् and चिण् are not employed after these roots दुह्, स्नु and

नम् in the कर्मकर्तृवाच्य। This rule prohibits यक् only from being appointed after दुहि but चिण् will have optional application after the same ( दुहि ) followed by the word त by the rule 'दुहश्च' (२७६९) infra। शप्लुक् i.e the विकरण शप् due to the prohibition of यक् comes in and next disappears by 'अदिप्रभृतिभ्यः शपः' (२४२३) as दुह् is अदादि ; 'गौः पयः—' The cow gives milk out of herself i.e is being milked with ease. As गो takes प्रथमा in the कर्मवाच्य by गौणे कर्मणि दुह्यादेः—' so it does in the कर्मवाच्य also दुग्धे—यक् only is wanting and not आत्मने also cp.—also—स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' ( किरात—and our notes there, also compare our notes under 'स्वयं प्रणमते' Sisu II. sl. ५० where नम् has कर्मकर्तृवाच्यप्रयोग )।

मित—। न दुहेति। 'अचः कर्मकर्तरि' (३।१।६२) इत्यतो मण्डूकप्लुत्या कर्मकर्तरीत्यनुवर्तते। तदाह—एषां कर्मकर्तरीति। अनेनेति—'न दुह—' इति सूत्रेणेत्यर्थः। चिण् तु विकल्पिष्यत इति—'दुहश्च' (२७६९) इत्यनेनेत्यर्थः। चिण् तु विकल्पेनेष्यत इत्यपि पाठः। शप्, लुगिति। यग्निषेधादादादिकत्वाद 'अदिप्रभृतिभ्यः शप' इति लुक्। आत्मनेपदम्। गौः इति। सुखेन पयस्त्यजतीत्यर्थः। 'गौणे कर्मणि दुह्यादेः—' इत्युक्तत्वात् कर्मकर्तर्यपि गौणकर्मण एव कर्तृसंज्ञा। एतेन 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी' इति व्याख्यातम्। स्नुनमोरुदाहरणम् 'तपः—' (२७७१) इत्यत्र वक्ष्यते।

२७६८। अचः कर्मकर्तरि ॥३।१।६२॥

दी—अजन्ताच्च्लेश्चिण्वा स्यात् कर्मकर्तरि तशब्दे परे। अकारि—अकृत।

चिण् is placed optionally in the room of च्लि coming after

an अजन्त root when the word त follows in the कर्मकर्तृवाच्य। Thus अकारि ( चिण् )—अकृत ( without चिण्)—elision of स् by ह्रस्वादङ्गात्।

मित—। अच इति। 'च्लेः सिच्' (३।१।४४) इत्यतश्च्लेरिति, 'चिण् ते पदः' (३।१।६०) इत्यतश्चिण्याति चानुवर्तते। 'दीपजन—' (३।१।६१) इत्यतोऽन्यतरस्यामिति च। तदाह—अजन्तादिति। अकारि इति। घटः स्वयमेवेति शेषः। अचः किम्? अभेदिष्टेव। कर्मकर्तरि किम्? कर्मणि 'अकारि घटः कुलालेन' इत्येव।

२७६८। दुहश्च ॥३।१।६३॥

दो—। अदोहि। पक्षे क्सः। 'लुग्वा—' (२३६५) इति पक्षे लुक्। अदुग्ध—अधुक्षत। उदुम्बरः फलं पच्यते। 'सृजियुज्योः श्यंस्तु' (वार्तिक)—अनयोः सकर्मकयोः कर्ता बहुलं कर्मवद् यगपवादश्च श्यन्वाच्य इत्यर्थः। 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्' (वार्तिक)। सृज्यते स्रजं भक्तः। श्रद्धया निष्पादयतीत्यर्थः। असर्जि। युज्यते ब्रह्मचारी योगम्। 'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' (वार्तिक)। भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः। अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। गिरते। अगीर्ष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यन्तर्गणः। चिकीर्षते कटः। अचिकीर्षिष्ट। इच्छायाः कर्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियत्वम्।

चिण् optionally replaces च्लि coming after दुह् also when the word त follows in कर्मकर्तृवाच्य। Thus, अदोहि—add गौः पयः स्वयमेव

to it. पक्षे i.e when चिण् is wanting there appears क्स by 'शल इगुपधात्—' ( २३३६ ) which ( क्स ) also being optional by 'लुग्वा दुह—' ( २३६५ ) we have अदुग्ध ( क्सलोप ) and अधुक्षत ( क्स )। दुह् of the varttika 'दुहिपच्योः—' under 'कर्मवत्—' ( २०६६ ) is here instanced and पचि is being instanced by 'उदुम्बरः—'। In the active form it stood—कालः ( time ) उदुम्बरं फलं पचति where 'उदुम्बरम्' is the Indirect obj. or गौणकर्म and it therefore being कर्ता in कर्म-कर्तृवाच्य there takes place कर्मवद्भाव। 'सृजियुज्योः—' ( varttika. ) This has to be said that the कर्ता of these two सकर्मक ( द्विकर्मक ) roots becomes irregularly like कर्म and श्यन् supersedes यक्'। 'सृजेः—' ( varttika )—'This has also to be said that the above injunction of कर्मवद्भाव and श्यन् takes place only when the agent is in a respectful posture.' Thus—'सृज्यते—' i.e makes or performs the garland with ( humble ) respect. Here the sentence makes an active voice. Thus when श्रद्धा is wanting it will figure as 'सृजति स्रजं भक्तः' (without यक् or श्यन् for the root is तुदादि (सृज विसर्गे) and not दिवादि। 'युज्यते—' Here ब्रह्मचारी is कर्मकर्ता for in the active voice it was obj.—'योगः ब्रह्मचारिणं युनक्ति' ( the the root is रुधादि and not दिवादि ) or penance leads the ascetic to perception of self. Thus 'युज्यते—' means—The ascetic out of his own accord performs the penance or the perception of self ; cp—'योगश्चित्तवृत्तिनिरोधः' ( पातञ्जलयोगसूत्र )। Here also श्यन् and कर्मवद्भाव take place. 'भूषाकर्मकिरादिसनाम्—' ( varttika ). It has to be said that 'कर्मकार्य's such as यक् and चिण् as also चिण्वदिट् are not employed after roots expressing embe-

llishment, roots belonging to किरादि class and roots in सन् excepting that they will have आत्मने. endings only.; Thus 'अल'—' the maid decorates ( her person ) herself. अलमकृत—चिण् being wanting सिच् comes in which again is dropped by 'ह्रस्वादङ्गात्' ( २३६९ )। अवकिरते etc.—The elephant sprinkles water out of himself. The किरादि class consists of five roots 'कॄ गॄ, दृ धृ and प्रच्छ्' and it ( किरादि ) is included under तुदादि ; mark the atmanepada in each case—अलङ्कुरुते, अलमकृत, अवकिरते, अवाकीर्ष्ट etc. 'चिकीर्षते—' here add स्वयमेव। कटं कर्तुमिच्छति—चिकीर्षते कटः स्वयमेव। Here although the wish lies in the agent and not in the obj. yet it is considered to be lying in the obj. in view of the verb करोति ( which signifies उत्पादना production of the कट or mat— the obj. ).

मित—। दुहश्चेति। 'अचः कर्मकर्तरि' ( ३।१।६२ ) इत्यतोऽच इतिवर्ज्यं सर्वमनुवर्तते। तेन 'दुहेश्च्लेश्चिण्वा स्यात् कर्मकर्तरि त शब्दे परे' इति सूत्रार्थः। तत्र चिण्पक्षे—'अदोहि गौः पयः स्वयमेवे'त्युदाहरणम्। चिणभावे आह—पक्षे क्स इति। 'शल इगुपधात्—' ( २०३६ ) इत्यनेनेति भावः। पक्षे लुगिति। क्सस्येति बोध्यम्। तत्र क्सलुकि—अदुग्ध इति। अन्यत्र अधुक्षत। प्रक्रिया अदादावुक्ता। दुहिपच्योरिति वार्तिकोक्तदुहिरुदाहृतः। इदानीं पचिमुदाहरति—उदुम्बरः फलमिति। कालः उदुम्बरं फलं पचति ( कर्तरि )। कालेन उदुम्बरः फलं पच्यते ( कर्मणि )। उदुम्बरः फलं पच्यते ( स्वयमेव )—कर्मकर्तरि। अत्र गौणकर्मण उदुम्बरस्य कर्तृत्वविवक्षायाम् कर्मवद्भावाद् यगादयः। न च फलेन प्रधानकर्मणा सकर्मकत्वात् 'सकर्मकाणां प्रतिषेध' इति वार्तिकात् कथं कर्मवत्त्वमिति वाच्यम्। 'दुहि पच्योः—' इति वार्तिकेऽस्य बहुलविधानात्। एतच्च भाष्ये पचेर्द्विकर्मकत्वेनापरिगणनात् एककर्मकत्वेन 'उदुम्बरः फलं पचती'तिस्थिते 'कर्मवत्—' इत्यस्याप्राप्तौ 'उदुम्बरः

फलं पच्यते' इत्ययुक्तमिति नैव चोदनीयम्। दुहिपच्योरिति वार्तिके बहुलग्रहणात्। सृजियुज्योरिति वार्तिकमिदम्। पूर्ववार्तिकाद्बहुलमित्यनुवर्तते तदाह—अनयोरित्यादि तत्र सृजेर्विशेषमाह—'सृजेः—' वार्तिकान्तरमिदम्। श्रद्धोपपन्ने इति। श्रद्धायुक्ते मुख्ये कर्तर्य्येवोक्तविधिः प्रवर्तते इति भाव इति नागेशे स्पष्टम्। सृज्यत इति स्वयमेवेतिशेषः। अत्र कर्तरि लकारः। अतएवाप्राप्तविधिरयं। कर्मवत्त्वेऽपि यक् न किन्तु श्यन्नेव। न च—सृजेर्दैवादिकत्वाद् यकि अप्राप्ते श्यन् स्यादेवेति न विधेयमिति वाच्यम्। अत्रसृजेस्तौदादिकत्वात्। श्रद्धयेति—तदभावे तु 'सृजति—' इत्येव न तु श्यन् नापि यक्। एतेन 'श्रद्धायुक्ते कर्तरि तु यगेव' इति परास्तम्। युज्यते—इति। कर्तरि तावत् 'युनक्ति योगी ब्रह्मचारिणम्' इति। योगश्चित्तवृत्तिनिरोधः इति पातञ्जलसूत्रम्। तेनात्मदर्शनेन योजयतीत्यर्थः, तस्यचित्तवृत्तिनिरोधफलकत्वात्। अतएव क्रियायाः कर्तृस्थत्वेन कर्मवत्त्वाप्राप्तेऽयं विधिः। अत्रापि यगपवादः श्यन्। धातुस्तु रौधादिक एव न दैवादिकः। युज्यते—इत्यस्य योगमनपेक्ष्य ब्रह्मचारी स्वयमेव आत्मदर्शनेन युज्यत इत्यर्थः। 'भूषाकर्म—' इति—वार्तिकम्। अर्थमाह—भूषावाचिनामिति। कर्मशब्दः क्रियापरः। यक्चिणौ चिण्वदिट् च नेति। अन्यत्रात्मनेपदादित्यस्य विवरणमेतत्। आत्मनेपदं विहायान्यकर्मकार्यं नेति भावः।- अतएवात्मनेपदत्वं दर्शयति—अलंकुरुते इति। अत्र यग् न। अन्यप्रयत्नं विना स्वयमेव इति शेषः। अत्र भूषादीनां क्रमेणोदाहरणम्। अवमक्त—अव क्षिप्। एवमन्यत्र किरादयः कॄ, गॄ, दृ, धृ प्रच्छ इति। तुदाद्यन्तर्गणः—तुदादौ पठित इत्यर्थः। आद्रियत इति यद्यपि शे यकि च रूपं तुल्यम्। सोऽपि श एव न यक्। निषेधात्। चिकीर्षते कट इति—कटं चिकीर्षतीति कर्तृलकारः। ननु 'चिकीर्षतीत्यस्य कर्तुमिच्छतीत्यर्थात् इच्छायाश्च कर्तृस्थत्वात् कर्मस्थक्रियात्वाभावेन कथं कर्मवद्भावयगादय इत्याशङ्क्याह—इच्छायाः कर्तृस्थत्वेऽपीति। करोतिक्रियापेक्षमिति—तस्य सम्पादनार्थकत्वात् कर्मणः 'कट' इत्यस्य एव चोत्पद्यमानत्वादिति भावः।

२७७०। न रुधः॥३।१।६४॥

टी—। अस्मात् च्लेश्चिण्न। अवारुद्ध गौः। कर्मकर्तरी-त्येव। अवारोधि गौर्गोपेन।

मित—। प्राग्वदनुवृत्तिः। स्पष्टम्।

२७७१। तपस्तपःकर्मकस्यैव ॥३।१।८८॥

टी—। कर्ता कर्मवत् स्यात्। विध्यर्थमिदम्। एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिणः। तप्यते तापसस्तपः। अर्जयतीत्यर्थः। 'तपोऽनुतापे च' (२७६०) इति चिण्निषेधात् सिच्। अतप्त। 'तपःकर्मकस्य' इति किम्? उत्तपति सुवर्णं सुवर्णकारः। 'न दुहस्नुनमां यक्चिणौ' (२७६७)—प्रस्नुते। प्रास्नाविष्ट—प्रास्नोष्ट। नमते दण्डः। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः। यक्चिणोः प्रतिषेधे 'हेतुमण्णिश्रिब्रूञामुपसंख्यानम्' (वार्तिक)। कारयते। अचीकरत। उच्छ्रयते दण्डः। उदशिश्रियत। चिण्वदिट् तु स्यादेव। कारिष्यते। उच्छ्रायिष्यते। ब्रूते कथा। अवोचत। भारद्वाजीयाः पठन्ति—'णिश्रन्थिग्रन्थिब्रूञात्मनेपदा-कर्मकाणामुपसंख्यानम्' (वार्तिक)। पुच्छमुदस्यति उत्-पुच्छयते गौः। अन्तर्भावितण्यर्थतायाम्—उत्पुच्छयते गाम्। पुनः कर्तृत्वविवक्षायाम्—उत्पुच्छयते गौः। उदपुपुच्छत। यक्-चिणोः प्रतिषेधाच्छप्चङौ। श्रन्थिग्रन्थ्योराष्टमीयत्वात्सिजभाव-पक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। श्रन्थति मेखलां देवदत्तः। ग्रन्थते ग्रन्थः। अग्रन्थिष्ट। श्रन्थते। अश्रन्थिष्ट। क्रैयादिकयोस्तु ग्रथ्नीते ग्रथ्नीते स्वयमेव। विकुर्वते सैन्धवाः। वल्गन्तीत्यर्थः।

'वेः शब्दकर्मणः' ( २७०७ ) 'अकर्मकाच्च' ( २७०८ ) इति तङ्। अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे—विकुर्वते सैन्धवाः। व्यकारिष्ट। व्यकारिषाताम्। व्यकारिषत। व्यकृत। व्यकृषाताम्। व्यकृषत।

The agent or कर्ता of the root तप् becomes like object or कर्म when तप् has got तपस् or penance for its object. This rule enjoins operation ( विध्यर्थ ), but does not restrict the same. Thus the followers of वृत्ति ( काशिका ) hold that the word तप in the rule is superfluous. For the sentence तप्यते तापसस्तपः—The ascetic acquires penance—has तापस for its कर्ता which was कर्म in the active form—तपति तापसं तपः = penance pains (?) the hermit—and thus although it makes तापस the कर्मकर्ता yet it cannot have कर्मवद्भाव and यक् etc, as तप both affords different meaning in its diff. stages here and is सकर्मक now and thus falls under the prohibition 'सकर्मकाणाम्—' (varttika), nor can 'कर्मवत् कर्मणा—' (2766) provide for it, as it (कर्मवत्—) is concerned with सकर्मक roots ( i.e. roots having one obj. only in the active form now turned अकर्मक in कर्मकर्तृवाच्य )। It is therefore evident that the rule is an injunction and not restriction. भतप्—सिच् disappears by 'झलोझलि' ( 2281' ). उत्तपति सुवर्णम्—The goldsmith heats gold—here no कर्मवद्भाव etc. follow, for तपः the obj. is wanting here. Now the author illustrates the rule 'न दुहस्नुनमाम्—' whereof दुह् has been done with. प्रस्नुते ( गौः स्वयमेव )—'The cow out of herself—is anxious for milking'. Here 'न दुह—' bars यक् which was due by 'कर्मवत्—' as the

sentence in the active stage was 'वत्सः प्रस्नौति गाम्' or 'the calf causes the cow eager of being milked' whence it is clear that 'गौः' (above) is कर्मकर्ता। प्रास्नाविष्ट—want of चिण् by 'न दुह—' but चिण्वद्भाव and इट् appear by 'स्यसिच्—' (2757). प्रास्नोष्ट—सिच् and गुण only for वलादिलक्षण इट् is barred by 'स्नुक्रमोरनात्मनेपद-निमित्ते' (2323). The root नम् to bow down (प्रह्वीभावे) being intransitive there was no chance of its being enlisted in 'न दुह्—' whereof दुह् and स्नु are transitive. Thus नम् is here taken to be 'impregnated with the sense of causality' (अन्तर्भावित-ण्यर्थः). Hence कर्मवद्भाव being due by 'कर्मवत्—', यक् and चिण् after it (नम्) due to same is barred by 'न दुह।' नमते दण्डः (स्वयमेव)—; also compare "स्वयं प्रणमते" in Sisu II. sl. 50 and our notes there. In the active form it was नमति दण्डम् i. e. नमयति। अनंस्त with सिच् due to want of चिण्। In the matter of prohibition of यक् and चिण् under 'न दुह—', causative (ण्यन्त) roots, श्रि and ब्रू are to be enlisted so that the prohibition of यक् and चिण् apply to them also. Thus हेतुमण्णिच्—कारयते here add देवदत्तः स्वयमेव. It is thus (i) करोति देवदत्तः (ii) कारयति देवदत्तं यज्ञदत्तः (iii) कारयते देवदत्तः स्वयमेव—Devadatta performs himself. अचीकरत—want of चिण् hence चङ् by 'णिश्रिद्रुस्रुभ्यः—' (3312) comes in ; श्रि—उच्छ्रयते (उद्+श्रिते) उदशिश्रियत—चङ्। चिण्वदिट् तु etc i.e 'स्यसिच्—' (2757) being beyond the sphere of this prohibition we can safely have कारिष्यते etc ; ब्रू—ब्रूते कथा ie. the story (कथा) relates itself (active—कथां ब्रवीति) ; अवोचत—by 'ब्रुवो वचिः' (2453) and अङ् by 'अस्यतिवक्ति—' (2438) and then 'वचउम्' (2454). The followers of भरद्वाज read

'णिश्रन्थि ग्रन्थि—' in place of the varttika 'हेतुमच्छिश्रि—' as above. This णि is general and stands for both णिच् and णिङ् and not for हेतुमण्णिच only. पुच्छमुदस्यति—throws or holds up the tail—here we have णिङ् by 'पुच्छादुदसने' ( वार्तिक ). Now he explains the formation—by अन्तर्भावितण्यर्थतायाम्—etc. i.e. उत्पुच्छयते गौः(स्वयमेव) when broken up stands first as उत्पुच्छयते गाम् ( गोपालः—subj. ) due to अन्तर्भावितण्यर्थत्व ( or bearing a causative sense within ) of उदस्यति which thus becomes उदासयति. Here गाम् the obj. becomes next the subj. in उत्पुच्छयते गौः ( स्वयमेव ) । उदपुपुच्छत—by चङ् as before ; श्रन्थि and ग्रन्थि being read under घटादि class ( cp—चुरादि class ) which have optional णिच् by 'आधृषाद्वा' ( गणसूत्र ), णिजभावपक्ष only of them is meant here ( for otherwise they would have been already accepted by णि in the varttika 'णि श्रथि—' ) ; देवदत्त stands subj. to both ग्रन्थति and श्रन्थति । ग्रन्थते ग्रन्थः the book is being composed easily ; similarly श्रन्थते मेखला—the ornament of the waist is loosened with ease. क्र्यादिकयोस्तु—i e. when they are taken to be क्र्यादि they become श्रथ्नीते etc. due to श्ना in the place of यक् । ... ... आत्मनेपद—विकुर्वते—' i e. horses are neighing. Here the previous form is विकुर्वन्ति सैन्धवान् सादिनः, where विकुर्वते means शब्दं कारयन्ति or शब्दाययन्ति due to अन्तर्भावितण्यर्थ of वि+कृ. Thus in 'विकुर्वते—,' सैन्धवाः becomes कर्मकर्ता and consequenly यक् is prohibited—(See Tika)व्यकारिष्ट—सिच् and चिण्वदिट् but not चिण ; similarly व्यकारिषाताम् व्यकारिषत । But चिण्वदिट् being optional by 'स्यसिच्—' (2757) we have व्यकृत, व्यकृषाताम् etc. also in the इडभावपक्ष ;—सिच् in the latter case is dropped by the rule 'ह्रस्वादङ्गात्' ( 2369 ).

मित—। तप इति। अत्राद्यं 'तपः' इति षष्ठ्यन्तम्। तपधातोरिति तदर्थः। द्वितीय 'तपः' इति तपस्शब्दः कृच्छ्रचान्द्रायणाद्युपवासपरः। तपः कर्म यस्य स तपः—कर्मकस्तस्येति विग्रहः। 'कर्तरि शप्' इत्यतः कर्ता इति पूर्ववद् विपरिणम्य (विपरिणमय्य इत्यर्थः) व्याख्येयम्। तदाह—कर्तेति। तपः कर्मकस्यैव तपधातोरिति प्राक् योजनीयमिति शेषः। विध्यर्थमिदमिति। इदं 'तपः—' इति सूत्रम् विध्यर्थम् कर्मवत्त्वविधानार्थमित्यर्थः। तेन एवकारात् नियमार्थमिदमिति न भ्रमितव्यमित्याह—एवकारस्तु व्यर्थ इति। भाष्यमते तु नियमार्थमेवेदमुदाहृतश्च तत्रैव 'तेनेहन—उत्तपति सुवर्णं सुवर्णकार' इति। स्पष्टमेतच्छब्देन्दुशेखरे। विध्यर्थत्वं दर्शयति। तप्यते तप इति। कर्तरि तावत्—तपति तपस्तापसम् इति। दुःखयतीत्यर्थः। ततः तप्यते तपः तापसः—अर्जयतीत्यर्थः। ततस्तपेरर्जनमर्थः। एवञ्च तपेरर्थभेदात् सकर्मकत्वाऽऽप्राप्तेरयं विधिरिति हृदयम्। अतव्याख्यानात् श्वादितपेर्ग्रहणम्। अतप्त इति तपस्तापसः इति शेषः। 'झलो झलि' (२२८१) इति सलोपः। उत्तपतीति। अत्र तपेः तपः कर्मत्वाभावात्। 'न दुहस्नुनमां यक्चिणौ' (२७६२) इत्यत्र दुहधातुरुदाहृतः। इदानीं स्नुनमावुदाह्रियेते। यद्यप्येतावपि तत्रैवोदाहर्तुमौचित्याम् तथापि यक्चिणोरत्र बहुवक्तव्यतया अनुवृत्तिलाभसौकर्याय पुनरुपन्यस्तम्। अतएव वार्त्तिकोपन्यासात् प्राक्—'यक्चिणोः प्रतिषेधे' इत्यवतारितमित्युपरिष्टात् स्फुटीभविष्यति। स्नुनमावुभावपि अन्तर्भावितण्यर्थौ। तेन 'वत्सो गां प्रस्नौति' इति कर्तरि लकारे चौरचरणविषये उत्कण्ठयतीत्यर्थः। अत्र गामिति कर्म। चौरप्रस्नवनं च तन्निष्ठमेव। तेन क्रियायाः कर्मस्थत्वं प्राप्तम्। चौरप्रस्नवणाप्रस्नवणाभ्यामुत्कण्ठानुत्कण्ठरूपवैलक्षण्यम् कर्मणि गवि उपलम्भात्। एवञ्च क्रियाकृतविशेषदर्शनात् 'कर्मवत् कर्मणा—' इति कर्मवत्त्वं यगादिकं कर्मकार्यञ्च प्राप्तम्। अत आत्मनेपदवर्ज्यं कर्मकार्यमनेन प्रतिषिद्धम्। ततश्च 'प्रस्नुते गौः' स्वयमेवेति लभ्यम्। वत्सकर्तृकानं विनैव चौरचरणायोत्कण्ठीभूयते इत्यर्थः। प्रास्नाविष्ट—प्रास्नोष्ट इति। चिण्भावाचिण्वदिटि सिचि पूर्वम्। परन्तु 'स्नुसिच्—' (२७५७) इति चिण्वदिड्भावे 'स्नुक्रमोः—' (२३२३) इति नियमाद् झलादि लक्षणात्। नमतेदण्ड इति। 'नमति (नमयतीत्यर्थः)

दण्डम्' इति कर्तृकर्मणोर्वाच्यायां दण्डस्य कर्मत्वाद्गमनस्य तन्निष्ठत्वेन विशेषदर्शनात्—प्रागवत् स्वयमेवेति शेषः। अनंसेति। चिणभावः सिच्। अन्तर्भावितण्यर्थ इति। 'गम-प्रह्वीभावे' इत्यकर्मकत्वाद्गमप्राप्तौ तथाप्युपगम इति गम्यते। 'हेतुमण्णिश्रि—' वार्तिक-मिदम्। अयमर्थः—यथा दुहस्नुनमां कर्म कर्तरि यक्चिणौ न स्तस्तथा हेतुण्यन्तानां श्रिञ्ञोश्च कर्म कर्तरि यक्चिणौ नेति उपसंख्यानं परिगणनं कर्तव्यमित्यर्थः। हेतु-मण्ण्यादौ क्रमेण उदाहरति—कारयते इति। कर्तृकर्मणोः तावत्—करोति वटुरिति। ततो हेतुमण्णिच्—कारयति वटुं विप्रः ततः—कारयते वटुः स्वयमेव। अत्र हेतुमण्ण्य-न्तकर्मणो वटोः कर्मत्वं ततः विप्रप्रेरणमनपेक्ष्य कर्तृत्वविवक्षायाम् वटोः कर्म-कर्तृत्वम्। ततश्च कर्मवद्भावेन यकि प्राप्ते अनेनात्मनेपदमेव न यक्। अचीकर-तेति। चिणभावात् 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' (२३१४) इति चङि द्वित्वे रूपम्। 'दीर्घो लघो'रिति (२३१८) दीर्घः, 'सन्वतः' (२३१७) इतीत्वम्। श्रिधातु-माह—उच्छ्रयते इति। उत्श्रयते इतिच्छेदः। उच्छ्रयति दण्डं दारक इति कर्मणो दण्डस्य कर्तृत्वविवक्षा प्रागवत्। उदशिश्रियत इति। प्रागवच्चङ्। संयोगपरत्वेना—लघुत्वाद् दीर्घाभावः। उन्नमितवानित्यर्थः। चिण्वदिट् तु स्यादेवेति—'स्यसिच—' (२७५७) इत्यत्र 'उपदेशे योऽच् तदन्तादित्युक्तेरि'ति भावः। ततश्च कारिष्यते—करिष्यते इत्यादीति बोध्यम्। ब्रूञमुदाहरति—ब्रूते कथेति। ब्रवीति कथां कश्चित्; ततः कर्मकर्तृविवक्षायां—'ब्रूते कथा: स्वयमेव' इति। अवोचतेति। चिण्निषेधात्-'अस्यतिवक्तिख्यातिभ्योऽङ्'इत्यङ्। 'ब्रुवो वचि' रिति वचिरादेशः। वच उमित्याम्। अत्र 'उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शनात् कर्मस्थक्रियत्वं ब्रुवेर्बोध्यमि'ति—नागेशः। 'हेतुमणि—' इति प्राक् पठितं वार्तिकं भारद्वाजीयाः प्रकारान्तरेण पठन्तीति तेषां पाठमुपात्य दर्शयति—'णिश्रन्थि ग्रन्थि—' इति। अत्र ग्रन्थि ग्रन्थ्यात्मनेपदा-कर्मका अधिकाः। णौति च न केवलं हेतुमण्ण्यन्तस्यैव ग्राहकमपितु णिङिङ् साधारणम्। अतएव णिङमुदाहरति—पुच्छमुदस्यतीति। 'पुच्छादुदसने' इति वार्तिकादिह णिङ्। उत्पुच्छयते गौरिति। ननु पुच्छमुदस्यतीत्यत्र पुच्छमेव कर्म ननु गौरिति। तत्कुतः-अस्याः कर्मकर्तृत्वम् इत्याशङ्क्य आह—अन्तर्भावितण्यर्थतायामिति। तथात्वे हि पुच्छ-

मुदासयति गाम् इत्यर्थः। तत्र उत्पुच्छयते गाम् गोपालक इति कर्तृकथा लभ्यते। तत्र्यते पुच्छयते गौरित्यत्र कर्मकर्तृत्वं गौरस्येति यगनिषेधः। उदपुपुच्छतेति। पुच्छमुदास्तवानित्यर्थः। प्राग्वदत्। ननु ग्रन्थियन्थ्योर्योरादिकत्वेन 'णिश्रन्थि—' इत्यत्र णिग्रहणेनैव सिद्धे कुतो विशिष्य ग्रहणमित्याशङ्क्याह—ग्रन्थिग्रन्थ्योरिति। 'आधृषाद्वा' इति णयन्तवादित्यर्थः। ग्रन्थति ग्रन्थमिति। अत्रापि देवदत्त इति अध्याहार्यम्। रचयतीर्थः। कर्मकर्तरि ग्रन्थते ग्रन्थः स्वयमेवेति, एवं ग्रन्थते मेखला स्वयमेव इत्यपि। देवदत्तव्यापारं विनापि मेखलाकाञ्ची ग्रन्थते विस्रंसते इत्यर्थः। क्र्याद्गि-चयोश्त्विति।—'क्र्यादिभ्यः श्ना' इति श्ना। 'ई हल्यघोः' (२४९७) इति ईत्वम्। 'अनिदिताम्—' (४१५) इति न लोपः। विकुर्वते—सैन्धवा इति। आत्मनेपदत्वा-कर्मकत्वयोरुदाहरणमेतदत आह—वेरित्यादि। विकुर्वते इत्यस्यार्थमाह—वल्गन्तीत्यर्थ इति। शब्दायन्त इत्यर्थः। अथ विपूर्वात् कृञोऽकर्मकत्वमुपपन्नम्—कर्मवत्त्व-सिद्धार्थमाह—अन्तर्भावितण्यर्थस्येति। 'अत्र कर्मकर्तृत्वं विना येऽकर्मकास्ते आत्म-नेपदाकर्मकशब्देन गृह्यन्ते कर्मकर्तृत्वेनाकर्मकत्वस्याव्यभिचरितत्वात्; तेषामन्त-र्भावितण्यर्थत्वेन सकर्मकतां कृत्वा पुनः सौकर्यातिशयविवक्षायां कर्मकर्तृत्वं बोध्यम्' इति नागेशः। तेन विकुर्वते सैन्धवा इत्यस्य सादिनः सैन्धवान् (अश्वान्) शब्दाययन्तीत्यर्थः। पुनः प्रेषणव्यापारे इति—सादिनोऽनपेक्ष्य शब्दकरणे इत्यर्थः। विकुर्वते सैन्धवाः स्वयमेवेति सैन्धवानां कर्मकर्तृत्वम्। व्यकारिष्ट—'स्यसिच्—' इति चिणि चिण्वदिटि वृद्धौ एतत्। पक्षे झलादश्लादिति सिज्लोपे व्यकृत इति। एवमन्यत्र यथायथं बोध्यम्।

२७७२॥ कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥३।१।९०॥

दी—। अनयोः कर्मकर्त्तरि न यक् किन्तु श्यन् परस्मैपदं च। आत्मनेपदापवादः। कुष्यति—कुष्यते वा पादः

स्वयमेव । कुष्णाति पादं देवदत्तः । रज्यति—रज्यते वा वस्त्रम् । यगविषये तु नास्य प्रवृत्तिः । कोषिषोष्ट । रङ्क्षीष्ट ।

इति कर्मकर्तृतिङ्-प्रकरणम् ।

Easy.—प्राचाम् indicates optional character of श्यन् and परस्मै. Hence कुष्यति—कुष्यते वा पादः ( स्वयमेव )। 'कुष्णाति ( scratches ? )—' active for कुष् is क्र्यादि। 'रज्यति—' (स्वयमेव)। रञ्ज् is here दिवादि। 'यगविषयेतु—' i. e. the rule does not apply where यक् is wanting i.e. in the matter of आर्धधातुकs. Thus कोषिषीष्ट etc. with लङ् सीयुट्।

Here ends the chapter on कर्मकर्तृतिङ्।

मित—। कुषिरजोरिति। कर्मकर्तरीति 'अचः कर्मकर्तरि' इत्यतः, नेति यगिति च 'न दुहस्नुनमाम्—' इत्यतोऽनुवर्तते। अत्र प्राचां ग्रहणं विकल्पार्थम्। तदाह—कुष्यति-कुष्यते वा पादः स्वयमेवेति शेषः। कुषिस्तावत् क्र्यादिकस्तेन कर्तृकत्वमाह—'कुष्णाति पादम्—'। एतेन पादस्य कर्मत्वादुत्तरवाक्ये कर्मकर्तृत्वमिति दर्शितम्। ननु यक्श्यनोर्यकारमात्रमेवोभयत्र शिष्यते। ततश्च श्यनविधिर्व्यर्थ इति चेत्, न। स्वरे विशेषादित्यन्यत्र विस्तरः। रज्यति—रज्यते वा वस्त्रमिति। अत्रापि स्वयमेवेति शेषः। रञ्ज् धातुरत्र दैवादिकः। अत्र कर्मकर्तृप्रकरणे वृत्तिकारादिभिः प्रायेण स्वयमेवेत्युक्तम्। तदविवक्षितम्। आत्मना करणेनेति वा तदर्थः। न तु आत्मना कर्त्रेति मनोरमायामुक्तम्। अन्यथा कर्मण्येव लकारापत्तेः। स्पष्टा चेयं रीतिर्भाष्यादावित्यत्र कैयटग्रन्थे। यगविषयेत्विति—प्रसक्तिपूर्वको हि निषेधः। यत्र तु—यकः प्रसक्तिरेव नास्ति तत्र न निषेधः। कोषिषीष्टेत्यादि सीयटार्धधातुके रूपम्। इति शम्।

इति मितभाषिण्यां कर्मकर्तृ लिङ्-प्रकरणम्।

# अथ लकारार्थ-प्रकरणम्

## ( Sequence of Tenses )



२७७२। अभिज्ञावचने लृट् ॥३।२।११२॥

दी—। स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। लङोऽपवादः। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादियोगेऽपि। तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात्।

When a word denoting remembrance is used in contiguity,(i.e, as उपपद) then a root takes लृट् (and not लङ्) to express a past action occurring other than to-day. Thus this rule overrules भूतानद्यतन लङ्। 'स्मरसि—' Do you remember, Krishna, that we lived in the Gokula. Similarly in the cases of application of बुध्यसे, चेतयसे ( know ) etc. For they also may denote remembrance with reference to the content i.e the subject then dwelt upon.

मित—। अथ लकारार्थप्रक्रियां विवक्षुराह—अभिज्ञेति। अभिज्ञा स्मृतिः, सा उच्यते बोध्यतेऽनेनेति विग्रहस्तदाह—स्मृतिबोधिनीति। 'भूते' (३।२।८४) इत्यधिकारः। 'अनद्यतने लङ्' (३।२।१११) इति वर्तते। तदाह—भूतानद्यतन इति। उपपदे इति सामर्थ्याल्लभ्यम्। तत्र सामीप्यं वर्तते। उप (समीपे)

उच्चारितं पदमुपपदम्। तेन स्मरणार्थकशब्दे समीपे प्रयुज्यमाने इत्यर्थः। लङोऽपवाद इति—'अनद्यतने लङ्' इत्यस्यापवाद इत्यर्थः। स्मरसीति। अत्र व्याख्यार्थः कर्म। पश्य मृगो धावतीत्यत्र यथा। वत्स्याम इत्यस्य अवसाम इत्यर्थः। एवं बुध्यसे इति। अत्र मानं इदं चिन्त्यम् इति नागेशः। वस्तुतस्तु पर्यवसानगत्या स्मृतेरपि बोधार्थत्वादुक्तार्थे रुचिरिति भावः। अभिज्ञानस्य बोधने पर्यवसनात्। अतएव सूत्रे वचनशब्द उपात्त इति ध्येयम्।

२७७४। न यदि ॥७२।११३॥

दी—। यद्योगे उक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि।

What has been said above does not hold good if the word यत् is ushered into the sentence. Thus 'अभिजानासि—' Do you recollect Krishna that we held a picnic ( or a feast in the forest ).

मित—। न यदीति। 'यत्' इत्यव्ययं तस्य सप्तम्यन्तं उक्तम्। तस्य सर्वनामत्वाभावात् सप्तम्यां स्मिन् न। अर्थं तु यत्प्रयोगे सतीति व्याचष्टे—यद्योगे इति। अभिजानासीति। स्मरसीत्यर्थः। अत्र लृङ् न किन्तु लङेव।

२७७५। विभाषा साकाङ्क्षे ॥३।२।११४॥

दी—। उक्तविषये लृड्वा स्याल्लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद् धात्वर्थः। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। यच्छब्दयोगेऽपि 'न यदि' ( २७७४ ) इति बाधित्वा परत्वाद्विकल्पः॥ 'परोक्षे लिट्' ( २१७१ )=चकार। उत्तमपुरुषे चित्तविक्षेपादिना

पारोक्ष्यम्। 'सुप्तोऽहं किल विललाप'। बहु जगद पुरस्तात् तस्य 'मत्ता किलाहम'। 'अत्यन्तापह्नवे लिड् वक्तव्यः' (वार्तिक)। कलिङ्गेष्वास्थीः? नाहं कलिङ्गान् जगाम।

लट्, in the matter said above, takes place optionally provided the sense of the root is dependent in the manner of लक्ष्य-लक्षणभाव or ज्ञाप्यज्ञापकभाव i.e of signalising and of being signalised (लक्ष्य)। Thus 'अरसि—' can you remember Krishna we lived in the forest and tended cows there? Here living or residence serves as a signal and tending the cows as a thing signalised. We can alternatively have लङ् in place of लट्। The option (of लट् and लङ्) will also have force if even the word यत् is used, for 'विभाषा—' is subsequent to 'न यदि' and therefore will bar the latter.

लिट् is employed when the fact described is beyond the purview of perception of the speaker. Hence it deserves employment in the case of 1st person also—where पारोक्ष्य non-perception is effected due to delusion or disorder of intellect. As 'सुप्तोऽहम्—' when asleep I indeed talked nonsense. 'बहु जगद—' Being intoxicated I indeed talked much before him. 'अत्यन्तापह्नवे—' (varttika)—It has to be said that लिट् is used when total denial is implied.' As—did you live in Kalinga? No, I did not go to Kalinga.' Had it been a case of simple denial the respondent would have said—'No, which was a more expected reply here. Kalinga (Orissa) was however regarded as a totally forbiddenland, cp—

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥'

Thus he not only totally denies his residence therein but also his arrival or presence there.

मित—। विभाषेति। उक्तविषये इति। अभिज्ञावचने इत्यर्थः। लक्ष्यलक्षणभावेनेति। लक्ष्यं परिचाय्यं ज्ञाप्यं वा। लक्षणन्तु परिचायकं ज्ञापकं वेत्यर्थः। वासोलक्षणमिति। लक्ष्यतेऽनेनेति 'करणाधिकरणयोश्च' (३२९७) इति करणे ल्युट्। अत्र वासद्वारा गोचारणस्य लक्ष्यमाणत्वादिति भावः। पक्षे लङिति लृङ्विषये इत्यर्थः। परत्वादिति—'न यदि' (३।२।११३) इत्यपेक्षयेत्यर्थः॥ चित्तविक्षेपादिना पारोक्ष्यम्। चित्तविक्षेपोऽवस्थान्तरापत्तिश्चित्तस्य। स च स्वप्नसुरादिभिः सम्पाद्यते। अत उदाहरति—सुप्तोऽहमित्यादि। आदिपदेन मनसोऽसन्निधानादिसंग्रह इति नागेशः। अक्ष्णो परमिति परोक्षम् 'प्रतिपरसमनुभ्योऽक्ष्णः' इति गणसूत्रात् (भट्टोजिमतेन)। परोक्षमेव—पारोक्ष्यं स्वार्थे ष्यञ् भावे वा ष्यञ्। अत्यन्तापह्नवे इति। वार्तिकमिदम्। अत्यन्तमपह्नवोऽपलापः इति अत्यन्तापह्नवः। कलिङ्गेष्ववात्सीरिति प्रश्नः। जनपदवाचित्वादबहुवचनम्। नाहमिति उत्तरम् इदम्। कलिङ्गानाम जुगुप्सितो देशः। किं त्वया तत्र स्थितमिति प्रश्ने न केवलं कलिङ्गेष्ववस्थानमेवापलप्यते किन्तु तद्धेतुभूतं गमनमपीति भवत्यत्यन्तापह्नवः। यदा तु यद्विषयोऽभियोगस्तद्विषयमेवोत्तरं तत्र तु नास्य वार्तिकस्य प्राप्तिरिति बोध्यम्।

## २७७६। हशश्वतोर्लङ् च ॥३।२।११६॥

दी—। अनयोरुपपदयोर्लिड्विषये लङ् स्यात्। चाल्लिट्। इति हाकरोच्चकार वा। शश्वदकरोच्चकार वा।

लङ् as also लिट् are employed in the room of लिट् when ह and शश्वत् (=ever) are pronounced in proximity. Thus इति

ह अकरीत् चकार वा—Thus he performed. ह is a meaningless particle [ or it denotes emphasis (?) as well ].

मित—। हशश्वतोरिति। ह च शश्वच्च, तयोरिति विग्रहः। हेति निरर्थकमव्ययम्। अन्यत् स्पष्टम्।

२७७७। प्रश्ने चासन्नकाले ॥३।२।११७॥

दी—। प्रष्टव्यः प्रश्नः। आसन्नकाले पृच्छ्यमानेऽर्थे लिङ्विषये लङ्लिटौ स्तः। अगच्छत् किम्? जगाम किम्? अनासन्ने तु कंसं जघान किम्?

By प्रश्न or question we mean that which is to be asked. लङ् and लिट् are used in the room of लिट् when something is interrogated by the period of five years ( आसन्नकाल ) [See Tika], and not beyond that.

मित—। प्रश्न इति। प्रष्टव्य इति प्रष्टुमिष्टं द्रव्यमित्यर्थः। अत आह—पृच्छ्यमानेऽर्थे इति। आसन्नकालमत्र पारिभाषिकं गृह्यते नतु प्रयोक्तृप्रयोगकालसमकाल इत्यर्थः। तथाचोक्तम 'पञ्चवर्षाभ्यन्तरमासन्नकालम्, पञ्चवर्षातीतन्तु विप्रकृष्टकालमि'ति। तेन आसन्नः काल आसन्नकाल इति न विग्रहीतव्यम्। अत्र नपुंसकत्वदर्शनेन प्रातिपदिकान्तरस्यैव कल्पनौचित्यादिति विभाव्यम्।

२७७८। लट् स्मे ।३।२।११८॥

दी—। लिटोऽपवादः। यजति स्म युधिष्ठिरः।

यजति स्म thus is equal to इष्टवान् or performed a sacrifice. भूतकालद्योतकः।

२७७९। अपरोक्षे च ॥३।२।११९॥

दी—। भूतानद्यतने लट् स्यात् स्मयोगे। एवं स्म पिता ब्रवीति।

मित—। एवं ब्रवीति—अब्रवीदित्यर्थः।

२७८०। ननौ पृष्टप्रतिवचने ॥३।२।१२०॥

दी—। 'अनद्यतने,' 'परोक्षे' इति निवृत्तम्। भूते लट् स्यात्। अकार्षीः किम्? ननु करोमि भोः।

लट् is used to express a past event or action when the word ननु is ushered in the reply to the question. Thus अकार्षीः किम—did you do (that) etc. Here करोमि = अकार्षम् etc.

मित—। ननाविति पृष्टस्य प्रति-वचनमिति विग्रहः। करोमीत्यस्य कृतवानित्यादि भूतार्थकत्वम्। 'विरुद्धमपि प्रतिवचनम् वचनाभिमुख्यमपि प्रतिवचनम्' इति कैयटे स्थितम्।

२७८१। नन्वोर्विभाषा ॥३।२।१२१॥

दी—। नशब्दे नुशब्दे च लड्वा स्यात्। अकार्षीः किम्? न करोमि। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्।

मित—। नन्वोरिति। पृष्टप्रतिवचने इत्यनुवर्तते। न नु इत्येतयोर्द्वयोः सप्तमीद्विवचनं, तदाह—नशब्दे नुशब्दे चेति। अतभूते लड् विकल्पः। पक्षे यथा-प्राप्तं लङ्लुङ्भूतलकारान्तरम्।

२७८२। पुरि लुङ् चास्मे ॥३।२।१२२॥

दी—। अनद्यतनग्रहणं मण्डूकप्लुत्यानुवर्तते। पुराशब्द-योगे भूतानद्यतने विभाषा लुङ्। चाल्लट्। न तु स्मयोगे।

पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः—अवात्सुः—अवसन्—ऊषुर्वा । 'अस्मे' किम् ? यजतिस्म पुरा ॥ भविष्यतीत्यनुवर्तमाने—

The term 'अनद्यतन' occurring in the rule 'अनद्यतने लङ्' ( ३।२।१११ ) is carried on to this rule by the मण्डुकप्लुतिन्याय or the maxim of 'a frog's leap' used especially by grammarians to expose the passing of words in a rule to another omitting thereby some intervening ones. The word 'पुरि' in the rule is the locative singular of the अव्यय word पुरा which drops its 'आ' in connection with the 7th. case-ending. Thus the rule means—to express an अनद्यतन ( not occurring to-day ) past tense inconnection with the word पुरा, लुङ् and लट् are optionally employed—provided स्म is wanting ( चास्मे ) there. Hence alternatively here we shall have लङ् and लिट् also. As वसन्ति इह पुरा—etc. The word भविष्यति from 'भविष्यति गम्यादयः' ( ३।३।३ ) being present ( we look forward )—

मित—। पुरीति। 'अनद्यतने लङ्' ( ३।२।१११ ) इत्यतोऽनुवर्तमानम् 'अनद्यतने' इति—'ननौ—' ( ३।२।१२० ) 'नन्वोः—' ( ३।२।१२१ ) इत्यनयो र्निवृत्तमपि परवर्तिनि 'पुरि लुङ्—' ( ३।२।१२२ ) इत्यत्रानुवर्तते। तदाह—मण्डुकप्लुत्येति। भेकप्लवनसाम्यादिति। नन्वनद्यतनग्रहं मास्त्विति चेत्। न। यदि भूते एव स्यात्तर्हि लुङ् ग्रहणमनर्थकं स्यादिति भावः। पुराशब्दयोगे इति—पुरीति पुरेत्यव्ययसप्तम्यन्तम्। 'आतो धातोः—' (?) इत्यालोपे ङौ। न तु स्मे इति। च + अस्मे इति विच्छेदः। पक्षे यथाप्राप्तमिति। लङ् लिट् चेत्यर्थः। तदुदाहरति—वसन्ति इहेति ॥ भविष्यतीति—'भविष्यति गम्यादयः' ( ३।३।३ ) इति सूत्रादित्यर्थः। परवर्तिसूत्रेऽस्य प्रयोजनमित्यतोपन्यस्तम्—

२७८३। यावत्पुरानिपातयोर्लट् ॥३।३।४॥

टी—। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातावेतौ निश्चयं द्योतयतः। निपातयोः किम्? यावद्दास्यते—तावद् भोक्ष्यते। करणीभूतया पुरा यास्यति।

These two निपात's or indeclinables indicate cetainty. Hence यावद्भुङ्क्ते = certainly eats. Similarly 'पुरा—' etc। In यावत् &c. यावत् and तावत् are derived with वतुप् ( यत् and तत् + वतुप् ) by 'यत्तदेतेभ्यः परिमाणे'—and hence the sentence means—The amount that will be allotted will be eaten. Also when पुरा is the third case-ending of the base पुर् there will take place लृट् only to express futurity and not लट्।

मित—। यावत् पुरानिपातयोरिति। यावत् पुरेत्यनयोर्निपातत्वेऽपि निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वे लिङ्गम्। अनयो निपातयोर्योगे भविष्यति लट् स्यादित्यर्थः। लृट् लुटोरपवादः। यावद् भुङ्क्ते इति निश्चितं भुङ्क्ते इत्यर्थः। तदाह—निश्चयं द्योतयत इति। निपातनां द्योतकत्वादिति भावः। अनिपातयोर्यावत्पुरयोर्निपातत्वं न त्वर्थान्तरे। तेन 'यत्तदेतेभ्यः परिमाणे वतुप' इति परिमाणार्थक—यावत्तावद्भ्यां यथाप्राप्त' लृटलुटावेव न लट्। अत आह—'यावद्दास्यते—' इति। एवम् 'यावद्दाता—' इत्यपि प्रत्युदाहरणम्। यत्परिमाणकं भोज्यमयं दास्यते तत्परिमाणमेवानेन भोक्ष्यत इत्यर्थः। करणीभूतयेति—पुर् शब्दस्य तृतीयायां पुरा इति लभ्यते। तद्योगेऽपि लृट् लुटौ इति भावः न तु लट्।

२७८४। विभाषा कदाकर्ह्योः ॥३।३।५॥

टी—। भविष्यति लट् वा स्यात्। कदा कर्हिवा भुङ्क्ते—भोक्ष्यते—भोक्ता वा॥ (कदा, कर्हि i.e When).

२८८५ । किंवृत्ते लिप्सायाम् ॥३।३।६॥

दी—। किंवृत्तं विभक्त्यन्तम् । भविष्यति लड्वा स्यात् । कं कतरं कतमं वा भोजयसि—भोजयिष्यसि—भोजयितासि वा । 'लिप्सायाम्' किम् ? कः पाटलिपुत्रं गमिष्यति ।

लट् to express futurity optionally is employed in connection with a word derived with i.e having 'किम्' as its basis—when ( by the interrogation) any sense of eagerness is implied. Thus 'कम्, कतरम्—' etc whom will you entertain ? It has been said in काशिका that by 'किंवृत्तम्,' are to be taken three words कः, कतर and कतम and not कदा कर्हि etc, whereas others hold—that to keep the भाष्य [ under 'यद्वृत्तान्नित्यम्' ( २९७२ ) ] in agreement with this it is proper to include कदा, कर्हि etc herein.

मित—। किंवृत्ते इति । किम् शब्देन वृत्तमिति किंवृत्तम्, किमा प्रातिपदिकेन निष्पन्नमित्यर्थः । तदाह—विभक्त्यन्त मिति । तथापि डतरडतमाद्यन्तत्रय एवेति वृत्तिः । तेन किमा निष्पन्नानामपि कदाकर्हीत्यादीनामत्र न प्रवृत्तिः । "'यद्वृत्तान्नित्यम्' इति सूत्रभाष्यरीत्या सर्वकिंग्रहणमित्यन्ये" इति शब्देन्दुशेखरे स्पष्टम् ।

२८८६ । लिप्स्यमानसिद्धौ च ॥३।३।७॥

दी—। लिप्स्यमानेनान्नादिना स्वर्गादिः सिद्धौ गम्यमानायां भविष्यति लड् वा स्यात् । योऽन्नं ददाति—दास्यति—दाता वा स स्वर्गं याति—यास्यति—याता वा ।

लट् in future optionally takes place when by distributing desired or coveted objects such as rice etc. the achievement of heaven and the like is understood. Thus 'योऽन्नम्—' etc.

मित—। त्रियमाणमिति। पूर्वेणैव सिद्धे सति अर्किंचित्करमिदमिति अनयनु-दाहरति—योऽन्नमित्यादि।

२७८७। लोडर्थलक्षणे च ॥३।३।८॥

दी—। लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद् धातोर्भविष्यति लट् वा स्यात्। कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय। पक्षे लुङ्—लृटौ।

लट् optionally takes place in future after a root expressing the sense whereby sending etc of some one ( प्रैषादि ) is hinted at. Thus 'कृष्णश्चेत्—' etc. Here भुज् takes लट् as this i.e taking meal on the part of Krishna leads to or requires the tending of cows ( by another ). पक्षे etc—see मितभाषिणी—।

मित—। लोडर्थेति। लोडर्थस्य लक्षणम् तस्मिन्। लोडर्थः प्रैषादिरिति "विधिनि-मन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लोट्" इति तदर्थे लोड्विधानादिति भावः। कृष्णश्चेदिति। अत्र भुजिना लोडर्थसम्प्रश्नगोचारणं लक्ष्यम्। अतश्चात्र लट्। कृष्णस्य भोजनकाले त्वं गाश्चारयेत्यर्थात्। पक्षे लुङ्लृटाविति। कृष्णश्चेद् भोक्ता भोक्ष्यते वा त्वं गाश्चारयेत्युदाहरणमित्यर्थः।

२७८८। लिङ् चोर्ध्वमौहूर्त्तिके ॥३।३।९॥

दी—। ऊर्ध्वं मुहूर्त्ताद् भव ऊर्ध्वमौहूर्त्तिकः। निपातनात् समासः, उत्तरपदवृद्धिश्च। ऊर्ध्वमौहूर्त्तिके भविष्यति लोडर्थ-लक्षणे वर्तमानाद्धातोर्लिङ्—लटौ वा स्तः। मुहूर्त्तादुपरि उपाध्यायश्चेदागच्छेत् आगच्छति—आगमिष्यति—आगन्ता वा अथ त्वं छन्दोऽधीष्व।

The term ऊर्ध्वमौहूर्तिक etymologically means ऊर्ध्वं मुहूर्तात् भवः ( or मुहूर्तादूर्ध्वं भवः ) i.e having taken place after a short while. The समास here in ऊर्ध्वमौहूर्तिक is irregular or abnormal for it has been compounded by 'तद्धितार्थोत्तरपदसमाहारे च' ( ७२८ ) where the presence of 'दिक्संख्ये' (७२७ ) and समानाधिकरणेन are inevitable. So समास here seems unavailable, and it is not a संज्ञावचन it seems to have the affix 'ञः' after it by 'दिक्पूर्वपदादसंज्ञायाम् ञः' (१३२८) but ठञ् is by 'कालाट्ठञ्,' as ऊर्ध्वं is taken as कालवाची here. The वृद्धि also of the second member ( उत्तरपद ) only is irregular, the वृद्धि of the first one also being here due by 'अनुशतिकादीनाञ्च' ( १४३८ )। So Bhattoji says "निपातनात् समासः" etc. Hence the rule means—

लिङ् and लट् are optionally used after a root—which stands as an indicator of the application of लोट् (लोडर्थलक्षण)—to express futurity subject to occur within a very short while i.e to express a very short future. Thus 'मुहूर्तादुपरि—' etc—The professor may be ( here ) very soon and so read the veda i.e it is better for you to go on with the vedas lest the teacher appears presently.

मित—। लिङ् चेति—। ऊर्ध्वमौहूर्तिके इति। ऊर्ध्वमुहूर्तशब्दात् 'कालाट्ठञ्' इति ठञ्। ननु 'तद्धितार्थोत्तरपद—' ( ७२८ ) इत्यनेनात्र समास इष्यते। तत्र तु 'दिक्संख्ये—' ( ७२७ ) तथा 'समानाधिकरणेन' इत्यस्यानुवृत्तेः अत्र तथाविध-समानाधिकरणशब्दाभावात् समासो दुर्लभः। ऊर्ध्वंशब्दस्य दिक्शब्दत्वेऽपि असंज्ञात्वे च 'ञ'—प्रत्ययस्यैव ('दिक्पूर्वपदादसंज्ञायाम् ञः'—१३२८) नियमात् 'और्ध्वमौहूर्त' इत्येव स्यादित्याशयेनाह—निपातनात् समास इति। ऊर्ध्वं मुहूर्तादभवदित्यस्मिन् विग्रहे निपातने "तद्धितार्थे" इत्यर्थः। ऊर्ध्वमिति दिग्वाचि अपि अत्र तु कालवाचि एव ; तेन 'अकर्मक-धातुभिर्योगे देशः कालः—' इति कर्मत्वम्। ननु 'पौर्वशालः' 'आपरशालः' इत्यादावि-

वादिश्चित्ररव कथं नेत्याह—उत्तरपदहश्चिर्य निपातनादित्यवबोध्यम्। ऊर्ध्वं मौहूर्तिके इति विशेषणम्। अतोऽयमाह—ऊर्ध्वं मौहूर्तिके भविष्यतीति। लोडर्थलक्षणे इति। अवाध्यापकागमनं प्रैषविषयवेदाध्ययनस्य लक्षणमिति भावः। लिङ् लटाविति। चकारात् लट्। मुहूर्तादुपरीति। मुहूर्तादूर्ध्वं कालीने, सप्त इत्यर्थः। वाक्यः वक्तुरशक्तात् पक्षे लुट्लृटावपि भवतः।

३७८८। वर्तमानसामीप्ये वर्तमानवद्वा ॥३।३।१३१॥

टी—। समीपमेव सामीप्यम्। स्वार्थे ष्यञ्। 'वर्तमाने लट्' (२१५१) इत्यारभ्य 'उणादयो बहुलम्' (३१६८) इति यावद् येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोऽसि। अयमागच्छामि। अयमागमम्। कदा गमिष्यसि। एष गच्छामि—गमिष्यामि वा।

वर्तमानसामीप्ये means वर्तमानसमीपे, for सामीप्य is derived as 'समीपमेव' by स्वार्थेष्यञ् like चातुर्वर्ण्यादित्वात् as the चतुर्वर्णादि class is inexhaustive ( आकृतिगणः ). Affixes enjoined under rules begining from 'वर्तमाने लट्' ( 3. 2. 123 ) and ending with 'उणादयो बहुलम्' ( 3. 3. 1 ) are understood to take effect only where those very bases ( along with which they are enjoined ) exist and not elsewhere. Take for instance 'भञ्जभासमिदो घुरच्' (3.2.161) where it follows that घुरच् will be added after there three only—भङ्गुर, भासुर, मेदुर ; similarly understand वर्तमाने लट् (i.e, लट comes in वर्तमान only ). वर्तमानसामीप्य implies near future or near past for these two only are in contiguous relation with वर्तमान ।

Thus the rule means :—

The affixes such as लट् ( वर्तमाने लट् and so on, upto उणादयो बहुलम् ) and the like not only take place compulsorily in the same manner or under that and that condition which has been expressed in such and such rule—but also optionally in past and future when any of them bear contiguous relation to the present i. e when the sentence or rather the question begins with a past tense ( लुङ् etc. ), 'लट् will be optionally replaced by the same लुङ् etc. and so in the case of future. Thus 'कदा—' etc. अयम् and एष in the instances do not imply this, but they help to bring home the idea that the speaker just there came or just there will start by the actual signs of dust on foot and perspiration all over ( in the case of past ) and girding up his loins ( in the case of future ).

मित—। वर्तमानसामीप्य इति। स्वार्थे ष्यञ् इति। अस्मादेव सूत्रनिर्देशा-च्चातुर्वर्ण्यादेराकृतिगणत्वादित्यर्थः। वर्तमानस्य सामीप्यमिति षष्ठीसमासः। न च 'पूरणगुण—' ( ७०५ ) इति निषेधः शङ्क्यः। अस्मादेव ज्ञापकात् तस्य अनित्यत्वा-दित्यन्यत्र विस्तरः। 'वर्तमानवत्' इत्यंशं व्याचष्टे—'वर्तमाने लट्' इत्यारभ्येति। तृतीयाध्यायस्य द्वितीयपादान्तर्गत 'वर्तमाने लट्' ( ३।२।१२३ ) इत्यारभ्य तत्पादपरि-समाप्तिपर्यन्तं येन उपाधिना यं यं धातुविशेषमाश्रित्येत्यर्थः प्रत्यया लडादय उक्ता विहिताः ते प्रत्यया इति शेषः तथैव तस्मिंस्तस्मिन् धातुविशेषे स्युरेव प्रवर्तन्ते तथा वर्तमानसमीपे वर्तमानकालपूर्वापरकोटिस्थितयोर्भूतभविष्यतोश्च वा स्युः विकल्पे-नैष्यन्त इति भावः। तथाच 'पूङ्यजोः शानन्' ( ३।२।१२८ ) इति विहितः शानन् ताभ्यामेव भवति न तु धात्वन्तरात्। अत्र भूते भविष्यतीति चार्थाल्लभ्यम्। तयोरेव वर्तमानसमीपस्थत्वात्। अयमागच्छामीत्यादि प्रश्नस्य 'कदा आगतोऽसी'त्यस्य

भूतकालिकत्वादुत्तरवाक्ये लट्लुङोर्विकल्पः। एवमुत्तरत्र प्रश्नवाक्यस्य भविष्यत्-कालिकत्वादुत्तरवाक्ये लट्लृटोर्विकल्पः। पूर्ववाक्येऽयमिति भूतकालद्योतनाय तथा उत्तरवाक्ये एष इति भविष्यत्कालद्योतनाय। तेन पूर्वत्र आगमनाविनाभूतं धूलि-धूसरितत्वप्रस्विन्नत्वादिकप्रतिपादने लक्ष्यमुत्तरत्र तु गमनाविनाभूतं कटिबन्धनादिक—मित्याहुः। सामीप्ये—किम्? अस्मान्मासात् पूर्वस्मिन् मासे आगच्छम्। अत्र लट् न। 'वर्तमानसामीप्ये—' इत्येतत् सूत्रन्तु भाष्ये प्रत्याख्यातम्। गङ्गासमीपे गङ्गात्वारोपादिव वर्तमानारोपसम्भवादित्याकरे स्पष्टम् इति दिक्।

## २७९० । आशंसायां भूतवच्च ॥३।३।१३२॥

टी—। वर्तमानसामीप्ये इति नानुवर्तते। भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वास्युराशंसायाम्। देवश्चेदवर्षीद्—वर्षति—वर्षिष्यति वा धान्यमवाप्स्म—वपामो—वप्स्यामो वा। 'सामान्यातिदेशे विशेषानतिदेशः'। तेन लङ्लिटौ न।

The expression 'वर्तमानवच्च' only comes down and not 'वर्तमानसामीप्ये' also from the previous rule. Thus—in the room of future tense affixes are optionally used as in the past and in the present tense to indicate expectation. देव means the cloud here. Construe as—देवश्चेदवर्षीत् (had rain fallen) धान्यमवाप्स्म (वप्—(to sow)+लुङ् म), (we would have sown paddy), देवश्चेद् वर्षति (if rains falls etc.) धान्यम्, वपामः and so on. When a general or common thing is sought to be transferred there is no question of transference of the particular section of the same. Thus लङ् which is 'अनद्यन' भूत and लिट which is 'परोक्ष' भूत are not included here.

मित—। आशंसायामिति। अप्राप्तप्राप्तीच्छा आशंसा। तस्याः 'वर्त्तमानसमीप एव भवेदि'ति निर्द्देशासंभवात् आह—'वर्त्तमानसामीप्य' इति नानुवर्त्तते'। पक्षे यथाप्राप्तं भविष्यति प्रयोगः। अन्यथा वा लुङिति—'वर्त्तमानवद्वा' इत्यनुवर्त्तेरिति भावः। देवश्चेदिति। देवश्चेद् अवर्षीत्—धान्यम् अवाप्स्म (लुङ्) वपाम वप्स्यामः इत्यन्वयः। वृष्टियपनयोरुभयोरपि आशंसाविषयत्वादुभयत्रापि लकारः। सामान्यातिदेशे इति—अत्र भूतातिदेशस्य विषयत्वादनद्यतनपरोक्षभूतयो र्भूतविशेषयोः प्रसक्ती नासीत्यर्थः। तदाह—लङ्लिटौ नेति। एवं लुडपिनेति उपरिष्टात् स्पष्टम्।

## २७८१। क्षिप्रवचने लृट् ॥३।३।१३३॥

**टी—। क्षिप्रपर्य्याये उपपदे पूर्वविषये लृट् स्यात्। वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा यास्यति—शीघ्रं वप्स्यामः। नेति वक्तव्ये लृङ्ग्रहणं लुटोऽपि विषये यथा स्यात्। श्वः शीघ्रं वप्स्यामः।**

If the term क्षिप्र (soon) or its synonyms are employed in contiguity or proximity (=as उपपद), लृट् is used in the previous subject i. e in the matter of expectation (आशंसा)। 'वृष्टिश्चेत्—' we shall sow soon lest the rain may cease. The appointment or taking of 'लृट्' instead of 'न' in the rule suggests the application of this inplace of लुट् also.

मित—। क्षिप्रवचने इति। अत्र वचनग्रहणं पर्य्यायद्योतकं, स्वरूपस्यैव ग्रहणमिति न अत आह—क्षिप्रपर्य्याये इति। पूर्वविषये इति—आशंसायामित्यर्थः। नेति वक्तव्ये लृङ्ग्रहणमिति—अत्र सूत्रे इत्यर्थः। श्व इति—नकारमनुक्त्वा 'लृट' इति कथनात् 'लुटः' अपि विषये सूत्रोक्तव्यापारः प्रवर्त्तते; अनद्यतनत्वद्योतनार्थमिदम्।

२७८२ । आशंसावचने लिङ् ॥३।३।१३४॥

दी—। आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात् न तु भूतवत् । गुरुश्चेदुपेयादाशंसे अधीयीय । आशंसे क्षिप्रमधीयीय ।

If a term expressing expectation is used in promixity i.e as उपपद, लिङ् only and not लुङ् also is employed to express futurity. 'गुरुश्चेत्—' etc, I expect to read i.e. it is expected that I should read if the preceptor happens to come ( उपेयात् ) ।

मित—। आशंसावचने इति । न तु भूतवदिति—उपलक्षणमिदम् वर्तमानवदपि न । तेनेदं भूतवत्वर्तमानवत्प्रत्यययोरपवादः । गुरुश्चेदिति—'आशंसे अधीयीय' इति द्वितीयं वाक्यम् । आशंसे क्षिप्रमिति—गुरुश्चेदित्युदाहृतम्

२७८३ । नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥३।३।१३५॥

दी—। क्रियायाः सातत्ये सामीप्ये च गम्ये लङ् लुटौ न । यावज्जीवमन्नमदाद्दास्यति वा । सामीप्यं तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित ; सोमेनायष्ट । येयममावस्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते ।

In the matter of continuity ( सातत्य ) and contiguity ( सामीप्य ) of action, ( अनद्यतने ) लङ् and ( अनद्यतन ) लुट् are not used. अदात्=लुङ् sing. 3rd, per. of दा । सामीप्य here means want of interposition of some other word of the same sort. Thus 'येयम्—' etc. He performed oblation to fire (अग्न्याधान) on the past or last full moon ; सोमेन अयष्ट—( he ) performed the said

sacrificial rite with the Soma juice on—as before. येयम् अमावस्या आगामिनी—Futurity is expressed here of the same rite. Thus here between the two the New moon and the Full moon, there being no intermediate date ( तिथि ) on which similar rites may be performed—this is a case of सामीप्य ।

मित—। नेति। न + अनद्यतनेतिच्छेदः। प्रबन्धःप्रतिबन्धराहित्यम्। तदाह— क्रियायाः सातत्यं सामीप्यं चेति। क्रियाया इत्येव। 'इन्द्राग्नी यूयमाथः—' इति न्यायात्। लङ्लुटौ नेति। तयोरेवानद्यतनत्वात्। अद्यादितिलुङ्। सामीप्यं निर्वक्ति— सामीप्यं तुल्यजातीयेनाव्यवधानमिति। पौर्णमास्यमावस्यासदृशतिथ्यन्तरमध्यपतितत्वाभाव इत्यर्थः। अतएवोदाहरति पौर्णमास्याममावस्यायाञ्च। सोमेनेति। येयं पौर्णमासीत्यत्रापूर्वम्। एवमन्यत्र।

२६८४। भविष्यति मर्य्यादावचनेऽवरस्मिन् ॥३।३।१३६॥

टी—। भविष्यति काले मर्य्यादोक्तौ अवरस्मिन् प्रविभागेऽनद्यतनवन्न। योऽयमध्वा गन्तव्यः आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्यामः।

A tense or लकार of the अनद्यतन class i.e लुट् is not employed to express futurity when the action ( employed ) is supposed to take place in the first part ( अवर ) of the way leading to that ( town etc. ) which has been said or intended as the termination ( of the journey etc. ). 'योऽयमध्वा—' We shall take the barley-flour on the first part of Kaushambi falling in the middle of the way which is to be travelled by us and which runs up to Pataliputra.

मित—। भविष्यतीति। नानद्यतनवदिति वर्त्तते, न तु क्रियाप्रबन्ध—सामीप्ययो-रित्यपि। तदाह—भविष्यति काले इत्यादिना। मर्य्यादायेन उच्यते इति मर्यादावचनम्। उदाहरणे—पाटलिपुत्रं मर्यादावचनम् तदवधित्वाद् यात्रायाः। तदाह—आपाटलिपुत्रादिति। तस्य यदवरमिति। तस्य मध्यवर्तिन्याः कौशाम्बी नाम नगर्याः यदवरं पूर्वदेशप्रविभागः तादृशेऽवरस्मिन् इत्यर्थः। भविष्यति किम्? योऽयमध्वा अतिक्रान्तः—इत्यादुत्तोहि सक्तून् आपिबाम इत्येव। एवं मर्यादावरत्वयो-रभावेऽपूत्रं न प्रवर्त्तते।

२७८५। कालविभागे चानहोरात्राणाम् ॥३।३।१३७॥

वृ—। पूर्वसूत्रं सर्वमनुवर्तते। अहोरात्रसम्बन्धिनि विभागे प्रतिषेधार्थमिदम्। योगविभाग उत्तरार्थः। योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे। अनहोरात्राणां किम्? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे।

This rule is to forbid अनद्यतनवत्त्व ( as before in the previous rule ) in connection with the division of day and night. These two rules ( this and the former 'भविष्यति—' ) have been enunciated separately with a view to facilitate exposition of the later sutra 'परस्मिन्—' (3.3.138). 'योऽयम—' etc we shall read together on the first part of Agrahayani falling in the ( middle of the ) year to come. 'योऽयं मासः—' etc. Here अध्येतास्महे ( लुट् अनद्यतन future ) has been used because पञ्चदशरात्र does consist days ( अहः )। पञ्चदशरात्र is formed by समासान्त अच् by योगविभाग of अच् from the rule 'अच् प्रत्यन्वपूर्वात्—' ( 943 ) in case it is

taken to be a बहुव्रीहि—पञ्चदशरात्रयो यस्य पचस्य—or अच् by 'अहः सर्वैक-देश—' ( 787 ) in case it is समाहारद्विगु—The varttika संख्यापूर्वं रात्रं क्लीबम् not having applied here.

मित—। कालविभाग इति। पूर्वसूत्रे देशविभाग उक्तः अत्र तु कालविभाग—कालविशेषमाह—अहोरात्रसम्बन्धिनि इति। न तु अहःसम्बन्धिनि रात्रिसम्बन्धिनि वा। प्रतिषेधार्थमिति—अनद्यतन—प्रतिषेधार्थमित्यर्थः। सूत्रद्वयकरणप्रयोजनमाह—योगविभाग इति। न 'परस्मिन्—' ( २७८६ ) इत्युत्तरसूत्रार्थः। अध्येतास्महे इति। अत्राहर्भावात्र लुट् किन्त्वनद्यतनभविष्यत्त्वेव। पञ्चदशरात्र इत्यत्र 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यवचनात् (?) 'संख्यापूर्वं रात्रं क्लीबम्' इति वार्तिकं न प्रवर्तते। ( तेनात्र पञ्चदशानां रात्रीणां समाहारः इति द्विगुपक्षे 'अहः सर्वैक—' ( ७८७ ) इति समासान्तोऽच्। पञ्चदश रात्रयो यस्य पचस्य इति बहुव्रीहिपक्षे तु 'अच् प्रत्यन्ववपूर्वात्—' इत्यच् ( योगविभागात् )।

२७९६। परस्मिन् विभाषा ॥३।३।१३८॥

दी—। अवरस्मिन्नित्यंशं पूर्वसूत्रद्वयमनुवर्तते। अप्राप्त-विभाषेयम्। योऽयं संवत्सर आगामी तस्य यत्परमा-ग्रहायण्यास्तत्राध्येष्यामहे। अध्येतास्महे॥ 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' ( २२२८ ) भविष्यतीत्येव। सुवृष्टिश्चेद्—भविष्यत्तदा सुभिक्षमभविष्यत्।

The word पर had no chance or scope in the injunction expressed in the last previous rule. Here, However, it is placed in the room of अवर and is allowed to have an optional share of the said injunction. Thus it is a case of अप्राप्तविभाषा। This is the result of its being a separate rule.

मित—। परस्मिन्निति। अप्राप्तविभाषेति। कालप्रविभागेऽवरस्मिन् यो विधिर्विहितस्तस्य तादृशविषये परस्मिन्प्राप्तिरासीत्। सा त्वत्र विभाष्यत इत्यप्राप्तविभाषात्वम्। देशप्रविभागविधिस्तु नात्र विभाष्यते इति योगविभागफलञ्च द्रष्टव्यम्।

[ The rule लिङ् निमित्ते etc is explained before ].

[ Here Kasika says "हेतुहेतुमतोर्लिङ् इत्येवमादिकं लिङो निमित्तं तत्र लिङ् निमित्ते भविष्यतिकाले लृङ्प्रत्ययो भवति क्रियातिपत्तौ सत्याम्। कुतश्चिद् वैगुण्यात् अनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः" ]।

२७९७। भूते च ॥३।३।१४०॥

टी—। पूर्वसूत्रं सम्पूर्णमनुवर्तते।

मित—। भूतेचेति। अधिकारोऽयम्। पूर्वसूत्रमिति—'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' (३।३।१३९) इत्यर्थः। ततश्च 'लिङ्निमित्ते लृङ् स्याद् भूते भविष्यति च क्रियाया अनिष्पत्तौ' इत्यर्थः।

२७९८। वोताप्योः ॥३।३।१४१॥

टी—। 'वा' 'आ', 'उताप्योः—' (२८०७) इतिच्छेदः। 'उताप्योः' इत्यतः प्राग्भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते। पूर्वसूत्रं तु 'उताप्योः' इत्यादौ प्रवर्तते इति विवेकः।

मित—। वोताप्योरिति। वा+आ+उताप्योः (उतश्चापिच तयोः) इतिच्छेदः। इदमप्यधिकारसूत्रं तदाह=लृङ् वेत्यधिक्रियते। नन्वेवं पूर्वोक्ताधिकारो निर्विषयः स्यादित्यत आह—पूर्वसूत्रमिति।

२७९९। गर्हायां लडपिजात्वोः ॥३।३।१४२॥

**टी—। आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम्। लुङादीन् परत्वादयं बाधते। अपि जायां त्यजसि। जातु गणिकामाधत्से—गर्हितमेतत्।**

लट् in connection with these two i. e. अपि and जातु is used in the places of all the three tenses to express hatred. Do you divorce your wife? Can you ever ( जातु ) cause conception of i.e copulate a harlot. Both of these are immoral. [ लृङ् is not possible here for there is no हेतुहेतुमद्भाव ]।

मित—। गर्हायामिति। आभ्यामिति। अपिजातुभ्यामित्यर्थः। कालत्रये इति। लड् इति नानुवर्तते। भविष्यतीति च निवृत्तम्। तेनात्र क्रियासामान्ये लट् विहितः। ततश्च अत्याक्षीस्त्यक्ष्यसीत्यादि भूतभविष्यद्—विषये लडिति फलितम्। परत्वादिति। अनवक्लृप्त्यमर्षयोरित्यपि बोध्यम्। गर्हितमेतदिति। उभयमपि कर्मेत्यर्थः। ( आधत्स इति गर्भमाधापयसीत्यर्थः )।

२८००। विभाषा कथमि लिङ् च ॥३।३।१४३॥

**टी—। गर्हायामित्येव। कालत्रये लिङ् चाल्लट्। कथं धर्मं त्यजेः त्यजसि वा। पक्षे कालत्रये लकाराः। अत्र भविष्यति नित्यं लृङ्, भूते वा। कथं नाम तत्रभवान् धर्ममत्यक्ष्यत् अत्याक्षीद्वा।**

When कथम् is an उपपद, लिङ् and लट् are optionally used to express all the three tenses provided hatred or censure is meant. Thus in the alternative cases we have all the

other लकारs in the matter of the three कालs । In the भविष्यत्काल however लृङ् is नित्य and in भूत optional. 'कथ' 'जाम—' etc How is it that your honour ( तत्र भवान् ) should give up practice of piety ?

मित—। विभाषेति। पञ्चे कालत्रये लकारा इति। नित्यं लृङिति। लिङ्निमित्ते लृङ् क्रियातिपत्तौ—इत्यनेन नित्यत्वविधानादित्यर्थः। भूते चेति। 'वोताप्यो'रित्यवोक्ताधिकारादित्यर्थः। तत्रभवान् अधीताशेषशास्त्र भवान् इत्यर्थः। अत्यक्ष्यदिति। त्यक्ष्येदित्यर्थः। अतएवात्र क्रियातिपत्तिः।

## २८०१। किंवृत्ते लिङ्लृटौ ॥३।३।१४४॥

दी—। गर्हायामित्येव। विभाषा तु नानुवर्तते। कः—कतरः—कतमो वा हरिं निन्देत्—निन्दिष्यति वा ; लृङ् प्राग्वत्।

मित—। किंवृत्ते इति। 'किंवृत्ते' इत्यस्यार्थः 'किंवृत्ते लिप्सायाम्' ( २७८५ ) इत्यत्रोक्तः। लृङ् प्राग्वदिति—क्रियातिपत्तौ गम्यमानायां भविष्यति लृङ् नित्यम् भूते वेत्यर्थः।

## २८०२। अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥३।३।१४५

दी—। गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। न सम्भावयामि न मर्षये वा भवान् हरिं निन्देत्—निन्दिष्यति वा। कः—कतरः—कतमो वा हरिं निन्देत्—निन्दिष्यति वा। लृङ् प्राग्वत्।

लिङ् and लट् are used to express भूत, भविष्यत् and वर्तमान in connection with किंवृत्त ( explained before ) and अकिंवृत्त words as

well, when want of recommendation ( अनवक्लृप्ति ) and tolerance implied. As 'न सम्भावयामि—' I do not either certify or put up with the fact that you should or will despise Hari. लङ् प्राग्वत् i.e it is obligatory in future and optional in past.—( भूत )।

मित—। अनवक्लृप्त्यमर्षयोरिति। किंवृत्तेऽकिंवृत्तेऽप्यनयोः कालत्रयेऽपि लिङ्लृटौ स्त इत्यर्थः। न सम्भावयामीति—नानुमन्ये इत्यर्थः। नमर्षये इति चमि चेत्यर्थः। अत्र लिङ्लृटोर्यथासंख्यं नान्वय इति न भमितव्यम् इत्याह—निन्देत्—निन्दिष्यति वेति। अल्पाच्तरस्य अमर्षशब्दस्य सूत्रे पूर्वनिपाताभावादिदं लभ्यमिति हृत्तिः। लङ् प्राग्वदिति। भविष्यति नित्यं, भूते वेत्यर्थः।

## २८०२। किंकिलास्त्यर्थेषु लृट् ॥३।३।१४६॥

दी—। अनवक्लृप्त्यमर्षयोरित्येतत् 'गर्हायां च' (२८०६) इति (१ सूत्रं) यावदनुवर्तते। किंकिलेति समुदायः क्रोधद्योतक उपपदम्। अस्त्यर्थाः अस्तिभवतिविद्यतयः। लिङोऽपवादः। न श्रद्दधे न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे। अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि। अत्र लृङ् न।

The expression किंकिल taken together implies anger and passes for an उपपद here. Here लिङ् is not to be used. न श्रद्दधे न मर्षये वा—'i.e. I can indeed niether put faith in nor put up with the fact that you will take rice boiled by a शूद्र or one of the serving caste i. e, I am dead against it. 'अस्ति भवति—' There exists, remains or occurs the case that you cohabit the wife of a shudra. Here the use of लृङ् is nil ; for there is no हेतुहेतुमद्भाव।

मित—। किंकिलेति। अत्र लिङ् नेत्याह—लिङः अपवाद इति। न श्रद्दधे इति। न सम्भावयामीत्यर्थः। त्वं शूद्रान्नं भक्ष्यसे इति यत् तन्न सम्भावयामीत्याद्यन्वयः।

भक्ति भवतीति। त्वत्कृतं शूद्रीगमनमसीत्यर्थः। अत्र लङ् नेति—लिङ्विध्यभावेन लिङ्निमित्तत्वाभावादिति भावः।

२८०४। जातुयदोर्लिङ् ॥३।३।१४७॥

टी—। 'यदाययोरुपसंख्यानम्' (वार्तिक)। लटोऽपवादः। जातु—यद्—यदा—यदि वा तादृशो हरिं निन्देन्नावकल्पयामि—न मर्षयामि। लृङ् प्राग्वत्।

अनवक्लृप्ति and अमर्ष being signified लिङ् is used with a धातु when जातु and यद् (यदा) appear as उपपद।

मित—। जातुयदोरिति। जातु च यद् च तयोरितिविग्रहः। लटोऽपवाद इति स्पष्टम्। अनवक्लृप्त्यामर्षयोरिति वर्तते इति पूर्वसूत्रे उक्तम्। तदाह—नावकल्पयामि नमर्षयामीति। सम्भावयामीत्यादि प्राग्वदर्थः। जातु यदिति। जातु हरिं तादृशो निन्देदित्यहं नावकल्पयामीत्याद्यन्वयः। एवं यद्धरिं तादृशोनिन्देदित्यादौ। लृङ् प्राग्वदिति—भविष्यति नित्यं भूते चेत्यर्थः।

२८०५। यच्च—यत्रयोः ॥३।३।१४८॥

टी—। यच्च यत्र वा त्वमेवं कुर्य्याः न श्रद्दधे न मर्षयामि।

मित—। यच्चेति। 'यच्च' च 'यत्र' चेति द्वन्द्वस्तयोः। यच्चेति सङ्घाते यत्र शब्दे चोपपदेऽनवक्लृप्त्यामर्षयोर्लिङिति सूत्रार्थः। यच्च यत्र चेति। यच्च त्वमेवं कुर्याः (that you have done so) तदहं न श्रद्दधे इत्याद्यन्वयः। अत्रापि क्रियातिपत्तौ यथायथं लृङ् भवति।

२८०६। गर्हायां च ॥३।३।१४९॥

टी—। अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात्। यच्चयत्र वा त्वं शूद्रं याजयेः। अन्याय्यं तत्।

Eng.—Easy.—[ That you cause a Sudra to hold a sacrifice—is unbecoming ].

मित—। गर्हायां चेति। अर्थमाह—यच्च यत्रयोरिति। क्रियातिपत्तौ लृङ् तु प्राग्वत्।

२८०७। चित्रीकरणे च ॥३।३।१५०॥

दी—। यच्च यत्र वात्वं शूद्रं याजयेः। आश्चर्यमेतत्।

मित—। चित्रीकरणे इति। वैचित्र्यापत्ति आश्चर्यमिति इत्यर्थः। अत्रापि क्रियातिपत्तौ यथायथं लृङ् प्राग्वत्।

२८०८। शेषे लृडयदौ ॥३।३।१५१॥

दी—। यच्च यत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात्। आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति। 'अयदौ' किम्? आश्चर्यं यदि मूकोऽधीयीत।

लृट् takes place after a root when every उपपद except यच्च and यत्र exists and an idea of surprise is implied. Thus strange it is that a blind man will see Krishna. मूकः = a dumb.

मित—। शेषे इति। शेषपदार्थमाह—यच्च यत्राभ्यामन्यस्मिन्निति। अत्र लिङ्निमित्ताभावात् ( हेतुहेतुमद्भावाभावात् ) लृङ् न भवति।

२८०९। उताप्योः समर्थयोर्लिङ् ॥३।३।१५२॥

दी—। बाढमित्यर्थेऽनयोस्तुल्यार्थता। उत अपि वा हन्यादघं हरिः। 'समर्थयोः' किम्? उत दण्डः पतिष्यति। अपिधास्यति द्वारम्। प्रश्नः प्रच्छादनं वा गम्यते। इतः प्रभृति लिङ्-निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ्।

लिङ् is used when the उपपदs—उत and अपि bear the similar significance (अर्थ) i.e. are in the sense of बाढम् i.e. yes—They being of similar meaning in the sense of बाढम्। Thus 'उत अपि वा—' Hari is indeed able to remove sin. 'उत दण्ड:—' Will the stick fall? 'अपि धास्यति—' will he shut the door, or—He will shut the door. Henceforth लुङ् is considered to be नित्य even in the past tense also, where the action is unsettled and there is लिङ् निमित्त।

मित—। उताप्योरिति। समर्थयोरुताप्योरुपपदयोः कालत्रयेऽपि धातोर्लिङ् स्यादित्यर्थः। तथा च काशिका "सर्वलकाराणामपवादः"। बाढमिति स्वोक्तिवचनम्। तथा च उताप्यि इत्यनयोर्न प्रश्नार्थकत्वं किन्तु बाढार्थकत्वमेव। समौ अर्थौ ययोस्तौ इति विग्रहः। शकन्ध्वादित्वात् पररूपम्। उत दण्ड इति। प्रश्नोऽयम्। अपि धास्यतीति। प्रश्निष्य—पाठे प्रच्छादनार्थकं प्रश्नाभावे तु प्रश्नार्थकत्वम्। इतः प्रभृतीति। तथाच 'वोताप्यो'रिति वा ग्रहणमितो निवृत्तमिति भूते भविष्यति चोक्तविषये नित्यो लुङिति फलितम्।

२८१०। कामप्रवेदनेऽकच्चिति ॥३।३।१५३॥

टी—। स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति। कामो मे भुञ्जीत भवान् 'अकच्चिति' इति किम्। कच्चिज्जीवति।

लिङ् is used after a root when giving expression to one's own desire is implied—but not if the term कच्चित् is present, कामो मे That is, I wish that you should eat. 'कच्चित्—' etc.—Does (he) draws breath?

मित—। कामप्रवेदने इति। तस्यार्थमाह—स्वाभीति—स्वेच्छाप्रकटन—मित्यर्थः। कामो मे—इच्छामीत्यर्थः। कच्चिज्जीवतीति—स वा वेति ऊह्यम्। प्रश्नोऽयम्। एवम् 'प्रियाणि वसीय'—जलानि कच्चित्' ( रघु—५।८ ) इत्यादि।

२८९१। सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे ॥३।३।१५४॥

दी—। अलमर्थोऽत्र प्रौढ़िः। सम्भावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते। सम्भावनेऽर्थे लिङ् स्यात्तच्चेत् सम्भावनमलमिति अलमि सिद्धाप्रयोगे सति। अपि गिरिं शिरसा भिन्द्यात्। 'सिद्धाप्रयोगे' किम्? अलं कृष्णो हस्तिनं हनिष्यति।

Here the word अलम् conveys the sense of प्रौढ़ि or competency (fitness). The locative 'सम्भावने' is to be changed into प्रथमा and the प्रथमान्त word अलम् into सप्तमी। Mark that अलम् being an अव्यय there is no inflectional change in it, लिङ् is used in the sense of सम्भावन—extraordinary estimation or hyperbolic conjecture provided the said सम्भावन is made without the application of a word the sense whereof is established, such as अलम् (which connotes competency—योग्यता)। Thus 'अपि गिरिम्—' (I have a strong confidence that) he may pierce even a rock with the head. अलम् कृष्णः—Krishna indeed (without doubt) etc.

मित। सम्भावनेऽलमितीति। प्रौढ़िः पर्य्याप्तिः। प्रथमया सप्तम्या चेति—तत्र सम्भावने इत्यत्र सम्भावनमिति विपरिणामः। अलमित्यस्य अव्ययत्वान्न काचिद्विभक्ति-जन्यभेद उपलभ्यते। तच्चेत् सम्भावनमिति—विधीयत इति शेषः। सिद्धाप्रयोगे सति। सिद्धस्य अप्रयोगे प्रयोगे अक्रियमाणे इत्यर्थः। 'यत्र तत्प्रयोगं विनापि तदर्थो गम्यते' इत्यर्थः। अतएव मनोरमायां 'अलमिति सम्भावने सिद्धाप्रयोगश्चेत्' इति उक्तम्। सम्भावनं तावदुत्कटकोटिकं ज्ञानमुत्प्रेक्षातिशयसजातीयम्; क्रियासु योग्यताध्यवसानम्। अलंशब्दस्तु न तथा। तस्यार्थस्य पर्य्याप्तिवचनत्वेनाव अभ्युपगमात् तत्र सिद्धस्य तथाविधेऽर्थे वृत्तस्य प्रतिष्ठितस्य वा अलंशब्दस्याप्रयोगः

प्रयोगविरहश्चेदित्याकूतम्। अपि गिरिम् इति—अत्र वक्तृविश्वासातिशयक्रतमौढ्य-गतशक्त्यतिशयद्योतनं फलम्। क्रियातिपत्तौ भूते चाभविष्यति नित्यं लृङ् भवति।

२८१२। विभाषा धातौ सम्भावनवचनेऽयदि ॥३।३।१५५॥

दी—। पूर्वसूत्रमनुवर्तते। संभावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे। पूर्वेण नित्ये प्राप्ते वचनम्। सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान्। 'अयदि' किम्? सम्भावयामि यद् भुञ्जीथास्त्वम्।

Easy. 'सम्भावयामि—' etc—I believe or I am sure you should or will ( or are able to ) eat ( that amount ). 'सम्भावयामि यद्—' etc—I am sure you are able to eat. Here लिङ् only and not लृट् also is used.

मित—। विभाषा धाताविति। सम्भावनमुच्यतेऽनेनेति सम्भावनवचनम्। तदाह—सम्भावनेऽर्थे धाताविति। नित्येप्राप्ते वचनमिति—विभाषावचनमित्यर्थः। तत्र विभाषा यच्छब्दाभावे एवेति दर्शयति—सम्भावयामीत्यादिना। पक्षे लृट्। सम्भावयामीति—प्रायेण शक्तो भोक्तुमित्याकलयामीत्यर्थः।

२८१३। हेतुहेतुमतोर्लिङ् ॥३।३।१५६।

दी—। वा स्यात्। कृष्णं नमेच्चेत् सुखं यायात्। कृष्णं नंस्यति चेत् सुखं यास्यति। 'भविष्यत्येवेष्यते' (वार्तिक)। नेह। हन्तीति पलायते।

लिङ् ( in lieu of लृट् ) is optionally used after a root in the sense of हेतु (cause) and हेतुमत् (effect). Thus कृष्णं नमेत् चेत् ( implies हेतु ) सुखं यायात् ( effect ), etc. 'It has to be said

that the case of लिङ् is intended in लृट् only ( varttika ). हन्तीति—i.e in fear of being killed then and there.

मित—। हेतुहेतुमतोर्लिङिति। पूर्वसूत्राद् विभाषेति वर्तते। तदाह—वा स्यादिति। अत्र कृष्णं नमेच्चेदिति हेतौ ( कारणे ) लिङ्। सुखं यायादिति तु हेतुमति फले इति यावदिति बोध्यम्। कृष्णनमनस्य सुखफलकत्वात्। भविष्यत्येवेति—वार्तिकमिदम्—एतच्च लिङ्भविष्यद्वर्तमानेऽपि पुनरत्र लिङ् ग्रहणसामर्थ्याल्लब्धमित्याहुः। अत एवकारेण लकारान्तरव्यवच्छेदः। तथा च काशिका "सर्वलकाराणामपवादः"। तेन वर्तमाने नेत्याह—हन्तीति। इति शब्दोऽत्र हेतुद्योतकम्। 'इति हेतुप्रकरण प्रकाशादिसमाप्तिषु' इत्यमरः। पलायनं फलम् ( हेतुमत् )।

## २८१४। इच्छार्थेषु लिङ्लोटौ ।।३।३।१५७।।

दी—। इच्छामि भुञ्जीत—भुङ्क्तां वा भवान्। एवं कामये प्रार्थये इत्यादियोगे बोध्यम्। 'कामप्रवेदने इति वक्तव्यम्' ( वार्तिक )। नेह। इच्छन् करोति।

कामप्रवेदन—means to express one's wish ( regarding others ).

मित—। इच्छार्थेष्विति। इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ भवतः॥ कामप्रवेदनस्य परं प्रति-इच्छाप्रकटनार्थकत्वात् स्वेच्छायां नेत्यर्थः।

## २८१५। लिङ् च ।।३।३।१५९।।

दी—। समानकर्तृकेषु इच्छार्थेषु लिङ्। भुञ्जीयेतीच्छति।

लिङ् is used after roots conveying the sense of wish and having the same nominative (in both the cases). Thus 'भुञ्जीय—' etc.—He wishes that he might eat.

मित—। लिङ् चेति। 'समानकर्तृकेषु तुमुन्' ( ३।३।१५८ ) इति सूत्रमत्र

वर्तते। पूर्वसूत्रादिच्छार्थेषु इति च। तदाह—समानकर्तृकेष्विति। अत्र भुञ्जीयेत्यनेन भोक्तुरिच्छा गम्यते। परत्र च स एव कर्ता।

२८१६। इच्छार्थेभ्यो विभाषा वर्तमाने ॥३।३।१६०॥

टी—। लिङ् स्यात्, पक्षे लट्। इच्छेत्। इच्छति। कामयेत। कामयते। 'विधिनिमन्त्रण—(२२०८) इति लिङ्। विधौ—यजेत। निमन्त्रणे—इह भुञ्जीत भवान्। आमन्त्रणे—इहासीत। अधीष्टे—पुत्रमध्यापयेद्भवान्। संप्रश्ने—किं भो वेदमधीयीय उत तर्कम्। प्रार्थने—भो भोजनं लभेय। एवं लोट्।

लिङ् and alternatively लट् takes place after roots signifying intention to express present time. Thus इच्छेत्—इच्छति etc. 'विधिनिमन्त्रण—' etc explained.

मित—। इच्छार्थेभ्य इति। लिङ् इति वर्तते। तदाह—इच्छार्थेभ्यः धातुभ्यः। लिङ् स्यादित्यादि। कामयते इत्यन्त्समुदाहरणम्। 'विधिनिमन्त्रण—' प्राग्व्याख्यातमुदाहृतञ्च इति।

२८१७। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥३।३।१६३॥

टी—। लोट् च। प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा। भवता यष्टव्यम्। भवान् यजताम्। चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम्।

कृत्य affixes and लोट् also are employed after a root to express injunction or duty (प्रैष), request (अतिसर्ग), and proper or appointed time (प्राप्तकाल). Here the application of चकार in

the rule is to carry the term 'लोट्' for 'प्राप्तकाल' ( गुरुणा भोक्तव्यम् । गुरुर्भुञ्जीत ) or it would have कृत्य affixes only and not लोट् ।

मित—। प्रैषेति। कृत्यार्थे ति चकारग्रहणफलमाह—लोट् चेति। भवतेति—प्रैषः। भवानिति—अतिसर्गः। प्राप्तकालार्थमिति—अन्यथा कृत्या एवस्युरिति भावः। अत्रोदाहरणम्—गुरुणा भोक्तव्यम्। गुरुर्भुञ्जीत, भुङ्क्ताम् चेति। प्रैषातिसर्गयोस्तु लोट चेत्यनेनैव सिद्धेरिति भावः॥ अत्र विधिप्रैषयोः विशेषोपिश्चर्तव्यः। केचिदाहुः—अज्ञातज्ञापनं विधिः। प्रेषणं प्रैष इति।

२८१८। लिङ् चोर्ध्वमौहूर्तिके ॥३।३।१६४॥

टी—। प्रैषादयोऽनुवर्तन्ते। मुहूर्तादूर्ध्वं यजेत—यजताम्-यष्टव्यम्।

मित—। लिङ् चेति पूर्वं लोडर्थलक्षणे विहितेऽप्यत्र सूत्रे प्रैषादिष्वप्राप्तत्वा-दत्रेदं पुनर्विधीयते।

२८१९। स्मे लोट् ॥३।३।१६५॥

टी—। पूर्वसूत्रस्य विषये। लिङः कृत्यानां चापवादः। ऊर्ध्वं मुहूर्ताद् यजतां स्म।

मित—। स्मे लोडिति। प्रैषादिषु ऊर्ध्वमौहूर्तिके लोडेव यथा स्यान्न तु लिङ् कृत्याश्च इत्येतदर्थमिदं सूत्रम्। तदाह—पूर्वसूत्रस्येति।

२८२०। अधीष्टे च ॥३।३।१६६॥

टी—। स्मे उपपदेऽधीष्टे लोट् स्यात्। त्वं स्माध्यापय।

अधीष्ट means 'earnest request'.

मित। अधीष्ट चेति। अधीष्टः (अधीष्टं वा) सत्कारपूर्वको व्यापारः। लोडिति। लिङोऽपवादः। योगविभागस्तु ऊर्ध्वमौहूर्तिके मा भूदित्येवमर्थम्।

२८२१ । लिङ् यदि ॥३।३।१६८॥

दो—। यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात् । कालःसमयो वेला वा यद् भुञ्जीत भवान् ।

Eng.—Easy.—

[ कालः etc.—This is the time that you should take food. ]

मित—। लिङिति । 'कालसमयवेलासुतुमुन्' ( ३।३।१६७ ) इति पूर्वं सूत्रम् । '—वेलासु' चेति । एषु उपपदेषु इति शेषः । तुमुनोऽपवादः ।

२८२२ । अर्हे कृत्यतृचश्च ॥३।३।१६९

दो—। चाल्लिङ् । त्वं कन्यां वहेः ।

त्वं कन्याम् etc—i.e. you are fit for a marriage.

मित—। अर्हे इति—योग्यार्थे इत्यर्थः । वहेरिति । वोढुमुद्वोढुं समर्थ इत्यर्थः । एवं त्वया कन्या वोढव्या वहनीया वा । त्वं कन्यां वोढेति ।

२८२३ । शकि लिङ् च ॥३।३।१७२ ॥

दो—। शक्तौ लिङ् स्यात् । चात् कृत्याः । भारं त्वं वहेः ॥ 'माङि लुङ्' ( २२१८ ) । मा कार्षीः । कथं मा भवतु मा भविष्यतीति । नायं माङ् किन्तु माशब्दः ।

शकि = शक्तौ = Ability.

मित—। शकि इति । शक् इति क्विबन्तम् । तस्य सप्तम्यां शकि इति । शक्तौ गम्यमानायामिति चार्थस्तदाह—शक्ताविति । माङीति—सर्वलकारापवादः । नायं माङ् किन्तु माशब्द इति । ङकारानुबन्धरहितस्यापि अव्ययेषु पाठादित्याशयः । तथा च काशिका "अङित्परो माशब्दो विद्यते तस्यायं प्रयोगः" । यथा "मा कुरु धनजनयौवनगर्वम्" इत्यादि । [ i.e, The मा in connection with which

लोट् etc. are used is different from ङ—eliding "मा" in connection with which only लुङ् is used for all tenses ].

२८२४। धातुसम्बन्धे प्रत्ययाः ॥३।४।१॥

टी—। धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकं दर्शनमर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्।

[ Here the word धातु in the rule implies धात्वर्थः—the sense of a root—( धातुशब्देन धात्वर्थो लक्ष्यते )। This is inferred from the application of the second member सम्बन्ध or affinity which as a rule, is established between two things. And these two things are the two different roots. Affinity or connection is seen to exist between two similar objects and not dissimilar ones. Thus धातु here implies its sense and not itself. Moreover affixes like लट्, लिट् etc. are enjoined after a root according as its sense may be, and not according as the root may be ; cp—'वर्तमानक्रियाविशेषणतो लट् स्यात्', under वर्तमाने लट्। Thus it is only dwelling upon thesense of the root only that 'लट्, लिट्' etc. are enjoined. Well, you may argue, the injunction of लट्, लिट् etc. being done what is the object of this rule here ? You have seen 'वर्तमाने 'लट्' etc, and the instances there of. Here you will see 'भूते लट्' etc. in the instanes like 'वसन् ददर्श', वनानि पश्यन् ययौ, विगाहमानः...उवाच, निवेदयिष्यतो मनो न विव्यथे, गोमनासीत्—etc ].

धात्वर्थानाम् etc—Take it for धात्वर्थयो: etc. Affixes are enjoined (after roots) to express a time other than that in which they were (previously) ordained (to take place)—when (or provided) the affinity between the senses of two roots is implied. These affixes, again, will be employed after such root (of the two) as is subservient or subordinate (lit. as expresses a subordinate sense or action) and not after that which is principal—due to the fact that the action which is expressed by a तिङन्त क्रिया (or root) is superior to or has greater importance than any action expressed by a कृदन्त one. Thus—in वसन् ददर्श we have 'भूते लट्' in वसन् * due to the presence of the भूततिङन्त verb ददर्श and not 'वर्तमाने लट्' at the instance of वसन्, the sense of the former (वसन्) being subservient to that of the latter (ददर्श)। Thus he says 'अतीत—' etc, or the sight was effected by the (self same) agent of the past dwelling i.e he (Krishna) saw the sage (Narada) while (He was) residing (at the residence of Vasudeva). The full verse is—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः॥

(शिशुपाल—I, 1st. verse).

---

* Note that शतृ being made use of in place of लट् the author says भूते लट् and not 'भूते शतृ'—cp—'लटः शतृशानचावप्रथमासमानाधिकरणे' (3100).

'सोमयाजी—' He will have a Soma-sacrificing son born to him i. e the birth of such a son ( will take place ) as will be sacrificing with Soma. This is an instance of भविष्यति णिनि in con. with लृट् though णिनि is employed after यज expressing past action by 'करणे यजः' ( 2996 )—सोमेन इष्टवान् सोमयाजी ।

मित— । धातुसम्बन्धे इति । धात्वोः सम्बन्धो धातुसम्बन्धः । अत्र यदि—, धात्वोः सम्बन्धे गम्यमाने यत्र वर्तमानादौ काले इत्येवं व्याख्यायेत तदानुपपत्तिः स्यात् । तादृशव्यापारे लकारविधानाभावात् । धात्वर्थातिरिक्तव्यापारे धातुसम्बन्धस्य क्वाप्यनुपलम्भाच्च । तथाचोक्तमभियुक्तैः—'विशेष्य' नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति च । अतएव मनोरमायां—'स्वार्थ-स्मारणेनोपक्षीणत्वादित्युक्तम् । एवञ्चात्र लाक्षणिक एवार्थोऽभ्युपगतः नाभिधानिकः । तत्रच धातुपदेन तदर्थो लक्षित इति मत्वा व्याचष्टे—धात्वर्थानामिति । अत्र बहुवचनमविवक्षितम् । धात्वर्थयोरित्येवेष्टम् । बहुवचनन्तु दृष्टान्तबाहुल्याभिप्रायम् । सम्बन्धे इति—गम्ये सतीति शेषः । यत्रकाले इति—कालविशेषवृत्तेरेव धातोर्लडादिविधानात् इति 'वर्तमाने लट्' इत्यादौ स्पष्टम् ; तत्रच यत्रकालविशेषे ये लडादिप्रत्यया विहितास्ते धात्वर्थयोः सम्बन्धे प्रतीयमाने ततोऽन्यस्मिन्नपि काले स्युरित्यर्थः । ननु तथापि कीदृशे काले किंविधः प्रत्ययो भवेदिति विस्पष्ट-विनिगमकाभावात् कथमत्र कर्तव्यनिर्णयः स्यादित्याशङ्क्य समाधिमाह—तिङन्त-वाच्यक्रियाया इति । अयमर्थः—अत्र धात्वर्थसम्बन्धव्यापारे क्रिया तावद् द्विविधा । तिङ्प्रत्ययनिष्पन्ना कृत्प्रत्ययनिष्पन्ना च । तत्र आद्या मुख्या । अपरा तु गौणी । एवं स्थिते तिङन्तवाच्यक्रियानुमानेनैव कृदन्तवाच्यक्रिया नेया न तु तद्विपरीतम् । गौणस्यैव प्रधानानुसरणस्य न्याय्यत्वात् । न ह्युत्कृष्टोऽपकृष्टमनुसरति । एवं 'वसन् ददर्शावतरन्तमम्बरात्—,' 'वनानि पश्यन् ययौ' इत्यादौ 'वसन्', पश्यन्' इत्यादयः क्रमेण दर्शनगमनादितत्तत्तिङन्तवाच्यक्रियायाः कालानुसारेण वर्तमाने, भूते, भविष्यति चेत्युपाधिं लभन्ते । तदाह—भूते लङिति । 'लटः शतृशानचावप्रथमासमानाधि-

करणे' इति सूत्रात्प्राग्वे शतृशानचोः प्रयोगादेवमुक्तम्। अतीतकालकर्तृकमिति—अतीतकाले कर्ता यस्येति व्यधिकरणपदो बहुव्रीहिः। 'सप्तमीविशेषणे बहुव्रीहौ' इतिज्ञापकात्। अतीतवास-कर्ता कर्ता यस्येति विग्रह इति तत्त्वबोधिनी। अनद्यतन—भविष्यति णिनिमुदाहरति—सोमयाजी अस्य पुत्र इति। सोमेनेष्टवान् सोमयाजी 'करणे यजः' (३१००) इति भूताधिकारे णिनिर्विहितः। स चात्र भवितेति अनद्यतन-भविष्यदर्थकलुडाख्यतिङन्तवाच्यप्रधानक्रियानुसारेण अनद्यतनभविष्यदर्थवाचकः। गुणभूतत्वात्तस्य। तदाह—वक्ष्यमाण इति। भविष्यदर्थद्योतनार्थमिदम्। एवमुदाहरणद्वये क्वचिद्भूतेन वर्तमानबाधः क्वचिच्चानागतेन भूतबाधः। एवमन्यत्र। ननु स्यादेतत्। अध्याहारलक्षणाभ्यामपि यथोक्तकार्यसिद्धेरेतद् 'धातुसम्बन्धे—' इति सूत्रं व्यर्थम्। उक्तं हि—(वाक्यपदीये ?)

व्यवहारस्य विषयेऽध्याहृते लक्षितेऽपि वा।
भूतभाविप्रत्ययार्थाः सम्बद्ध्यन्तां यथायथम्॥ इति

तथाच—सोमयाज्यस्य पुत्रो भविता, अग्निष्टोमयाजी अस्य पुत्रो जनितेत्यत्र सोमयाजीति अग्निष्टोमयाजीति च भूते एव णिनिः। भवितेति जनितेति सम्बन्धात्तु 'तत्र व्यवहरिष्यमाणः' पुत्रो भवितेत्युक्तोऽपि प्रागुक्तार्थो लभ्यते। एवं गोमानासीदित्यत्र 'गोमान्' इति व्यवहारविषय आसीदिति गम्यते। लक्षणा तु प्रागेवोक्ता। न चैवंविधाध्याहारलक्षणयोरभ्युपगमो मास्त्विति वाच्यम्। तथा हि सति 'भाविकृत्यमासीदि'त्यत्र सूत्ररीत्या भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वेन युगपत् प्रवृत्तिर्न स्यात्। तस्मादेतावन्तं कालं यद् भावितया व्यवहृतं तदिदानीमासीदित्येव तदर्थः। एवं सर्वसामञ्जस्यादिति चेदुच्यते—सूत्रारम्भस्य अध्याहारलक्षणालक्षणक्लेशं विनैवार्थनिर्वाहार्थकत्वादिति सूत्रं सप्रयोजनमेवेति मनोरमायामुक्तम्। भाष्ये तु प्रत्याख्यातमेतत्। एवं 'कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः। न विव्यथे तस्य मनो नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः'। (किरात—१।२,) इति निवेदयिष्यत इत्यत्र 'भूते लृट्' इति बोध्यम्, विषये बाहुलकादित्यन्यत्।

२८२५। क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥३।४।२॥

टी—। पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात् तस्य च हिस्वौ स्तः। तिङामपवादः। तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च। तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते। हिस्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि। आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु।

When frequency or intensity is implied लोट् is used after a root ( without restriction of tense ) and this लोट् is replaced by हि and स्व। Thus these हि and स्व bar the application of all other तिङ् affixes, and are here respectively designated as परस्मैपदसंज्ञ and आत्मनेपदसंज्ञ as also तिङ्संज्ञ ( and not as तिङ् and तङ affixes due to the inclusion of हि under तिप्, तस् झि etc. and of स्व under त, आतां झ etc ). Besides, हि and स्व, however, are optionally applied in the matter of i. e in the room of त and ध्वम् affixes respectively. As हि and स्व are known to be the second person singular, it should not thereby be understood that they must needs be used in that particular person and number only. They on the other hand, will be freely appointed in the matter of all the three persons and numbers ; cp. the भाष्य 'इमौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषाञ्च वचनानामिष्यते'। This is inferred on the strength of

the injunction of हि and स्व here; for, as a general rule they could have been used to carry out their respective functions like other afixes even without this particular mention. Thus the application of हि extends to all the three persons and numbers in the cases of परस्मैपदी roots in the active voice, whereas स्व covers such cases of persons and numbers of आत्मनेपदी roots in the matter of भाववाच्य, कर्मवाच्य and कर्तृवाच्य as well. [N. B.—This rule has been illustrated and instanced under the last one ].

[ Note that no particular sense is enumerated for the लोट in this rule. Hence it is भावे because "अनिर्दिष्टार्थाः प्रत्ययाभावे भवन्ति"। हि and स्व being substitutes of लोट are also भावे। On "लुनीहि लुनीहि इत्येवायं लुनाति" Haradatta comments "लोडन्तं पुनःपुनरर्थमाह"। ]

मित—। क्रियासमभिहारे इति। अत्र चत्वारि वाक्यानि। क्रियासमभिहारे लोडित्येकं वाक्यम्, तस्यार्थमाह—पौनःपुन्ये भृशार्थे चेति, द्योत्ये इति। क्रियासमभिहारस्तावद् धात्वर्थविशेषणम्। तत्र लोटा द्योत्यते इति भावः। लोटो हिस्वाविति द्वितीयं वाक्यम्; तद्व्याचष्टे—तस्य चेति। लोट इत्यर्थः। तिङामपवाद इति—प्रत्येकाभिप्रायमेकवचनम्। हिस्वौ तिङामपवादौ इत्यर्थः। यदि त्वेतौ तिबादीनां स्थाने स्यातामित्युच्येत तदा 'लुनीहि' इत्यत्र 'ई हल्यघोः' (२४०९) इति ईत्वं न स्यात् तिपः पित्त्वेन ङित्त्वाभावात्। एवं 'ब्रूहि' इत्यत्र 'ब्रुव ईट्' इतीट् स्यादित्यादयो बहवो दोषा उत्पद्येरन्। तस्माल्लोडादिलकारणामेवादेशौ हिस्वौ भवतो न तु तिबादितिङाम्। 'तौ च हिस्वौ—' इति—एतत् तृतीयं वाक्यम्। तत्रानुवृत्तिलभ्यम्। 'क्रियासमभिहारे लोट्' इति प्रथमवाक्यात् 'लोटो हिस्वौ' इति द्वितीयवाक्ये लोट् इत्यनुवर्तते। तत्र हिस्वावित्यस्य विशेषणम्। ततो 'लोटो लोट् हिस्वौ' इति तृतीयवाक्यं पर्यवसितम्। तत्र 'हि'

इति परस्मैपदप्रतीकं। 'स्व' इति आत्मनेपदप्रतीकम् इति मत्वाह—क्रमेण परस्मैपद-संज्ञात्मनेपदसंज्ञौस इति। तिङ्संज्ञौ चेति—'लोटो लोट् हिस्वौ' इत्यत्र लोट् हिस्वयोर्विशेषणमित्युक्तम्। न च हिस्वौ लोटौ भवतः किन्तु लोड्धर्माणाविति सामर्थ्याल्लभ्यम्। तथापि यदि मुख्यलोट्सम्बन्धिनो धर्मस्यातिदेशः क्रियेत तदा व्यर्थो विधिः—'स्थानिवदादेशः—' (५०) इत्येव सिद्धेः। तस्मात् स्थानिवद्भावलब्ध-लोड्व्यपदेशौ तिङ्भूतौ यौ हिस्वौ इति भवतीति तिङ्—संज्ञकत्वम्। सुप्तिङन्तं-पदमिति पदत्वमेतेन सिद्धम्। 'वा च तध्वमोः' इति चतुर्थं वाक्यम्। तश्च ध्वम् च (द्वन्द्वः), तयोः। विषयसप्तमी। तदाह—तध्वमोर्विषये लिङि। एतेन 'तिङामपवादत्वात्तद्बाधेन तध्वमोरभावात् 'वा च तध्वमो' रिति वाक्यशेषासङ्गति-रिति न चोदनीयमिति भावः। तशब्दो च मध्यमपुरुषैकवचनमेवेति प्राहुः। पुरुषैकवचनसंज्ञे लिङि। उक्तकर्मप्रथमाया द्विवचनम्—'अतिदिश्येते' इत्यत्रान्वयः। मध्यमपुरुषैकवचनत्वेऽपि हिस्वयोः पुरुषवचनसंज्ञा नासीत्यर्थः। सर्व पुरुषवचन-साधारणत्वात्। तथा च भाष्यम् "इमौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषाञ्च वचनाना-मिष्यते" इति। यदि हि पुरुषवचनसंज्ञेऽनयोः स्यातां तदा युष्मत्समानाधिकरणे एकत्वे च सति हिस्वाभ्यां भाव्यमेवेति तदर्थं विधिरेव न कर्तव्य इत्यत आह—हिस्वविधानसामर्थ्यादिति। भूत्वनिगमनमाह—तेनेति। कर्तरीति कर्तृवाच्ये इत्यर्थः। आत्मनेपदिभ्य इति—स्पष्टम्। उदाहरणानि उपरिष्टात् 'समुच्चये सामान्य वचनस्य—' इत्यत्रोक्तानि।

## २८२६। समुच्चयेऽन्यतरस्याम् ॥३।४।३॥

### टी—। अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्।

What has been said above optionally takes place when congregation of verbs is implied. In other words, when several actions of the same agent are spoken of together, we have लोट etc as above, but optionally.

मित—। समुच्चये इति। अनेक-क्रियासमुच्चये इति। एतेनानेककारक-समुच्चये नास्य प्रवृत्तिरित्याहुः।

२८२७। यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥३।४।४॥

दो—। आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनु-प्रयोज्यः।

The word पूर्वस्मिन् refers to the first of the two previous rules, 'क्रियासमभिहारे—' ( 2825 ) and 'समुच्चये—' ( 2856 ) both of which enjoin लोट्। Thus the rule means—In the matter of the former लोट्विधि or application of लोट्, the original root only of the लोडन्त form is to be employed after that ( लोडन्त form ). Here by अनुप्रयोग or after—application is meant simply 'after-wards' and not invariably 'after,' as Bhashya has लुनीहि लुनीहि इत्येवायं लुनाति' where the Ist लुनीहि being intervened by the 2nd, according to invariable after—application there, was no chance of the अनुप्रयोग of लुनाति।

मित—। यथाविधीति। विधिमनतिक्रम्येति यथाविधिः यस्याः प्रकृतेर्लोड् विहितः सैवानुप्रयुज्यते पश्चाद्विधीयत इत्यर्थः। पश्चात् प्रयोगोऽनुप्रयोगः। अनु-प्रयोगइत्यनेन यथा कथञ्चित् पश्चात्प्रयोगमात्रं विवक्षितं न तु 'अव्यवहितपश्चाद्-प्रयोगत्वमन्यथा 'लुनीहि लुनीहीत्येवायं लुनाति' इति भाष्यासङ्गतेः। पूर्वस्मिन्नित्यनेन प्रागुक्तं 'क्रियासमभिहारे—' ( २८२५ ), 'समुच्चये—' ( २८२६ ) इत्यनयोराद्यं परामृश्यते। तदाह—आद्ये लोड्विधाने इति। लोटः प्रकृतिभूते लोट्प्रकृतिभूत इत्यर्थः। प्रकृतिश्चात्र यथा—'लुनीहि' इत्यादिः।

२८२८। समुच्चये सामान्यवचनस्य ॥३।४।५॥

दी—। समुच्चये लोड्विधौ सामान्यार्थकस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। 'क्रियासमभिहारे द्वे वाच्ये' (वार्तिक)—याहि याहीति याति। पुनः पुनरतिशयेन वा यानं द्यान्तस्यार्थः। एककर्तृकं वर्तमान—कालिकं यानं यातीत्यस्य। इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति। एवं यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत्। यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चये तु—सक्तून् पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ। भुङ्ग्ध्वमास्वदध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे—सक्तून् पिबति धानाः खादति। अन्नं भुङ्क्ते। दाधिकमास्वदते। एतेन—

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः॥

—इति व्याख्यातम्। अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। इह पुनःपुनरवस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव। द्वितीयसूत्रे 'क्रियासमभिहारे' इत्यस्याननुवृत्तेः। लोडन्तस्य द्वित्वा-

पत्तेश। पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद् भ्रम एव। पुरुषवचनसंज्ञे इह नेतुरशक्तत्वात्।

इति लकारार्थ-प्रकरणम्।

When there is समुच्चय or congregation of verbs in the matter of लोड्विधि or application of लोट्, there takes place the अनुप्रयोग or subjoining of a root bearing almost the same sense i.e expressing a sense which is similar or common to that of the लोडन्त roots. In other words—when there is समुच्चय, the single क्रिया of which the समुचित verbs are particular instances will have to be subjoined showing the corret पुरुष, वचन। And then लट् etc, तिप् etc are to be judiciously (यथायथम्) applied after the subjoined (अनुप्रयोग) root—whence i. e from the application of लट् etc in which, the indication or determination of the particular number (संख्या), tense (काल) and person will be manifest. 'क्रियासमभिहारे—' varttika. This enjoins reduplication of the लोडन्त form which indicates frequency or intensity. Thus याहि याहीति याति—(i.e he goes after repeated importunity for going.). Here the sense of the portion ending in हि (याहि याहि) is frequent or intense going (on the port of the person addressed) and that of याति is going at present of the (same) single person. The word इति, however, helps to bring out similar connection between the two i.e suggests the same sense of पौनः पुन्य etc in the case of याति also.

Similarly याहि याहीति यातः, याहि याहीति यान्ति, याहि याहीति यासि etc ( under these examples it is easy to see that the अनुप्रयोगs याति यातः etc, यासि याथः etc, अयासीत् ( लुङ् ) and यास्यति ( लृट् ) etc make manifest their number person and tense, whereas याहि is the same in all members and persons etc ; similarly in the cases of 'यात यात—,' ( intance of 'त' second per. plural ) 'अधीष्व अधीष्व—' and 'अधीध्वम् अधीध्वम्—'etc. [ N. B.—Note carefully that these embody the illustrations of the first rule 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' ( ३८८५ ) and the third rule 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' ( ३८८७ ) ] । Now he goes to illustrate the second rule 'समुच्चयेऽन्यतरस्याम्' ( ३८८८ ) and the fourth 'समुच्चये सामान्यवचनस्य' ( ३८८९ ) by saying—समुच्चये तु etc. Here, of the two again, the latter 'समुच्चये सामान्यवचनस्य' is instanced first, beginning from 'सक्तून् पिब—' and ending with '—अभ्यवहरध्वे,' whereas the former 'समुच्चयेऽन्यतरस्याम्' is instanced under 'पचे—सक्तून् पिबति etc upto दाधिकमास्वदते' । It is important to note here that लोट् वा लोडन्त forms only—obtained in connection with हि, स्व, त and ध्वम्—are made optional ( and not क्रियासमभिहार which according to भाष्य does not deserve to be drawn down here). सक्तून् पिब धानाः खादेत्यभ्यवहरति—i.e being asked or requested to take the drink of barley and to eat the fried barley ( धाना fem. ) he partook of both of them. अभ्यवहरति conveys the general sense of eating and drinking. Hence this अनुप्रयोग ;—समुच्चय being made by 'पिब' and 'खाद' । Similarly अन्न',भुङ्क्ष्व etc. Here the अनुप्रयोग is आत्मनेपदी (अभ्यवहरते) in connection with स्व which is आत्मनेपद । पचे हिस्वौ i.e हि and

स्व takes place optionally in the room of त and ध्वम् by '—वा च तध्वमोः' ( २८२५ )। Thus—पिब खादेत्यभ्यवहरति, भुङ्क्ष्व आस्वदस्वेत्यभ्यवहरते। Here i.e in the above instances of समुच्चय, the similarity ( अभेद ) in relation ( अन्वयः = सम्बन्धः ) is effected of the particular ( लोडन्त ) verbs with the sense of the subjoined ones in a general way. In other words, eating and drinking are no doubt two particular significances of the two particular roots पा and खाद but अभ्यवहार constitutes both of them. Hence there exists affinity or similarily in sense between the first two ( or moreverbs ) and the last. पचे भक्षन् etc. Here लोट् being wanting by 'समुच्चयेऽन्यतरस्याम्' there is no use of a root of सामान्यवचन or similar significance. By this (एतेन) i.e by the mode of our explanation of the rule 'समुच्चयेऽन्यतरस्याम्' ( २८२६ ) along with 'समुच्चये सामान्यवचनस्य, ( २८२८ ) we have served a clear exposition of the verse 'पुरीम् अवस्कन्द—' etc ( of the great poet Magha—sl. 51. canto 1st. ). The sense of the verse according to Bhattoji is—'That ( Ravana ) who was mighty enough having declared war against Indra (नमुचिद्विट्) caused troubles of heaven (अस्वास्थ्यं स्वर्गे ) by ( i.e in the form of ) besieging the city of Amaravati, felling the trees of the forest of Nandana, robbing ( the inhabitants of their ) jewels and abducting their wives. Thus he (Bhattoji) says 'अवस्कन्दन—' etc. i.e the sense being of the अस्वास्थ्यक्रिया or the act of causing troubles in the shape of अवस्कन्दन ( molesting ), लवन ( chopping or hewing ) etc, expressive of भूतानद्यतनपरोक्ष i.e लिट्—अवचस्कन्द etc, and having reference to the

single agent viz Ravana. इह पुन:पुन:—etc. : Here the exposition 'that the sense is—पुन: पुनरवस्कन्द' or troubled frequently etc is erroneons, because the term 'क्रियासमभिहारे' which implies frequency or intensity has not been carried down ( from the first rule 'क्रियासमभिहारे लोट्—' २८२८ ) to the second 'समुच्चयेऽन्यतरस्याम' ( २८२९ ) and also because this ( अनुवृत्ति of क्रियासमभिहार ) is open to the objection that there will be duplication of the लोडन्त forms अवस्कन्द, लुनीहि etc on the score of the varttika 'क्रियासमभिहारे द्वे वाच्ये' while we have got no such duplication here. Thus this explanation is a total failure. All this refutation is with reference to Mallinatha's 'सर्वङ्कषा' the distinguished commentary on माघ ; for Mallinatha there says सर्वत्र पौन:पुन्यं म इत्यर्थ:, after making the अनुवृत्ति thus 'अत्र अवस्कन्द इत्यादौ'क्रियासमभिहारे लोट्—' इत्यनुवृत्तौ etc : 'पक्षयवचनसंज्ञे इच्छनेव्युत्क्रमात्'—cp 'पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते under ( २८२५ ) ।

[ N. B.—The sense of the verse as brought out by Bhattoji is not so happy, as it can not make a suitable room for the word 'दिव:' etc.—( See मितभाषिणी ) । Hence Nagesha brings forward a different sense which is based on 'विध्यर्थे लोट्' and is thus preferable to that presented by our author in as much as it is simpler, happier and being more preferably intended by the poet. We give below the sense of the said verse according to Nagesha—

Who i. e Ravana being mighty and thus entering into war against Namuchidwit caused disturbance or uneasiness of

heaven day after day; thus—he ordered his attendants, Ho Besiege the city, cut off Nandan, seize their property and seduce their ( god's ) wives.

( See also our notes under verse 51 canto I of Sisupalavadham ).

For the words of Nagesha see Mitabhashini below].

Here ends the chapter on sequence of tenses.

मित—। समुच्चय इति। समुच्चयोऽत्र अनेकक्रियैकवाक्यस्थानम्। सामान्यमुच्यतेऽनेनेति सामान्यवचनः [ 'करणाधिकरणयोश्च' ( ३१०० ) इति करणे ल्युट् ]। तच्च सामान्यद्योतकमिति यावत्। तदाह—समुच्चये लोड्विधावित्यादि। कीदृशैर्धातुभिः सामान्यार्थं कस्य धातोरित्यपेक्षायां—समुच्चीयमानैरिति बोध्यम्। वक्ष्यति हि अनुवादं स्वयमेव 'समुच्चये तु—सक्तून् पिबेत्यादि'। वक्ष्यते च विशेषस्तत्रैव। अनुप्रयोगादिति—अनुप्रयोगः पश्चाद्व्यवहारः अस्ति अस्येति 'अर्श आदिभ्योऽच्' इत्यच्। अनुप्रयुज्यमानाद् धातोरित्यर्थः। यथायथमिति—यथानुक्रमम् यथापूर्वमिति वा। तत इति—अनुप्रयोगादिति परामृश्यते। अनुप्रयुज्यमानधात्वनन्तरं तत्तदादिस्तिबादिरित्यर्थः। अभिव्यक्तिः=प्रकाशः। तथा च याति, यातः यान्तीत्येवंरूपस्यानुप्रयोगात् क्रमेण एकत्वद्वित्वबहुत्वरूपवचनावगमः, वर्तमानकालबोधः, प्रथमपुरुषाभिव्यक्तिश्च भवति। एवं यासि, याथः, यामि, यावः, अयात्, अयाताम्, इत्याद्यनुप्रयोगेऽपि बोध्यम्। 'याहि याही'त्यादौ तु, तथा 'अधीष्व अधीष्व' इत्यादौ च द्विरुक्ताभ्यां न संख्याकालपुरुषाभिव्यक्तिः। तयोः सर्वसंख्याकालपुरुषसाधारणत्वादित्युक्तम् 'क्रियासमभिहारे—' इति प्रथमसूत्रे। उक्तं हि भाष्ये—'द्विस्तान्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ' इत्यादि। इदानीम् 'क्रियासमभिहारे लोट्—' ( २४२५ ) इति प्रथमसूत्रमुदाहरिष्यंस्तदनुगुणवार्तिकमुपन्यस्यति—'क्रियासमभिहारे द्वे वाच्ये' इति। पौनःपुन्ये भृशार्थे च द्योत्ये द्विरुच्यमानस्य धातोः—द्विर्वचनं स्यादित्यर्थः। स्पष्टं चैतदखिलं प्रक्रियायां 'लुनीहि लुनीही'त्येतावत् लुनातीत्यत्र। याहि याहीति याति इत्यत्र। अथेदमवधेयम्—

'क्रियासमभिहारे लोट्—' 'यथाविध्यनुप्रयोगः—' इति प्रथमतृतीयसूत्रयोरेकत्र सन्निवेशः अनुप्रयोगाभावार्थसाम्यात्। व्याख्यातं हि 'यथाविधि—' इत्यत्र 'आद्ये लोडभिधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्य' इति। ततश्चानयोर्युगपदुदाहरणविषयत्वं फलितम्। उदाहरणानि चात्र—याहि याहीत्यारभ्य यूयमधीध्वे इत्यन्तानि इति बोध्यम्॥ पुनः पुनरतिशयेन वा यानमिति—अनिर्दिष्टार्थकत्वाद् भावार्थकत्वमित्यर्थः। 'अनिर्दिष्टार्थाः प्रत्यया भावे भवन्ति' इत्युक्तत्वादित्यर्थः। यातीत्यनुसारादत्रापि वर्तमानं यानमिति विभावनीयम्। याहि याहीति ययावित्यादौ तु 'पुनः पुनरतिशयेन व्यतीतकालिकं यानमित्यूह्यमितिदिक्। तत्तस्यार्थं इति—याहि याहीति "हि'—अन्त्य"त्यर्थः। एककर्तृकं वर्तमानं यानमिति—एतेन 'ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्ति'रिति यदुक्तं तत्स्पष्टमेव प्रतिपादितम्। इतिशब्दस्त्विति—तथाच याहि याहीत्यंशस्य क्रियासमभिहाररूपी यावानर्थस्तावानेव यातीत्यस्येति भावः। एवं यात इत्यादि। याहि याहीति यातः (तौ)। याहि याहीति यान्ति (ते) इत्यादीनि अन्यत्र संख्याकालपुरुषविशेषेष्वप्युदाहार्याणीति भावः। याहि याहीत्ययासीत्। लुङ्। याहि याहीति यास्यति। लृट्। अधीष्वाधीष्वेति—अत्र 'स्व' उदाहृतम्। ध्वं विषये पचे इति ध्वादेशाभावपक्षे इत्यर्थः। य अधीध्वमिति। एवम् अधीध्वमधीध्वमिति यूयमधीध्वे। अध्यैध्वम्। अध्यगीध्वम्। अधिजगिढ्वे इति वर्तमान-भूतानद्यतन—भूतसामान्य—परोक्षेषूदाहरणानि। इदानीं तुर्यसूत्रमुदाहरति—समुच्चये लिति। "समुच्चये सामान्यवचनस्य" इत्यत्र इत्यर्थः। सक्तून् पिब धानाः खादेत्यभ्यवहरतीति। 'धाना भ्रष्टयवाः स्त्रियामि'त्यमरः। आकारान्तोऽयं शब्दः। कर्मवचनम् पिबेति पानार्थकत्वाद्धातोः। खादेति च चर्वणार्थकत्वाद् धातोरित्यनयो-र्वैलक्षण्यं च द्रष्टव्यम्। पानभोजनयोर्भेदात्। 'अभ्यवहरति' इति तु पानभोजनयोः सामान्येन ग्राहकम्। तेन सामान्यार्थकत्वमस्य स्फुटम्। इत्यभ्यवहरति इति। अनुप्रयोगवशादात्मनेपदम्। पचे हि भुवाविति—वा च तध्वमोरिति वाक्यशेषादित्यर्थः। तेन हि पक्षे—पिबखादेत्यभ्यवहरतीत्यादि उदाहार्यम्। अत्रेति—'समुच्चीयमान-विशेषणामि'ति पिब खादेति पानभोजनादीनाम् 'अनुप्रयोगार्थेन' अभ्यवहरतीति

'सामान्यार्थेन अभेदेनान्वयः' भेदराहित्येन सम्बन्धः अर्थसाम्यादितिभावः। पक्षे सक्तून् पिबतीति। 'समुच्चयेऽन्यतरस्याम्' (२४२६) इति द्वितीयसूत्रस्यैकविषयता-पन्नत्वात् 'सक्तून् पिब धानाः खादेत्यभ्यवहरती'त्यादीन्युदाहरणानि। लोडभावपक्षे तु सक्तून् पिबतीत्यादीनि। अत्र पक्षे सामान्यवचनस्यानुप्रयोगोऽपि नास्तीति ध्येयम्। एतेनेति—'समुच्चयेऽन्यतरस्याम्' इत्यस्य 'समुच्चये सामान्यवचनस्य' इत्यस्य चाचार्योक्तव्याख्यानप्रकारेणेत्यर्थः।' इति व्याख्यातमिति—पुरीमवस्कन्देतिश्लोका-नन्तरवर्तिना अन्वयः। कथं व्याख्यातमित्यत आह—अवस्कन्दनलवनादिरूपेति। अत्र आदिपदेन मोषणग्रहणे ग्राह्ये। भूतानद्यतनपरोक्षेति—'चक्रे' इति लिङ्लेन सर्वत्र तदर्थस्यैवावगमात्। एककर्तृका इति रावणकर्तृका इत्यर्थः। पुर्य्यवस्कन्दनादी-नां तद्धेतुकत्वात्। अस्वास्थ्यक्रियेत्यर्थात्—अवस्कन्दनादिलक्षणमस्वास्थ्यं चक्रे इत्यर्थः। तथाचास्मिन् मते इदमत्र श्लोकव्याख्यानम् (श्लोकोऽयं शिशुपालवधे प्रथमसर्गे ५१तमः):—बली बलवान् यः रावण इत्यर्थः तस्यैवात्र प्रकृतत्वात्, नमुचिद्विषा नमुचिद्विडिन्द्रस्तेन विरुद्य विरोधं विधाय पुरीमवस्कन्द पुर्य्या अवस्कन्दनं पीडन-मवरोध इति यावत्, लुनीहि नन्दनं नन्दनवनस्योच्छेदनम्, मुषाण रत्नानि धनापहरणं मुषस्तेये इति धातुः, अमराङ्गनाः हर देवयोषिदात्मसात्करणम् इत्यम् इत्येवंलक्षणम् [अत्र इत्यंशब्द इति—शब्दवाचक इति बोध्यम्] दिवः स्वर्गस्य अस्वास्थ्यं चक्रे स्वास्थ्याभावसम्पन्नं सोद्वेगमित्यर्थः चक्रे चकार दिवमस्वस्थीचक्रे इत्यर्थः। एवञ्च अवस्कन्दनादिलक्षण—समुच्चितक्रियाविशेषाणामनुप्रयोगार्थेन 'अस्वस्थीचक्रे' इत्यनेन सामान्येनाभेदान्वय उपपादित इति द्रष्टव्यम्। इहेति—माघकाव्यव्याख्याकृतो मल्लिनाथस्य सर्वङ्कषाख्यायां व्याख्यायां भ्रमसुद्घाटयति—पुनः पुनरवस्कन्द अवरोध नन्दनं लुलाव चिच्छेद इत्येवं सर्वत्र लिङ्लेन व्याख्याय अत्र 'अवस्कन्द' इत्यादौ 'क्रियासमभिहारे लोट्—' इत्यनुवृत्तौ 'समुच्चयेऽन्यतरस्याम्' इति विकल्पेन काल-सामान्ये लोडित्याह। आह च मल्लिनाथः—अत्र सर्वत्र पौनःपुन्यं इत्यर्थ इति। अत्र विधयोः संख्याकालपुरुषविशेषाभिव्यञ्जकत्वभावलिङ्लत्वेऽपि व्याख्यानं दोषावहम्। ननु लोक्तमनिर्दिष्टार्थाः प्रत्यया भावे भवन्तीति। सामान्येनार्थप्रकाशपरत्वं तस्य।

क्रियासमभिहारे इत्यस्यानुवर्तनन्तु असम्यगालोचनफलमेव। 'समुच्चयेऽन्य—' इति द्वितीयसूत्रे तदनुवर्तनस्य भाष्यासम्मतत्वात्। तथा 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकात् 'अवस्कन्द अवस्कन्द, लुनीहि लुनीहि' इति सर्वत्र लोडन्तस्य द्वित्वापत्तेश्च। अतस्ताहग्व्याख्यानमनुचितमेवेत्यकामेनापि वक्तव्यमितिभावः। वस्तुतस्तु अत्र लमतमपि न सम्यगिव प्रतिभाति। हि शब्दस्तावत्सकलपुरुषवचन-विषये परस्मैपदिभ्य एव कर्तरि विधीयते। तथा सति 'चक्र' इत्यनुप्रयोगस्य आत्मनेपदं दुरुपपादम्। परस्मैपदस्यैवौचित्यात्। तथा 'दिवः' इति षष्ठ्यन्तस्य स्वव्याख्याने अन्वया भावाच्च। तदर्थं वमपिव्याख्यानं कवेर्नाभिमतमिति प्रतिभाति। अतएव नागेशोऽत्र व्याख्यानान्तरमाह—परेत्यित्यादिना। तत्र च तेन 'क्रियासमभि-हारे लोट्—' इति प्रथमसूत्रमेवानुसृत्य व्याख्याय 'अद्धि वमिति' समभिव्याहारात् 'रावणस्य तथा कर्मशालित्वेन प्रसिद्धत्वाच्च (सामर्थ्याद) व्यञ्जनयैव (पौनःपुन्यम्) बुध्यते इत्युक्तम्। परं तदपि न सम्यक् कवेरभिमतत्वं। शब्देनैव हि पौनःपुन्यस्य सर्वत्र विवक्षितत्वान्न तु आर्थत्वेति अपरितुष्यन् स्वयमेव व्याख्यानान्तरमाह—'यद्वा अवस्कन्देत्यादीनि विधिलोडन्तान्येव। स्वसेवकप्रेरणा विषयावस्कन्दनादिजन्यमस्याख्यं मनोदुःखं चक्र इत्यर्थ इति। अयमभिप्रायः—सः बली (रावणः) नमुचिरिपो विग्रहस्य स्वसेवकान् मकराक्षधूम्रलोचनादीन् प्रत्येकमाह—याहि भो मकराक्ष पुरीम-मरावतीम् अवस्कन्द अवरुन्धि, त्वञ्च धूम्रलोचन नन्दनं वनं लुनीहि शकलीकुरु, स्वमतिकाय रत्नानि सुधाश्च आत्मसात् कुरु, त्वञ्च कुम्भकर्ण अमराङ्गनाः विबुधवनिताः (कर्म) हर अपहरेति। अत्र सर्वत्र विधौ लोट्। इत्थं उक्तप्रकारेण दिवः स्वर्लोकस्य असूयाख्यं मनः पीडां चक्र जनयामासेत्यर्थः। इदमेव व्याख्यानं सम्यक् सरलतरं कवेरभिमततरञ्चेति प्रतीयते इत्यास्तां तावत्। प्रकृतमनुसरामः। केषाञ्चिद् भ्रम एवेति—पुरुषांशे वचनांशे चेति भावः। भ्रममेवोपपादयति—पुरुषवचनसंज्ञं इष्टेति। उक्तमेवैतत् प्राक् प्रथमसूत्रव्याख्यानावसरे इत्यलमिति शम्॥ ओं तत्सत्॥

इति श्रीकुमुदरञ्जनकृतायां सिद्धान्तकौमुदीव्याख्यायां मितभाषिण्यां
लकारार्थतिङ्-प्रकरणम्॥

# Errata in Vol III. Part I.

P. 14. line 2, for "गर्गेभ्यो आगतं" read "गर्गेभ्य आगतं"।

N. B.—P. 21. line 22, ( under sutra 1088 ) for "समर्थात्" the reading in some book "प्रथमात्" is seen ; but we prefer "समर्थात्" ( see our notes in first sutra there ).

P. 36. line 2, for "शुव—" read "युव—"।

P. 53. line 24 for "जात+ढक्" read "जाता+ढक्"।

P. 70. line 4, for "कूलान्यटति" read "कुलान्यटति"।

P. 70. line 22, for "सक्त—" read "सक्तु—"।

P. 75. line 16, for "कद्रुभित्रस्य" read "कद्रूभित्रस्य" ( i.e, "कद्रु" is a misprint for "कद्रू" )।

P. 77. line 6, sutra 1145 for ( i ) "ह्रान्तिनायन-आथर्वेणिक—" read "—ह्रास्तिनायनाथर्वेणिक—" ; ( ii ) for "—सारव-ऐक्ष्वाक—" read "—सारवैक्ष्वाक—" ; for "जैह्मश्विनेय" read "जैह्माश्विनेय"।

P. 99. line 13, for "कामीव्यायनि:" read "कामीव्यायणि:"।

P. 104. line 13, for "पान्तो—" read "पाष्ठो—"।

P. 115. line 22, for "सुत्या" read "सूत्या"।

P. 116. line 4, ( sutra 1201 ) & line 16, for "—शौचवृक्षि—" read "—शौचिवृक्षि—"।

P. 116, line 14 for "सत्यामुग्र" read "सात्यमुग्रा"।

## Vol I. Part II.

P. 249. line 22, for "कुतो एतत् लभ्यते" read "एतत् कुतो लभ्यते"।

P. 331 line 23, P. 383, line 1, for "मानुषी" read "मनुषी"।